आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः ८३

अग्निचित्पुरुषोत्तममिश्रकृतसुबोधिनीटीकया रामतीर्थविरचितान्वयार्थ-
प्रकाशिकया टीकया च समेतं

# संक्षेपशारीरकम्

अस्य द्वितीयतृतीयचतुर्थाध्यायरूपो द्वितीयो भागः ।

एतत्पुस्तकं

वे० शा० रा० रा० वैद्योपाह्वरङ्गनाथशास्त्रिभिः
संशोधितम् ।

तच्च

हरि नारायण आपटे

इत्येतैः

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितम् ।

शालिवाहनशकाब्दाः १८४०

खिस्ताब्दाः १९१८



मूल्यं नवाणकाधिकरूपकचतुष्टयम् ( ४ॅ९ ) ।

## अथ संक्षेपशारीरके द्वितीयोऽध्यायः ।

सु० टी०—तदेवं समन्वयनिरूपणादद्वितीये ब्रह्मणि मानाभावप्रयुक्तासंभावनां निरस्य द्वैतग्राहिप्रत्यक्षादिविरोधात्प्रमेयासंभवं मन्वान उक्तं समन्वयमाक्षिपति—

एवं समन्वयनिरूपणयाऽवबोधो
जातोऽप्यखण्डविषयो ननु वाक्यजन्यः ।
मानान्तरेण परिपीडित एव जातो
भेदप्रकाशनकृताऽक्षनिबन्धनेन ॥ १ ॥

एवमिति । समन्वयनिरूपणया निष्पन्नोऽप्यखण्डवाक्यार्थनिश्चयो भेदप्रकाशकेन प्रत्यक्षादिमूलकेन मानान्तरेण बाधितविषयो न फलायालमित्यर्थः ॥ १ ॥

अ० टी०—तदेवं समन्वयलक्षणगतं विशेषं न्यायतो निरूपितमुपश्रुत्य यद्यपि श्रुतिगतिपर्यालोचनायां सर्वे वेदान्ता अविरोधेनाखण्डे ब्रह्मात्मनि प्रमाणमिति न्यायतो निर्धारितं तथाऽपि प्रत्यक्षादिप्रमाणान्तरविरोधे प्रतिभासमाने न तथैवेति प्रागुक्ते समन्वये मतिसाम्यं मम वर्तत इति मन्वानः शिष्यो मानान्तरमाश्रित्योक्तं समन्वयमाक्षिपति—**एवं समन्वयेति** । नन्विति प्रथमं योज्यम् । भेदप्रकाशनेति विरोधिमानान्तरस्वरूपकथनम् । अक्षग्रहणमनुमानादेरप्युपलक्षणार्थम् ॥ १ ॥

सु० टी०—नन्वद्वैतश्रुत्यैव स्वविरोधि प्रमाणं बाध्यतां यागस्वर्गफलकत्वश्रुत्येव तदभावप्रत्यक्षमिति चेन्न वैषम्यादित्याह—

मज्जत्यलाबु सहसाऽप्सु शिलाः प्लवन्त
इत्यादिकादभिहितादिव वाक्यजातात् ।
जाताऽपि बुद्धिरपबाधितगोचरैव-
मद्वैतबुद्धिरपि भेदधियाऽऽत्मनि स्यात् ॥ २ ॥

मज्जतीति । आयतिफलगोचरा हि श्रुतिरलं तादात्विकप्रत्यक्षं बाधितुं न तु दृष्टफला सा हि तेनैव बाधितार्था यथा 'मज्जत्यलाबु ग्रावाणः

१ क. °दात्विक° ।

प्लवन्ते ' इत्यादिश्रुतिरित्यर्थः । अभिहितादाम्नाताद्वाक्यजाताद्वाक्यसमूहात् । एवमात्मन्यद्वैतबुद्धिरपि वेदान्तजन्या भेदधिया बाधितैव स्यादित्यर्थः ॥ २ ॥

अ० टी०—ननु भेदग्राहिप्रत्यक्षादेरभेदबोधकाद्वैतागमस्य च प्रमाणत्वाविशेषे श्रुत्यैवेतरपरिपीडनं कस्मान्न स्यादित्याशङ्क्य प्रत्यक्षविरोधे वाक्यस्यैव बाधदर्शनादेतदेव संभाव्यत इत्युदाहरणमाह—मज्जतीति । अभिहितात्केनचिदिति शेषः । वाक्यजातात्सहसा जाताऽपीति संबन्धः । अपबाधितगोचरा बाधितविषयैव यथैवमद्वैतबुद्धिरात्मनि जाताऽपि भेदधिया बाधितगोचरैव स्यादिति योजना ॥ २ ॥

सु० टी०—नन्वद्वैतात्मन्यपि श्रुत्यैकगम्ये प्रत्यक्षादेरप्रवृत्तेः कुतस्तेन श्रुतिबाध इत्याशङ्क्य जीवस्वरूपे प्रत्यक्षप्रवृत्तेरित्याह—

अध्यक्षगोचरमनर्थमवैमि वाक्यं
निर्मुक्तमाह मम रूपमनर्थहेतोः ।
एवं च वेदशिरसोऽक्षनिबन्धनेन
ज्ञानेन बाधनमतीव हि दुर्निवारम् ॥ ३ ॥

अध्यक्षेति । अहं दुःखीति प्रत्यक्षसिद्धं मम स्वरूपं प्रमातृत्वाद्यनर्थसंकुलमवैमि । वाक्यं तु 'योऽशनायापिपासे ' [ बृह० ३ । ५ । १ ] ' न लिप्यते लोकदुःखेन बाह्यः ' [ कठ० ५ । ११ ] ' असङ्गो ह्ययं पुरुषः ' [ बृह० ४ । ३ । १५ ] इत्याद्यनर्थहेतोरविद्यातत्कार्यसंबन्धान्निर्मुक्तं मम स्वरूपमाह । न चैतदुभयं विरुद्धमबाध्यं संभवतीत्यवश्यं सर्वसंमतप्रथमप्रवृत्तप्रत्यक्षादिजन्यज्ञानेन वेदान्तानां बाधो दुर्वार इत्यर्थः । तथा च ब्रह्मणः श्रुत्येकगम्यत्वेऽपि तदद्वैतस्य द्वैतग्राहिप्रत्यक्षप्रतिक्षेप्यताऽऽवश्यकीति भावः ॥ ३ ॥

अ० टी०—अद्वितीयांशे प्रत्यक्षविरोधमुक्त्वा संसारित्वांशेऽपि तमाह—अध्यक्षगोचरमिति । अनर्थं संसारित्वमनर्थहेतोर्निर्मुक्तं मम रूपमाहेति संबन्धः । फलितमाह—एवमिति । अतीव दुर्निरूप्यं नेति योजना ॥ ३ ॥

सु० टी०—किं च[२] स्वसमकक्षकर्मकाण्डविरोधेनापि स्वविषया[३]प्रतिष्ठस्य वेदशिरसो न प्रत्यक्षादिबाधकत्वशङ्केत्याह—

कर्तृत्वमाह मम कर्मविधिर्नियोगः
संबन्धपूर्वकमपास्तसमस्तभेदम् ।

१ क. ग. हाछुत्यैव १ क. ग. च स्वास° । २ क. °या प्रविष्ट° ।

मामाह वेदशिरसो वचनं तथा च
सत्यस्य दुःस्थितमिवाऽऽपतति प्रमात्वम् ॥ ४ ॥

कर्तृत्वमिति । **ज्योतिष्टोमादिविधिर्हि नियोगात्मा स्वर्गकामादिकं नियोज्यमात्मनि प्रेरयन्नकर्तुर्नियोज्यत्वाभावान्मम कामिनः कर्तृत्वमाक्षिपति वाक्यं पुनरपास्तनिखिलकर्तृत्वभोक्तृत्वादिभेदं मामाहेति कथमस्य समबलश्रुतिप्रतिरुद्धस्य प्रामाण्यमित्यर्थः ॥ ४ ॥**

अ० टी०—एवं प्रत्यक्षादिविरोधमुपपाद्य कर्मविधिविरोधमाह—**कर्तृत्वमिति ।** ' स्वर्गकामो यजेत ' ' यावज्जीवं जुहुयात् ' इत्यादिरूपः कर्मविधिर्नियोगो नियोगरूपः संबन्धपूर्वकं मम कर्तृत्वमाह त्वं कुर्विति नियोज्य संबन्धपूर्वको हि नियोगो विधिः कर्म विधत्त इत्यर्थः । कर्तृत्वशक्तिहीनं प्रति नियोगासंभवात्स्वर्गकामादेः कर्तृत्वशक्तिमाक्षिपेत्कर्मविधिरिति भावः । कर्तृत्वग्रहणं भोक्तृत्वस्याप्युपलक्षणम् । ननु कर्मविधिभिरेतावता को विरोध उक्त इति तमाह—**अपास्तेति** । भेदो विशेषः कर्तृत्वादिविशेषरहितं निर्विशेषमित्यर्थः । ननु कर्तृत्वनिर्विशेषत्वागमयोः समत्वाद्विरोधेऽपि कथमेकेनेतरबाध इति चेत्सत्यं तथाऽपि सत्प्रतिपक्षानुमानात्प्रामाण्यदौर्लभ्यमनिवार्यमित्याह—**तथा च सत्यस्येति ।** सत्यस्य सत्यार्थस्य प्रमाणभूताभेदस्येति यावत् । प्रमात्वं प्रामाण्यम् ॥ ४ ॥

**सु० टी०—किं च विरुद्धयोरावश्यकेऽन्यतरार्थबाधे प्रत्यक्षकर्मवचसोर्मिलितयोरेकवेदान्तबाधकत्वं युक्तं तथा दर्शनादित्याह—**

प्रत्यक्षकर्मवचसोरुभयोः समूहः
सामर्थ्यवानुपनिषद्विषयापहारे ।
एकैकमेव तु न पारयतेऽपहर्तुं
स्वार्थप्रकाशनविधावुभयोः समत्वम् ॥ ५ ॥

प्रत्यक्षेति । एकैकमिति । **न पारयते न शक्नोति । अपहर्तुमन्योन्यविषयं बाधितुम् । कुत इत्याह**—स्वार्थेति ॥ ५ ॥

अ० टी०—नन्वेवं सति कर्मविधेरपि प्रमात्वदौःस्थ्यसाम्यान्न तेनेतरबाधकशङ्केत्याशङ्क्य केवलस्य तस्याबाधकत्वेऽपि सहा[य]संपत्त्या प्राबल्यात्स्याद्बाधकतेत्याह—**प्रत्यक्षकर्मवचसोरिति ।** उत्तरार्धारम्भे यद्यपीति योज्यम् । पूर्वार्धारम्भे तथाऽपीति ॥ ५ ॥

**सु० टी०—ननु प्रमाणसमूहस्य संभूयकारित्वाभावेन पृथक्प्रामाण्या-**

---

१ क. दुःस्थित° ।

भावात्कथं बाधकत्वमित्याशङ्क्य तर्हि प्रत्यक्षमेव प्रथमस्यात्सर्वप्रमाणो-पजीव्यमस्तु बाधकमित्याह—

ज्यैष्ठ्यात्समर्थमथ वाऽक्षजमेकमेव
तस्यैव कर्मविधिरस्तु सहायभूतः ।
प्रत्यक्षमेव विधिवाक्यसहायमेव
ब्रह्मात्मवस्त्वपहरिष्यति को विरोधः ॥ ६ ॥

ज्यैष्ठ्यादिति । नन्विदमप्रयोजकं प्रथमप्रवृत्तस्यापि भ्रमस्य जघन्याधि-ष्ठानधीबाध्यत्वादित्यत आह—तस्येति । भ्रमो ह्यन्यथासिद्धत्वाद्बाध्यः प्रत्यक्षं तु कर्मविधिसंवादिविषयत्वेन निःसंदिग्धप्रामाण्यमनन्यथासि-द्धमिति भवति तद्विसंवादिवेदान्तबाधकमित्यर्थः ॥ ६ ॥

अ० टी०—ननु प्रमाणयोः संभूय बाधनायोगात्समूहस्तयोर्बाधक इत्ययुक्तं समूहस्य चाभावाच्चेत्तर्हि प्रत्यक्षमेवास्त्वद्वैतबाधकं कर्मविषयस्तु तदर्थसंवादितया सहायमात्रमिति पक्षान्तरमाह—**ज्यैष्ठ्यादिति** । प्रत्यक्षस्य सर्वप्रमाणोपजीव्यत्वाज्ज्यैष्ठ्यमेतात्सिद्धपदपदार्थो-पजीवनेन प्रवृत्तत्वादागमस्य प्रत्यक्षात्पाश्चात्यत्वात्कनिष्ठतेति स्थितौ ज्येष्ठं प्रत्यक्षमेवैकमुप-जीव्यं स्वोपजीवकस्य कनिष्ठस्याद्वैतागमस्य स्वार्थबाधने समर्थं स्यादित्यर्थः । ननु ज्येष्ठ-स्यापीदं रजतमितिज्ञानस्य कनिष्ठेन शुक्तितत्त्वज्ञानेन बाधो दृष्टोऽतो ज्येष्ठत्वमप्रयोजकमिति चेत्तत्राऽऽह—**तस्यैवेति** । न ज्येष्ठत्वमात्रं बाधकत्वे हेतुं वदामः किं तु प्रमाणत्वे सति ज्यैष्ठ्यं रजतज्ञानस्याप्रमाणत्वादस्तु ज्यैष्ठ्येऽपि बाध्यता प्रत्यक्षस्य तु प्रमाणत्वं निश्चितप्रमा-णत्वविधिवाक्येन संवादात्सिद्धमतो न तस्य पूर्वस्यापि परेणाऽऽगमेन बाधशङ्क्येतदभि-प्रायेणोक्तं तस्यैवेति । प्रत्यक्षमेवेत्युत्तरार्धमुपसंहारार्थम् ॥ ६ ॥

सु० टी०—परिहरति—

अत्रोच्यते न खलु वेदशिरांसि मुक्त्वा
किंचित्प्रमाणमिह तत्त्वनिवेदनाय ।
शक्नोति येन भवतीह विरोधशङ्का
वेदान्तवाक्यमुखतोऽवगते प्रतीचि ॥ ७ ॥

अत्रोच्यत इति । न हि प्रत्यक्षादेः श्रुत्या विरोधोऽस्ति तस्य व्यावहारि-कवस्तुमात्रविषयत्वेनातत्त्वावेदकत्वात् । वेदशिरसस्तु व्यवहारातीतब-

१ क. °त्वेतद्भिप्रा° ।

द्याविषयस्य तत्त्वावेदकत्वात् । तेन हि स्वविरोधित्वे वा बाधितेऽपि विषयसत्यत्वेऽस्यापि प्रत्यक्षादेर्न व्यावहारिकत्वं बाध्यते तस्य शक्तिग्रहादावुपजीव्यत्वात् । अतः कर्तृत्वादिद्वैतजातस्य व्यावहारिकत्वान्न तेन श्रुत्युक्ततात्त्विकाद्वयत्वहानिरित्यर्थः । वेदान्तवाक्यानां मुखतस्तात्पर्यतोऽवगते इह प्रतीचि येन विरोधशङ्केति संबन्धः ॥ ७ ॥

अ० टी०—तत्र प्रत्यक्षादेर्व्यवहारसमर्थवस्त्ववभासकतया व्यावहारिकमेव प्रामाण्यं न तत्त्वावेदकमद्वैतागमस्य तत्त्वावेदकं प्रामाण्यमतोऽतत्त्वविषयेण प्रत्यक्षादिना न तत्त्वविषयस्याऽऽगमस्य बाधः किं तु वैपरीत्यमेव युक्तमित्यभिप्रेत्योभयोर्विषयभेदकथनेन विरोधशङ्कां परिहरति—**अत्रोच्यत इति** । स्पष्टार्थं पद्यम् ॥ ७ ॥

सु० टी०—प्रत्यक्षादेस्तत्त्वावेदनासामर्थ्यं समर्थयते—

अज्ञातमर्थमवबोधयदेव मानं
तच्च प्रकाशकरणक्षममित्यभिज्ञाः ।
न प्रत्यगात्मविषयादपरस्य तच्च
मानस्य संभवति कस्यचिदत्र युक्त्या ॥ ८ ॥

अज्ञातमिति । अभिज्ञा जैमिन्यादयः । साधकाभावप्रयुक्तमेयाज्ञानसंशयादिव्यवच्छेदकं हि मानं तच्चाज्ञातगोचरमेव मानाधीनत्वान्मेयसिद्धेरित्यज्ञातबोधकमेव मानम् । तच्च न प्रत्यग्विषयाद्वाक्यादन्यस्य संभवत्यनात्मनोऽज्ञातत्वासंभवादित्यर्थः । युक्त्येति । तथा हि किं प्रत्यक्षादीनां प्रामाण्यं विद्यमानार्थत्वं सद्विषयत्वं वा नाऽऽद्यो रजतभ्रमेऽपि तत्सत्त्वात् । नान्त्यः । तद्धि किमर्थक्रियाकारिविषयत्वमबाध्यार्थत्वं वा नाऽऽद्यः स्वप्नसाधारण्यान्नापरस्तत्कालाबाध्यार्थत्वस्य स्वप्नेऽपि सत्त्वात्त्रिकालाबाध्यार्थत्वस्यानागतबाधग्रहासंभवेन दुर्ज्ञेयत्वादित्यज्ञातज्ञापकत्वं प्रामाण्यं वाच्यम् । अत एवाज्ञाननिवृत्तिः प्रमाणफलमिष्यत इति क्वानात्मबोधकस्य प्रामाण्यमित्यर्थः ॥ ८ ॥

अ० टी०—कुतः प्रत्यक्षादेस्तत्त्वावेदनलक्षणप्रामाण्याभाव इति चेत्प्रमाणलक्षणस्य तत्र साक्षादवृत्तेरित्याह—**अज्ञातमिति** । अज्ञातार्थगन्तृत्वं हि प्रमाणलक्षणम् । तच्च तदेव प्रकाशकरणक्षमं स्वविषये प्रकाशकरणसमर्थं मानं प्रसिद्धं तदज्ञातार्थविषयत्वनिबन्धनमित्यर्थः । अभिज्ञाः प्रमाणतत्त्वविद आहुरिति शेषः । तच्चाज्ञातार्थावबोधकत्वं प्रत्यगात्मविषयादपरस्य प्रत्यक्षादेः कस्यचिदपि मानस्य युक्त्या विचार्यमाणेऽज्ञाते वस्तुनि न संभवतीति योजना । प्रत्यगात्मनोऽन्यस्याज्ञातत्वाभावादिति भावः ॥ ८ ॥

सु० टी०—तर्हि कर्तृत्वादिविशिष्टात्मनोऽज्ञातत्वसंभवात्तद्ग्राहिप्रत्यक्षेणाद्वैतश्रुतिबाध इति चेत्तत्राऽऽह—

सर्वं पराग्विषयमेव हि मानजातं
वेदावसानवचनानि तु वर्जयित्वा ।
यद्भौतिकं किमपि भौतिकगोचरं त-
द्रूपप्रदीपकनिदर्शनतः प्रसिद्धम् ॥ ९ ॥

सर्वमिति । सर्वं कर्त्रादिविषयं मानजातं पराग्विषयं वेदान्तातिरिक्तप्रमाणत्वाद्घटादिग्राहिप्रमाणवदित्यर्थः । कर्तृत्वादिविशिष्टस्य पराक्त्वात्तत्साक्षिणश्च भेदग्राहिप्रमाणागोचरत्वान्न तद्बाध इति भावः । किं च प्रत्यक्षादिभौतिकमात्रविषयं भौतिकत्वाद्दीपादिवदित्याह—यद्भौतिकमिति ॥ ९ ॥

अ० टी०—ननु प्रत्यक्षादेरपि प्रत्यग्विषयत्वे संभवत्येतल्लक्षणमितिचेन्न तस्य पराग्विषयत्वादित्याह—सर्वमिति । वेदान्तेतरमानानां पराग्विषयत्वं साधयति—यद्भौतिकमिति । प्रत्यक्षादिभौतिकविषयं भौतिकत्वाद्यदेवं तदेवं यथा रूपगोचरप्रदीप इत्यर्थः ॥ ९ ॥

सु० टी०—ननु यद्भौतिकं तद्भौतिकविषयमिति न व्याप्तिरप्रयोजकत्वाद्रूपस्यापि दीपव्यञ्जकत्वापत्तेश्चेत्यन्यादृशीं व्याप्तिमाह—

यद्व्यञ्जकं किमपि लौकिकमीक्षितं त-
द्व्यङ्ग्येन तुल्यमवलोकितमत्र जात्या ।
दीपः प्रकाशकतया विदितो हि लोके
रूपेण तैजसतया सदृशः प्रसिद्धः ॥ १० ॥

यद्व्यञ्जकमिति । अत्र लौकिकं यद्व्यञ्जकं तद्व्यङ्ग्यसजातीयमिति व्याप्तिरतो न वेदान्ते व्यभिचारो रूपस्य तैजसत्वं स्वमतेन वा तेजःप्रकृतित्वात्सांख्यमतेन वा ॥ १० ॥

अ० टी०—ननु यद्भौतिकं तद्भौतिकगोचरमिति भौतिकत्वाकारेण व्याप्तौ रूपेणापि प्रदीपस्य व्यङ्ग्यत्वापत्तिरित्याशङ्क्य व्यञ्जकस्य व्यङ्ग्यसजातीयत्वनियमे प्रदीपदृष्टान्तोपादानान्न दोष इत्याह—यद्व्यञ्जकमिति । जात्या तुल्यमिति संबन्धः । यद्व्यञ्जकं

तद्व्यङ्ग्यसजातीयं यथा रूपव्यञ्जकप्रदीपो रूपसजातीयो दृष्ट इत्यर्थः । रूपप्रदीपयोः केन रूपेण साजात्यं तदाह—तैजसतयेति ॥ १० ॥

**सु० टी०—एवमपि मनसि व्यभिचारस्तस्य द्रव्यान्तरत्वेन व्यङ्ग्यवैजात्यादिति चेन्नेत्याह—**

**बुद्धिः समस्तविषयावगमे प्रवृत्ता**
**साऽपि प्रकाश्यविषयेण समानजातिः ।**
**बुद्धिश्च भौतिकतया श्रुतिषु प्रसिद्धा**
**तेनास्तु साऽपि खलु भौतिकगोचरैव ॥ ११ ॥**

बुद्धिरिति । **मन इत्यर्थः । तत्तत्करणसहकारेण समस्तविषयावगमे प्रवृत्ता या बुद्धिः साऽपि प्रकाश्यसजातीयैवेत्यर्थः । कुत इत्याह—** बुद्धिश्चेति । **अस्त्विति समर्थने लोट् । 'अन्नमयं हि सौम्य मनः' [ छा० ६ । ५ । ४ ] इत्यादिश्रुतिषु भौतिकत्वप्रसिद्धेर्भौतिकगोचरत्वमेव तस्याः शक्यसमर्थनं न तु परेषामिवाऽऽत्मसुखादिगोचरत्वमित्यर्थः ॥ ११ ॥**

अ० टी०—अस्या व्याप्तेर्मनसि व्यभिचारमाशङ्क्य तदपि भौतिकमेवेति न व्यभिचार इत्याह—**बुद्धिरिति** । बुद्धिशब्दोऽन्तःकरणमात्रविषय आत्मनोऽपि बुद्ध्या प्रकाश्यत्वात्तस्य चाभौतिकत्वादभौतिकत्वमपि तस्याः स्यादिति चेन्नाऽऽत्मनः स्वप्रकाशत्वाद्बुद्धिव्यङ्ग्यत्वाभावाद्भौतिकमात्रगोचरत्वेनास्या अपि भौतिकत्वं निरपवादमित्यभिप्रेत्य बुद्धेर्भौतिकत्वं साधयति—**बुद्धिश्चेति** । 'अन्नमयं हि सौम्य मनः' [ छा० ६ । ५ । ४ ] इत्यादिश्रुतिष्वित्यर्थः । बुद्धिरपि भौतिकगोचरैव भौतिकत्वाच्चक्षुरादिवदित्याह—**तेनेति ॥ ११ ॥**

**सु० टी०—ततश्च जडस्याज्ञातत्वासंभवात्प्रत्यक्षादेश्च सविशेषग्राहकत्वान्निर्विशेषात्मन्यप्रवृत्तेरनात्मविषयमेव मानजातमित्युपसंहरति—**

**एवं प्रमाणमखिलं बहिरर्थनिष्ठं**
**वेदान्तवाक्यमपहाय यथोक्तहेतोः ।**
**न प्रत्यगात्मविषयं श्रुतिरप्युवाच**
**स्पष्टं पराञ्चिवचसाऽर्थमिमं यथोक्तम् ॥ १२ ॥**

एवमिति । **यथोक्तहेतोर्वेदान्तातिरिक्तमानत्वादिहेतोः । न प्रत्यगिति ततश्च भिन्नविषयत्वान्न तद्वेदान्तबाधकमित्यर्थः । श्रुतिरपीममर्थं संवदतीत्याह—**श्रुतिरिति ॥ १२ ॥

अ० टी०—तस्माद्वेदान्तवाक्यातिरिक्तं सर्वमेव प्रमाणमनात्मनिष्ठमेवेत्युपसंहरति—**एवमिति**। श्रुतिरपीन्द्रियाणां पराग्विषयत्वमेव ब्रवीतीत्याह—**श्रुतिरपीति**। ' पराञ्चि खानि ' इतिवचसा यथोक्तमिममर्थं श्रुतिरपि स्पष्टं यथा स्यात्तथाऽऽहेत्यन्वयः ॥ १२ ॥

**सु० टी०—श्रुतिं दर्शयति—**

**" पराञ्चि खानि व्यतृणत्स्वयंभू-**
**स्तस्मात्पराङ्पश्यति नान्तरात्मन् ।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्ष-**
**दावृत्तचक्षुरमृतत्वमिच्छन् ॥ १३ ॥**

पराञ्चीति। **पराग्विषयाणीत्यर्थः। खानीन्द्रियाणि व्यतृणद्धिंसितवान्पराग्विषयत्वस्य सर्वानर्थहेतुत्वाद्धिंसोक्तिः। स्वयंभूः स्रष्टा पराङ्पराचं नान्तरात्मन्नान्तरात्मानं कश्चिदाराधितेश्वर आवृत्तचक्षुर्निरुद्धचित्तः ॥ १३ ॥**

अ० टी०—तामेव कठवल्लीगतां श्रुतिमुदाहरति—**पराञ्चीति**। स्वयंभूः स्रष्टा खानीन्द्रियाणि पराञ्चि पराग्विषयपराङ्मुखाणि व्यतृणद्धिंसितवान्। व्यसृजदिति वक्तव्ये व्यतृणदिति वदन्पराङ्मुखत्वेन तेषां सृष्टिर्हिंसैव संसारहेतुत्वादिति दर्शयति। यस्मादेवं तस्मात्तैरिन्द्रियैः पराङेवानात्मरूपांविषयान्पश्यति लोको नान्तरात्मानं पश्यतीत्यर्थः। अत्रेन्द्रियग्रहणं मनसोऽपि ग्राहकं द्रष्टव्यम्। यतः कश्चित्कोऽपि मनुष्याणां सहस्रेष्वमृतत्वं मोक्षमिच्छन्नावृत्तचक्षुर्निगृहीतसर्वेन्द्रियश्चक्षुर्ग्रहणमुपलक्षणं प्रत्यगात्मानमैक्षतपश्यतीत्यर्थः। तथा च प्रत्यगात्मा नेन्द्रियगोचरोऽत एव मानादेरप्यगोचरोऽत्यन्तातीन्द्रियेऽर्थे व्याप्त्याद्यसंभवादिति भावः ॥ १३ ॥

**सु० टी०—नन्वेवं कुतो महावाक्यमपि भौतिकमनात्मविषयं न भवतीति चेन्नेत्याह—**

**यत्कर्मभावमनपास्य निजप्रमेये**
**संवित्तिसाधनतया जगति प्रसिद्धम् ।**
**मानं जडार्थविषयं तदिहाभ्युपेयं**
**न प्रत्यगात्मविषयं कथितोपपत्तेः ॥ १४ ॥**

यत्कर्मभावमिति। **यद्धि कर्मी कुर्वन्व्यञ्जयति तदेव व्यङ्ग्यसजातीयमुपकार्योपकारित्वप्रयुक्तत्वात्साजात्यस्य। तादृशं च जडविषयमेव मानं**

**न त्वात्मविषयं तस्य चिदात्मन्युपकाराजनकत्वादिति न तस्यानात्मविषयत्वप्रसङ्ग इत्यर्थः ।** कथितेति । **यत्कर्मभावमित्यर्धेन ॥ १४ ॥**

अ० टी०—ननु श्रुतेरपि शब्दत्वात्तस्य भौतिकत्वादिन्द्रियैरविशेषादनात्मविषयत्वमेवेति चेत्तत्राऽऽह—**यत्कर्मभावमिति** । यत्प्रमाणं निजप्रमेये कर्मभावमनपास्यापरित्यज्य संवित्तिसाधनतया जगति प्रसिद्धं तन्मानं जडार्थविषयं व्यवहारभूमावप्युपेयं न तत्कदाचिदपि प्रत्यगात्मविषयं कथितोपपत्तेर्व्यञ्जकस्य व्यङ्ग्यसजातीयत्वनियमादित्युक्तोपपत्तेरित्यक्षरयोजना । वेदान्ता अनात्मविषया भौतिकत्वाच्चक्षुरादिवदिति प्रयोगे स्वविषयप्रकाशकत्वमुपाधिरित्युक्तं भवति । तथा च ' यद्भौतिकं भवति भौतिकगोचरं तत् ' इत्यत्र स्वविषयप्रकाशकरं सद्भौतिकत्वहेतुर्विवक्षितोऽतो वेदान्तेषु विशेषणाभावाद्धेत्वसिद्धिश्च वस्तुतो वेदस्य चिद्विवर्ततया वक्ष्यमाणत्वाद्भूतकार्यत्वं न वेदस्यास्तीति स्वप्रकाशकत्वसिद्धिरिति भावः ॥ १४ ॥

**सु० टी०—नन्वात्मानमकर्मीकुर्वतस्तत्त्वमादेः कथमात्मबोधकत्वं मानत्वस्य संविदाधानप्रयुक्तत्वादिति चेन्नाविद्यानिवर्तकत्वेन मानत्वसंभवादित्याह—**

**यत्तु प्रमाणमवधीर्य निजप्रमेये**
**कर्मत्वमर्थमवबोधयितुं प्रवृत्तम् ।**
**तत्प्रत्यगात्मविषयं भवितुं क्षमेत**
**तत्तत्त्वमादिवचनं न ततोऽन्यदस्ति ॥ १५ ॥**

यत्विति । **अवधीर्यानादृत्य । न चाकर्मीभूतवस्तुबोधकत्वं प्रत्यक्षादेरिति न तद्विषयत्वमात्मन इत्याह**—तदिति ॥ १५ ॥

अ० टी०—ननु प्रमाणमात्रस्य संवित्फलाविशेषात्सर्वमेव मानं जडविषयं नाऽऽत्मविषयमिति चेत्तत्राऽऽह—**यत्तु प्रमाणमिति** । अक्षरार्थस्त्वतिरोहितः । मानानां संवित्फलत्वमात्रं न जडविषयत्वे प्रयोजकं किं तु स्वात्मसंवित्फलत्वमिति भावं सूचयन्निजप्रमेये कर्मत्वमवधीर्य तेन संविज्जनकत्वं प्रत्युक्तं मानत्वं सर्वत्रापि किं त्वविद्यानिवृत्तिमात्रमेव मानत्वं जडेष्वपि संविद्रूपतयाऽविद्यानिवृत्त्यर्थत्वाङ्गीकारादिति भावः । तर्हि प्रत्यक्षादिरप्यविषयतया प्रत्यगात्मानं बोधयितुं क्षमेत किमिति तेषामनात्मविषयत्वं नियम्यत इति

तत्राऽऽह—**तत्त्वमादीति** । ' न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' [ मुण्ड० ३ । १ । ८ ] 'नावेदविन्मनुते तं बृहन्तम्' इत्यादौ वेदेतरमानानां प्रत्यगात्मविषयत्वनिषेधश्रवणादात्मनश्चौपनिषदत्वविशेषणश्रवणाच्चोपनिषदेकगम्यत्वमेव न मानान्तरगम्यत्वमपीत्यर्थः ॥ १९ ॥

**सु० टी०—कथं जडविषयमानस्याज्ञातबोधकत्वासंभव इति चेत्तदज्ञातत्वासिद्धेरित्याह—**

**नाज्ञाततावगतिरस्ति जडेषु पूर्वं**
**मेयेषु तत्स्फुरणकारणवर्जितत्वात् ।**
**मानोदयान्न हि पुरा किमपीह मानं**
**नापि प्रमेयबलतो जडता हि तस्य ॥ १६ ॥**

नाज्ञाततेति । **जडप्रमेयेषु हि न मानप्रवृत्तेः प्रागज्ञातत्वसिद्धिरस्ति तदा तेषां स्फुरणे हेत्वभावादज्ञातत्वस्य तत्प्रतियोगिकत्वेन तन्निरूप्यत्वादित्यर्थः । तथा हि किं जडानां मानबलेनैव मानात्पूर्वं मानं स्वतो वा नाऽऽद्य इत्याह—**न हीति । **नान्त्यः स्वसंवेद्यत्वाभावादित्याह—**नापीति ॥ **१६ ॥**

अ० टी०—नन्वेवमुक्तरीत्या प्रत्यक्षादेर्नाऽऽत्मविषयतेति सिद्धं तथाऽपि ' अज्ञातमर्थमवबोधयदेव मानम् ' इत्यत्र प्रत्यगात्मन एवाज्ञातत्वं तद्विषये वेदान्त एव तत्त्वावेदनलक्षणं प्रामाण्यं प्रत्यक्षादिविषयस्य नाज्ञातत्वमिति तद्विषयं सर्वमेव प्रमाणं न तत्त्वावेदकं किंतु व्यावहारिकमेव प्रामाण्यमिति यदुक्तं तत्र प्रमाणविषयस्यानात्मनोऽज्ञातत्वाभावः कुत इति वक्तव्यमिति चेत्तत्राज्ञातत्वावगमे हेत्वभावादित्याह—**नाज्ञाततेति** । अयमर्थो जडेष्वज्ञातता मानादवगम्यते स्वप्रकाशतया वा । आद्येऽपि जडावगमप्रमाणवृत्तेः प्रागेवावगम्यते पश्चाद्वा गम्यत इत्याह—**नाज्ञाततेत्याद्येन पद्येन** । जडेषु मेयेष्विति संबन्धत इत्यत आह—**तत्स्फुरणकारणवर्जितत्वादिति** । उक्तमेव हेतुमुपपादयति—**मानोदयादिति** । मानोदयात्पुरेह विषयेऽस्याज्ञातत्वे न हि किमपि मानमस्त्यतो मानोदयात्पूर्वं नाज्ञाततासिद्धिरित्यर्थः । न द्वितीयो मानोदयात्पश्चाद्विषयेऽज्ञातताया निवृत्तत्वान्न मानावगम्यतेति द्रष्टव्यं मानविरोधि नाज्ञातत्वं संभवतीति भावः । स्वप्रकाशत्वकल्पं प्रत्याह—**नापि प्रमेयबलत इति** । तस्य प्रमेयस्य जडता हि प्रसिद्धा । अतो नास्याऽऽत्मवत्स्वविषयाज्ञातत्तास्फुरणमपीति जडेषु नाज्ञातताऽस्तीत्यर्थः ॥ १६ ॥

---

१ क. 'वैरिन्द्रियैनस्त' ।

सु० टी०—नन्वज्ञातमपि मेयं स्वयमेव स्वाज्ञातत्वं बोधयत्विति चेत्याह—

नाज्ञाततावगतये स्वयमेव बाह्यं
मेयं समर्थमवबोधविलक्षणत्वात् ।
नापि प्रमाणमवबोधकमस्ति किंचि-
न्मानोदयात्पुर इति स्फुटमभ्युपेयम् ॥ १७ ॥

नाज्ञाततेति । जडत्वेनाबोधकत्वादित्यर्थः । नापीति मानप्रवृत्तेः पूर्वं न तद्बोधकं मानमस्तीत्यर्थः । तथा हि न तावच्चक्षुरवबोधकमज्ञानस्य तदयोग्यत्वात् । नापि मनः सुषुप्तौ तेन विनाऽपि तद्भानात् । नाप्यनुमानादिकमपरोक्षानुभवत्वादिति भावः ॥ १७ ॥

अ० टी०—ननु जडेष्वज्ञातत्वानुभवादेव तत्साधनसामर्थ्यं कल्प्यमिति चेन्नासंभवादित्याह—**नाज्ञाततेति** । अवबोधविलक्षणत्वादिति ज्ञानरूपत्वाभावादित्यर्थः स्पष्टमन्यत् । पूर्वोक्तस्यैवायं प्रपञ्चः । जडेष्वज्ञातत्वानुभवस्तद्विषयप्रमाणानुदयाद्वा तदवच्छिन्नचिदावरणाद्वा संभवतीति भावः ॥ १७ ॥

सु० टी०—ननु माने प्रवृत्ते तदन्यथानुपपत्त्या मेयस्य प्रागज्ञातत्वं कल्प्यमिति चेन्न मानप्रवेशात्पूर्वमज्ञाततावगत्यपेक्षणादन्यथा तद्बुभुत्साद्यनुत्पादेन मानस्याप्यप्रवृत्त्यापत्तेरित्याह—

नाज्ञाततामनवगम्य पुरा प्रवेशा-
न्मानस्य किंचिदपि मानबलेन बोद्धुम् ।
शक्नोति कश्चिदपि मानबलेन बुद्धं
किं वा स्वभाव इति निश्चयहेत्वभावात् ॥ १८ ॥

नाज्ञाततामिति । किंचैवं मानात्पूर्वं घटादेरज्ञातत्वाज्ञाने घटादिस्फुरणस्य मानफलत्वमपि न सिध्येत्तस्य स्वाभाविकत्वागन्तुकत्वयोरनिश्चयादित्याह—मानेति । किमिदं मानेन बुद्धं किं वा बुद्धत्वमेवास्य स्वभाव इत्यनिश्चयादित्यर्थः । न च चक्षुर्व्यापारानन्तर्यात्तज्जन्यत्वनिश्चयस्तस्य प्रागज्ञातत्वाज्ञाने तदानन्तर्यस्यापि दुरवधारणत्वादिति भावः ॥ १८ ॥

---

१ ए. यान्न स्फुरणं स्फु° ।

अ० टी०—ननु मा भून्मानप्रवृत्तेः प्रागजडेष्वज्ञाततासिद्धिर्मा च भूत्प्रत्यक्षेण तत्सिद्धिस्तथाऽपि मानप्रवृत्त्यन्यथानुपपत्त्या प्रागज्ञातत्वं कल्प्यत इति चेत्तत्राऽऽह—**नाज्ञाततामिति**। मानस्य प्रवेशात्पुराऽज्ञाततामनवगम्यावगन्तव्यो मयाऽयमर्थ इति बुभुत्सया मानबलेन मानं प्रवर्त्य तद्बलेन विषये ज्ञाततां बोद्धुं कश्चिदपि किंचिदीषन्मात्रमपि बोद्धुं न शक्नोतीति योजना। तथा च मानप्रवृत्तेः प्रागेवाज्ञातत्वावगमापेक्षणान्न मानोदयोत्तरकालं तत्कल्पना संभवतीत्यर्थः। तर्हि बुभुत्सया मानप्रवृत्तिर्मा भूदैवगत्या प्रवृत्तेनैव मानेनार्थं जानीयात्तदन्यथानुपपत्त्या च प्रागज्ञातत्वमवगच्छतीति चेन्नैवमपि संभवतीत्याह—**मानबलेन बुद्धमिति**। ज्ञेयस्य वस्तुनः प्रागज्ञातत्वासिद्धौ बुद्धमपि तन्मानबलेन वा बुद्धं किं वा स्वभावत एवेति निश्चयो न स्याद्धेत्वभावादित्यर्थः। वस्तुसिद्धेरागन्तुकत्वानिश्चयात्तदनिश्चये च प्रागज्ञातत्वकल्पनायोगादिति भावः॥ १८॥

**सु० टी०—दृष्टान्तमाह—**

**प्रक्षालनेन धवलं किमिदं बभूव**
**किं वा पुराऽपि धवलं स्वयमेव वस्त्रम्।**
**इत्येवमेव न विवेक्तुमलं कदाऽपि**
**यो दृष्टवान्न मलिनं वसनं पुरस्तात्॥ १९॥**

प्रक्षालनेनेति। **यथा हि प्रागज्ञातवस्त्रमालिन्यः किमिदमादित एव शुभ्रं प्रक्षालनाद्वेति न विविनक्तीत्यर्थः॥ १९॥**

अ० टी०—ननु मा भून्मानाबुद्धत्वनिश्चयो बुद्धत्वमात्रं तावत्प्रत्यक्षमस्ति तेन प्रागबुद्धत्वं कल्प्यतामिति चेन्नैवमित्यत्र दृष्टान्तमाह—**प्रक्षालनेनेति**। यः प्रथममेव धवलवस्त्रदर्शी ततः पुरस्तात्पूर्वं कदाचिदपि मलिनं तद्वसनं न दृष्टवान्स एष वस्त्रं प्रक्षालनेन किं धवलमासीत्किं पुराऽपि पूर्वमपि स्वयमेव धवलमित्येवं विवेक्तुं नालं समर्थो यथेत्यर्थः॥१९॥

**सु० टी०—दार्ष्टान्तिकमाह—**

**एवं पुराऽनधिगतं यदि नानुभूतं**
**मानेन बोधितमिदं प्रतिभाति मेयम्।**
**न स्वप्रकाशमिति शक्यमिदं विवेक्तुं**
**केनापि नैव तदवस्थतयैव दृष्टेः॥ २०॥**

एवमिति। **इदं वस्तु मानेनैव बोधितं भाति न तु स्वप्रकाशमिति न केनापि विवेक्तुं शक्यमिति संबन्धः। तदवस्थतयैव स्फुरदवस्थतयैव॥ २०॥**

अ० टी०—दार्ष्टान्तिकमाह—**एवं पुरेति**। अनधिगतमनधिगतत्वं पुरा मानप्रवृत्ते-र्यदि नानुभूतं तर्हीदं मेयं मानेनाऽऽगन्तुकेन बोधितं सत्प्रतिभाति न स्वप्रकाशमिदमिति विवेक्तुं केनापि नैव शक्यं यतस्तदवस्थतयैव प्रकाशमानावस्थत्वेनैव मेयस्य दृष्टेरिति योजना। प्रकाशस्याऽऽगन्तुकत्वादर्शनेऽन्यकृतत्वकल्पनायोगात्स्वाभाविकमेवेदमस्येति पुरुषा-नुमानकृतमित्यभिप्रायः ॥ २० ॥

**सु० टी०—नन्वस्तु परेषां घटादेरज्ञातत्वबोधासंभवादमेयत्वमस्माकं तु साक्षिणैव तदवगमसंभवादनात्मविषयमपि चक्षुरादि प्रमाणं स्यादिति चेन्नाज्ञानस्य साक्षिण्यध्यस्तत्वेन जडेषु तदभावादित्याह—**

**अज्ञातमर्थमवबोधयितुं न शक्त-**
**मेवं प्रमाणमखिलं जडवस्तुनिष्ठम् ।**
**किं त्वप्रबुद्धपुरुषं व्यवहारकाले**
**संश्रित्य संजनयति व्यवहारमात्रम् ॥ २१ ॥**



अज्ञातमिति। **जडवस्तुनिष्ठं जडवस्तुविषयम्। कथं तर्हि प्रत्यक्षादिषु प्रामाण्यं व्यवहार इति चेत्तद्धेतोरज्ञानदोषस्याऽऽतत्त्वबोधमनुवृत्तेरि-त्याह—**किंत्विति **। अप्रबुद्धमज्ञानिनं पुरुषमाश्रित्येत्यर्थः । तेन घटा-द्यवच्छिन्नचिन्निष्ठाज्ञाननिवृत्त्या तद्व्यवहारहेतुत्वमेव तत्प्रामाण्यमि-त्यर्थः ॥ २१ ॥**

अ० टी०—तस्मादनात्मनो ज्ञातत्वासंभवात्तद्विषयस्य मानस्य न तत्त्वावेदकत्वमस्त्यज्ञा-तार्थाधिगन्तृत्वाभावादित्युपसंहरति—**अज्ञातमिति** । तर्हि भ्रान्तिज्ञानवद्व्यवहारविसं-वादोऽपि स्यादिति चेन्नेत्याह—**किं त्विति** । व्यवहारकालेऽप्रबुद्धपुरुषमज्ञानदोषदुष्टं नरमाश्रित्य तदप्रबुद्धवस्तुप्रदर्शनव्यवहारमात्रं संजनयत्यतो व्यवहारकाल एव रजतादिवि-षयभ्रान्तिज्ञानवद्विसंवादाभावात्प्रत्यक्षादिषु प्रमाणत्वव्यवहारो न विरुध्यत इत्यर्थः ॥ २१ ॥

**सु० टी०—ननु तर्हि सर्वजडानां मिथ्यात्वाद्घटादौ शुक्तिरजतादौ तज्ज्ञानेषु च सत्यत्वमिथ्यात्वभ्रान्तित्वप्रमात्वबाध्यत्वबाधकत्वादिवि-भागः किंकृत इति चेन्मिथ्यात्वेऽप्यवान्तरभेदादाप्रबोधं स्वप्नदृष्टेष्वि-वाऽऽब्रह्मबोधं जाग्रत्प्रपञ्चेऽपि तद्व्यवस्थोपपत्तेरित्याह—**

**आबोधतः सकलमेव हि सत्यमिथ्या-**
**भ्रान्तिप्रमाणविनिवर्त्यनिवर्तकत्वम् ।**

स्वप्नेऽपि दृष्टमिदमेवमिहापि जाग्र-
त्काले भवत्वखिलमापरमात्मबोधात् ॥ २२ ॥

आबोधत इति । जागरणपर्यन्तमित्यर्थः । आपरमात्मेति । 'यत्र[1] वा अस्य सर्वमात्मैवाभूत्' [ बृ० २ । ४ । १४ ] इति श्रुतेः ॥ २२ ॥

अ० टी०—ननु यदि जाग्रदवस्थाज्ञानस्य तत्त्वानावेदकत्वं तर्हि सम्यग्ज्ञानस्याभावाद्भ्रान्त्यादिविभागासिद्धिप्रसङ्ग इति चेन्नैवं मिथ्यात्वेऽप्यवान्तरभेदाव्यवस्थोपपत्तेरिति स्वप्नदृष्टान्तेनाऽऽह—आबोधत इति । आबोधतः प्रबोधपर्यन्तं यथा स्वप्नेऽपि सर्वेषां भ्रान्तित्वाभिमते सत्यमिथ्यादि सकलमेव हीदं व्यवस्थितं दृष्टमेवमिहापीति दार्ष्टान्तिकभागः स्पष्टार्थः ॥ २२ ॥

उक्तमेव विभागं स्वाप्निकोदाहरणेन व्यनक्ति—

स्वप्ने तप्तशिलाधिरोहणगता निःश्रेयसोपायता
मिथ्या ब्राह्मणतर्पणादिनिलया सत्या तथा लौकिकी ।
स्रक्सत्या तदहिर्मृषैव विदितो निद्रानिवृत्तौ पुनः
स्वप्ने दृष्टमशेषमेव वितथं ग्राह्यं तथा जागरे ॥ २३ ॥

स्वप्न इति । तप्तशिलाधिरोहणं बौद्धागमप्रसिद्धम् । तत्रापि लौकिकविभागमाह—तथेति । अस्तु तदपि सत्यमिति चेन्न जाग्रति बाधादित्याह—निद्रेति । दार्ष्टान्तिके योजयति—ग्राह्यमिति ॥ २३ ॥

अ० टी०—आबोधत इति पूर्वपद्योक्तमेव विशदयन् पाषण्डिनां शास्त्रमप्रमाणं वेदशास्त्रं तु प्रमाणमिति कथं सिध्येत्सर्वस्वप्नवज्जागरितस्यापि भ्रान्तत्वा[मि]ति शङ्कां स्वप्नदृष्टान्तेनैव निराकरोति—स्वप्न इति । शास्त्रीयो लौकिकश्च व्यवहारः सत्यमिथ्याव्यवस्थया स्वप्नेऽपि विदितो यावन्निद्रादोषानुवृत्तिरिति संपिण्डितोऽर्थः । निद्रादोषविनिवृत्तौ पुनः स्वप्ने दृष्टमशेषमेव व्यवस्थयोपलब्धं वितथं मिथ्यैवेति यथा तथा जागरेऽपि यावदविद्यमेव व्यवहारव्यवस्था निवृत्तायामविद्यायां सर्वोऽपि व्यवहारः शास्त्रीयो लौकिकश्च मृषेति ग्राह्यमित्यवशिष्टभागार्थः ॥ २३ ॥

सु० टी०—तथा जागर इत्यस्य दृष्टान्तस्य शेषं प्रपञ्चयति—

श्रेयःसाधनताऽग्निहोत्रनिलया सत्येति संगृह्यते
मिथ्या तप्तशिलाधिरोहणगता शिष्टैः परित्यज्यते ।

---

१ क. ख. ग. °त्रत्वस्य° ।

रज्जुः सत्यतया स्थितैव तदहिर्मिथ्यैव तादृग्भवे-
द्यावन्मूलतमोविदारणपटुर्विद्योदयो नाऽऽगमात् ॥ २४ ॥

श्रेयःसाधनतेति । स्पष्टम् ॥ २४ ॥

अ० टी०—'ग्राह्यं तथा जागरे' इत्युक्तं दार्ष्टान्तिकं प्रपञ्चयति—**श्रेयःसाधनतेति** । यावन्मूलतमो [ विदारणपटुः ] सर्वसंसारव्यवहारमूलाविद्यानिवारणपटुर्विद्योदयो यावत्तत्त्वमस्यादिमहावाक्यरूपागमान्न भवेत्तावत्पूर्वोक्तं सर्वं भवेत् । तस्मिंस्तु सति तत्सर्वमपि न भवेदतो वितथमेव सर्वमनात्मजातमित्यर्थः ॥ २४ ॥

**सु० टी०—ननु सर्वस्य स्वप्नतुल्यत्वे विज्ञानवादिसमयाविशेष इति शङ्कते—**

ननु शाक्यभिक्षुसमयेन समः
प्रतिभात्ययं च भगवत्समयः ।
यदि बाह्यवस्तु वितथं तु कथं
समयाविमौ न सदृशौ भवतः ॥ २५ ॥

नन्विति । **शाक्येन वेदप्रामाण्यानभ्युपगमात् कथं तत्समयस्य तदभ्युपगन्तृभगवत्पादसमयसाम्यमिति चेत्तत्राऽऽह**—यदीति । **विज्ञानातिरिक्तवस्त्वनभ्युपगमे तत्साम्यं कुतो नेत्यर्थः** ॥ २५ ॥

अ० टी०—ननु यदि सर्वं बाह्यं वितथमेवेत्यभिमतं भवतां तर्हि कथं वेदशास्त्रप्रामाण्यं बुद्धशास्त्राप्रामाण्यं च यथाप्रसिद्धमुपपद्यते व्यवहार इत्युक्तं संगतं स्यात्साक्षाद्विज्ञानवाद्यादिमतस्यैवाभिधानादिति कश्चिच्चोदयति—**नन्विति** । शाक्यभिक्षुर्बौद्धो मुनिः । साम्यमेवाभिनीय दर्शयति—**यदि बाह्येति** ॥ २५ ॥

**सु० टी०—अन्वयमुखेनापि तत्साम्यमापादयति—**

यदि बोध एव परमार्थवपु-
र्नतु बोध्यमित्यभिमतं भवति ।
ननु चाऽऽश्रितं भवति बुद्धमुने-
र्मतमेव कृत्स्नमिह मस्करिभिः ॥ २६ ॥

यदि बोध इति । **तेषां हि ज्ञानादभिन्नं ज्ञेयं ज्ञाने प्रतिभासमानत्वाज्ज्ञानवत् । अन्यथा ज्ञानज्ञेययोर्ग्राह्यग्राहकता न स्यादसंबन्धात् तत्र च**

ज्ञानं सत्यं ज्ञेयं त्वनादिवासनाविलसितमिति सिद्धान्तः । भवतामपि च ज्ञानरूपात्मनि ज्ञेयं सर्वमध्यस्तम् । तदभिन्नं स्वप्नवदितिवदतां तत्साम्यं दुर्वारमित्यर्थः ॥ २६ ॥

अ० टी०—बाह्यवैतथ्यमात्रेण कथं मतसाम्यं वैषम्यस्यापि कथंचित्संभवादिति चेन्नैवं विशेषादर्शनादित्याह—**यदि बोध इति** । यदि बोधज्ञानमात्रं परमार्थस्वरूपं न तु बोध्यं परमार्थसदिति भवतामप्यभिमतं भवति तदा ननु निश्चितं मस्करिभिर्वेण-वदण्डधारिभिर्वैदिकसंन्यासिभिरपि बुद्धमुनेर्विज्ञानवादिनो मतमेव कृत्स्नमिहाऽऽश्रितं भवति तेनापि तथैवाङ्गीकारादिति योजना ॥ २६ ॥

**सु० टी०—एकदेशसाम्येन तत्साम्यापादनं चेन्नैयायिकादेरपि बाह्यार्थाभ्युपगमसाम्यात् सौत्रान्तिकाविशेषः स्यात्सर्वसाम्येन चेत्तर्हि सुगतेन ग्राह्यग्राहकग्रहाणां प्रकाश्यप्रकाशकप्रकाशात्मके दीपादाविव वास्तवाभेदाभ्युपगमात् । अस्माभिस्तु कर्तृकरणकर्मक्रियाणां विरोधेनाभेदासंभवादहं चक्षुषा घटं पश्यामीति मातृमानविषयादीनां परस्परं धर्मिसमसत्ताकविभागस्वीकारान्नाऽऽवयोः साम्यमिति समाधत्ते—**

**ननु मातृमानविषयावगती-**
**रपरस्परं प्रति विभागवतीः ।**
**उपयन्भदन्तमुनिना सदृशः**
**कथमेष वैदिकमुनिर्भवति ॥ २७ ॥**

नन्विति । **अपरस्परमन्योन्यं प्रति विभागो व्यवस्था । भदन्तः सुगतः ॥ २७ ॥**

अ० टी०—न हि साम्यं मतयोर्मतवैषम्यस्य स्फुटत्वादिति परिहरति—**नन्विति** । मातृमानविषयावगतीश्चेत्येवं चतुर्विधं व्यवहारकाले मिथो विभक्ततयाऽसंकीर्णमित्युपपन्नमङ्गीकुर्वन्नेष वैदिकमुनिर्भदन्तमुनिना बुद्धाचार्येण कथं सदृशो भवति न कथमपीत्यर्थः । विज्ञानमेवैकं ज्ञेयाकारं तच्च क्षणिकमिति विज्ञानवादिमतं मात्रादिचतुष्टयं परस्परविभक्तं नित्यचैतन्यात्मन्यविद्ययाऽध्यस्तमनिर्वचनीयं तच्च यावद्व्यवहारं स्थिरमिति वैदिकमुनिमतमेतदेव वैषम्यं मतयोरिति भावः ॥ २७ ॥

---

१ क. °त्मविज्ञे। २ क. °पिधात्वर्थौ° ।

सु० टी०—नन्वया त्वयाऽपि प्रमातृप्रमाणादिभेदोऽभ्युपगतश्चेन्न तर्ह्यात्मनो निष्प्रपञ्चाद्वैतत्वमित्याशङ्कयाऽऽत्माश्रयविषयाज्ञानकल्पितत्वात्तद्भेदस्य नाद्वैतविरोधो नापि विज्ञानवादविशेष इत्याह—

परमात्मसंश्रयतमोजनितं
प्रविभक्तमेव तु परस्परतः ।
स्थिरमभ्युपेतमिह नः समये
ननु मातृमानविषयप्रभृति ॥ २८ ॥

परमात्मेति । ( * प्रविभक्तं स्थिरमिति च पराभिमतान्मात्रादेर्विशेष उक्तः । ) ननु निश्चये ॥ २८ ॥

अ० टी०—ननु त्वन्मतेऽपि दृश्यस्य मिथ्यात्वे तस्यासत्त्वमेव स्यान्न सत्त्वं ततः कुतश्चातुर्विध्यं स्थिरं तवेत्याशङ्क्योक्तमेव वैषम्यं स्फुटयति—परमात्मसंश्रयतम इति । मातृमानविषयप्रभृतीत्यस्य विशेषणानि परमात्मसंश्रयेत्यादीनि । तत्राऽऽद्येन विशेषणेन प्रमात्रादेर्ज्ञानात्मत्वनिरासो द्वितीयेनैकस्यैव ग्राह्यग्राहकाकारतेत्यस्य निरासस्तृतीयेन क्षणिकत्वनिरास इति लेशतोऽपि नास्मन्मतस्य बौद्धमतसाम्यमित्यर्थः ॥ २८ ॥

सु० टी०—प्रमात्रादिचतुष्टयं प्रविभक्तं व्यवहाराङ्गं चेत्तद्व्यवहारार्थमपि प्रमात्राद्यन्तरापेक्षायामनवस्था स्यात् । न हि तैरेव तद्ग्रहः संभवति कर्तृकर्मत्वविरोधादिति चेन्न प्रमाणाधीनसिद्धिकस्यैव प्रमात्राद्यपेक्षणात् । प्रमात्रादेस्तु सुखादिवत् । साक्षिवेद्यत्वादुदासीनबोधस्य च साक्षिणो निरपेक्षत्वादित्याह—

तमसा विनिर्मितमिदं सकलं
चतुरः स पश्यति परः पुरुषः ।
अविकारिबोधवपुरद्वयकः
करणैर्विना सकलसाक्षितया ॥ २९ ॥

तमसेति । इदं सकलमित्युक्तं विवृणोति—चतुर इति । प्रमात्रादीन् । योऽद्वयः पुरुषोऽविकारिबोधवपुः स चक्षुरादिभिर्विना निर्व्यापारनित्य-

* क. पुस्तके नायं ग्रन्थः ।

१ क. ग. कर्मकर्तृत्व° । २ क. ग. °त्वात्तदु° ।

**चैतन्येनैवेदं सर्वं पश्यतीत्यर्थः। तेनौदासीन्यबोधाभ्यां साक्षिशब्दार्हत्वमुक्तं कथं दर्शनक्रियाकर्तुरौदासीन्यमिति तत्राऽऽह—**सकलेति। **तादृशस्यैव साक्षित्वदर्शनादित्यर्थः॥ २९॥**

अ० टी०—बाह्यस्य मिथ्यात्वाभ्युपगमेऽप्यसद्वादानभ्युपगमान्न बौद्धमतसाम्यमस्मन्मतस्येति प्रतिपाद्यान्यमपि बौद्धमताद्विशेषमाह—**तमसेति**। किमिदं तमसा विनिर्मितं सकलमिति जिज्ञासायां साक्षिदृश्यं सर्वमित्याह—**चतुर इति**। पदार्थान्प्रमात्रादीन्परस्तेभ्यो भिन्नः पुरुषः स आत्मा प्रपश्यति। यानेष पश्यतीदं सकलं तमसा विनिर्मितमिति योजना। तस्य मते प्रमात्रादेर्न चिन्निष्ठाज्ञानजत्वं न च स्वात्यन्तभिन्नदृश्यत्वमिति ततो विशेष इत्यर्थः। पुरुषस्य दृश्यदर्शनप्रकारविशेषं वैधर्म्यान्तरमाह—**अविकारीति**। विकारो जन्मादिस्तत्संबन्धरहितोऽविकारी चासौ बोधवपुश्चाखण्डनित्यज्ञानस्वरूप इत्यर्थः। तस्य विज्ञानं क्षणिकमस्माकं तु चिदात्मा कूटस्थनित्य इति वैधर्म्यमुक्तं भवति। तस्यानेकानि ज्ञानान्यस्मन्नये पुरुषोऽद्वयकः सर्वत्र सर्वदा चैक एवेति च वैधर्म्यम्। करणैर्विना पश्यतीति संबन्धः। अनेनाविकारिबोधकरूपत्वं समर्थितम्। करणजन्यो हि बोधो विकार्ययं न तथेत्यविकारीत्यर्थः। कथं तर्हि पश्यतीति कर्तृवचनेन निर्देश इति तत्राऽऽह—**सकलसाक्षितयेति**। प्रदीपसवित्रादिवत्सांनिध्यमात्रेणेत्यर्थः। सर्वथाऽपि दृश्यस्य दृशो भेदविलक्षणत्वास्थिरत्वाविद्यानिर्मितत्वानात्मत्वाभ्युपगमाद्द्रष्टुश्च कूटस्थनित्यत्वैकत्वाभ्युपगमादस्मन्मतं शाक्यमतादत्यन्तं विलक्षणं सिद्धमिति भावः॥ २९॥

**सु० टी०—ननु प्रमातुरेव साक्षित्वं दृष्टं स च प्रमाणव्यापारापेक्ष इति कथं करणैर्विनेति चेन्न लोके व्यापाराविष्टस्य कर्तृत्वेनासाक्षित्वप्रसिद्धेरिहापि निर्व्यापारस्यासङ्गस्यैव स्वरूपचैतन्येन साक्षित्वं न सापेक्षस्येत्याह—**

**निजमायया परिगतः पुरुषः**
**परतन्त्रया तु निजया प्रभया।**
**परिकल्पितं सकलमाकलय-**
**न्स हि साक्षितामुपगतो भवति॥ ३०॥**

निजेति। **स्वाध्यस्तया मायया शबलः पुरुषः स्वस्मिन्कल्पितं जगन्निजया प्रभया प्रपञ्चाकाराविद्यावृत्तिगतेन स्वचिदाभासेनाऽऽकलयन्साक्षितामेतीत्यर्थः। एतच्चेश्वरस्य सर्वसाक्षित्वं जीवस्य तु साक्षित्वमविद्याशबलस्य बुद्ध्यादिवृत्तिगताभासेनेति द्रष्टव्यम्॥ ३०॥**

अ० टी०—कथं त्वन्मतेऽप्यसङ्गोऽद्वयोऽविकारिबोधरूपः पश्यतीत्युपपद्यत इति मायावशात्सर्वमस्माकमुपपन्नमेवेति साक्षित्वमुक्तं विशदयति—**निजमाययेति** । स हि पुरुषो निजमायया परिगतः सन्साक्षितामुपगतो भवतीत्यन्वयः । स्वाश्रया स्वविषया स्वा माया निजमाया तया परिगतः स्वचिदाभासव्याप्त्या तादात्म्याध्यासमापन्नः स्वाध्यस्तां मायामवभासयन्साक्षितामुपगत इत्यर्थः । तर्हि कथं विश्वसाक्षित्वं तस्य तत्सङ्गाभावादित्यत आह—**परतन्त्रयेति** । तुशब्दश्चार्थः । परतन्त्रया स्वाश्रयमायोपाधिगतया निजया प्रभया स्वचैतन्याभासेन स्वाभासया मायया मायानुगतचैतन्येन चेति यावत् । परिकल्पितं सकलमाकलयन्नवभासयन्स्वचैतन्यावभासखचितं कुर्वन्निति यावत् । अथ वा निजमायया स्वासाधारणशक्त्या परतन्त्रया जडया प्रवृत्त्यादौ चैतन्यसापेक्षयेति यावत् । परिकल्पितं सकलं निजया प्रभया स्वचैतन्येनाऽऽकलयन्व्याप्तवान्परिगतो व्यापकः साक्षितामुपगतो भवतीति योजना ॥ ३० ॥

**सु० टी०—ननु मातृमानादेः स्थैर्यमनुपपन्नं तद्धि न तावत्प्रत्यक्षेण तस्य विषयमात्रग्राहित्वात् । नापि लिङ्गेन व्याप्तिग्रहस्थलाभावात् । नापि प्रत्यभिज्ञया ज्वालादौ व्यभिचारात्तस्या हेत्वसंभवेनासंभवाच्च । चक्षुरादेः संबद्धवर्तमानग्राहित्वेन तत्ताग्रहेऽसामर्थ्यात्संस्कारस्य स्मृतिमात्रहेतुत्वेनेदमनुभवेऽशक्तेरभिज्ञास्मृतिजनने निरपेक्षयोश्च तयोर्मेलनायोगादयं स इत्याकारभेदाच्च तस्या विषयैक्यस्याप्यसंभवादित्याशङ्क्याऽऽह—**

**ग्राह्यग्राहकयोः स्थिरत्वगमनी तत्प्रत्यभिज्ञाप्रमा**
**नोपापत्स्यत चेदसेत्स्यदपि नौ सिद्धान्तयोस्तुल्यता ।**
**सा निर्वक्ष्यति सिध्यतीति न यतः स्थैर्यं स्वरूपात्मकं**
**चैतन्यस्य च भङ्गुरत्वमिव मे सर्वस्य ते दर्शने ॥ ३१ ॥**

ग्राह्यग्राहकयोरिति । **प्रमेयप्रमात्रोरित्यर्थः । स्थिरत्वमनेककालस्थायित्वं तद्गमयतीति तथेदृशी प्रत्यभिज्ञाप्रमा चेन्नोपपन्नाऽभविष्यत्तदाऽऽवयोः सिद्धान्ततौल्यमभविष्यत् । सा तु निर्वक्ष्यति निर्व्यूढा भविष्यतीति हेतोर्मे मम जगतः स्थैर्यं सिध्यतीति संबन्धः । दोषाजन्यत्वेन बाधाभावेन च प्रत्यभिज्ञायाः प्रामाण्यं ज्वालादौ तद्भ्रमो दोषात् । न च तस्या हेत्वसंभवः संस्कारसहितेन्द्रियस्यैव हेतुत्वात् । संयोगे तमोध्वंसे च निरपेक्षयोरपि चक्षुरालोकयो रूपग्रहे सापेक्षतादर्शनाद्विषयासंभवोऽपि**

**नेत्याह**—स्वरूपेति । **तत्तेदन्तोपलक्षितं वस्तुस्वरूपमेव स्थैर्यं तदेवास्या विषयः सिध्यतीत्यर्थः । दृष्टान्तमाह**—चैतन्यस्य चेति । **यथा तव ज्ञानस्य क्षणिकत्वं स्वरूपं धर्मत्वे स्वलक्षणत्वक्षतेरेवं मम स्थैर्यमपीत्यर्थः॥ ३१ ॥**

अ० टी०—एवं दृशः कूटस्थसाक्षित्वमुपपाद्य स्थिरमभ्युपेतमित्यत्रोक्तं दृश्यस्याक्षणिकलक्षणं स्थिरत्वं साधयति—**ग्राह्यग्राहकयोरिति** । यदुच्यते बौद्धैः सौत्रान्तिकादिभिर्ग्राह्यस्य विषयस्य ग्राहकस्याऽऽत्मचैतन्यस्य च क्षणिकतेति तत्तदा निश्चितं भवेद्यदि तयोः स्थैर्यग्राहकं प्रत्यभिज्ञाख्यं क्षणिकत्वानुमानबाधकं न संसिध्येदित्येतदाह ग्राह्यग्राहकयोर्विषयविषयिणोः स्थिरत्वगमन्येतयोः प्रत्यभिज्ञा नाम प्रमा चेन्नोपापत्स्यत नोपपन्नाऽभविष्यत्तर्हि नावयोः सिद्धान्तयोस्तुल्यताऽसेत्स्यदपि सिद्धिमगमिष्यदिति संभाव्येत सा प्रत्यभिज्ञाप्रमा ग्राह्यग्राहकयोः स्थैर्यं सिध्यतीति निर्वक्ष्यति निर्वाहं करिष्यति । कुतो नयतो नीतितः । यथाऽभिज्ञाप्रत्यक्षे दोषाजन्यत्वबाधाभावाभ्यां न्यायाभ्यां स्वार्थाव्यभिचारित्वमेवमस्या अपि न्याययोगात्स्वार्थसाधकत्वं संभवतीत्यर्थः । न चानयोः स्थैर्यं नाम धर्मो मयाऽभ्युपेयते येन चैतन्यस्य धर्मयोगादेकरसत्वहानिशङ्काग्राहकात्मन इत्याह—**स्थैर्यमिति** । चैतन्यस्य चकाराद्ग्राह्यस्य च स्थैर्यं मम मते स्वरूपात्मकमेव न धर्मस्ते दर्शने सर्वस्य भङ्गुरत्वं क्षणिकत्वमिवेति योजना । तेन च विज्ञानक्षणिकत्वयोर्धर्मधर्मित्वाभ्युपगमे स्वलक्षणत्वमभिमतं हीयेतेति भावः । ग्राहकत्वसर्वविकारसाक्षित्वोपपादनेन पूर्वपद्य एव स्थैर्यं साधितमप्यत्र प्रत्यभिज्ञासामर्थ्यस्योभयतुल्यत्वादभ्युच्चयार्थं ग्राहकस्य ग्रहणं कृतं स्वरूपात्मत्वकथनं तु प्रत्यभिज्ञायाः स्वरूपविषयत्वा....ात्प्रत्यभिज्ञानवद्भ्रान्तित्वशङ्काव्यावृत्त्यर्थमिति च द्रष्टव्यम् ॥ ३१ ॥

**सु० टी०—नन्वेवं सर्वस्य कल्पितत्वे जाग्रत्स्वप्नयोर्न वैलक्षण्यं स्यात्ततश्च 'वैधर्म्याच्च न स्वप्नादिवत्' [ ब्रह्म० २ । २ । २९ ] इति सूत्रविरोधोऽनुभवविरोधश्चेति शङ्कते—**

**ननु कल्पितं यदिह जागरितं**
**वद कीदृशी खलु विलक्षणता ।**
**स्वपनादमुष्य भवतोऽभिमता**
**परिकल्पितत्वमुभयोस्तु समम् ॥ ३२ ॥**

**ननु** कल्पितमिति । **उभयोर्जाग्रत्स्वप्नयोः ॥ ३२ ॥**

अ० टी०—एवं बौद्धमतसाम्ये परिहृतेऽपि यदुक्तं जागरस्य स्वप्नसाम्यं तज्जाग्रत्स्वप्न-

योर्वैलक्षण(ण्य)स्य सर्वसंप्रतिपन्नत्वादयुक्तमित्याशङ्कते—**नन्विति** । सदपि सत्यत्वेन प्रसिद्धमपि जागरितं कल्पितं चेत्तदा वद कीदृशीति योजना । सुगममन्यत् ॥ ३२ ॥

**सु० टी०—मिथ्यात्वाविशेषेऽपि जाग्रत्प्रपञ्चस्याविद्यातिरिक्तदोषाजन्यत्वेन व्यावहारिकत्वं स्वप्नस्य तु निद्रादिदोषान्तरजन्यत्वेन प्रातीतिकत्वं तथा व्यावहारिकत्वमपि न व्यवहारहेतुत्वं स्वाप्निकेऽपि सत्त्वादपि तु प्रमातरि सत्यबाध्यत्वम् । सति च तस्मिन्बाध्यत्वं प्रातीतिकत्वमिति वैधर्म्येण समाधत्ते—**

**न प्रमातरि सति प्रबाध्यते**
**जागरः स्वपनदृष्टवस्तुवत् ।**
**मातृमानविषयोपलब्धिभिः**
**साकमेव तमसो निराकृतेः ॥ ३३ ॥**

न प्रमातरीति । **ननु जागरस्य बाध एव नास्ति तददर्शनादिति चेन्नेत्याह**—मातृमानेति । **'तत्केन कं पश्येत्' [ बृह० ४ । ५ । १५ ] इत्यादिश्रुत्या प्रमात्रादिभिः सहैव ब्रह्मज्ञानादविद्यानिवृत्तेरुक्तत्वान्नतु स्वप्नादिवत्सति प्रमातरीत्यतोऽदर्शनमित्यर्थः ॥ ३३ ॥**

अ० टी०—मिथ्यात्वांशे वैलक्षण्याभावेऽप्यस्ति वैषम्यान्तरमिति परिहरति—**न प्रमातरीति ।** जाग्रत्स्वप्नयोः प्रमाता ह्येकः प्रसिद्धः प्रत्यभिज्ञानात् । तत्र स्वपने स्वप्ने दृष्टवस्तु यथा प्रमातरि स्वप्नोपलब्धरि सत्येव प्रबाध्यते मिथ्येति निश्चीयते प्रतिपन्नोपाधौ निषिध्यमानत्वात् । तथा जागरः प्रमातरि सति न प्रबाध्यते यतः संसारमूलतमोनिवृत्तिव्यतिरेकेण न जाग्रद्भ्रमो निवर्तते तत्त्वमस्यादिमहावाक्यजनितज्ञानेन मातृमानविषयोपलब्धिभिः सह तमसो निराकृतेर्बाधनात् । तस्मात्प्रमात्राद्यभावे च व्यवहाराभावान्न व्यवहारसमये जागरितमिथ्यात्वप्रतीत्यवसर इत्यनयोर्विशेष इत्यर्थः ॥ ३३ ॥

**सु० टी०—ननु कुतोऽयं विशेष इदानीमबाध्यत्वात् सत्यमेव जगत्किं न स्यादिति चेत्तत्राऽऽह—**

**देशकालपुरुषैरवस्थया जागरस्य खलु कारणं तमः ।**
**साकमेव सहसा निरस्यते वेदवाक्यजनितात्मसंविदा ॥ ३४ ॥**

देशेति । **जाग्रत्कारणं ह्यज्ञानं देशकालावस्थाप्रमातृभिः सहैव जाग्र-**

त्प्रपञ्चं प्रसूते न तु ततः पूर्वं देशादिकमस्तीत्यतस्तस्य ब्रह्मविद्यया देशादिभिः सह चैतन्यावधिरेव बाध इति युक्तं देशादीनामारोप्यकोट्यन्तर्भावादित्यर्थः । मिथ्यारजतस्वप्नप्रपञ्चादिहेत्वज्ञानं तु सत्स्वेव देशादिषु तानि कल्पयतीति युक्तस्तेषां तत्तद्देशकालावधिर्बाध इति भावः ॥ ३४ ॥

अ० टी०—ननूभयोरपि बाध्यत्वाविशेषान्मिथ्यात्वं चेत्समं तर्हि किंनिमित्तोऽयं विशेष इति चेत्तत्राऽऽह—**देशकालपुरुषैरिति** । अथ वा जागरितस्य प्रमातरि सत्येव बाधाभावात्प्रतिपन्नोपाधौ बाध्यत्वलक्षणं मिथ्यात्वं तस्य न सिध्येदित्याशङ्क्याऽऽह—**देशकालेति** । यद्वा प्रमात्रादिभिः सह तत्कारणतमोनिराकरणाच्च जागरः प्रमात्रादिषु सत्सु न प्रबाध्यत इत्युक्तमेव सहेतुकमुपपादयति—**देशकालेति** । अस्यार्थः—मूलाज्ञानं हि जाग्रत्प्रमात्रादेः कारणं तत्र शुक्तौ रजतवद्देशकालव्यवस्था प्रमात्रादिषु सत्स्वेव जाग्रद्दृश्यमुद्भावयत्यज्ञानविक्षेपात्प्राग्देशादिविभागासिद्धेः किं तु देशादिभिः सहैव चिन्मात्राश्रयविषयाज्ञानेन जाग्रद्दृश्यमुद्भाव्यते । तथा च तादृगज्ञानबाधनेनैव तत्कार्यजाग्रद्बाधो वक्तव्यः । स च वेदान्तवाक्यजनितात्मतत्त्वज्ञानैकसाध्य इत्येषाऽक्षरयोजना । जागरस्य कारणं तमोऽज्ञानं वेदवाक्यजनितात्मसंविदा निरस्यते प्रमात्रादिभिरवस्थया जाग्रदादिलक्षणया च साकमेव सहैव तत्रापि सहसा स्वोत्पत्तिमात्रेण निरस्यते बाध्यत इत्येवं सत्युभयोर्बाध्यत्वेन मिथ्यात्वे समानेऽपि सत्सु देशादिषु बाध्यत्वं सहैव देशादिभिर्बाध्यत्वमिति च स्वप्नजागरितयोर्विशेषः सिद्धः । तथा च चैतन्यस्यैवाज्ञातस्य जाग्रद्भ्रमाधिष्ठानत्वात्तस्मिन्सत्येव तदज्ञानेन सह जाग्रद्बाधनप्रतिपन्नोपाधौ बाध्यत्वमप्यत्राविरुद्धमेवेति मिथ्यात्वं नानुपपन्नम् । तथा सत्सु प्रमात्रादिष्वस्यारोपाभावात्सत्सु तेषु न बाध्यन्ते किं तु तैः सहैवाऽऽरोपात्सहैव ते बाध्यन्ते । रजतस्वप्नादौ तद्विपर्यय इति सर्व[मव]दातम् ॥ ३४ ॥

**सु टी०—एतदेव स्वप्नेत्यादिवैधर्म्यदृष्टान्तं विवृण्वन्नाह—**

**स्वप्नदृष्टमिह रज्जुसर्पवद्देशकालपुरुषेषु बाध्यते ।**
**जागरः पुनरयं तथाविधं बाधकं न लभतेऽसमीक्षणात् ॥३५॥**

स्वप्नदृष्टमिति । **देशकालपुरुषेषु सत्स्विति शेषः । तथाविधं तेषु सत्सु जायमानम् । असमीक्षणादननुभवात् ॥ ३५ ॥**

ननु देशादिषु सत्स्वेव स्वप्न आरोप्यते जागरस्तु तैः सहेत्यत्र किं प्रमाणमिति चेद्बाधानुभव एवेत्याह—**स्वप्नदृष्टमिति** । स्वप्नदृष्टं हि देशादौ सत्येव बाधितमनुभूयते तेन

तत्तस्मिन्सत्येव कल्पितं रज्जुसर्पवदिति गम्यते जागरस्य बाधस्तथा नानुभूयत इति देशकालादिभिः सहैवाज्ञानेन कल्पित इति गम्यत इत्यर्थः । अक्षरयोजना सुगमा ॥३५॥

**सु० टी०—एवमुक्तवैलक्षण्येनैव जाग्रत्स्वप्नयोः सत्यमिथ्याव्यवहारोपपत्तेर्न जाग्रत्सत्यत्वाशङ्केत्याह—**

**तेन सत्यमिह जागरं विदुः स्वप्नविभ्रमविरुद्धधर्मकम् ।**
**आपरात्मपरमार्थदर्शनात्तेन बाधितवपुर्न सत्क्वचित् ॥ ३६ ॥**

तेनेति । **प्रमातरि सत्यबाध्यत्वेन स्वप्नविरुद्धतेत्यर्थः** । न सत्क्वचिदिति । **यथा स्वप्नस्य बाधितस्यापि पुनर्दर्शनं प्रमातुः सत्वान्नैवं तत्त्वज्ञानबाधितजागरस्येत्यर्थः ॥ ३६ ॥**

अ० टी०—तस्मान्मिथ्यात्वाविशेषेऽप्युक्ताद्विशेषाज्जागरितस्य सत्यत्वं स्वप्नस्य च मिथ्यात्वमिति लोको मन्यते यावद्ब्रह्मात्मदर्शनं तेन बाधितं तु प्रबुद्धस्य स्वप्न इव सर्वात्मना निवर्तत इत्युपसंहरति—**तेन सत्यमिति** । स्पष्टाऽक्षरयोजना ॥ ३६ ॥

**सु० टी०—कुत एवमिति चेत्तत्राऽऽह—**

**तत्र सत्यमनृतं च भेदतः**
**प्रत्यगात्मतमसा विकल्पितम् ।**
**प्रक्षिणोति परमात्मवस्तुगा**
**बुद्धिवृत्तिरविचालिनी सती ॥ ३७ ॥**

तत्रेति । **प्रत्यगज्ञानेन व्यवहाराबाध्यं जागरितं सत्यं तद्बाध्यं च स्वप्नाद्यसत्यमिति विभागेनाऽऽत्मनि कल्पितं द्वैतमात्मवस्त्वाकारा बुद्धिवृत्तिः प्रक्षिणोति प्रकृष्टं समूलकाषं कषतीति मूलाज्ञानाभावान्न स्वप्नजागरौ पुनः स्यातामित्यर्थः ॥ ३७ ॥**

अ० टी०—'तेन बाधितवपुर्न सत्क्वचित्' इति कुतः स्वप्नादि हि बाधितमपि कालान्तरे भवद्दृश्यते तद्वदात्मतत्त्वज्ञानबाधितमपि कालान्तरे भविष्यतीति संभाव्यत इति तत्राऽऽह—**तत्र सत्यमिति** । तत्र सच्चिद्रूपेऽधिष्ठाने प्रत्यगात्मतमसा चिन्मात्राश्रयविषयकाज्ञानेन सत्यं जागरितमनृतं च स्वप्नादीति भेदतो विभागेन यल्लोके विकल्पितं तत्सर्वं सविभागं परमात्मवस्तुगा बुद्धिवृत्तिरविचारिणी सत्यन्यदप्रतीक्ष्यमाणैव सती प्रक्षिणोति नाशयतीति योजना । एतदुक्तं भवति—व्यवहारदशायां प्रबोधसमये स्वप्नो बाध्यमानो न परमूलेन सह बाध्यते । यतो निद्रादिद्वारेण प्रत्यगात्मतमसः स्वप्नहेतुता न

स्वरूपेणातो निद्राकारितमोनिवृत्तावपि मूलभूतस्य सर्वावस्थाविक्षेपहेतुतमसोऽनिवृत्तत्वाद्बाधितस्यापि स्वप्नादेः पुनः पुनः संभवो युक्तो निद्रादिहेतोर्मूलतमसो विद्यमानत्वात् । नैवमिह मूलाज्ञानेन सहैव जगत्कल्पनानिरासात्पुनरुद्भवे हेत्वभावान्न पुनस्तस्य भवनसंभावनेति ॥ ३७ ॥

**मु० टी०—ननु कथमविद्योपादाना बुद्धिवृत्तिस्तात्कालिकी स्वाविरोधिनीमनादिसिद्धां दृढमूलामविद्यां तत्कार्यं च निवर्तयेदित्याशङ्क्य वस्तुबलेनैव ज्वालेव तरुसंभवा तरुमण्डलीमित्याह—**

**नित्यबोधपरिपीडितं जग-**
**द्विभ्रमं नुदति वाक्यजा मतिः ।**
**वासुदेवनिहतं धनंजयो**
**हन्ति कौरवकुलं यथा पुनः ॥ ३८ ॥**

नित्यबोधेति । **नित्यबोधेनाद्वितीयचैतन्येन परितः पीडितमपहृतसत्ताकं तदद्वयत्ववशेनावस्तुत्वं नीतमिति यावत्। एवंभूतं जगद्विभ्रमं जगदध्यासं वाक्यजा मतिर्मननपूर्विका बुद्धिवृत्तिः स्वाभिव्यक्तबोधेद्धा निःसंदिग्धवस्त्वाकारत्वादतिबलीयसी सुतरां नुदतीत्यर्थः। बलवत्परिपीडितस्याऽऽगन्तुकेन स्वजन्येनापीषत्करो बाध इत्यत्र दृष्टान्तमाह**—वासुदेवेति । **कालात्मनेश्वरेण ग्रस्तमित्यर्थः । (' * मयैवैते निहताः पूर्वमेव' ( ११ । ३३ ) इति गीतोक्तेः । ) धनंजयोऽर्जुनः कुरुवंश्योऽपीति शेषः ॥ ३८ ॥**

अ० टी०—ननु बुद्धिवृत्तिः कथमविद्यां तत्कार्यं च निवर्तयेत्तस्या अप्यविद्याकार्यतयाऽऽविद्यकत्वे सति विरोधाभावादिति चेत्तत्राऽऽह—**नित्येति** । नित्यबोधेन कूटस्थचैतन्येन परिपीडितमुत्पत्तित एवाभिभूतं जगद्विभ्रमं वाक्यजातमतिर्नुदति नाशयति । एतदुक्तं भवति–जाग्रद्विभ्रमो हि जायमानोऽधिष्ठानसत्तास्फुरणाभ्यां व्याप्त एव जायते । तत्राधिष्ठानस्फुरणव्याप्तत्वेऽपि तेन तस्य न बाधोऽनादिकालमारभ्य तेन सत्त्वाद्विरोधाभावात् । वस्तुगत्या तु स्वाधिष्ठानचैतन्यग्रस्तत्वान्नित्यबोधपरिपीडितं भवति जगत् । वाक्यजा तु मतिरन्तःकरणवृत्तिरूपा स्वयमविद्यात्मिकाऽपि समूलं जगद्विभ्रमं प्रमाणभूतत्वान्नुदति । तत्र दृष्टान्तमनुकूलमुदाहरति—**वासुदेवेति** । यथा पुनः कालात्मना वासुदेवेन पूर्वमेव निहतं कौरवकुलं धनंजयोऽर्जुनस्तत्कुलोत्पन्न एव वासुदेवमाश्रित्य तेनोत्तेजितः सन्हन्ति स्मेति योजना ॥ ३८ ॥

---

* क. ग. पुस्तकयोर्नास्त्ययं ग्रन्थः ।

सु० टी०—एवं स्वमते सत्यासत्यविभागं तस्य ज्ञानबाध्यत्वं च प्रसाध्य परमते त्वयं विभागो न सिध्यतीत्याह—

सत्यमेवमनृतं च दुर्लभं
ब्रह्मवादिसमयाद्बहिः पुनः ।
सत्यतो यदि पृथङ्मृषा भवे-
त्सत्यमेव तदपि प्रसज्यते ॥ ३९ ॥

सत्यमेवमिति । बहिरन्यत्र मते । कुत इत्यत्राऽऽह—सत्यत इति । मृषावस्तु किं सत्याद्भिन्नमभिन्नं भिन्नाभिन्नं वा नाऽऽद्य इत्याह—यदीति । सत्यमेवेति । असत्यस्य सत्यप्रतियोगिकभेदाश्रयत्वायोगादित्यर्थः ॥ ३९ ॥

अ० टी०—एवं सर्वस्यापि द्वैतस्य मिथ्यात्वाविशेषेऽप्यनाद्यनिर्वचनीयाविद्यातदवस्थाविलसिततया सदसत्त्वस्वभावावान्तरभेदसंभावनादस्मन्मते लोकसिद्धसत्यानृतविभाग उपपद्यते तत्त्वज्ञानेन चाविद्यात्मकेनापि ब्रह्मवस्तुसमाश्रयबलात्सर्वद्वैतनिवृत्तिरप्युपपद्यत इति स्वमतमुपपाद्य द्वैतसत्यत्ववादिमते तु सत्यानृतविभागासंभवमाह स्वमतपरिशुद्धये—सत्यमेवेति । कथं दुर्लभमिति चेदिदं तावदिह वक्तव्यं सत्यान्मृषा वस्तु भिद्यते न वाऽथवा भेदाभेदाविति तत्राऽऽद्यमनूद्य दोषमाह—सत्यत इति । तुच्छत्वे पृथक्त्वधर्मानाश्रयत्वान्मृषावस्तुनोऽपि सत्यात्पृथक्त्वधर्मयोगश्चेदतुच्छत्वरूपं सत्यत्वं प्रसज्यते सदसद्विलक्षणस्यानिर्वाच्यप्रकारस्यानङ्गीकारादित्यर्थः ॥ ३९ ॥

सु० टी०—नापि द्वितीय इत्याह—

सत्यतो यदि मृषा न भिद्यते
सत्यमेव सुतरां तदिष्यताम् ।
न द्वयात्मकतयाऽनृतं मतं
पक्षयोः कथितदूषणद्वयात् ॥ ४० ॥

सत्यत इति । सत्यादभिन्नस्य मृषात्वे तदभिन्नसत्यस्यापि मृषात्वापत्तेरित्यर्थः । तृतीये त्वाह—न द्वयेति । विरोधादपीति द्रष्टव्यम् ॥ ४० ॥

अ० टी०—द्वितीयमनूद्य दूषयति—सत्यत इति । सुतरामिति । अस्मिन्पक्षे मृषावस्तुनः सत्यतादात्म्यादित्यर्थः । तृतीयमप्युक्तदूषणद्वयेनैव दूषितमित्याह—न द्वयेति । सत्याद्भिन्नाभिन्नतयेत्यर्थः । पक्षयोः सत्याद्भिन्नाभिन्नयोः प्रत्येकं कथितदूषणद्वयात्प्रत्येकमुक्तदूष-

णद्वयस्य समुच्चयेऽप्यंशत एकैकस्य संभवादित्यर्थः। विरोधादयं पक्षोऽपि न संभवतीति द्रष्टव्यम् ॥ ४० ॥

**सु० टी०—माऽस्तु सत्यानृतविभागः किं नश्छिन्नमिति चेत्तर्हि वेदोक्ताग्निहोत्रस्वर्गसाधनत्वादेः सत्यता बुद्धोक्तचैत्यवन्दनस्वर्गहेतुत्वादेर्मृषात्वमित्यादिविभागोद्घोषणं स्वमते न सिध्येदित्याह-**

**वेदवाक्यविषयस्य सत्यता**
**बुद्धवाक्यविषयो मृषा भवेत् ।**
**इत्यदः कथयितुं न शक्नुया-**
**द्ब्रह्मवादिसमयाद्बहिर्मुखः ॥ ४१ ॥**

वेदवाक्येति । **बहिर्मुख एतदभिनिवेशशून्यः ॥ ४१ ॥**

अ० टी०—न केवलमेवं लोकव्यवहारासिद्धिरेव दोषः किं तर्हि स्वपक्षसमर्थनं परपक्षदूषणं च परेषां न संभवति सत्यानृतविभागासिद्धेरेवेत्याह—**वेदवाक्येति** । ततस्तन्मते सत्यमिथ्याविभागासिद्धिरिति कथयितुं न शक्नुयादित्यर्थः । अनिर्वचनीयवादे तु सत्यमिथ्याविभागस्य स्वप्न इवाप्रबोधादिकल्पितत्वाङ्गीकारे नैतादृशविकल्पादिप्रसर इति भावः ॥ ४१ ॥

**सु० टी०—ब्रह्मवादिनस्तु नानुपपत्तिरित्याह—**

**सत्यमेवमनृतं च भेदतः**
**कल्पितं भवतु वर्णितान्नयात् ।**
**तत्र तद्घटयितुं हि शक्यते**
**नेतरत्र कथितोपपत्तिभिः ॥ ४२ ॥**

सत्यमेवमिति । **एवं तत्र सत्यमित्यत्र श्लोके वर्णितान्न्यायात्सत्यानृतं भेदतो विभागेन कल्पितमेव भवत्वित्यर्थः। तत्र ब्रह्मवादे तत्सत्यमनृतं च घटयितुं शक्यते नान्यत्रोक्तविकल्पैरित्यर्थः ॥ ४२ ॥**

अ० टी०—परिशेषात्सत्यानृतभेदः कल्पित एवाभ्युपेय इत्युपसंहरति—**सत्यमिति ।** वर्णितान्नयान्मिथ्याविशेषेऽप्यवान्तरभेदसाधकन्यायादित्यर्थः । तत्रानिर्वचनीयप्रपञ्चवादे सत्यं मिथ्येति च द्वयं घटयितुं शक्यते नेतरत्र प्रपञ्चसत्यत्ववादे कथितोपपत्तिभिर्विकल्पदूषणसहत्वादित्यादिभिरित्यर्थः ॥ ४२ ॥

सु० टी०—तस्मात्प्रत्यक्षादिमानजातं पराग्विषयं व्यावहारिकवस्त्वावेदकमेव न तु वेदान्तवत्तत्त्वावेदकमबाधितानधिगतवस्तुबोधकैर्वेदान्तैरर्थतो बाधितत्वादबुद्धबोधकत्वासंभवाच्चेत्युपसंहरति—

व्यावहारिकमतोऽवगम्यतां
मानजातमखिलं न तात्त्विकम् ।
बाह्यवस्तुविषयं विरोधतोऽ-
बुद्धबोधविधिशक्त्यसंभवात् ॥ ४३ ॥

व्यावहारिकमिति । व्यवहारमात्राङ्गमित्यर्थः ॥ ४३ ॥

अ० टी०—यत एवमुक्ताभिरुपपत्तिभिर्वेदान्तेतरमानगम्यस्य न परमार्थसत्यत्वं संभाव्यते तथा यथा प्रसिद्धं वैचित्र्यं चोपपद्यतेऽतो लौकिकवैदिकव्यवहाराविरोधात्प्रत्यक्षादिप्रामाण्यं व्यवहारसमर्थतत्त्वावेदकलक्षणं न तत्त्वावेदकलक्षणमज्ञातार्थगन्तृताख्यप्रमाणलक्षणस्य तत्र तत्त्वतोऽभावादित्येतत्सर्वैरभ्युपेयमिति परमप्रकृतमुपसंहरति—व्यावहारिकमिति । बाह्यवस्तुविषयमखिलं मानजातमिति संबन्धः । अबुद्धबोधेति च्छेदः ॥ ४३ ॥

सु० टी०—ततश्चोक्तन्यायेन प्रत्यक्षादेरतत्त्वावेदकत्वान्न तैस्तात्त्विकार्थावभासिवेदान्तबाध इति परमप्रकृतमुपसंहरति—

एवं न तत्त्वविनिवेदनशक्तियोगः
संभाव्यतेऽनधिगताधिगतेरयोगात् ।
मानान्तरस्य सकलस्य ततश्च तेन
बाधस्त्रयीशिरसि वर्णयितुं न शक्यः ॥ ४४ ॥

एवमिति ॥ ४४ ॥

अ० टी०—उपपादितमर्थमनूद्य प्रस्तुतं वेदान्तानां प्रमाणान्तरविरोधाभावं निगमयति—एवमिति । अतत्त्वविषयाणां मानानां तत्त्वगोचरमानबाधने सामर्थ्यासंभवाद्रजतज्ञानमिव शुक्तिकाज्ञाने प्रत्यक्षादीन्येवातत्त्वविषयाणि वेदान्तैस्तत्त्वविषयैर्बाध्यानीति भावः ॥ ४४ ॥

सु० टी०—ननु यदि प्रत्यक्षमात्रमप्रमाणं कथं सूत्रकारो 'भावे चोपलब्धेः'[१] [ ब्रह्म० २ । १ । १९ ] इति विरोधं परिहर्तुं सविकल्पकस्यैवाऽऽभासत्वमाह न तु निर्विकल्पकस्येति चेत्तत्राऽऽह—

आरम्भणादिवचसा खलु निर्विकल्प-
प्रत्यक्षबुद्धिमनुसृत्य विकल्पबुद्धेः ।

१ क. भावाच्चोप° ।

आभासतां मुनिरुवाच तदाऽस्य भावो
विज्ञायते स्फुटतरो गुडजिह्विकायाम् ॥ ४५ ॥

आरम्भणादीति । यत्तावन्निर्विकल्पप्रत्यक्षबुद्धिं निर्भेदसन्मात्रविषयां प्रमाणत्वेनानुसृत्य विभिन्नविकारविषयविकल्पबुद्धेरप्रामाण्यं मुनिरुवाच । तदा तदुक्तिकालेऽस्य स्फुटो भावो बालानामौषधपानाय जिह्वायां गुडदानवत्प्ररोचनार्थमेवेत्यारम्भणादिवचसा विज्ञायते । अयं हि तस्य भावः—त्यजतु तावदयं घटादिविकल्पधीप्रामाण्यदुर्ग्रहं पश्चादनुवृत्तसन्मात्रविषयं निर्विकल्पकमप्याभासी करिष्यामि तत्प्रामाण्ये हि निःसामान्यविशेषप्रत्यङ्मात्रविषयतत्तद्विशेषापवादिश्रुतीनां विरोधतादवस्थ्यादिति ॥ ४५ ॥

अ० टी०—तदेवं वेदान्तानां प्रत्यक्षादेश्च तत्त्वातत्त्वविषयतया द्वैतग्राहिप्रमाणैर्व्यावहारिकार्थावभासमात्रसमर्थैरद्वैतात्मवस्तुग्राहिणां वेदान्तानां तत्त्वार्थावभाससमर्थानां न बाध इति यदुपपादितं तद्युक्तियुक्तमपि मूलशास्त्रसूत्रविरोधान्न श्रद्धेयमिति कस्यचिच्छङ्का भवेद्यतो 'भावे चोपलब्धेः' [ ब्र० सू० २ । १ । १५ ] इतिसूत्रे निर्विकल्पकवस्त्ववभासित्वं प्रत्यक्षस्य विरोधपरिहाराय सूत्रकृद्भिरुक्तं न तु तत्त्वानवसेयत्वमतो न सूत्रविरोध इति तत्राऽऽह—आरम्भणेति । निर्विकल्पप्रत्यक्षबुद्धिं निर्भेदसन्मात्रविषयां प्रत्यक्षवियन्नसृत्य सन्मात्रप्रत्यक्षस्य प्रामाण्यमङ्गीकृत्य विकल्पबुद्धेर्भेदविषयस्य प्रत्यक्षादिप्रत्ययस्याऽऽभासतां मिथ्यार्थविषयत्वं यदा मुनिरारम्भादिवचसा 'वाचारम्भणं विकारो नामधेयम्' [ छा० । ६ । १ । ४ ] इतिवचनबलेनोवाच तदाऽस्य भावोऽभिप्रायः स्फुटतरो गुडजिह्विकायां विज्ञायत इति योजना । यथा तिक्तरसमौषधं जिह्वायां गुडलेपनेन बालान्पाययन्ति न तत्र तेषां गुडलेपने तात्पर्यम् । प्रतिपत्तिक्रममपेक्ष्य निर्विकल्पबुद्धेः प्रामाण्याङ्गीकरणं सूत्रकारस्य न तु तात्पर्यं सहसा हि प्रत्यक्षस्य सर्वस्य भ्रान्तित्वकथने व्याकुलीभूतं चित्तं न तत्त्वमवगाहेत । अतः कथंचिदपि प्रत्यक्षप्रामाण्यमवलम्ब्य तत्त्वमवगाहयामि । ततश्च क्रमेण निर्विकल्पबुद्धेरपि प्रामाण्यमपोह्य बुद्धिशुद्धिमपि दर्शयिष्यामीति मन्यते न तु निर्विकल्पकस्य प्रामाण्यं विवक्षितं वाचारम्भणादिवचनाश्रयात् । न हि वाचारम्भणादिसर्वविशेषापवादिश्रुतीनां प्रत्यक्षस्य निर्विकल्पप्रामाण्याङ्गीकारेऽपि विरोधस्तत्त्वतः परिहृतः स्यात्सर्वकार्यानुगतकारणरूपदृश्यसत्ताविषयत्वान्निर्विकल्पकस्य सामान्यविशेषादिविनिर्मुक्तप्रत्यङ्मात्रविषयत्वाच्च विशेषे प्रतिषेधश्रुतीनामतः सविकल्पकनिर्विकल्पक-

१ क. ग. धीप्रमाणदुराग्रहं । २ क. ख. ग. भावाच्चोप° ।

स्याऽऽभासत्वमेव सूत्रकारविवक्षितं गुडजिह्विकान्यायेन तत्प्रामाण्याभिधानमिति सूत्रविरोधोऽस्मदुक्ते शङ्कनीय इति ॥ ४५ ॥

सु० टी०—ननु 'सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षमनिमित्तं विद्यमानोपलम्भनत्वात्' [ जै० १ । १ । ४ ] इति जैमिनिरुभयप्रत्यक्षसाधारणं लक्षणमाह । तत्र च सदित्यर्थसत्ताभिधानात्प्रत्यक्षमात्रं तत्त्वावेदकमभिप्रैतीत्यत्रापि तथैव योज्यमिति चेत्तत्राऽऽह—

सत्संप्रयोग इति जैमिनिरप्युवाच
यल्लक्षणं तदुभयोः सममेव विद्यात् ।
आपाततस्तदथ युक्तिनिपीडितं स-
त्सन्मात्रसंविदि निषीदति निर्विशङ्कम् ॥ ४६ ॥

सत्संप्रयोग इति । तदपि लक्षणमविचारदशायामुभयोः प्रत्यक्षयोः समं ज्ञायते न विचारे सतीत्यर्थः । कुत इत्याह—अथेति । भावाच्चेत्यादियुक्तिभिः सविकल्पकस्यार्थव्यभिचारिणः सत्संप्रयोगाजन्यत्वेनाऽऽभासत्वे निश्चिते सन्मात्रसंविदि निर्विकल्पके निःशङ्कं तत्पर्यवस्यतीत्यर्थः ॥ ४६ ॥

अ० टी०—यदेतदस्मन्मतं प्रत्यक्षादीनां न तत्त्वावेदकं प्रामाण्यमस्ति व्यावहारिकमेव तेषां प्रामाण्यं वेदान्तानामेव तत्त्वावेदकत्वमिति तज्जैमिनेरपि संमतमिति यदुक्तं तत्र नियामकमाह—सत्संप्रयोग इतीति । यद्वा स्वमतव्यवस्थायां जैमिनिमतविरोधमाशङ्क्य तदस्मदनुकूलमेव न प्रतिकूलमित्याह—सत्संप्रयोग इतीति । 'सत्संप्रयोगेषु पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्' [ जै० १ । १ । ३ ] इतिसूत्रेण विद्यमानसंयुक्तार्थबुद्धित्वं यत्प्रत्यक्षलक्षणं जैमिनिरप्युवाच तदापाततो विना विचारं प्रतीतिमात्रेणोभयोः सविकल्पनिर्विकल्पकयोः सममेव विद्यात्साधारणविषयं तत्सूत्रवचनं तत्र विशेषानभिधानाल्लोकानुभवे च विशेषाभावादतस्तदपि प्रत्यक्षलक्षणं 'भावे चोपलब्धेः' [ ब्र० सू० २१ । १५ ] इतिबादरायणाचार्यसूत्रसूचितयुक्तिनिपीडितं सत्सन्मात्रसंविदि वस्तुमात्रविषयायां निर्विकल्पिकायां बुद्धौ निर्विशङ्कं निःसंदेहविपर्ययं यथा स्यात्तथा निषीदति पर्यवस्यतीति योजना । बादरायणोक्तेन न्यायेन सविकल्पकार्थानामसत्त्वनिश्चये सति निर्विकल्पकस्यैव तल्लक्षणमिति विवेके सति व्यावहारिकमेव सविकल्पकप्रामाण्यं निर्विक-

---

१ क. भावाचोप° ।

ल्पकस्य च तत्त्वावेदकमिति प्रत्यक्षप्रामाण्यकक्षाभेदोऽभिमतो जैमिनेरपीत्यर्थः । स्वोक्तार्थानुकूलतया पक्षान्तरमाह—यद्वेति । यद्वा संप्रयुज्यमानस्यार्थस्य सदितिविशेषितत्वात् 'सदेव सोम्य' [छा० ६ । २ । १] इति च सत्यस्य ब्रह्मात्मरूपत्वनिश्चयात्तस्यैवाज्ञातत्वात्तद्विषयमेव वस्तुगत्या सर्वमपि प्रमाणं तदनुविद्धेषु पुनरागमापायिषु सविकल्पेष्वर्थेषु वाचारम्भणमात्रेषु वेदान्तेतरमानानां व्यावहारिकमेव प्रामाण्यमिति जैमिनिसूत्रस्याभिप्रायो बादरायणसूत्रानुसारेणावगम्यते । जैमिनिना विशेषानभिधानाद्बादरायणेन च विशेषाभिधानात्सामान्यवचनस्य च संप्रतिपन्नविशेषवचनानुकूलतया योज्यत्वं शक्यत्वादतो न केनापि विरोधोऽस्मन्मत इत्यर्थः ॥ ४६ ॥

**सु० टी०—तर्हि किं तस्य तत्त्वावेदकत्वं मुनेरिष्टमिति नेत्याह—**

**तत्रापि दुर्घटमवैति यदा तु तत्त्व-**
**बोधं विवक्षति विसृज्य विकल्पजालम् ।**
**किं कारणं वदति येन स तत्त्वगामि**
**विज्ञानमर्थमवबोधयदप्रबुद्धम् ॥ ४७ ॥**

तत्रापीति । **स यदि तत्रापि निर्विकल्पकेऽपि तद्विषयभूतसन्मात्रस्य जडत्वेनाज्ञातत्वासंभवाद्दुर्घटं प्रामाण्यमवैति तदा सकलमेवानात्मप्रत्यक्षजालं विसृज्याज्ञातब्रह्मविषयमेव तात्त्विकबोधं विवक्षतीत्यर्थः । किं कारणमिति प्रश्नः । कुत एतज्ज्ञातमित्यर्थः । उत्तरमाह—**वदति येनेति । **अप्रबुद्धमर्थं बोधयदेव विज्ञानं तत्त्वावेदकमिति तल्लक्षणाभिधानादित्यर्थः ॥ ४७ ॥**

अ० टी०—यद्येवं निर्विकल्पकार्थस्य प्रत्यक्षस्य तत्त्वावेदकत्वमेष्टव्यमिति चेन्मैवं तत्रापि परमार्थतोऽज्ञातज्ञापकत्वानिरूपणादित्याह—**तत्रापीति** । तदा तु तत्रापि निर्विकल्पकप्रत्यक्षेऽपि दुर्घटमवैति निर्विकल्पकसन्मात्रस्यापि जडत्वादज्ञातत्वासंभवेन तद्विषयस्य प्रत्यक्षस्यापि प्रामाण्यं दुर्घटमिति जानाति । विकल्पजालं निर्विकल्पकं सविकल्पकं च विसृज्य विशुद्धतत्त्वबोधं ब्रह्मात्मविषयत्वमेव साक्षात्प्रमाणं विवक्षति निर्विकल्पकमपि प्रत्यक्षं तत्त्वावगतिद्वारीभवनलक्षणं व्यवहारसमर्थवस्त्ववभासितया प्रमाणं तत्त्वावेदकतयेति मन्यत इत्यर्थः । कथमित्थं जैमिनेरभिप्रायोऽवसीयत इति पृच्छति—**किं कारणमिति** । तदुत्तरमाह—**वदति येनेति** । येन कारणेनाप्रबुद्धमर्थमवबोधयद्विज्ञानं तत्त्वगामीति जैमिनिर्वदति तेनेत्थं निश्चय इति योजना । अनधिगतार्थगन्तृत्वं प्रमाणस्वरूपमिति तेनाभिधानात्प्रत्यगात्मनोऽन्यस्य च स्वभावतोऽनधिगतत्वानिरूपणादित्थं तदभिप्रायो गम्यत इति भावः ॥ ४७ ॥

सु० टी०—कुत्र तेनेदं लक्षणमुक्तमिति चेत्तत्राऽऽह—

औत्पत्तिके हि भगवानयमप्रबुद्ध-
मर्थं प्रमाणविषयं कथयांबभूव ।
अत्राऽऽह तत्र ननु धर्मगतं प्रमाणं
तत्त्वार्थगामि कथितं न परात्मगामि ॥ ४८ ॥

औत्पत्तिक इति । अयं हि जैमिनिरौत्पत्तिकसूत्रे 'अर्थेऽनुपलब्धे तत्प्रमाणम्' [ जै० सू० १ । १ । ५ ] इत्यंशेनाबुद्धमेवार्थं प्रमाणविषयमुक्तवानिति । ननु तत्र सूत्रे पूर्वं धर्मस्य जिज्ञास्यत्वेन प्रक्रान्तत्वात्तत्प्रमाणस्य चोदनाया एवाबुद्धबोधकत्वेन तत्त्वावेदनप्रामाण्यमुक्तं न परमात्मविषयमानस्य तत्र तस्याप्रकृतत्वादिति शङ्कते—अत्राऽऽहेति ॥ ४८ ॥

अ० टी०—कुत्रेदं प्रमाणलक्षणं तेनोक्तमित्याकाङ्क्षायामाह—औत्पत्तिक इति । अयं जैमिनिर्भगवानशेषार्थदर्शी हि यस्मादौत्पत्तिके सूत्रे 'अनुपलब्धे तत्प्रमाणम्' [ जै० १ । १ । ५ ] इत्यन्तेनाज्ञातार्थाधिगन्तृ प्रमाणमिति कथयांबभूव कथितवानित्यर्थः । जैमिनिवचनस्यान्यविषयत्वान्नायमर्थोऽभिप्रेत इति मीमांसकश्चोदयति—अत्राऽऽहेति । तत्र सूत्रे । ननु हि धर्मविषयं प्रमाणं तत्त्वार्थगाम्यनधिगतार्थबोधकमिति तेन कथितं चोदनाख्यं प्रमाणं मानान्तरागोचरधर्मविषयकतया तत्त्वबोधकं तेन तत्र विवक्षितं धर्मप्रमाणनिरूपणस्य प्रक्रान्तत्वान्न परमात्मगामितया कथितं तस्याप्रस्तुतत्वादित्यर्थः ॥ ४८ ॥

सु० टी०—परिहरति—

सत्यं यदाह पितृमान्व्यवहारदृष्टि-
माश्रित्य तत्कथितवान्प्रकृतोपयोगात् ।
दूरप्रसारितनिसृष्टनिगूढभाव-
स्तद्बादरायणमतानयनात्प्रतीमः ॥ ४९ ॥

सत्यमिति । पित्रादिशिक्षितबुद्धिर्भवांस्तत्र धर्मप्रमाणमुक्तमिति सत्यमेवाऽऽह—किं तु प्रकृतधर्मविचारोपयोगित्वेन व्यावहारिकप्रामाण्यमाश्रित्य जैमिनिस्तत्कथितवान्न तात्त्विकमज्ञाततत्त्वस्य जडे धर्मेऽसंभवादित्येवं बादरायणमतत्वाकर्षणात्प्रतीमः । चोदनाप्रामाण्ये व्याससंमतिप्रदर्शनपरमेव तत्किं न स्यादित्याशङ्क्य जैमिनिं विशिनष्टि—दूरेति । दूरे शारीरके प्रसारितः प्रवर्तितो निसृष्टो नैसर्गिको निगूढस्तत्काले

**धर्मविचारविरोधान्न व्यक्तीकृतः श्रुतेर्ब्रह्मण्येव तत्त्वावेदकत्वमिति भावो यस्य वेदान्तनिरूप्यन्यायस्यापि जैमिनिसंमतत्वादिति भावः ॥ ४९ ॥**

अ० टी०—परमात्मगामिप्रमाणस्य तत्राप्रस्तुतत्वेऽपि बादरायणमतानुकर्षणाल्लिङ्गा॰द्वर्णिताभिप्रायोऽस्य गम्यत इति परिहरति—**सत्यमिति** । धर्मविषयं प्रमाणं तत्र निरूपितमित्येतत्सत्यं तथैव यदाह भगवान्पितृमातृपित्रादिभिर्वृद्धैः शिक्षितबुद्धिरित्यर्थः । यत्तत्र धर्म एव तत्प्रमाणमवोचत्तद्व्यवहारदृष्टिमाश्रित्य कथितवान् । तस्यैव प्रकृतोपयोगान्न तत्त्वदृष्टिं तस्यास्तदनुपयोगादित्यर्थः । तथाऽपि न तावन्मात्रे व्यवहार एव पर्यवसितधीर्जैमिनिर्यतो दूरप्रसारितनिसृष्टनिगूढभावो दूरं वेदान्तेषु प्रसारितो दीर्घीकृतो निसृष्टश्च तत्रैव नितरां क्षिप्तस्तां स्थितिमेवावलम्बमानो निगूढोऽप्रकटितो भावोऽभिप्रायो यस्य स तथा । एवं भावकल्पनायां लिङ्गमाह—**तद्बादरायणमतानयनादिति** । इति बादरायणस्यानपेक्षत्वादिति बादरायणमतस्यानुकर्षणाद्वेदान्तानामज्ञातार्थगोचरतया तत्त्वावेदकत्वमभिमतं जैमिनेरित्यर्थः । ब्रह्माणि वेदान्तप्रामाण्यस्थितिं कटाक्षीकृत्य तदविरोधेन व्यावहारिकप्रामाण्यमाश्रित्य धर्मे प्रमाणं निरूपितवान्धर्मविचारस्यैव तदा प्रक्रान्तत्वान्न ब्रह्मणि वेदान्तानां प्रामाण्यं मुख्यतोऽभिहितवांस्तस्य तद॰वसरे प्रकृतिधर्मविचारबोधादित्यर्थः । अज्ञातत्वस्य जडे धर्मे तत्त्वतोऽसंभवादेतत्सर्वमभिप्रेतं जैमिनेरित्यनुपलब्धे तत्प्रमाणं बादरायणस्य मतमिति वचनादवसीयत इति भावः ॥ ४९ ॥

**सु० टी०—ननु वेदान्तेष्वपि "द्रष्टव्य" इत्यादिविधिश्रवणाच्चोदनाया अपि तत्त्वावेदकत्वं व्यासाभिप्रेतमिति चेन्न तद्वाक्यस्याविधिपरत्वादित्याह—**

> द्रष्टव्य इत्यपि विधिर्न विधिप्रमेय-
> मात्मानमेव विनियच्छति तत्कुतश्चेत् ।
> अज्ञातता च परमात्मन एव यस्मा-
> द्यस्माच्च कर्तृवशवर्ति न दर्शनं तत् ॥ ५० ॥

द्रष्टव्य इत्यपीति । **विधिर्नेति संबन्धः । किंपरं तर्हीदं वाक्यमिति चेत्तत्राऽऽह**—विधिप्रमेयमिति । **विधेरज्ञातज्ञापकस्य प्रमाणस्याऽऽत्मानमेव प्रमेयं नियच्छत्यात्मैव प्रमाविषयो नान्य इति नियमयतीत्यर्थः । चोदयति**—तत्कुत इति । **उपपादयति**—अज्ञाततेति । **आत्मनोऽन्यस्याज्ञातत्वाभावेन मानमेयत्वासंभवादित्यर्थः[1] । इतश्च न विधिरित्याह**—यस्माच्चेति ॥ ५० ॥

१ क. ग. ङ—परमात्मेति ।

अ० टी०—आत्मन एव मानमेयत्वं तत्त्वतोऽस्तीत्येतच्छ्रुत्याऽपि दर्शितमित्याह—**द्रष्टव्येति**। आत्मा द्रष्टव्य इत्ययं तव्यः श्रूयमाणो न विधिः किं तु विधिप्रमेयं विधिविषयज्ञानविशेषणतया विधिविषयत्वेनाभिमतमात्मानमेव नियच्छत्यात्मतत्त्वमेव प्रतिपादयतीत्यर्थः। अथ वा द्रष्टव्य इत्ययमपि विधिर्विधेः प्रमेयभूतमात्मानं नैव नियच्छति नैव विवर्जयति किं त्वात्मन्येव पर्यवस्यति न विधिमात्र इति योजना । विधौ प्रत्यये प्रत्यक्षे सति कथं विध्यनभ्युपगम इति शङ्कते—**तत्कुतश्चेदिति** । अत्र विधेयाभावाद्विध्यनभ्युपगम इति परिहरति—**अज्ञातता चेति**। यस्मात्परमात्मन एवाज्ञातता न विधेयक्रियाया नियोगस्य वा तयोर्जडत्वादित्यर्थः। अज्ञातज्ञापनो हि विधिर्न परमात्मनोऽन्यं बोधयेत्परमात्मा च न विधेय इति नात्र विधित्वमस्तीति भावः। चकाराद्विधेयज्ञानविषयतयाऽपि नाऽऽत्मा प्रतिपाद्य इत्यर्थः। आत्मदर्शनमपि न विधियोग्यमित्याह—**यस्माच्चेति** । यद्विधेयत्वेनाभिमतं तद्दर्शनं च न विधेयं यस्माद्दर्शनं न कर्तृवशवर्ति कर्त्रधीनत्वाद्विधेयस्य ज्ञानस्य च तदभावान्न विधेयत्वमित्यर्थः॥ ५० ॥

**सु० टी०—ननु 'कृत्याश्च' इति तव्यस्य विधावनुशासनात्कथं तस्यान्यपरत्वमिति चेत्तत्राऽऽह—**

**अर्हे कृत्यतृचश्च पाणिनिवचः स्पष्टं विधत्ते यत-**
**स्तस्माद्दर्शनयोग्यतां वदति नस्तव्यो न तत्त्वान्तरम् ।**
**तस्मादात्मपदार्थमात्रनियतं मेयत्वमेकान्ततो**
**द्रष्टव्यादिवचो वदत्यनुभवादज्ञात आत्मा यतः ॥ ५१ ॥**

अर्हे इति। **'अर्हे कृत्यतृचश्च' इति सूत्रं यतोऽर्हार्थे कृत्यादिकं विधत्ते तस्मादयमपि तव्यो नोऽस्माकमज्ञातत्वपुरुषार्थत्वाभ्यां दर्शनयोग्यतामात्मनो वदति न विधित्वमित्यर्थः। ततश्च द्रष्टव्यादिवाक्यमात्मैव दर्शनार्ह इत्यात्मपदार्थस्यैव मेयत्वमैकान्तिकं वदत्यज्ञातत्वाद्घटं न जानामीत्यादावपि (+ घटावच्छिन्नात्मन एवाज्ञातत्वानुभवादित्यर्थः ॥५१॥**

अ० टी०—यद्यस्यापि वाक्यस्याऽऽत्मैव प्रमेयमभिमतं तर्हि विधौ स्मर्यमाणस्य का गतिरिति तत्राऽऽह—**अर्हे इति**। कृत्यप्रत्ययं तृच्प्रत्ययं च 'अर्हे कृत्यतृचः' इति पाणिनिसूत्रात्मकं वचोऽर्हार्थे स्पष्टं विधत्ते । यतो यस्मादयं तव्यः कृत्यात्मकः प्रत्ययो दर्शनयोग्यतामात्मनोऽस्मान्प्रति वदति न तत्त्वान्तरं विधिम् । उभयत्र प्रत्ययविधानेऽपि

+ खपुस्तकस्थोऽयं ग्रन्थः।

नात्र विध्यर्थता तस्याभ्युपेया पूर्वोक्तविधया तदसंभवात् । किं त्वर्हार्थतैवाभ्युपेयाऽऽत्मनो दर्शनार्हत्वादित्यर्थः । तस्मादात्मैव प्रमेयं न जडमिति सिद्धमित्युपसंहरति—**तस्मादिति।** द्रष्टव्यादिवच आत्मन एव मेयत्वमज्ञातत्वलक्षणं दर्शनार्हत्वविधानमुखेन वक्ष्यतीति कथं तत्राऽऽह—**अनुभवादिति** । यत आत्मैवाज्ञातो न जडस्तथैवानुभवादित्यर्थः ॥ ५१ ॥

**सु० टी०—नन्वात्मन एव मेयत्वं जैमिन्यभिमतं चेत्तर्हि तस्य प्रकृतस्यार्थसंप्रयोगजत्वस्य धर्मे चोदनाप्रामाण्यस्य चोपरोधः स्यादिति चेन्नाविचारितदृष्ट्यपेक्षया तदुपपत्तेरित्याह—**

**रूप्यादिविभ्रममपेक्ष्य हि शुक्तिकादौ**
**सत्संप्रयोगजनितैव तु बुद्धिवृत्तिः ।**
**तामप्यपेक्ष्य सति संहृतसर्वभेदे**
**सत्संप्रयोगजनिता मतिरभ्युपेया ॥ ५२ ॥**

रूप्यादीति । **यदा हि शुक्त्यादेर्व्यभिचारितया मिथ्यात्वानुसंधानं नास्ति तदा मिथ्यारजताद्यपेक्षया शुक्त्यादेः सत्त्वात्तत्संप्रयोगजा शुक्तिसविकल्पधीरपि प्रमैव । यदा तु शुक्त्यादेस्तथात्वानुसंधानं तदा सविकल्पकमात्रं भ्रमः । निर्भेदसन्मात्रविषया तु तद्धीः प्रमा सत्संप्रयोगजत्वादित्यर्थः ॥ ५२ ॥**

अ० टी०—तस्मादात्मन एव प्रमेयत्वस्य श्रुत्युक्तत्वात्तदनुरोधेन सूत्रकारेणापि तथैव निर्देष्टुं युक्तत्वान्न जैमिनिसूत्रविरोध इति स्थितं तत्राऽऽत्मन एव प्रमेयत्वाङ्गीकारे प्रकृतविरोधः स्यादर्थसंप्रयोगजलक्षणस्य प्रत्यक्षलक्षणस्य लौकिकप्रत्यक्षेऽभावप्रसङ्गाच्चोदनायाश्च धर्मे प्रमाणलक्षणत्वाभावप्रसङ्गादिति पुनराशङ्कायामविचारितदृष्ट्या तदुपपत्तेर्न लक्षणाव्याप्तिशङ्केति परिहारमाह—**रूप्यादिविभ्रममिति** । शुक्तिकादौ तु या बुद्धिवृत्तिः सत्संप्रयोगजनिता शुक्तिकासंप्रयोगजनिता लोकप्रसिद्धा सा रूप्यादिविभ्रममपेक्ष्यैवेति योजना । यद्वा शुक्त्यादेर्व्यभिचारित्वेनानृतत्वं नान्विष्यते तदा भ्रमादृष्टरजताद्यपेक्षया शुक्त्यादेः सत्यत्वाभिमानगोचरत्वात्सविकल्पकाऽपि धीः सत्संप्रयोगजनितैवेति न तत्र प्रत्यक्षलक्षणाव्याप्तिः । यदा तामपि सविकल्पबुद्धिमपेक्ष्य संहृतसर्वभेदे सति निर्विकल्पकसन्मात्रे शुक्तित्वादिविकल्परहित इति यावत्सत्संप्रयोगजनिता व्यभिचारिसविकल्पकशुक्त्याद्यपेक्षया यत्सन्निर्विकल्पं तत्संप्रयोगजनिता मतिरभ्युपेया न परमार्थतः साऽप्यनधिगतविषयेत्यर्थः ॥ ५२ ॥

सु० टी०—तर्हि तस्या अव्यभिचारिसन्मात्रगोचरायाः प्रमात्वं नाऽऽपेक्षिकमिति चेन्नेत्याह—

वेदान्तवाक्यजनितां परमात्मबुद्धि-
वृत्तिं व्यपेक्ष्य पुनरत्र न काचिदस्ति ।
सत्संप्रयोगजनिता भुवनत्रयेऽपि
बुद्धिस्तमोविरचितं हि जगत्समस्तम् ॥ ५३ ॥

वेदान्तेति । दृश्यसन्मात्रस्यापि प्रत्यग्व्यतिरेकेणाभावाद्वाक्यजब्रह्माकारधियमपेक्ष्य सर्वाऽपि सविकल्पनिर्विकल्पधीरसदर्थैवेत्यर्थः । तत्र हेतुमाह—तम इति । सर्वस्य प्रत्यगविद्याविलसितत्वेनाऽऽत्मातिरेकेणासत्त्वादित्यर्थः ॥ ५३ ॥

अ० टी०—ननु सन्मात्रस्याव्यभिचारात्तद्धियो नाऽऽपेक्षिकसद्विषयता तदपेक्षया सतोऽन्यस्याविशेषादित्याशङ्क्याऽऽह—वेदान्तवाक्यजनितामिति । परमात्माकारां बुद्धिवृत्तिमित्यर्थः । अत्र भुवनत्रयेऽप्यन्या सत्संप्रयोगजनिता बुद्धिवृत्तिर्नास्तीत्यत्र हेतुमाह—तमोविरचितं हीति । प्रत्यक्स्वरूपव्यतिरेकेण दृश्यसन्मात्रस्याप्यभावात्प्रत्यग्विषयां धियमपेक्ष्य सर्वाऽपि प्रत्यक्षधीरसदर्थैवेति वाक्यार्थः । शुक्त्याद्यनुगतसन्मात्रस्य निर्विकल्पस्य यद्यपि प्रत्यग्रूपत्वमेव वस्तुतस्तथाऽपि तत्तदर्थानुरक्ततया संसृष्टत्वाकारस्य तत्तदर्थपरतन्त्रतया व्यभिचारित्वान्न परमार्थसत्त्वं किं तु शुद्धस्यैव प्रत्यगात्मन इति तात्पर्यार्थः ॥ ५३ ॥

सु० टी०—एवं धर्मे ( + चोदनायाः प्रामाण्यमप्यापेक्षिकमित्याह—

धर्मेऽपि तत्त्वमतिरेव तु चोदनायाः
सत्त्वादिवस्तुनि यथाऽक्षनिबन्धना धीः ।
अज्ञाततोऽपि सदृशी व्यवहारकाले
तत्त्वावबोधसमये न तु तत्त्वबुद्धिः ॥ ५४ ॥

धर्मेऽपीति । प्रत्यगेवाज्ञातं मेयमित्यप्रतिसंधान)दशायां धर्मस्यापि सत्तादिवदज्ञातत्वं सत्यत्वं च व्यावहारिकमस्तीति प्रमाणमेव चोदनावा-

+ ख. पुस्तकस्थोऽयं ग्रन्थः ।

१ क. 'र्मे तु त° । २ क. ग. वाक्यार्थो स्वत° ।

क्योत्थतत्त्वज्ञानकाले तु धर्मधारापि भ्रान्तिरेवेत्यस्मन्मतानुरोधेऽपि न तस्य प्रकृतविरोध इत्यर्थः ॥ ५४ ॥

अ० टी०—प्रत्यक्षलक्षणस्य लौकिकप्रत्यक्षाव्याप्तिशङ्कां परिहृत्य चोदनाप्रामाण्यस्य धर्मेऽव्याप्तिशङ्कामपि तस्यापि प्रत्यक्षज्ञानमयत्वाङ्गीकारेण परिहरति—**धर्मे त्विति ।** चोदनाया विधिवाक्याद्धर्मेऽपि या मतिः सा तत्त्वमतिरेव व्यावहारिकदृष्ट्या भवति । यथा सत्त्वादिवस्तुषु निर्विकल्पकसविकल्पकवस्तुपक्षनिबन्धना धीस्तद्वदज्ञातत्वाभावाद्भावनात्मनो धर्मस्य न मानमेयतेति च शङ्कास्पदमित्याह—**अज्ञातताऽपीति ।** तत्त्वाववोधसमये तु प्रत्यग्याथात्म्यावधारणकाले पुनश्चोदनाजनिता वाऽक्षादिजनिता वा तत्त्वबुद्धिर्न भवति प्रागपि प्रतिभासत एवाविचारितरमणीयतया तत्त्वबुद्धिः सा न परमार्थत इत्यर्थः । तस्माद्व्यावहारिकप्रामाण्याश्रयणेन चोदनादिप्रामाण्योपपत्तेर्बादरायणमतानुरोधेन ब्रह्मात्मन्येव तत्त्वावेदनलक्षणं प्रामाण्यमित्यङ्गीकारेणापि न प्रकृतविरोध इति सिद्धम् ॥ ५४ ॥

**सु० टी०—ननु ‘ सच्च त्यच्चाभवत् ’ ( तैत्ति० २ । ६ । १ ) इति प्रपञ्चस्य ब्रह्मपरिणामत्वश्रुतेः परिणामस्य च परिणामिब्रह्मसमानसत्ताकत्वात्कुतस्तद्बोधकप्रत्यक्षादेरतत्त्वावेदकत्वमिति चेत्तत्राऽऽह—**

**आरम्भणादिवचनं सकलं प्रवृत्तं**
**प्रत्यक्षबुद्धिविषयादपहर्तुमुच्चैः ।**
**तत्त्वं यथोदितनयेन विवर्तवाद-**
**माश्रित्य सत्यपरिणामनिवारणेन ॥ ५५ ॥**

आरम्भणादीति । **वाचारम्भणं विकार इत्यादिवाक्यं हि विकारस्य घटादेः शब्दालम्बनत्वमात्रोक्त्या मृत्तिकेत्येव सत्यमिति च कारणमात्रसत्यत्वोक्त्या विवर्तवादमाश्रित्य सत्यपरिणामं निवार्योक्तन्यायेन प्रत्यक्षादिविषयात्परमार्थत्वमपहर्तुं यत्नात्प्रवृत्तमतस्तद्विरोधान्न श्रुत्यभिप्रेतः परिणामवाद इत्यर्थः ॥ ५५ ॥**

अ० टी०—ननु बादरायणमतमप्येतदेवेति कुतो निश्चेतव्यं न हि प्रत्यक्षादेस्तत्त्वावेदकत्वं नास्तीति तेन कण्ठतः कथितं दृश्यत इति चेन्मैवं वाचारम्भणवाक्यस्य तेनोदाहृतत्वादित्याह—**आरम्भणादिवचनमिति ।** यथोदितनयेन तत्त्वमपहर्तुमिति संबन्धः । केन व्यापारेण प्रवृत्तमिति तदाह—**विवर्तवादमिति ।** ‘ तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत ’ [ छा० ६ । २ । ३ ] ‘ तदात्मानं स्वयमकुरुत ’ [ तै० २ । ७ । १ ] इत्यादौ चिदात्मनो जगद्रूपेण परिणामश्रवणात्परिणामसत्यतायां च ‘ सदेव सोम्य-

दमग्र आसीदेकमेवाद्वितीयम् ' [ छा० ६ । २ । १ ] 'तत्सत्यम्' [ छा० ६ । ८ । ७ ] इत्युपक्रमोपसंहारयोरखण्डाद्वितीयवस्तुसत्यत्वावगमविरोधप्राप्तिमालक्ष्य विवर्तवादमाश्रित्य सत्यपरिणामनिवारणेन श्रूयमाणपरिणामस्य परमार्थत्वनिरासेन प्रवृत्तमित्यर्थः ॥ ९५ ॥

**सु० टी०—ननु तदनन्यत्वमित्यत्र कार्यस्य कारणाभेद उक्तः । सत्यं च ब्रह्म कारणमिति कुतस्तदभिन्नस्य कार्यस्य सत्यत्वनिवारणमिति चेत्तत्राऽऽह—**

**वाक्यप्रवृत्तिमनुसृत्य च सूत्रकारः**
**सिद्धान्ततामनयदत्र विवर्तवादम्[1] ।**
**तत्त्वप्रकाशनविधावपहृत्य शक्ति-**
**मारम्भणादिवचनादपरप्रमायाः ॥ ९६ ॥**

वाक्येति । **सूत्रकारस्तावत् ' येनाश्रुतं श्रुतम् ' [ छा० ६।१।३ ] इत्याद्येकविज्ञानेन सर्वविज्ञानरूपवाक्योपक्रममनुसृत्याऽऽरम्भणादिवचनाद्विकारमृषात्वबोधकादनात्मप्रमायास्तन्मानस्य च तत्त्वावेदनसामर्थ्यमपहृत्य तदनन्यत्वं नाम तदन्यत्वेनासत्त्वमेवोपपादितवान्न तु तदभिन्नत्वं येन सत्यपरिणामाशङ्केति विवर्तवादमेवासिद्धान्तयदित्यर्थः ॥ ९६ ॥**

अ० टी०—तदेवमुदाहृतश्रुत्यभिप्रायमुपवर्ण्य ' तदनन्यत्वमारम्भणशब्दादिभ्यः ' [ब्र० सू० २।१।१४ ] [ए]तादृशं वाक्यमुदाहरतः सूत्रकारस्याप्ययमेवाभिप्रायो गम्यत इत्याह—**वाक्यप्रवृत्तिमिति** । ' वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ' [छा० ६ । १ । ४ ] त्रीणि रूपाणीत्येव सत्यम्' [ छा०६ । ४ । १ ] रूपेष्वपि सत्यं (?) 'सन्मूलाः सौम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ' [ छा० ६ । ८ । ४ ] इति वाक्यानां तत्त्वप्रतिपादनप्रवृत्तिमाश्रित्यात्रास्मिञ्शास्त्रे सूत्रकारः सिद्धान्ततामनयदिति योजना । किं कृत्वा तदाह—**तत्त्वप्रकाशेति** । वचनाद्वचनबलादपरप्रमाया वेदान्तेतरसर्वप्रमाया इत्यर्थः ॥ ९६ ॥

**सु० टी०—ननु भोक्त्रापत्तेरविभागश्चेदित्याशङ्क्य ' स्याल्लोकवत् ' [ ब्र० सू० २ । १ । १३ ] इति समुद्र इव तरङ्गफेनाद्यात्मना ब्रह्मापि विचित्रचेतनाचेतनप्रपञ्चात्मनाऽनेकरसं भवतीति सूत्रणात्कथं विवर्तः सिद्धान्तः । न च द्वावपि सिद्धान्तौ विरोधादिति चेन्नेत्याह—**

**आरम्भसंहतिविकारविवर्तवादा-**
**नाश्रित्य वादिजनता खलु वावदीति ।**

---
[1] ग. वादे ।

आरम्भसंहतिमते परिहृत्य वादौ
द्वावत्र संग्रहपदं नयते मुनीन्द्रः ॥ ५७ ॥

आरम्भेति । **जगदुत्पत्तावारम्भादींश्चतुरः पक्षानालम्ब्य वादिगणो मुखरी भवति । तत्र च प्रत्यगद्वयसमन्वयस्यात्यन्तभेदाश्रयारम्भसंहतिपक्षोत्थितं विरोधं परिहर्तुमीषद्भेदेऽपि हेतुफलभावः सिध्यतीत्यभिप्रेत्य परिणामं विवर्तं च मुनिः संजग्राहेत्यर्थः ॥ ५७ ॥**

अ० टी०—ननु ‘ स्याल्लोकवत् ’ [ ब्र० सू० २ । ३ । १३ ] इति परिणामवादस्यापि सूत्रितत्वात्कथं विवर्तवाद एव सिद्धान्तोऽभिमतः सूत्रकारस्येति निश्चीयते न च तदुभावपि सिद्धान्तावभिमताविति वाच्यं परस्परविरुद्धयोः पक्षयोरेकत्र सिद्धान्तत्वायोगादिति चेत्तत्राऽऽह—**आरम्भसंहतीति** । संहतिः संघातवादः । विकारः परिणामवादः । लोकसिद्धे कार्यकारणभावे खलु वादिजनता प्रकारभेदान्कल्पयन्ती वावदीत्यतिशयेन वदतीति पक्षचतुष्टयं प्रसिद्धमित्यर्थः । किं तत इत्याह—**आरम्भसंहतिमत इति ।** परिहृत्योपेक्ष्यात्र शास्त्रे मुनीन्द्रो द्वावपि पक्षौ परिणामविवर्तपक्षौ संग्रहपदं प्रयोजनवशात्संग्राह्यतां नयते प्रापयति । अयं भावः—न ह्यस्मिञ्शास्त्रे परिणामवादो विवर्तवादो वा प्रतिपाद्योऽभिमतो ब्रह्मण एवैकस्य शास्त्रप्रतिपाद्यत्वात्किं तु श्रुतस्याद्वितीयस्याऽऽत्मतत्त्वस्य प्रतिपत्त्युपायतया तत्र यो वादोऽत्रानुकूलः स इहोपादेयो न प्रतिकूलः । तथाचाऽऽरम्भसंहतिवादौ श्रौततत्त्वप्रतिपत्तिविरुद्धत्वात्तावत्तत्र न संगृहीतावितरौ त्वनुकूलत्वात्संगृहीतौ । न चोभयोर्मिथो विरोधादेकत्र सिद्धान्तत्वानुपपत्तिः पूर्वोत्तरभूमिकारूपेणाविरोधस्य वक्ष्यमाणत्वादिति ॥ ५७ ॥

**सु० टी०—तर्हि द्वयोः सिद्धान्तत्वाद्विरोधस्तदवस्थ इति चेन्नैकस्याभ्युपेत्यवादत्वादित्याह—**

तत्रापि पूर्वमुपगम्य विकारवादं
भोक्त्रादिसूत्रमवतार्य विरोधनुत्त्यै ।
प्रावर्तत व्यवहृतेः परिरक्षणाय
कर्मादिगोचरविधावुपयोगहेतोः ॥ ५८ ॥

तत्रापीति । **तयोर्मध्य इत्यर्थः । प्रथमाद्वितीये जगत्कारणे वेदान्तसमन्वयस्य भोक्तृभोग्यादिभेदग्राहिमानान्तरविरोधशङ्कापनुत्त्यै परकीयं परिणामवादमुपगम्य तद्विषयं च ‘भोक्त्रापत्तेः’ [ब्रह्म० २।३।१३]इत्यादिसूत्रमवतार्यापक्वमतिप्रतिबोधनार्थं व्यवहारलक्षणाय प्रावर्ततेत्यर्थः । तत्कि-**

**मर्थमित्यत आह**—कर्मादीति । **प्रथमं विवर्तोक्तौ हि कर्तृत्वोपासकत्वादिविलयाद्विद्याधिकारसिद्ध्यर्थानां कर्मविधीनामुपासनादीनां चाप्रवृत्तिः स्यादिति ॥ ५८ ॥**

अ० टी०—कथं भूमिकाभेदोऽत्रेति तं व्युत्पादयितुमुपक्रमते—**तत्रापि पूर्वमिति ।** तयोः परिणामविवर्तयोर्मध्ये पूर्वं प्रथमं विकारवादं परिणामपक्षमुपगम्याभ्युपेत्य भोक्त्रादिसूत्रमवतार्य विरोधनुत्त्यै प्रावर्तत सूत्रकार इति योजना । यद्यद्वैतमेव तत्त्वं तर्हि भोक्तृभोग्यादिविकारभेद(दे) प्रत्यक्षानुभवविरोधोऽभेदे सर्वसांकर्यापत्ते(त्ति)रिति विरोधं 'भोक्त्रापत्तेरविभागश्चेत्'[१] इति सूत्रभागेणोद्भाव्य 'स्याल्लोकवत्' [ ब्र० सू० २ । १ । १३ ] इति भागेन सर्वस्य ब्रह्माभेदेऽपि न भोक्त्रादेः संकरो जलस्वरूपाभेदेऽपि तरङ्गादेरिव परिणामभेदोपपत्तेरिति परिहारं कुर्वन् प्रावर्ततेत्यर्थः । परिणाममाश्रित्य परिहारप्रयोजनमाह—**व्यवहृतेः परिरक्षणायेति** । तद्वा किमर्थमिति तत्राऽऽह—**कर्मादीति ।** आदिपदादुपासना गृह्यते । अयं भावः—प्रथममेव विवर्तवादाभिधानेन विरोधपरिहारे क्रियाकारकफलभेदाभावादुपास्योपासकादिभेदविलोपाच्च कर्मोपासनाद्यसंभवात्तद्विधीनां प्रामाण्याभावः प्रसज्येत । न च तद्युक्तमुपासनाविधीनामस्मिन्नेव शास्त्रे विचार्यमाणत्वात्तन्निर्वाहोऽत्रैव वक्तव्यः । तथा कर्मविधीनां चाधिकारिसिद्धिद्वारेणात्रोपयोगात्तन्निर्वाहोऽप्यनुमन्तव्योऽतस्तेषां प्रवृत्तिविषयप्रदर्शनाय परिणामवादः प्रथमं सूत्रितः ॥ ५८ ॥

**सु० टी०—तर्हि प्रथमाभिधानात्परिणाम एव सिद्धान्तः किं न स्यादिति चेन्नेत्याह—**

साक्षादिहाभिमतमेव विवर्तवाद-
माहत्य सूचयति पूर्वमपेक्षमाणः ।
आरम्भणादिवचनेन विवर्तवादं
शक्नोति वक्तुमुदिते परिणामवादे ॥ ५९ ॥

साक्षादिति । **इह शास्त्रे विवर्त एव साक्षादभिमतः प्रतिज्ञाताद्वैतोपपादकत्वादतस्तमेवाऽऽहत्य परिणाममुखेन कार्यकारणयोरत्यन्तभेदनिरासेन मुनिः सूचयतीत्यर्थः । तर्हि विवर्त एव पूर्वं वक्तव्यो मुख्यत्वादिति चेत्तत्राऽऽह**—पूर्वमिति । **परिमाणस्य विवर्तोपायत्वाद्व्यापारलाघवमपेक्षमाण इत्यर्थः । एतदेवाऽऽह**—आरम्भणादीति ॥ ५९ ॥

---

[१] क. विशेषश्चे° ।

अ० टी०—नन्विह विवर्तवादस्य सिद्धान्तत्वाभिधाने को विशेषः प्रयोजनशेषतया निर्देशस्योभयोरप्यविशेषादिति तत्राऽऽह—**साक्षादिति** । निर्गुणब्रह्मावगतेरत्र प्राधान्येन विवक्षितत्वात्तत्र च विवर्तवादस्य साक्षादुपयोगादिहास्मिञ्छास्त्रे साक्षादभिमतं विवर्तवादमाहत्य मुखतः सूचयति । आहत्येत्युक्त्या पूर्वसूत्रेऽपि विवर्तवादः सूत्रकारस्याभिप्रेत इति सूच्यते । यद्येवं विवर्तवाद एवात्र प्राधान्येनाभिमतस्तर्हि स एव प्रथमं सूचयितुं युक्तः पश्चादितरस्तस्यात्रामुख्यत्वादिति चेन्नैवं परिणामनिरूपणसापेक्षत्वाद्विवर्तनिरूपणस्य परिणामस्यैव प्राथम्यं युक्तमित्याह—**पूर्वमपेक्षमाण इति** । पूर्वं परिणामम् । तदपेक्षामेव विशदयति—**आरम्भणादीति** । प्रथमं परिणामवाद उदिते सत्यारम्भणादिवचनेन विवर्तवादं वक्तुं शक्नोति नान्यथा कार्यकारणस्वरूपस्याप्रतीतौ तस्य मिथ्यात्वप्रतिपत्त्ययोगादित्यर्थः ॥ ५९ ॥

**सु० टी०—तदेव लौकिकदृष्टान्तेन स्पष्टयति—**

**आरुह्य भूमिमधरामितराऽधिरोढुं**
**शक्येति शास्त्रमपि कारणकार्यभावम् ।**
**उक्त्वा पुरा परिणतिप्रतिपादनेन**
**संप्रत्यपोहति विकारमृषात्वसिद्ध्यै ॥ ६० ॥**

आरुह्येति । **अधरामधःस्थितां भूमिं पादार्पणस्थानम् । इतरा तदुपरिभूमिः । इति हेतोः शास्त्रमपीति संबन्धः । ईषद्भेदसहपरिणामप्रतिपादनेन कारणकार्यत्वमुपपाद्य संप्रत्यारम्भणाधिकरणेऽपोहति परिणामेन प्रसक्तस्येषद्भेदस्य सत्यत्वं निषेधति विवर्तसिद्ध्यर्थमित्यर्थः ॥ ६० ॥**

अ० टी०—परिणामविवर्तयोरुपायोपेयभावेन पौर्वापर्यनियममुपपादयति—**आरुह्य भूमिमिति** । शक्येति प्रसिद्धमिति शेषः । न केवलं लोकदृष्टान्तमात्रेणायमभ्युपगमः श्रुतिगतिपर्यालोचनायामपि परिणामवादस्य विवर्तसिद्धिं प्रत्युपायत्वं प्रतीयत इत्याह—**शास्त्रमपीति** । पुरा प्रथमं सृष्टिवाक्यैः परिणतिप्रतिपादनेन कार्यकारणभावं ब्रह्मजगतोरुक्त्वा संप्रतीदानीं विकारमृषात्वसिद्ध्यै तमपोहति 'वाचारम्भणं विकारो नामधेयम्' [ छा० ६ । १ । ४ ] 'त्रीणि रूपाणीत्येव सत्यम्' [ छा० ६ । ४ । १ ] 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा' [ छा० ६ । ८ । ७ ] इति प्रतिपन्नोपायौ प्रतिषेधेन विकारस्य तत्कारणत्वस्य च मिथ्यात्वमावेदयति क्रमेणेत्यर्थः ॥ ६० ॥

सु० टी०—सौधाद्यारोहणसोपान इव तत्त्वप्रतिपत्तिसोपानेऽपि विकारविवर्तयोरधरोत्तरभावं दर्शयति—

विवर्तवादस्य हि पूर्वभूमि-
र्वेदान्तवादे परिणामवादः ।
व्यवस्थितेऽस्मिन्परिणामवादे
स्वयं समायाति विवर्तवादः ॥ ६१ ॥

विवर्तवादस्येति । तन्निषेध्यस्य भेदप्रसञ्जकत्वेन पूर्वभूमिरित्यर्थः । व्यवस्थिते प्रसक्ते । स्वयमिति भेदाभेदे सिद्धे भेदस्य तात्त्विकत्वनिरसनादनायासेनाऽऽयातीत्यर्थः ॥ ६१ ॥

अ० टी०—ननु सोपानपर्वणामुपर्यधोभावावस्थानाद्युक्तमुपरितनस्थानप्राप्तिं प्रत्यधरस्थानारोहस्योपायत्वमत्र कथमिति चेदत्रापि वस्तुतत्त्वप्रतिपत्तिसोपाने परिणामविवर्तवादयोरधरोत्तरभूमिभावादेवेत्याह—**विवर्तवादस्येति** । पूर्वार्धेन प्रतिज्ञातमेवोत्तरार्धेन प्रतिपादयति—**व्यवस्थित** इति । जगत्कारणतया ब्रह्मणः सद्भावसिद्ध्यर्थं कार्यकारणभावस्तावद्वक्तव्यस्तस्य चास्मिन्परिणामवादे व्यवस्थिते सति जगतो ब्रह्मपरिणामत्वे निरूपिते विवर्तवादः स्वयं समायाति । कूटस्थस्य ब्रह्मणो मृदादिवत्परिणामानुपपत्तिप्रतिभासादुक्तः कार्यकारणभावो विवर्त एव पर्यवस्यत्यनुक्ते हि कार्यकारणभावेऽधिष्ठानस्याप्रतिपन्नत्वाद्भ्रान्तित्वप्रतीत्यसंभवादित्यर्थः ॥ ६१ ॥

सु० टी०—ननु प्रथमश्रुतानुसारेण चरमश्रुतं नेयमिति न्यायात् 'एकेन मृत्पिण्डेन सर्वं मृन्मयम्' [ छान्दो० ६ । १ । ४ ] इत्यादिप्राथमिकपरिणामोक्त्यनुसारेण वाचारम्भणमित्यादि व्याख्येयमिति चेन्न 'कथं नु भगवः' [ छा० ६ । १ । ४ ] इति चोद्यपूर्वकं 'मृत्तिकेत्येव सत्यम्' [ छा० ६ । १ । ४ ] इत्यन्तेन विकारमृषात्ववर्णनेन प्रतिज्ञातार्थसाधनाद्विवर्तोपायत्वेनैव श्रुतिसूत्राभ्यां परिणामस्योक्तत्वान्न तु तात्पर्येणेति दृष्टान्तेनाऽऽह—

उपायमातिष्ठति पूर्वमुच्चै-
रुपेयमाप्तुं जनता यथैव ।

१ ख. °णामिवा° ।

श्रुतिर्मुनीन्द्रश्च विवर्तसिद्ध्यै
विकारवादं वदतस्तथैव ॥ ६२ ॥

उपायमिति । **यथा हि जनसमूह उपेयं साध्यमाप्तुमुपायं साधनं पूर्वमनुतिष्ठतीत्यर्थः ॥ ६२ ॥**

अ० टी०—तथा चोपायत्वात्प्रथमं परिणामवादाभिधानं युक्तमेव श्रुतेः सूत्रकारस्य चेत्युपसंहरति—**उपायमिति** । स्पष्टार्थं पद्यम् ॥ ६२ ॥

**सु० टी०—ननु कस्यायं परिणामवादः संमतो य इहाभ्युपेयत इत्याकाङ्क्षायां तत्तद्वादिपक्षान्विवेकेनोपन्यस्यति—**

आरम्भवादः कणभक्षपक्षः
संघातवादस्तु भदन्तपक्षः ।
सांख्यादिपक्षः परिणामवादो
वेदान्तपक्षस्तु विवर्तवादः ॥ ६३ ॥

आरम्भवाद इति । **करणेभ्योऽन्यत्तद्भिन्नं कार्यं समवाय्यसमवायिनिमित्तैर्जन्यत इत्यारम्भवादः । अणूनां समूह एव घटादि कार्यं न तु तद्भिन्नमिति संघातवादः । कारणस्य तात्त्विकोऽन्यथाभावः परिणामोऽतात्त्विकोऽन्यथाभावो विवर्त इत्येषां पक्षा इत्यर्थः ॥ ६३ ॥**

अ० टी०—वादिप्रसिद्धा आरम्भणादिवादा इत्युक्तं ' वादिजनता खलु बाबदीति ' इत्यत्र तत्र कस्य को वाद इति वीक्षायामाह—**आरम्भवाद इति** । भदन्तः सुगतः ॥ ६३ ॥

**सु० टी०—तर्हि विकारवादस्याभ्युपगमः किमर्थ इत्याशङ्क्य तत्प्रयोजनं पूर्वसिद्धमेव प्रपञ्चयति—**

विकारवादं कपिलादिपक्ष-
मुपेत्यवादेन तु सूत्रकारः ।
श्रुतिश्च संजल्पति पूर्वभूमौ
स्थित्वा विवर्तप्रतिपादनाय ॥ ६४ ॥

विकारवादमिति । **सुबोधम् ॥ ६४ ॥**

अ० टी०—ननु परिणामवादोऽपि वेदान्तसिद्धान्त एव ब्रह्मप्रतिपत्त्युपायत्वादिति चेन्नेत्याह—**विकारवादमिति** । उपेत्यवादेनाभ्युपगमसिद्धान्तेन कपिलादिपक्षं सांख्या-

दिशास्त्रसिद्धं विकारवादमाश्रित्य सूत्रकार इत्यादि सुगमम् । तथा चाभ्युपगमसिद्धान्तान्तर्गततयाऽभ्युपगमेऽपि न साक्षादयं सिद्धान्त इत्यर्थः ॥ ६४ ॥

**सु० टी०—ननु विवर्तोऽपि कारणगतरूपान्तरापत्तिरूपत्वात्परिणामप्रभेद एवेति न पृथगुपादातव्य इति चेन्न लक्षणस्य भेदादित्याह—**

**अभेदिनः सावयवस्य सत्य-**
**विचित्ररूपान्तरदर्शकत्वम् ।**
**वदन्ति धीराः परिणाममस्या**
**वसुंधराया इव सस्यसृष्टिम् ॥ ६५ ॥**

अभेदिन इति । **अनेनाऽऽरम्भवादस्य व्यावृत्तिरारभ्यारम्भकयोर्भेदात् । सावयवस्येति ब्रह्मणः परिणामासंभवसूचनाय ।** सत्येति । **कारणस्य तात्त्विकनानाकार्यरूपत्वमित्यर्थः । दर्शकत्वमिति प्रमाणाभिप्रायम् । रूपान्तरेति संघातव्यावृत्त्यर्थं तस्य संहतेभ्यो रूपान्तराभावात् । दृष्टान्तमाह—**अस्या **इति ॥ ६५ ॥**

अ० टी०—परिणामविवर्तयोर्भेदं तल्लक्षणकथनेन व्युत्पादयति—**अभेदिन इति ।** रूपान्तरदर्शकत्वमित्युक्तेऽर्थाद्रूपान्तरस्येति लभ्यते । रूपान्तरस्य निजरूपाद्रूपान्तरदर्शकत्वं धीराः परिणामं वदन्ति । अत्र विचित्रविशेषणं प्रदर्शनार्थं न व्यावृत्त्यर्थं यतो विचित्ररूपत्वं विवर्तपरिणामयोः समानरूपम् । अभेदिन इति विशेषणमारम्भनिवारणायैकस्याऽऽरम्भकत्वानङ्गीकारात् । सावयवस्येतिपदं परिणामिवस्तुस्वरूपकथनार्थम् । सत्येति रूपविशेषणं विवर्तव्यावृत्त्यर्थं रूपान्तरग्रहणेनैव संघातपक्षनिरासो द्रष्टव्यः संघातस्य संहन्तृभ्यो रूपभेदानङ्गीकारात्तद्वादिभिः । यद्वाऽभेदिन इत्यनेनैव संघातस्यापि व्यवच्छेदः संहन्तॄणामनेकत्वादित्यर्थः । अस्या इत्युदाहरणम् ॥ ६५ ॥

**सु० टी०—विकाराद्विवर्तं व्यावर्तयति—**

**अभेदिनो निर्विकृतेरनेक-**
**मृषास्वरूपान्तरदर्शकत्वम् ।**
**विवर्तशब्दार्थ इह प्रसिद्ध-**
**स्तरङ्गभेदादिव चन्द्रभेदः ॥ ६६ ॥**

अभेदिन इति । **निर्विकृतेरिति पूर्वरूपापरित्यागेन । अनेकेति ब्रह्मावि-**

---

१ क. विवृत्तश° ।

वर्ताभिप्रायेणान्यत्र तन्नियमाभावादत्यक्तपूर्वरूपस्य स्वाभिन्नमिथ्या-रूपान्तरप्रदर्शकत्वं विवर्तशब्दार्थ इत्यर्थः । उदाहरणं—तरङ्गेति ॥ ६६ ॥

अ० टी०—विवर्तलक्षणमाह—अभेदिन इति । निर्विक्रतेरिति परिणामव्यावृत्तिः । मृषेतिविवर्तस्वरूपकथनमात्रं न व्यावृत्त्यर्थमेतत् । अथवैतदेव परिणामव्यावृत्त्यर्थं निर्विक्रते-रिति स्वरूपकथनार्थमिति द्रष्टव्यम् । अन्यत्समानम् । अत्रोदाहरणं—तरङ्गभेदा-दिवेति ॥ ६६ ॥

सु० टी०—उभयोः श्रुतिसिद्धत्वात्कथं विवर्त एव सिद्धान्त इति चेत्तत्राऽऽह—

अहं प्रजायेय बहु स्वयं स्या-
मित्यादिनाऽऽदौ परिणाममुक्त्वा ।
विकारमिथ्यात्वमथ ब्रुवाणा
विवर्तवादं श्रुतिराननिाय ॥ ६७ ॥

अहमिति । मूलकारणं सदित्यर्थः । 'बहु स्याम्' [ छा०६।२।३ ] इत्या-दिना स्वात्मन एवाविचिन्त्यविचित्रसृज्यशक्तिमत्त्वेन विचित्रप्रपञ्चा-त्मना परिणाममुक्त्वा, अथेत्यर्थान्तरे । 'यदग्ने रोहितं रूपम्' [ छा० ६ । २ । ३ ] इत्यादिना 'त्रीणि रूपाणीत्येव सत्यम्' [ छा० ६ । ४ । १ ] इत्यन्तेनाग्न्यादेर्मिथ्यात्वोक्त्या सृज्यशक्तीनामप्यर्थान्मायामय-त्वप्रदर्शनान्निर्विकारसन्मात्रस्यैव मृषाप्रपञ्चात्मना विवर्तमानत्वं श्रुति-र्निश्चकर्षेति स एव सिद्धान्त इत्यर्थः ॥ ६७ ॥

अ० टी०—एतौ वादौ कुत्र कुत्र श्रुत्योक्ताविति तदाह—अहमिति । आदौ प्रथमं 'तदैक्षत बहु स्यां प्रजायेय' [ छा० ६ । २ । ३ ] इति स्वात्मन एव बहुरूप-कार्याभावाशंसनपूर्वकं 'तत्तेजोऽसृजत' [ छा० ६ । २ । ३ ] इत्यादिना परिणाम-मुक्त्वाऽथानन्तरं विकारमिथ्यात्वं 'वाचारम्भणं विकारो नामधेयम्' [ छा० । ६ । १ । ४ ] 'त्रीणि रूपाणि' [ छा० ६ । ४ । १ ] इत्येव सत्यादिना ब्रुवाणा श्रुति-र्विवर्तवादमानिनाय पूर्वोक्तं परिणामं विवर्तत्वेन व्यवस्थापितवतीत्यर्थः । विचित्रानेकसृज्य-शक्तिमत्त्वेन ब्रह्मणोऽपि सावयवत्वाङ्गीकाराच्चस्मिन्नास्ति परिणामलक्षणयोगिता पुनर्वाचार-म्भणगिरा सृज्यशक्तीनां मायात्वस्यार्थादुक्तत्वाद्विशुद्धचिदेकरसस्यैवाऽऽत्मनो या मायाशक्तय-स्ताभिर्विचित्ररूपान्तरापत्तिर्विवर्त एवेति साक्षादभिमतं श्रुतिर्दर्शयतीति भावः ॥ ६७ ॥

सु० टी०—एवं विवर्तताश्रयणे सति 'इन्द्रो मायाभिः पुरुरूप ईयते' [ बृह० २ । ५ । १९ ] 'संभवाम्यात्ममायया' [ गी० ४ । ६ ] इति श्रुतिस्मृतिवचनजातमपि प्रतीतिबलादविचारदशायां परमार्थत्वेनाऽऽदृतस्य कार्यकारणात्मना विभक्तस्य प्रपञ्चस्य वस्तुत्वमर्दनपरं घटते न तु परिणामपक्ष इत्याह—

मायाश्रुतिस्मृतिवचः सकलं तथा च
वस्तुत्वमर्दनपरं घटते विवर्ते ।
सर्वस्य कारणविकारविभागभाजः
प्रागादृतस्य परमार्थतया प्रतीतेः ॥ ६८ ॥

मायेति ॥ ६८ ॥

अ० टी०—यदा चैवं विवर्त एव साक्षादभिमतो वस्तुगत्या ब्रह्मणः स्वतो निरवयवत्वेन परिणामलक्षणयोगित्वाभावात्तदा 'इन्द्रो मायाभिः पुरुरूप ईयते' [ बृ० २ । ५ । १९ ] 'अज्ञानेनाऽऽवृतं ज्ञानम्' [ गी० ५ । १५ ] 'प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया [ गी० ४ । ६ ] इत्यादिश्रुतिस्मृतिवचसां सृष्ट्यादेर्मृषात्ववादिनामपि सामञ्जस्यं स्यादित्याह—**मायाश्रुतीति** । तथा चैवमुक्तव्यवस्थायां स्थितायां विवर्ते सिद्धे सति मायाश्रुतिस्मृतिवचः सकलं प्रतीतेर्हेतोः प्राक्परमार्थतया तस्य सर्वस्य जगतः कारणविकारविभागभाजः कार्यकारणरूपेण विभक्तस्योपमर्दनपरं घटत इति योजना । अतो विवर्त एव साक्षात्सिद्धान्तत्वेनाभिमतः परिणामवादस्य तु पराभिमतस्यैवाभ्युपगममात्रेण सिद्धान्तकोटिनिवेश इति सिद्धम् ॥ ६८ ॥

एवमीषद्भेदगन्धितामात्रेण परिणामवादस्यापि न श्रुतिस्मृतिन्यायानुगतिश्चेत्कैव कथाऽत्यन्ताभेदाश्रययोः संघातारम्भवादयोरिति न तयोः सिद्धान्तत्वशङ्केत्याह—

संघातवादमुपगम्य तु तत्र पक्षे
संहन्त्रभाव इति सूत्रकृदाह दोषम् ।
स्थायी भदन्तसमये न हि कश्चिदत्र
संघातसंजननशक्तिसमन्वितोऽस्ति ॥ ६९ ॥

संघातेति । उपगम्यानूद्य तदीयपक्षे संहन्तुः संहन्यमानानां मेलयितुरभाव इति दोषमाहेति संबन्धः । सौत्रान्तिकवैभाषिकयोर्हि बाह्यान्त-

रार्थाः क्षणिकाः सन्ति । तत्र भूतं क्षित्यादिचतुष्टयं भौतिकं च रूपादि चक्षुरादिकं च ते च खरस्नेहोष्णेरणस्वभावानां क्षणिकानां चतुर्विधपरमाणूनां संघातात्मके तथा रूपविज्ञानवेदनासंज्ञासंस्कारा आध्यात्मिकः संघात इत्यादि मतम् । तत्र च समुदायिनामचेतनत्वान्न स्वतःसमुदायसंभवः । यद्यपि चित्तं चेतनं तथाऽपि न तस्य देहादिसंघातात्पूर्वं ज्ञातृत्वमस्ति । आलयविज्ञानमपि विषयविज्ञानादृतेऽसमर्थं तच्च संघाताधीनं तदपि स्थायि चेदात्मैव क्षणिकं चेत्कथं तेन संघातो जन्येत । अनिच्छतोऽप्रयतमानस्य तदयोगादिच्छाश्रयणमेवेच्छादीनां हेतुफलभावदर्शनादित्यभिप्रेत्य ‘ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ’ [ ब्रह्म० २ । २ । १८ ] इति सूत्रकृदाह—सूत्रकृदिति । संहन्त्रभावमाह—स्थायीति । ज्ञानेच्छाद्यनेकक्षणस्थायीत्यर्थः ॥ ६९ ॥

अ० टी०—यद्येवमङ्गीकरणवादमात्रेणास्य सिद्धान्तकोटिनिवेशस्तर्हि संघातारम्भवादयोरपि सिद्धान्तकोटिनिवेशः स्यादङ्गीकरणवादस्य तयोरपि भावादिति चेन्मैवं विशेषोपपत्तेरित्याह—**संघातवादमिति** । चतुर्विधानां परमाणूनां पञ्चानां रूपविज्ञानादिस्कन्धानां च संघातः सृष्टिरिति यो वादः स संघातवादः । तं संघातवादमुपगम्य पूर्वपक्षत्वेनोपस्थाप्य तत्र पक्षे ‘ समुदाय उभयहेतुकेऽपि तदप्राप्तिः ’ [ ब्र० सू० २ । २ । १८ ] इत्यादिभिः सूत्रकृत्संहन्त्रभाव इति दोषमाहेति योजना । तथा च दूषयितुमेव तत्पक्षग्रहो न स्वपक्षसिद्ध्युपायतयेति न तस्यापि सिद्धान्तकोटिप्राप्तिरिति भावः । उक्तमेव दोषं स्फुटयति—**स्थायीति** । अक्षणिकश्चेतनोऽन्यो वा संघातजननशक्तिसमन्वितः स्थायी कश्चिदत्र भदन्तसमये नास्ति तदभ्युपगमे सिद्धान्तविरोधादित्यर्थः ॥ ६९ ॥

सु० टी०—ननु कारणगुणस्य कार्ये सजातीयगुणारम्भकत्वनियमात्कथमनन्ताद्ब्रह्मणश्चेतनात्परिच्छिन्नस्य जडस्य वियदादेरुत्पत्तिरिति वैशेषिकस्य चोद्यं तत्प्रक्रिययैव दूषयति—

आरम्भवादमुपगम्य तदीययुक्ते-
स्तत्प्रक्रियामनुसरन्व्यभिचारमाह ।
वैशेषिकं प्रति महद्वदिदं हि योज्यं
यद्वाऽपि दीर्घवदिदं जडमित्यनेन ॥ ७० ॥

आरम्भेति । उपगम्याभ्युपेत्य । तदीययुक्तेः कारणगुणस्येत्याद्युक्तयुक्तेः । तत्प्रक्रिया तु परमाणुभ्यो द्व्यणुकादिक्रमेण कार्यद्रव्याणि जायन्ते ।

तद्गुणास्तु सजातीयैः समवायिगुणैरारभ्यन्ते रूपादयस्तन्महत्त्वं च कारणसंख्यापरिमाणप्रचययोनीत्यादिका तामनुसरन्नेव वैशेषिकं प्रति 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम्' [ ब्रह्म० २ । २ । ११ ] इति सूत्रेण व्यभिचारमाह । यथा द्व्यणुकारब्धे महति त्र्यणुके समवायि परिमाणं न स्वजातीयगुणारम्भकं तद्वदिदमपि चेतनं ब्रह्म न स्वकार्ये चैतन्यारम्भकमिति योज्यमिति ॥ ७० ॥

अ० टी०—तथाऽऽरम्भवादोऽपि तदीयरीत्या तदुक्तदूषणसमाधानार्थमेव क्वचिदभ्युपगतो न स्वपक्षसाधनायेत्याह—**आरम्भवादमिति** । तदीययुक्तेरित्ययमर्थः-यद्गुणकं कारणद्रव्यं तत्तादृग्गुणकमेव स्वकार्यद्रव्यं जनयति यथा श्वेतगुणास्तन्तवः श्वेतमेव पटमिति । तथा च चिद्गुणकं ब्रह्मद्रव्यं यदि जगद्रव्यस्योपादानं तर्हि तदपि चिद्गुणमेव स्यात्तदभावान्न चिद्गुणब्रह्मोपादानकं जगदिति. । अस्यास्तदीययुक्तेर्वैशेषिकं प्रति । तस्य वैशेषिकस्य प्रक्रियामनुसरन्व्यभिचारमाह सूत्रकार इति । केन सूत्रेणेति तदर्थं सूत्रमर्थतः पठति—**महद्वदिति** । 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ।' [ ब्र० सू० २ । २ । ११ ] इत्यनेन सूत्रेणेति । अणुह्रस्वपरिणामेभ्यो द्व्यणुकेभ्यो यथा महत्त्र्यणुकं जायते तथा वा तेभ्य एव दीर्घत्र्यणुकं तद्वदिदं जडं चेतनाज्जायत इति योज्यमित्यर्थः ॥ ७० ॥

सु० टी०—महद्वदित्युक्तमेव विवृणोति—

ह्रस्वारब्धं त्र्यणुकमणुभिस्तद्वदारब्धमेत-
द्ध्रस्वं नो तन्न च तदणुवत्संमतं तद्वदेतत् ।
सर्वं कार्यं गगनधरणीमध्यगं चेतनोत्थं
निश्चित्कं नो जडिमघटितं युक्तमित्याचचक्षे ॥ ७१ ॥

ह्रस्वारब्धमिति । **एतद्वद्दिव्यणुकं यद्यपि ह्रस्वैरणुभिश्च द्व्यणुकैरारब्धं तथाऽपि नो ह्रस्वं नाप्यणुपरिमाणवत्तच संमतं तद्वदस्माकमपि सर्वमेतद्गगनादिकार्यं चिज्जन्यमपि निश्चित्कं युक्तमित्याहेत्यर्थः ॥ ७१ ॥**

अ० टी०—तमेव सूत्रार्थं विवृणोति—**ह्रस्वारब्धमिति** । यत्त्र्यणुकं प्रसिद्धं तद्ध्रस्वारब्धं ह्रस्वैर्द्व्यणुकैरारब्धम् । तथाऽपि न तत्त्र्यणुकं ह्रस्वं नो संमतं नेष्टमित्येकोऽन्वयः । तद्वद्यथा ह्रस्वैरारब्धं त्र्यणुकं तद्वदणुभिस्तैरेव द्व्यणुकैरेतत्त्र्यणुकमारब्धं तथाऽपि तदेतत्त्र्यणुकं नाणु संमतं किं तु महद्दीर्घं च तत्संमतमिति पुनर्योजना ।

---

१ ख. ग. रभ्यमि° ।

यथैवं वैशेषिकाणां समवायिकारणगता गुणाः कार्ये गुणान्तरं सजातीयमारभन्त इति न नियमस्तद्वन्नोऽस्माकमप्येतत्सर्वं कार्यं चेतनोत्थमपि निश्चित्कमचेतनमयं च जडिमघटितं कारणचैतन्यविपरीतेन जाड्यधर्मेण युक्तमित्येतद्युक्तमित्याचचक्षे सूत्रकार इति योजना। गगनधरणीमध्यगमिति कार्यविशेषणं गगनमारभ्य धरणीपर्यन्तमित्यर्थः ॥ ७१ ॥

**सु० टी०—सूत्रस्थवाशब्दसूचितं द्व्यणुकत्र्यणुकपरिमाणयोर्व्यभिचारं दर्शयति—**

> ह्रस्वाणुत्वे कारणद्वित्वहेतो-
> र्जाते नेते पारिमाण्डल्यहेतोः।
> दीर्घत्वं यद्यच्च दीर्घे महत्त्वं
> द्रव्ये ते द्वे कारणत्रित्वहेतोः ॥ ७२ ॥

ह्रस्वाणुत्वे इति। **द्व्यणुकगते ये ह्रस्वाणुत्वे ते स्वकारणपरमाणुद्वित्वादेव जाते न तु स्वसजातीयात्तत्पारिमाण्डल्यादिति हि ते मतमेवं त्र्यणुके द्रव्ये यद्दीर्घत्वं यच्च तत्र महत्त्वं ते अपि न कारणपरिमाणजन्ये किं तु तद्बहुत्वसंख्याजन्ये इति क्व त्वदुक्तो नियम इत्यर्थः ॥ ७२ ॥**

अ० टी०—तथा व्यणुकपरिमाणमपि तत्कारणगुणविलक्षणमेव संमतमतज्जन्यं चेत्याह—**ह्रस्वाणुत्वे इति**। व्यणुकगते ह्रस्वाणुत्वे कारणपरमाणुगतद्वित्वहेतोर्जाते। एते ह्रस्वाणुत्वे न पारिमाण्डल्यहेतोर्जाते पारिमाण्डल्यस्य स्वपरमाणुपरिमाणस्यानारम्भकत्वाङ्गीकारादन्यथा व्यणुकस्यापि पारिमण्डलत्वापत्तेरित्यर्थः। तथा त्र्यणुकगते दीर्घत्वमहत्त्वे अपि न व्यणुकपरिमाणजन्ये इत्याह—**दीर्घत्वमिति**। दीर्घे द्रव्ये इति संबन्धः। व्यणुकगतद्वित्वसंख्याजन्ये ते अभिमते इत्यर्थः ॥ ७२ ॥

**सु० टी०—किं च तवापि न सर्वत्रैकरूप्यं कथमन्यथा परमाणुद्वयादिव द्व्यणुकं द्व्यणुकद्वयादपि न त्र्यणुकं जायत इति। न च तत्कार्यमण्वेव स्यादिति वाच्यं परमाणुद्वित्वस्य स्वाश्रयाधिकपरिणामारम्भकत्ववद्व्यणुकद्वित्वस्यापि द्व्यणुकाधिकपरिमाणारम्भकत्वसंभवात्तच्च महत्त्वमेव संभवतीत्यलं त्रिभिर्द्व्यणुकैः। एवं च कार्यमहत्त्वं क्वचित्कारणमहत्त्वात्क्वचित्तद्बहुत्वाच्चेत्यनियतवादिना त्वया नास्मन्मतं शक्यदूषणमित्याह—**

> द्व्यणुकस्य जन्म परमाणुयुगा-
> त्परिमण्डलादिति कणादमतम्।

द्व्यणुकत्रयात्त्र्यणुकजन्म पुन-
र्नियमं न कश्यपसुतो वदति ॥ ७३ ॥

द्व्यणुकस्येति । परिमण्डलादित्यनेन द्व्यणुकपरिमाणाधिक्यं सूचितम् । पुनः पश्चादन्यत्कार्यपरिमाण इत्यर्थः । कश्यपसुतः कणादः ॥ ७३ ॥

अ०टी०—एवं वैशेषिकाभ्युपगम इति कुतोऽवगतमिति तत्राऽऽह—द्व्यणुकस्येति । पुन-रित्यन्तं स्पष्टार्थम् । यत एवमिदं मतं दृश्यतेऽतः कश्यपसुतः कणादो नियमं कारणद्र-व्यस्य कार्यगतसजातीयगुणारम्भकगुणाश्रयत्वे कारणगतगुणस्य कार्यसजातीयगुणारम्भक-त्वेन नियमं न वदतीत्यर्थः ॥ ७३ ॥

सु० टी०—तथाऽपि न प्रतिबन्दिमात्रेण परपक्षजयस्तेषामिव भवता-मप्यनुपपन्नमस्त्विति चेन्न व्यभिचारेण तन्न्यायस्यैवाऽऽभासीकृतत्वा-दित्याह—

द्व्यणुकत्र्यणुकव्यपाश्रयं परिमाणं प्रति कारणाश्रयः ।
न तु कारणमिष्यते गुणस्तदवष्टभ्य वयं जिगीषवः ॥ ७४ ॥

द्व्यणुकेति । गुणः परिमाणम् । किं तत इत्याह—तदवष्टभ्येति । आश्रित्ये-त्यर्थः ॥ ७४ ॥

अ० टी०—उक्तमेव व्यभिचारं संगृह्णाऽऽह—द्व्यणुकत्र्यणुकव्यपाश्रयमिति । व्यभिचारप्रदर्शनफलमाह—तदवष्टभ्येति । तन्मतमाश्रित्य यावत् त्वत्प्रक्रियामेवाऽऽ-श्रित्य त्वदुक्तनियमस्य व्यभिचारं दर्शयन्तस्त्वां जयाम इत्यर्थः ॥ ७४ ॥

सु० टी०—अस्तु तर्हि कारणपरिमाणादेव द्व्यणुकत्र्यणुकादिपरि-माणारम्भ इति क्व व्यभिचार इति चेत्तत्राऽऽह—

यदि कारणसंश्रयाद्गुणाद्द्व्यणुकादेः परिमाणमिच्छति ।
द्व्यणुकादिसमाश्रये तदा परिमाणेऽतिशयो विरुध्यते ॥ ७५ ॥

यदीति । गुणात्परिमाणात् । तथा च तस्य सजातीयपरिमाणारम्भ-कत्वनियमेन द्व्यणुकत्र्यणुकयोरपि पारिमाण्डल्यं स्यान्न ततोऽतिशय इत्यप्रत्यक्षत्वं त्र्यणुकस्य स्यान्नित्यपरिमाणमनारम्भकमिति स्वसमयभङ्ग-श्चेत्यर्थः ॥ ७५ ॥

---

१ क. °नम्भमा° ।

अ० टी०—अथ व्यभिचारनिराचिकीर्षया परमाणुपरिमाणात्पारिमाण्डल्यादेव व्यणुकपरिमाणोत्पत्तिर्व्यणुकपरिमाणाच्च त्र्यणुकपरिमाणोत्पत्तिरित्युपगच्छाम इति ब्रूयात्तदप्यसंगतमित्याह—**यदीति** । अस्मिन्पक्षे सर्वं कार्यं परिमण्डलमेव स्यादिति व्यणुकत्र्यणुकादौ परिमाणातिशयो न स्यादतश्च त्र्यणुकादेरप्यतीन्द्रियत्वापत्तेरित्यर्थः ॥ ७५ ॥

**सु० टी०—तर्हि परिणामवादः सिद्धान्तोऽस्त्वत्यन्तभेदेऽत्यन्ताभेदे च मृद्घट इति सामानाधिकरण्यानुपपत्तेर्न हि भवति गौरश्व इति गौर्गौरिति वा तस्माद्भेदाभेदः कार्यकारणयोस्तात्त्विक इतिचेत्तत्राऽऽह—**

**परिणामवादमुपगम्य तथा रचनाद्यसंभवमुवाच मुनिः ।**
**परमेश्वरं न हि विना घटते जडरूपवस्तुपरिणाम इति ॥ ७६ ॥**

परिणामेति । **कुतो रचनाद्यसंभवमुवाचेत्याह—**परमेश्वरमिति । **रचना कार्यावयवविन्यासादिरचेतनानां लोके चेतनं विना न दृश्यते सांख्यानां चेश्वरानभ्युपगमाज्जीवानां चौदासीन्यान्न प्रधानादेर्महदाद्यात्मना परिणामसंभवः । न हि स्वयं परिणममानं किंचिदुभयसंमतमस्तीत्यर्थः । भेदाभेदे चोक्तम् ॥ ७६ ॥**

अ० टी०—तदेवं संघातारम्भवादयोर्न स्वीयतयाऽभ्युपगमः किं तु दूषणार्थमेवेह शास्त्रे तन्निबन्धनमिति स्थितं तथा परिणामवादोऽपि परपक्षदूषणार्थमेव क्वचिदभ्युपगत इत्याह—**परिणामवादमिति** । तथा संघातारम्भवादवन्निराकरणाय परिणामवादमुपगम्येति योजना । परमेश्वरं चेतनमधिष्ठातारं विना जडरूपवस्तुनः प्रधानस्य परिणामो न घटत इति जगद्रचनाद्यसंभवं परिणामपक्षे दोषं मुनिरुवाच ' रचनानुपपत्तेश्च नानुमानम् [ ब्र० सू० २ । २ । १ ] इत्यादिभिः सूत्रैरित्यर्थः ॥ ७६ ॥

**सु० टी०—नन्वारम्भादिनिराकरणे कुत्र कीदृशः सूत्रकारस्याऽऽशय इति जिज्ञासायामाह—**

**क्वचिदभ्युपेत्य कथनं कुरुते परपक्षदूषणकथावसरे ।**
**निजपक्षदोषपरिहारपरः क्वचिदभ्युपेत्य वदतीह मुनिः ॥ ७७ ॥**

क्वचिदिति । **परपक्षदूषणप्रधाने तर्कपादे क्वचिद्वैशेषिकाद्यधिकरणे तत्प्रक्रियामभ्युपेत्य महद्दीर्घवद्वेत्यादिना तद्दोषकथनपूर्वकं स्वमतं साधयति क्वचित्तु रचनानुपपत्त्यादौ तन्मतमुपेत्य स्वमतदोषपरिहारं च वदतीत्यर्थः ॥ ७७ ॥**

अ० टी०—तस्मान्नैतादृशैरभ्युपगमवादैः सिद्धान्तत्वप्राप्तिरित्युपसंहरति—**क्वचिदभ्युपेत्येति** । परपक्षदूषणकथाप्रस्तावे दूषणार्थमेव संघातवादं परिणामवादं चाभ्युपेत्य क्वचित्कथनं कुरुते । न तन्मते स्वपक्षदूषणपरिहाराय किंचित्पश्यन्नित्यर्थः । आरम्भवादं पुनर्निजपक्षदोषपरिहारं कुर्वन्क्वचिदभ्युपेत्येह शास्त्रे मुनिर्वदतीत्येष विशेषोऽवगन्तव्य इत्यर्थः ॥ ७७ ॥

**सु० टी०—उक्तमर्थं विभज्य दर्शयति—**

**परपक्षनिषेधमाचरन्क्वचिदङ्गीकरणं करोति सः ।**
**परदर्शितदोषनुत्तये क्वचिदित्येष विशेष ईरितः ॥ ७८ ॥**

परपक्षेति । **परिणामादिपक्षनिषेधमित्यर्थः** । परेति । **वैशेषिकादिदर्शितेत्यर्थः ॥ ७८ ॥**

अ० टी०—मतान्तराङ्गीकरणफलमुक्तमेव स्पष्टयति—**परपक्षनिषेधमाचरन्निति** । आचरन्निति हेतौ शतृनिर्देशः । परपक्षनिषेधार्थं क्वचिदङ्गीकार इत्यर्थः । उत्तरं स्पष्टार्थम् ॥ ७८ ॥

**सु० टी०—एवं च संघातादिवत्परिणामवादस्यापि निरस्तत्वाद्भोक्त्रापत्तिसूत्रे वादिभिरद्वैतसमन्वये भोक्तृभोग्यादिसांकर्यमापादितं तत्समाधातुं भेदाभेदेन परिणाममभ्युपेत्य 'स्याल्लोकवत्' [ ब्र० सू० २ । १ । १३ ] इति परिहारं मुनिराह न तु सिद्धान्ततया सिद्धान्तसिद्धिस्तु तदनन्यत्वमित्यत्रैवेत्याह—**

**भोक्त्रादिसूत्रे परिणामवाद-**
**माश्रित्य तद्वादिभिरुक्तदोषम् ।**
**समादधानो मुनिराह तस्मा-**
**त्सिद्धान्तसिद्धिः पुनरुत्तरत्र ॥ ७९ ॥**

भोक्त्रादीति ॥ ७९ ॥

अ० टी०—तदेवं प्रसङ्गतो भाष्याद्यनुक्ताद्यर्थकथनेनास्य ग्रन्थस्य वार्तिकत्वं दर्शितं तदेवमुक्तन्यायेन भोक्त्रादिसूत्रे परिणामवादाङ्गीकारः परोक्तदोषपरिहारार्थतया न सिद्धान्तत्वेनेति स्थितमर्थमाह—**भोक्त्रादीति** । उत्तरत्रोत्तराधिकरणे तदनन्यत्वमित्यत्रेत्यर्थः॥७९॥

**सु० टी०—ननु निराकार्यस्याप्यभ्युपेयत्व आरम्भादेरपि तथात्वं स्यात्तस्यापि स्वभावादिनिरासेनापेक्षितकार्यकारणभावादिसाधकत्वा-**

दिति चेन्न तस्य सिद्धान्तानुपयोगित्वेनानपेक्षितत्वात्परिणामस्य त्वभेदांशेनाद्वैतोपपादकत्वाद्भेदांशेन च प्रत्यक्षाद्यनुगुणत्वात्प्रत्यक्षादिप्रामाण्येऽपि नाद्वैतसमन्वयक्षतिरिति वक्तुमभ्युपगम इत्याह—

प्रत्यासन्ना परिणतिरियं विप्रकृष्टस्तु पूर्वः
संघातादिः सकल उदितो वेदसिद्धान्तसिद्धेः ।
एतावत्त्वादियमभिमता सूत्रकारस्य भाति
भ्रान्तिभ्रष्टस्फुटनयमनःकौशलानां नराणाम् ॥ ८० ॥

प्रत्यासन्नेति । विप्रकृष्ट इति । व्यवहारमात्रहेतुत्वादित्यर्थः । कथं तर्हि परिणामः सूत्रसंमत इति कैश्चिद्व्याख्यायत इति चेद्विशेषाज्ञानादित्याह— एतावत्त्वादिति । सिद्धान्तप्रत्यासन्नत्वादित्यर्थः । मनःकौशलं विचारचातुर्यम् ॥ ८० ॥

अ० टी०—यद्येवं तर्हि द्वावत्र वादौ संग्रहपदं नयत इति किमुक्तमिति तत्राऽऽह— प्रत्यासन्नेति । वेदसिद्धान्तो वेदान्तसिद्धान्तस्तत्सिद्धेः सिद्ध्यर्थमियं परिणतिः परिणामवादः प्रत्यासन्ना विवर्तप्रतिपत्त्युपायत्वात्पूर्वः प्रागुक्तः संघातादिस्तु सकलः पक्षो विप्रकृष्टोऽद्वैतवेदसिद्धान्ताननुरूपा(पत्वा)दित्यर्थः । परिणामवादः सूत्रकारस्य सिद्धान्तोऽभिमत इति केषांचिद्भ्रमोऽपि प्रत्यासत्तिवशादेवेत्याह—एतावत्त्वादिति । मनःकौशलं विवेकसामर्थ्यम् ॥ ८० ॥

सु० टी०—किंचाऽऽपाततः शिष्यस्य शुद्धाद्वैतबोधासंभवादपि परिणामोऽभ्युपेय इत्याह—

आरोपदृष्टिरपवादकदृष्टिरेवं
व्यामिश्रदृष्टिरिति दृष्टिविभागमेतम् ।
संगृह्य सूत्रकृदयं पुरुषं मुमुक्षुं
सम्यक्प्रबोधयितुमुत्सहते क्रमेण ॥ ८१ ॥

आरोपेति । ब्रह्माभिन्नं जगदित्यारोपदृष्टिः । निष्प्रपञ्चं ब्रह्मेत्यपवाददृष्टिः । स्वतो निष्प्रपञ्चं मायया सप्रपञ्चमिति व्यामिश्रदृष्टिः । एवं

---

१ ख. ग. घ. °टनिजम° । २ क. °त्याख्यातःवा° ।

**दृष्टिविभागं संगृह्य मुमुक्षुं प्रति सम्यगनायासेन पुरुषं परमात्मानं बोधयितुं मुनिरुत्सहत इत्यर्थः ॥ ८१ ॥**

अ० टी०—परिणामवादस्य प्रकृतशास्त्रार्थप्रतिपत्त्युपायतया प्रत्यासत्तिमेवोपपादयति—**आरोपदृष्टिरिति** । स्पष्टोऽर्थः ॥ ८१ ॥

**सु० टी०—उक्तदृष्टित्रयं स्वरूपेण विभजते—**

**आरोपदृष्टिरुदिता परिणामदृष्टि-**
**र्द्वैतोपशान्तिरपवादकदृष्टिरन्त्या ।**
**मध्ये विवर्तविषया द्वयमिश्रदृष्टि-**
**र्व्यामिश्रदृष्टिरधरोत्तरभूमिभावात् ॥ ८२ ॥**

आरोपेति । **या पूर्वमारोपदृष्टिरुक्ता सा परिणामदृष्टिराद्या ब्रह्मणि प्रपञ्चाध्यारोपात् । या तु तत्रापवादकदृष्टिरुक्ता सा सविलासा विद्योपशमकाद्वैतसाक्षात्काररूपत्वाच्चरमा । व्यामिश्रदृष्टिः पुनरतत्त्वतोऽन्यथाभावविषया ब्रह्मणि प्रपञ्चतदभावविषयत्वान्मध्यमा । तत्र हेतुः—** अधरेति । **आरोपापवादभूमिद्वयघटितत्वादित्यर्थः ॥ ८२ ॥**

अ० टी०—किमासां दृष्टीनां स्वरूपं को वा क्रमः कथं वाऽस्य दृष्टिकथनस्य परिणामवादोपकारित्वप्रदर्शनोपयोग इति वीक्षायां दृष्टस्वरूपक्रमौ तावदाह—**आरोपदृष्टिरिति** । आरोपदृष्टिशब्देन परिणामदृष्टिरुदिता सेह प्रथमेति योज्यम् । ब्रह्मात्मकं सर्वं जगदिति ब्रह्मणि प्रपञ्चारोपदृष्टिरित्यर्थः । द्वैतस्योपशान्तिर्यस्याः सा द्वैतोपशान्तिर्विशेषाद्वयानन्दात्मब्रह्मदृष्टिर्या भवति सापवाददृष्टिरन्त्या तृतीयतयोदितेत्यर्थः । मायया सप्रपञ्चं स्वतस्तु निष्प्रपञ्चं ब्रह्मेत्यारोपापवादात्मिकेत्येवं या द्वयमिश्रदृष्टिर्विवर्तविषया द्वैतमिथ्यात्वालम्बना सा मध्ये परिणामापवाददृष्ट्योर्मध्ये भवतीति व्यामिश्रदृष्टिरित्युच्यत इत्यर्थः । अस्याः कुतो मध्यत्वमित्यत आह—**अधरोत्तरेति** । आरोपोऽधरभूमिरपवाद उत्तरभूमिस्तयोर्भावात्सत्त्वादारोपापवादाभ्यां व्यामिश्रणादित्यर्थः । अथ वा कथमित्थमासां दृष्टीनां क्रमनियम इति तत्र हेतुमाह—**अधरोत्तरभूमिभावादिति** । उक्तक्रमेणैवाऽऽसामुद्भवादित्यर्थः ॥ ८२ ॥

**सु० टी०—आसां च दृष्टीनामानुपूर्व्यं सहेतुकमाह—**

**तत्त्वावेदकमानदृष्टिरधमा तत्त्वक्षतिर्मध्यमा**
**तत्त्वप्रच्युतविभ्रमक्षयकरी तत्रान्त्यदृष्टिर्मता ।**

जीवैकत्वमुमुक्षुभेदगतितो व्यामिश्रदृष्टिर्द्विधा
भिन्ना तत्र च पूर्वपूर्वविलयादूर्ध्वोर्ध्वलब्धिर्भवेत् ॥८३॥

तत्त्वावेदकेति । प्रत्यक्षादेस्तत्त्वावेदकमानत्वेन दृष्टिस्तावदारोपदृष्टिरज्ञाश्रयत्वादनर्थहेतुत्वाद्ब्रह्मबुद्धेरतिदूरत्वाच्चाधमा । तत्त्वक्षतिः प्रपञ्चसत्यत्वस्यापवादिका विचाराधीना विवर्तदृष्टिरारोपोत्तीर्णा शुद्धब्रह्मविषयत्वं वा प्राप्तेत्यतो मध्यमा । अपवाददृष्टिस्तु तत्त्वप्रच्यवात्मकस्य द्वैतभ्रमस्य सर्वात्मना क्षयं कुर्वती विशुद्धे ब्रह्मणि परिनिष्ठिता मुक्तेरतिप्रत्यासन्नत्वादुत्तमाधिकार्याश्रयत्वाच्चान्त्येत्यर्थः । मध्यमा तु द्विधा भिद्यत इत्याह—जीवेति । बहवो जीवास्ते च क्रमेण मुमुक्षवोऽनाद्यनन्तश्च संसार इत्येका विवर्तदृष्टिः । अपरा त्वहमेवैकः सकलकार्यकारणसाक्षी मदविद्याकल्पितं च मुक्तामुक्तविद्वदज्ञानेकजीवेशादिभिन्नं जगद्भासते मद्बोधाच्च निवर्तिष्यत इति । कालतोऽप्यासामधरोत्तरभावमाह—तत्र चेति । तासां मध्य इत्यर्थः ॥ ८३ ॥

अ० टी०—उक्तमेव हेतुमुपपादयति—**तत्त्वावेदकमानदृष्टिरिति** । या परिणामदृष्टिः सा तत्त्वावेदकमानजा दृष्टिः प्रत्यक्षादेः प्रमाणस्य तत्त्वावेदकदृष्ट्युपेतत्वादारोपदृष्टिः । एषाऽधमा प्रथमा च विशुद्धब्रह्मावगतिं प्रति दूरस्थत्वादित्यर्थः । **तत्त्वक्षतिः** प्रत्यक्षादेस्तत्त्वावेदकत्वक्षतिर्यया सा तथा विवर्तदृष्टिर्मध्यमाऽऽरोपरूपतामतीत्य केवलापवादरूपत्वं चाखण्डाद्वयब्रह्मालम्बनत्वलक्षणं न प्राप्तेति मध्यमेत्यर्थः । तत्त्वप्रच्युतिरूपस्य विभ्रमस्य क्षतिं निवृत्तिं कुर्वत्यपवाददृष्टिरन्त्या प्रथममध्यमापेक्षयोत्तमा ब्रह्मैव प्रत्यगेकरसं परमार्थसन्नान्यत्किंचिदभूद्भवति भविष्यतीति यद्वेदान्तैकवेद्यतत्त्वं तस्य प्रच्युतिस्तिरस्कारो लेशतोऽपि ब्रह्मान्यवस्तुदर्शनलक्षणः स एव विभ्रमस्तस्य क्षतिर्बाधस्तं कुर्वती परां काष्ठां प्राप्तेत्यपवाददृष्टिर्मता वाक्यार्थावगतिं प्रत्यत्यन्तसंनिकृष्टत्वादित्यर्थः । एवं दृष्टित्रैविध्यं तत्क्रमं तत्स्वरूपं चोपपाद्य मध्यमाया विवर्तदृष्टेर्द्वैविध्यमुपायोपेयभावक्रमस्य विशदीकरणमाह—**जीवैकत्वेति** । एक एवाहं जीवः स्वप्न इव स्वात्मन्येव स्वाविद्यया कल्पितो जीवभेदप्रतिभासो जीवेश्वरभेदावभासो मुक्तामुक्तादिप्रकारभेदकभिन्न आध्यात्मिकादिप्रकारजगदवभासश्च । एतच्च सर्वं मत्कृतेन मत्तत्त्वब्रह्मज्ञानेन निःशेषं निवर्तिष्यत इत्यहमेक एव मुमुक्षुरित्येका गतिः प्रकारः । बहवो जीवास्ते च यथाप्रतिभासं विभिन्नस्वभावा एव सन्ति परमात्मविषयकस्वाश्रयानेकाविद्याविलसिताः क्रमेण च मुमुक्षवोऽनाद्यनन्ताश्च संसारमोक्षमार्ग इत्यपरा गतिः प्रकारः । एवं जीवैकत्व मुमुक्षुभेदगतितो ज्ञानप्रतिपत्तिप्रकारभेदतो व्यामिश्रदृष्टिर्विभिन्ना ज्ञेयेत्यर्थः । एवं दृष्टिभेदं व्यवस्थाप्याऽऽसां दृष्टीनामधममध्य-

मोत्तमरूपाणां पूर्वपूर्वविलापनेनोत्तरोत्तरप्राप्तिहेतुत्वमित्युपायोपेयभावं संगृह्णाति—**तत्र चेति**। तासां च मध्य इत्यर्थः ॥ ८३ ॥

**सु० टी०—विलोपनेऽपि तासां क्रममाह—**

**परिणामबुद्धिमुपमृद्य पुमान्**
**विनिवर्तयत्यथ विवर्तमतिम् ।**
**उपमृद्य तामपि पदार्थधिया**
**परिपूर्णदृष्टिमुपसर्पति सः ॥ ८४ ॥**

परिणामेति। **पुमानधिकारी कूटस्थस्य तत्त्वतोऽन्यथाभावासंभवात्तद्बुद्धेरुपमर्दं कृत्वाऽनन्तरं व्यावहारिकविवर्तबुद्धिमपि प्राप्तां निवर्तयति दृष्टिसृष्टिमाश्रित्य ततस्तादृशीमपि विवर्तमतिं पदार्थधिया केवललक्ष्यधियाऽपवादहृष्ट्योपमृद्य परिपूर्णदृष्टिं निष्प्रपञ्चप्रत्यग्ब्रह्माभेददृष्टिं प्राप्नोतीत्यर्थः ॥ ८४ ॥**

अ० टी०—संग्रहं विवृणोति—**परिणामबुद्धिमिति**। अयमर्थः—प्रत्यक्षादेरप्यस्ति स्वार्थेषु तत्त्वावेदकं प्रामाण्यं ब्रह्मणः परिणामजगत्सृष्ट्यादिवाक्यप्रापितमिति या परिणामदृष्टिः प्रथमा तां परिणामदृष्टिं ब्रह्मणो विशुद्धत्वान्निरवयवसन्मात्रत्वाच्च परिणामो न संभवति प्रत्यक्षादेरपि व्यवहारव्यवस्थामात्रहेतुत्वाद्व्यावहारिकमेव प्रामाण्यं जीवेश्वरभेदो जीवानां मिथो भेदश्च व्यवहारदृष्ट्या वर्तत एवेत्येवं या विवर्तदृष्टिस्तयोपमृद्य परिणामं ब्रह्मणः सहसा प्रतीयमानं विवर्तत्वेनाऽऽकलय्येति पुमान्परिणामबुद्धिं विवर्तबुद्ध्योपमर्द्येति योज्यम्। अथ विवर्तमतिं परिणामबुद्धेरुपमर्दिनीमपि निवर्तयति दृष्टिसृष्ट्याश्रयणेन जीवाजीवजगद्भ्रमस्य केवलस्वप्नसाम्यापादनेन च पूर्वोक्तां विवर्तदृष्टिमप्याभासमात्रतयाऽऽकलयतीत्यर्थः। पुनस्तामपि दृष्टिसृष्टिरूपां विवर्तमतिं पदार्थधियाऽपवादरूपया केवललक्ष्यार्थधियोपमृद्य सच्चिदात्मकवस्तुमात्रतया विलाप्येत्यर्थः। सोऽधिकारी तदा परिपूर्णदृष्टिं वाक्यार्थावगतिरूपामुपसर्पति प्राप्नोतीत्यर्थः। एवमासां दृष्टीनां क्रमेण ब्रह्मावगतिहेतुत्वाद्युक्तं परिणामवादस्य पूर्वभूमिकात्वेनोपायत्वमिति भावः ॥ ८४ ॥

**सु० टी०—ननु मुमुक्षुणा ब्रह्मज्ञाने यतनीयं किं तस्य परिणामादिदृष्ट्येति चेन्न तज्ज्ञानस्य तादृशदृष्टिभेदसाध्यत्वादित्याह—**

**अथशब्दसूचितमुमुक्षुरिमं**
**खलु दृष्टिभेदमुदितक्रमतः ।**

उपढौकते विगलिताखिलधी-
रवतिष्ठते निजमहिम्नि ततः ॥ ८५ ॥

अथशब्देति । **प्रथमसूत्रगतेनाथशब्देन सूचितो यः श्रवणाधिकारी स तावदिमं दृष्टिभेदं क्रमेण प्राप्नोति । ततश्च विगलितद्वैतबुद्धिः सन्निजमहिम्नि निजस्वरूपेऽवस्थितो भवति नान्यथेत्यर्थः ॥ ८५ ॥**

अ० टी०—ननु मुमुक्षूणामेता दृष्टय एकैकस्मिन्क्रमभाविन्यो नोपलभ्यन्ते कश्चिद्धि परिणामदृष्टिमेव यावज्जीवमेवाऽऽलम्बमानो दृश्यते कश्चित्तु प्रथममेव विवर्तदृष्टिमपवाददृष्टिं वेति चेत्सत्यं सन्तु तादृशा अधिकारिणस्तथाऽप्यत्राथातःशब्दाभ्यां सूचितो यः श्रवणाधिकारी स एता दृष्टीः क्रमेणावलम्बते वाक्यार्थधिया विगलितनिखिलदृष्टिभेदः सन्निजमहिम्नाऽवतिष्ठमानो मुक्तो भवतीत्याह—**अथशब्दसूचितमुमुक्षुरिति** । अक्षरार्थोऽवतारिकयैव व्याख्यातः । य इह चतुरध्यायीलक्षणस्य संपूर्णशास्त्रस्य श्रवणाधिकारी साधनचतुष्टयसंपन्नः सूचितस्तस्यैवैवं क्रमेण मुक्तिफलावसाना दृष्टयो भवन्तीतरेषां तु तत्त्वश्रद्धामात्रेण प्रवृत्तानां सम्यक्साधनसंपत्तिरहितानां परिणामे विवर्ते वा दृष्टिः परिनिष्ठिता स्यात्तादृशाश्च बहवः पूर्वोक्तस्तु विरल इति न दृष्टिविरोध इति भावः ॥ ८५ ॥

**सु० टी०—कथं पुनः परिणामविवर्तधियोर्विरुद्धयोर्ब्रह्मसाक्षात्कारहेतुत्वमिति चेन्न हेतुहेतुमत्त्वेनाविरोधादित्याह—**

परिणाम इत्यथ विवर्त इति
बहवोऽहमेव च मुमुक्षुरिति ।
परिपुष्कलं च परमं पदमि-
त्यवगत्य तिष्ठति महिम्नि निजे ॥ ८६ ॥

परिणाम इतीति । **अधिकारी हि प्रथमं सृष्टिवाक्याद्ब्रह्मोपादानं जगदिति पश्यति । ततो ब्रह्मणि प्रसक्ते प्रपञ्चे तन्निषेधरूपारम्भणादिन्यायेन विवर्त एवात्र वाक्यार्थ इति निश्चिनोति । एवमविचारितजीवबहुत्वज्ञानं तदेकत्वज्ञाने हेतुस्तज्ज्ञानं च मुमुक्षुद्वारा ब्रह्मज्ञाने ततश्च परिपूर्णं स्वस्वरूपमित्यवगम्य स्वस्थो भवतीति प्रणाड्या परिणामादिबुद्धेरपि ब्रह्मज्ञानहेतुत्वमित्यर्थः ॥ ८६ ॥**

अ० टी०—इमं दृष्टिभेदं मुमुक्षुरुदितक्रम उपढौकत इत्युपक्रमं स्पष्टयति—**परिणाम इतीति** । प्रथमं परिणामो ब्रह्मणो जगदित्यवगत्याथानन्तरं विवर्त इत्यवगत्य तत्रापि विवर्ते बहवो मुमुक्षव इति प्रथममवगत्य पश्चादहमेव च मुमुक्षुर्न मदन्ये सन्ती-

त्यवगच्छति । पुनर्विवर्तोऽपि नास्ति नित्यशुद्धचित्स्वरूपे ब्रह्मात्मन्यज्ञानस्यासंभवादित्यपवाददृष्ट्या परिपुष्कलं परमं पदमखण्डचित्सदानन्दरूपमेवाऽऽत्मतत्त्वमित्यवगम्य निजे महिम्नि स्वरूपे निर्लुठितसामान्यविशेषे स्वप्रकाशसदानन्दघने ब्रह्मण्यवतिष्ठते ब्रह्मैव भवतीत्यर्थः ॥ ८६ ॥

**सु० टी०—ननु कथं विवर्तदृष्टेर्व्यामिश्रत्वं तस्या अनारोपरूपत्वादित्याशङ्क्य मध्यत्वमस्या उपपादयति—**

**परिणामधियो विवर्तधीरपवादात्मतया व्यवस्थिता ।**
**सकलद्वयमर्दिनीं धियं प्रति साऽऽरोपगिराऽभिधीयते ॥८७॥**
**उभय[१]व्यतिमिश्ररूपतां भजते तेन विवर्तधीरियम् ।**
**प्रथमोत्तमयोर्द्वयोः पुनर्व्यतिमिश्रीभवनं न विद्यते ॥८८॥**

परिणामधिय इति द्वाभ्याम् । **यद्यपि परिणाममपेक्ष्य विवर्तधीरपवादरूपा तन्निषेधेनाऽऽत्मनः शुद्धतासाधकत्वात्तथाऽपि सर्वद्वैतोपमर्दिनीमद्वयात्मबुद्धिं प्रति साऽप्यारोपरूपा तत्र व्यावहारिकद्वैतभानात् । अत उभयव्यामिश्रा विवर्तदृष्टिः । परिणामापवाददृष्ट्योस्त्वनेवंरूपत्वात्केवलतैवेत्याह—**प्रथमोत्तमयोरिति ॥ ८७ ॥ ८८ ॥

अ० टी०—यत्पूर्वं विवर्तदृष्टेर्व्यामिश्रदृष्टित्वमुक्तं तत्प्रपञ्चयति—**परिणामधिय इति** । विवर्तप्रतिपत्तौ वस्तुनः शुद्धत्वप्रतीत्या परिणामस्यापवादाद्विवर्तधीः परिणामधियोऽपवादतया व्यवस्थिता । सकलद्वयमर्दिनीमपवादधियमुत्तमां प्रति तामपेक्ष्येति यावत् । सा विवर्तधीरारोपगिराऽभिधीयते व्यावहारिकदृष्टिरपि परमापवाददृष्ट्यपेक्षया समारोप एवेत्यर्थः ॥ ८७ ॥

अ० टी०—अतो विवर्तदृष्टिरारोपापवादव्यामिश्रेत्युक्तमित्याह—**उभयव्यतिमिश्ररूपतामिति** । तेन पूर्वपद्योक्तेन हेतुनेत्यर्थः । परिणामापवाददृष्ट्योस्तु न केनचिद्व्यामिश्रताऽस्त्यतस्तयोः केवलतैवेत्याह—**प्रथमोत्तमयोरिति** । निमित्ताभावादित्यर्थः ॥ ८८ ॥

**सु० टी०—एवमेकत्रैवाधिकारिणि क्रमाद्दृष्टिभेद इत्युक्तं ये तु नैक-**

---

१ क. °य प्रति ।

स्मिन्नेता दृष्टयः संभवन्ति विरुद्धत्वादित्यधममध्यमोत्तमाधिकारिभेदाश्रयत्वमाश्रयन्ते तन्मतमुपन्यस्यति—

**कृपणधीः परिणाममुदीक्षते क्षपितकल्मषधीस्तु विवर्तताम् ।**
**स्थिरमतिः पुरुषः पुनरीक्षते व्यपगतद्वितयं परमं पदम्॥८९॥**

कृपणधीरिति । प्रपञ्चादविरक्तधीः स तावद्ब्रह्मपरिणाम एव प्रपञ्चोऽहं तु वस्तुतः कर्ता भोक्ता चोपासनेन ब्रह्म प्राप्स्यामीतीक्षत इत्यर्थः । यस्य तु क्षपितकल्मषा धीः स सर्वतो निर्विण्णो वेदान्तश्रवणात्प्रपञ्चस्य विवर्तरूपतामुदीक्षते । यस्तु स्थिरमतिः श्रवणादिभिर्निश्चलीकृतबुद्धिः स निरस्तद्वैतं परास्तद्वैतं परमपदमेव केवलं पश्यतीत्यर्थः । स्थितमतिरितिपाठे स्थितप्रज्ञो जीवन्मुक्त इत्यर्थः ॥ ८९ ॥

अ० टी०—पुरुषमतिभेदादेवायं दृष्टिभेदो नैकस्यैव क्रमवर्तिन्य एता दृष्टय इति मतान्तरमाह—**कृपणधीरिति** । प्रत्यक्षादिप्रमाणतत्प्रमेयेषु यथादर्शनं तत्त्वमतिः कृपणधीः पुमानिति शेषः । वस्तुविवेचनसामर्थ्यरहितधीरशुद्धान्तःकरण इत्यर्थः । तद्विपरीतः शुद्धान्तःकरणः क्षपितकल्मषधीः परिणाम इति विवर्त इति वा विक्षेपरहिततया तत्त्वेऽतिनिश्चलमतिः स्थिरमतिरिति भेदः ॥ ८९ ॥

सु० टी०—एकानेकमुमुक्षुदृष्टिभेदात्प्रागुक्तविवर्तद्वैविध्यमपि पुरुषभेदव्यवस्थितमेव ते वदन्तीत्याह—

**पुरुषभेदवशाद्द्विविधा भवे-**
**त्क्षपितकल्मषधीरपि मध्यमा ।**
**जगदनेकमुमुक्षुकमीक्षते**
**पुरुष एकतरो न तथेतरः ॥ ९० ॥**

पुरुषभेदेति ॥ ९० ॥

अ० टी०—यत्पुनर्मध्ये विवर्तद्वैविध्यमुक्तं तदपि पुरुषभेदादेवेत्याह—**पुरुषभेदवशादिति** । एकतरः, द्वयोरेकः । अनेकमुमुक्षुकमेवेत्यर्थः ॥ ९० ॥

सु० टी०—तत्पक्षं प्रतिक्षिपति—

**इति तु केचिदुशन्ति महाधिय-**
**स्तदपि संभवतीति न दुष्यति ।**

इह तु सूत्रकृताऽथ गिरोदितः
पुरुष एकविधस्त्रिविधो न तु ॥ ९१ ॥

इति त्विति । तदपि न संभवतीत्यतो दुष्यतीत्यन्वयः । महाधिय इत्युपहासः । तद्बीजं तु भिन्नाश्रयाणां दृष्टीनां परस्परानुपयोगित्वाद्वृथा तदाश्रयणमिति सूत्रकारासंमतश्च स पक्ष इत्याह—इह त्विति ॥ ९१ ॥

अ० टी०—उक्तं मतान्तरमङ्गी करोति—इति तु केचिदिति । तदपि संभाव्यते । एतादृशा अप्यधिकारिणो मतिविशुद्धितारतम्यदशापन्ना इत्यर्थः । अत्राथशब्दसूचितोऽस्त्वेकविध एवाधिकारीति तस्य क्रमभाविन्य एता दृष्टय इत्यस्मन्मतमित्याह—इह त्विति । एतदुक्तं भवति–शास्त्रं ह्येतन्न नानाधिकारिकं काम्यकर्मकाण्डवदुपपद्यते परमपुरुषार्थमोक्षफलब्रह्मात्मैक्यप्रतिपत्तिमात्रार्थत्वेनास्याऽऽरम्भात् । न च परिणामविवर्तदृष्ट्योरन्यतरनिष्ठस्य साक्षात्तत्त्वप्रतिपत्तिरस्ति । अतो न तमासाद्य शास्त्रं चरितार्थं भवेत् । यद्यप्यपवाददृष्टिनिष्ठस्य तत्त्वप्रतिपत्तिः संभवति तथाऽपि तस्य सा दृष्टिरारोपविषयसिद्धिसापेक्षत्वादध्यारोपदृष्टिमपेक्षत इति प्रथमत एव न भवति ततश्च शास्त्रं तन्मिथो भिन्नानधिकारिणः, अपेक्ष्य न प्रवर्तितुमर्हतीत्येकविध एवात्राथशब्दसूचितोऽधिकारी ज्ञेयः । मतान्तराभ्युपगमस्त्वेवंविधा अपि लोके सन्तीत्येतावन्मात्राभिप्रायेणैव न पुनः शास्त्रसंमतत्वेनात एव तदपि संभवतीत्यपिशब्दप्रयोग इति ॥ ९१ ॥

सु० टी०—कुत एवमिति चेत्तत्राऽऽह—

तिसृषु भूमिषु तस्य च तिष्ठतः
क्रमवशात्स्वयमुत्तमभूमिका ।
समुपसर्पति तत्र च तिष्ठतः
समुपशाम्यति कारणकार्यधीः ॥ ९२ ॥

तिसृष्विति । परिणामादिदृष्टिक्रमेण प्रवृत्तस्य तस्य पूर्वदृष्ट्योः परिपाके सति स्वयमनायासेनैव परिपूर्णदृष्टिः समुपसर्पति । ततश्च कार्यकारणादिसर्वद्वैतधीः शाम्यतीति तमेवैकमधिकारिणमाश्रित्य प्रवृत्तं शास्त्रम् । अन्यथा हि सृष्टिवाक्यसमन्वयेन ब्रह्मण्यप्रसक्ते प्रपञ्चे कस्य विवर्तत्वं युक्तिभिः साध्यं किं वा नेतीत्यादिभिः प्रतिषेध्यं तद्विना च कथं शुद्धात्मप्रतिपादकपदेयत्ता निरूप्या तां विना च कथं संपद्याविर्भाव इत्यादि मुक्तिनिरूपणमिति भावः ॥ ९२ ॥

अ० टी०—तदेवमेकस्यैव क्रमवर्त्यनेकदृष्ट्याऽवस्थाप्राप्त्या तादृशदृष्टिक्रमावलम्बिशास्त्रस्य सामस्त्येन श्रवणेन कृतार्थत्वोपपत्तेः स एवेह मुख्याधिकारीत्यभिप्रेत्याऽऽह—**तिसृष्विति** । क्रमवशात्क्रमेणेति यावत् क्रमवशात्तिसृषु तिष्ठत इति संबन्धः । उत्तमभूमिका वाक्यार्थनिष्ठा सा स्वयमेवानायासेन समुपसर्पत्युपगच्छति पदार्थमतिदार्ढ्ये सति वाक्यार्थमतेरयत्नग्राह्यत्वादित्यर्थः । कारणकार्यधीः प्रपञ्चविषया बुद्धिः सम्यगुपशाम्यति तदा निवृत्तसर्वसंसारबन्धो भवतीत्यर्थः ॥ ९२ ॥

**सु० टी०—अस्मिन्नर्थे हेत्वन्तरमप्याह—**

**श्रुतिवचांसि मुनिस्मरणानि च**
**द्वयविशारदगीरपि सर्वशः ।**
**अयमपेक्ष्य दशात्रितयं विना**
**न हि घटामुपयाति कदाचन ॥ ९३ ॥**

श्रुतिवचांसीति । **सृष्टितत्प्रतिषेधविषयाणीत्यर्थः । मुनिस्मरणानि सूत्रादिरूपाणि । द्वयविशारदा भाष्यकारादयस्तेषां वचनानि चैकस्मिंस्तत्तद्दृष्ट्यवस्थात्रयमपेक्ष्य घटते न तेन विना परस्परानुरोधित्वादित्यर्थः ॥ ९३ ॥**

अ० टी०—एवं दृष्टिभेदाश्रयणेनेदं शास्त्रं प्रवृत्तमिति कुतोऽवसितं भवतेति वीक्षायामाह—**श्रुतिवचांसीति** । सृष्टिवाचारम्भणैतदात्म्यतत्त्वमित्यादिवाक्यानि श्रुतिवचांसि ' स्याल्लोकवत् ' [ ब्र० सू० २ । १ । १३ ] ' तदनन्यत्वम् ' [ ब्र० सू० २ । १ । १४ ] इत्यादीनि सूत्राणि मुनिस्मरणानि द्वयविशारदः श्रुतिसूत्रोक्तार्थाविष्करणनिपुणो भाष्यकारतस्य गीर्भाष्यवचनजातमेतत्सर्वमप्यालोकयेत्यर्थं व्यवस्थाप्यते मयेति योज्यम् । श्रुत्यादिवचांस्यप्येतद्दृष्टित्रयमपेक्ष्य प्रवृत्तानीति कुतः प्रमाणान्निश्चय इत्यत आह—**त्रयमपेक्ष्येति** । उक्तदृष्टित्रयमपेक्ष्योक्तदशात्रितयं विना परस्परानुरोधेनोपकार्योपकारकावस्थासंपादनं विना घटां घटनामेकपुरुषार्थपर्यवसिततया सामञ्जस्यं न ह्युपयान्ति कदाचन श्रुतिवचनादीनीति योजना । दृष्टित्रयनिबन्धनमधिकारिदशात्रयं विना श्रुत्यादिवचनानुपूर्व्याः सामञ्जस्यं न लभ्यते तदपेक्षायां लभ्यत इत्यन्वयव्यतिरेकाभ्यामयमर्थो निश्चेतव्य इत्यर्थः ॥ ९३ ॥

**सु० टी०—तस्माद्विवक्षितार्थोपयोगित्वेन ' स्याल्लोकवत् ' [ ब्र० सू० २ । १ । १३ ] इति परिणामवादमाश्रित्य सिद्धान्तसिद्धेः पुरस्ता-**

त्पूर्वं प्रत्यक्षादेस्तात्त्विकज्ञानोत्पादनशक्तिमनपोह्यैवोक्तस्य समन्वयस्य प्रत्यक्षादिविरोधः परिहृतो न सिद्धान्ततयेत्याह—

अतोऽनपोह्यैव[1] च तत्त्वसंवि-
दुत्पादनेऽध्यक्षमतेः[2] पुरस्तात् ।
सामर्थ्यमक्षादिविरोधमस्य
निवारयामास समन्वयस्य ॥ ९४ ॥

अत इति ॥ ९४ ॥

अ० टी०—एवमुक्तप्रकारेण विवक्षितार्थोपयोगात्प्रथमं 'स्याल्लोकवत्' इति परिणामवादमवलम्ब्य विरोधपरिहारः कृतो न तु सिद्धान्ततयेति सिद्धमुपसंहरति—**अतोऽनपोह्यैवेति** । यत एवं परिणामवादस्याप्यत्रोपकारिताऽतो हेतोरध्यक्षमतेस्तत्त्वसंविदुत्पादने सामर्थ्यमनपोह्यानिराकृत्यैव पुरस्तात्प्रथममस्य समन्वयस्याक्षादिविरोधं प्रत्यक्षादिप्रमाणविरोधं निवारयामास सूत्रकृदिति योजना ॥ ९४ ॥

**सु० टी०—ततश्च तदनन्यत्वमित्यत्राऽऽरम्भणादिशब्दसामर्थ्यात्प्रत्यक्षादेरभ्युपगतमपि तत्त्वावेदकत्वं विकारमृषात्वकथनेन कारणसत्यत्वप्रदर्शनेन चाद्वयसमन्वयविरोधापनयार्थं निरस्यन्विवर्तमेव सिद्धान्तयतीत्याह—**

इहाधुनाऽऽरम्भणशब्दशक्तिं
संश्रित्य तत्त्वावगतिक्षमत्वम् ।
अक्षादिमानस्य निराकरोति
समन्वयस्यापनयन्विरोधम् ॥ ९५ ॥

इहेति । **अपनयन्निति हेतौ शतृ(ता)** ॥ ९५ ॥

अ० टी०—पश्चादारम्भणाधिकरणे साक्षात्सिद्धान्तं विवर्तवादमाश्रित्य प्रत्यक्षादेश्च व्यावहारिकप्रामाण्याश्रयणेन यथासिद्धव्यवहारव्यवस्थानिरूपणेन विरोधपरिहारं चकारेत्याह—**इहाधुनेति** । इह शास्त्रेऽधुनाऽखण्डवाक्यार्थानुकूलतया विरोधपरिहारान्तरस्य वक्तव्यत्वप्राप्तावारम्भणशब्दशक्तिं संश्रित्याक्षादिमानस्य तत्त्वावगतिक्षमत्वं निराकरोति सूत्रकारः समन्वयस्य विरोधं सम्यगपनयन्निति योजना ॥ ९५ ॥

---

१ ग. °पोह्यैव । २ ग. क्षमितेः ।

सु० टी०—ननु परिणामाश्रयणेऽपि विरोधपरिहारश्चेत्किं विवर्ताग्रहेणेति चेत्सत्यं तेन सर्वस्य ब्रह्माभिन्नतया सप्रपञ्चाद्वैतसमन्वयविरोधपरिहारेऽपि स्वाभिमताखण्डैकरससमन्वयविरोधस्तदवस्थ इत्याह—

अखण्डवाक्यार्थमनुव्रजन्ती
समन्वयोत्थापितबुद्धिवृत्तिः ।
अक्षादिभिस्तत्त्वनिवेदने हि
सद्यः परिम्लायति निर्विशङ्कम् ॥ ९६ ॥

अखण्डेति । निरस्तसमस्तशङ्कमखण्डवाक्यार्थमनुव्रजन्ती विषयीकुर्वती परिम्लायति बाध्यत इत्यर्थः ॥ ९६ ॥

अ० टी०—ननु परिणामवादाश्रयणेन विरोधः परिहृतश्चेत्किं विवर्तवादमाश्रित्य परिहारान्तरकरणेनेति चेदस्यैवाखण्डवाक्यस्यार्थसमन्वयसाधकत्वात्पूर्वस्य तदभावादित्यभिप्रेत्याऽऽह—**अखण्डवाक्यार्थमिति** । अक्षरार्थस्त्वतिरोहितः । अद्वितीयसन्मात्रे वेदान्तसमन्वयस्य विरोधः पूर्वं परिहृतो यद्यपि तथाऽखण्डैकरसे तु समन्वयविरोधस्तदवस्थः कार्यकारणाभेदेनाद्वयत्वसिद्धावप्यखण्डैकरसस्यासिद्धेरतस्तत्परिहाराय विवर्तवाद आश्रयणीय इति भावः ॥ ९६ ॥

सु० टी०—अस्तु तर्हि सविशेष एवाद्वये समन्वयः शास्त्रार्थ इति चेन्न विशेषस्य वाचारम्भणमिति 'अपागादग्नेरग्नित्वं [ छा० ६ । ४ । १ ] नेह नाना' [ बृ० ४ । ४ । १९ ] इत्यादिभिर्निषिध्यमानस्य श्रुतितात्पर्यगोचरत्वादित्याह—

अखण्डमेवाद्वयमात्मतत्त्वं
त्रयीशिरोवाङ्मयमयं प्रविष्टाः ।
वदन्ति शब्दा इति शब्दशक्ति-
निरूपणे पूर्वमुदीरितं हि ॥ ९७ ॥

अखण्डमेवेति । तत्त्वमादिवाक्यैकवाक्यभूताः सत्यादिशब्दा अखण्डं निर्विशेषमेवाऽऽत्मतत्त्वं वदन्तीति प्रथमे निरूपितमित्यर्थः ॥ ९७ ॥

अ० टी०—तर्ह्यखण्डैकरसे समन्वयो मा भूदद्वैतमात्रं तावत्सिद्धमेव श्रौतमिति चेन्नैवं समन्वयसूत्रादिना समन्वयस्याखण्डैकरसे साधितत्वादित्याह—**अखण्डमिति** ।

भेदसंसर्गरहिततया वस्तुमात्रमेवाद्वयमसंसृष्टाद्यात्मकमित्यर्थः । सुगममन्यत् ॥ ९७ ॥

सु० टी०—ततः किमित्यत आह—

अतो विरोधस्य निरासासिद्ध्यै
निरस्यतेऽक्षादिषु तत्त्वभागः ।
संरक्ष्यते संव्यवहारशक्ति-
भागः पुनः सर्वमतोऽनवद्यम् ॥ ९८ ॥

अत इति । अखण्डसमन्वयविरोधस्यापनुत्त्यै प्रत्यक्षादिषु तत्त्वावेदकत्वभागो निरस्यत इत्यर्थः । तर्हि तेषामप्रामाण्यमिति नेत्याह—संरक्ष्यत इति । न तेषां व्यावहारिकप्रामाण्यं निषिध्यत इत्यर्थः । एवं चाखण्डसमन्वयो भेदव्यवहारानपलापश्च सिद्ध इत्याह—सर्वमिति ॥९८॥

अ० टी०-अतो विवर्तवादाश्रयणेनाऽऽरम्भणाधिकरणप्रवृत्तिर्युक्तैवेत्याह—अत इति । निरस्यत आरम्भणाधिकरण इति शेषः ॥ ९८ ॥

सु० टी०—विवर्ते व्यावहारिकत्वमपि कुतः स्यात्स्वप्नादिवद्भ्रान्तिमात्रत्वादिति चेन्नेत्याह—

चितिवस्तुनः स्वमहिमस्फुरणे
स्वयमेव कारणमिति प्रगतम् ।
प्रतिबध्य तच्चितिगताग्रहणं
विपरीतबुद्धिमुपढौकयति ॥ ९९ ॥

चितीति । चिद्वस्तुनो हि स्वमहिम्नोऽद्वयानन्दरूपतत्त्वस्य स्फुरणे स्वयमेवाऽऽत्मोपचारात् कारणमिति स्वप्रकाशत्वश्रुत्या प्रज्ञातं तच्च स्फुरणं प्रतिबध्य प्रत्यगज्ञानदोषो विपरीतबुद्धिं[1]मुपहरति । तद्दोषजन्यत्वेन च प्रत्यक्षादेर्भ्रान्तित्वं सिध्यत्स्वहेत्वनुसारित्वाद्वस्तुतत्त्वापेक्षमेव भवति न व्यावहारिकापेक्षमित्यर्थः ॥ ९९ ॥

अ० टी०—यदि प्रत्यक्षादीनां तत्त्वावेदकत्वं न स्यात्तर्हि व्यावहारिकं प्रामाण्यमपि न स्यात्तत्त्वानावेदकेषु शुक्तिरजतादिज्ञानेषु प्रामाण्यलेशस्याप्यदर्शनादिति चेन्नेत्याह—

१ ख. ग. °द्धिमप° ।

**चितिवस्तुन इति** । चितिवस्तु प्रत्यगात्मस्वरूपं तस्य स्वमहिमा स्वयाथात्म्यं स्वरूपमिति यावत्तस्य स्फुरणे प्रकाशे स्वयं स्वरूपमेव कारणं न कारणान्तरापेक्षा स्वप्रकाशत्वादिति प्रगतं प्रकर्षेणावगतं श्रुतिस्मृतिपुराणन्यायैरित्यर्थः । अत्र ' स्वयंदासास्तपस्विनः ' इतिवत्स्वयमेव कारणमित्यन्यव्यावृत्तिपरं वचनं न स्वकारणत्वविधिपरमिति द्रष्टव्यम् । चितिगताग्रहणं तु चिन्मात्राश्रयविषयमज्ञानम् । तच्चितिवस्तु प्रतिबध्य यथावत्स्फुरणमाच्छाद्य तस्मिन्विपरीतबुद्धिं संसारित्वपरिच्छिन्नत्वादिविच्छेदरूपामुल्लासयति स्फुरत एव चिदात्मनो याथातथ्येन स्फुरणमावृत्य तद्गताविद्या तस्मिन्विपरीताकारतामाभासयतीति वेदान्तप्रक्रियास्थितिरित्यर्थः । एतदिह विवक्षितं प्रत्यगज्ञानजन्यं हि सर्वं प्रत्यक्षादिप्रमाणं तत्प्रमेयजातं च । तथा च प्रत्यक्षादेरविद्यादोषजन्यत्वात्स्वविषयतत्त्वस्यानवभासकत्वात्तद्विपर्ययेण वाचारम्भणप्रपञ्चाकारावभासकत्वाच्च चिदात्मतत्त्वज्ञानापेक्षया शुक्तिरजतादिज्ञानवद्भ्रान्तित्वेऽपि व्यवहारसमर्थस्वविषयावभासकत्वस्यानुभवसिद्धत्वान्न व्यावहारिकांशेऽपि तस्य भ्रान्तितेति ॥ ९९ ॥

**सु० टी०—कुत एवमिति चेत्तत्राऽऽह—**

**व्यवहारनिर्वहणशक्तिमसौ**
**न चिदग्रहोऽस्य विनिवारयति ।**
**परमार्थवेदनविधिक्षमता-**
**मवखण्डयन्नपि मनःप्रभृतेः ॥ १०० ॥**

व्यवहारेति । **असावज्ञानदोषः प्रत्यक्तत्त्वावेदनविरोधित्वेन क्लृप्तः स्वकार्यस्यापि मनआदेस्तत्त्वावेदनशक्तिमेव खण्डयति कारणस्य कार्ये स्वधर्मसंक्रामकत्वान्न तु तस्य व्यवहारजननशक्तिमव्यवहार्ये ब्रह्मणि व्यवहार्यविपरीतरूपदर्शनस्यैव तद्दोषकार्यत्वात्तत्खण्डने स्वरूपस्यैवानिर्वाहाद्यथा व्यवहार्यशुक्तिगतो दोषोऽव्यवहार्यमिथ्यारजतप्रदर्शक इत्यर्थः ॥ १०० ॥**

अ० टी०—ननु प्रत्यगज्ञानस्य चेत्तत्त्वावभासं प्रति दोषत्वं तर्हि स्वकार्ये मनआदावपि तद्दोषमासञ्जयेदन्यथा तस्य तत्त्वावेदकत्वप्रसङ्गादतः कारणदोषदूषितत्वात्तस्य व्यावहारिकमपि प्रामाण्यं न सिध्येदित्याशङ्क्यां परिहरन्प्रत्यक्षादौ स्वकार्ये नाज्ञानस्य दोषतेत्येतदाह—**व्यवहारेति** । अस्य मनःप्रभृतेर्व्यावहारिकप्रमाणस्यासौ चिदग्रहः

१ ग. °नुबन्धः ।

प्रत्यगज्ञानं परमार्थवेदनविविक्षमतामवखण्डयन्नपि तत्त्ववेदनजननसामर्थ्यं निरुन्धन्नपि व्यवहारनिर्वहणशक्तिं न निवारयतीति योजना । अज्ञानस्य स्वाश्रयापेक्षया दोषत्वेऽपि न स्वकार्यापेक्षया दोषत्वं प्रत्युत गुणत्वमेव यथा काचादेर्नेत्राद्यपेक्षया दोषत्वं स्वहेतुभूतपापानुमाने गुणत्वमतो न प्रत्यक्षादेर्व्यावहारिकांशे दोषजन्यतेति न तत्र प्रामाण्यहानिरिति भावः ॥ १०० ॥

सु० टी०—तर्हि महावाक्यस्यापि मनआदिवत्प्रत्यगज्ञानदोषजत्वान्न तत्त्वावेदकत्वं स्यादिति चेन्न विरोधाभावादित्याह—

चितिवस्तुबुद्धिजनकस्य पुन-
र्वचसो न खण्डयति शक्तिमसौ ।
स्वनिबन्धनस्फुरणमेव चितेः
प्रतिबध्य तिष्ठति न वाचनिकम् ॥ १०१ ॥

चितीति । क्वचिद्धि क्वश्चिद्दोषो भवति हि यथा दूरदोषश्चाक्षुषपुरुषज्ञानस्य प्रतिबन्धको न शाब्दस्यैवं चिद्ग्रहोऽपि प्रतीचः स्वाधीनस्फुरणस्यैव प्रतिबन्धकस्तथैव तत्कल्पनान्न तु महावाक्यप्रमाणकस्येत्यर्थः । ॥ १०१ ॥

अ० टी०—एवं तर्हि वेदान्तानामपि तत्त्वावेदकत्वं न स्यात्तेषामपि कारणदोषदूषितत्वादिति चेत्तत्राऽऽह—**चितिवस्त्विति** । असौ चिद्ग्रहः कस्मान्न खण्डयतीत्यत आह—**स्वनिबन्धनेति** । चैतन्यस्य स्वतःप्राप्तप्रकाशमेव प्रतिबध्नाति वाचनिकं वेदान्तवाक्यजन्यं तु स्फुरणं न बध्नाति तस्य तत्त्वावेदनशक्तिं न खण्डयतीत्यक्षरार्थः । अज्ञानस्य स्वप्रकाशस्फुरणं प्रत्येव दोषत्वं नाऽऽगन्तुकप्रमां प्रति दोषत्वम् । एवमपि स्वकार्ये प्रत्यक्षादावेव कारणज्ञानं स्वदोषमासञ्जयति न वेदान्तेषु तेषामज्ञानकार्यगोचरत्वाभावादिति तात्पर्यार्थः ॥ १०१ ॥

सु० टी०—द्वयोरज्ञानकार्यत्वाविशेषेऽज्ञानदोषानुषङ्गश्चक्षुरादावेव न वेदान्तेष्वित्येतत्कुत इति चेत्तत्राऽऽह—

प्रत्यक्षादेरेष दोषस्ततोऽयं
वेदान्तानां नैव दोषानु[१]षङ्गः ।

---

१ ग. नुबन्धः° ।

सत्यं वस्तु च्छादयन्नद्वितीयं
द्वैतं यस्मादानयत्येष दोषः ॥ १०२ ॥

प्रत्यक्षादेरिति । **सत्यावरणेनासत्यवेदकत्वमस्य दोषत्वं तच्चक्षुरादौ दृश्यते न वेदान्त इति न तत्रायं दोषः कार्योन्नेयधर्माणां यथाकार्यमुन्नयनादित्यर्थः । संविन्निष्ठाज्ञानप्राधान्येन चक्षुरादिविवर्तः संवित्प्राधान्येन तु वेदविवर्त इत्यन्ये ॥ १०२ ॥**

अ० टी०—कारणदोषानुबन्धश्चक्षुरादिष्विव न वेदान्तेष्विति कुत एतदित्यत आह—**प्रत्यक्षादेरिति** । पूर्वार्धेनोक्तप्रतिज्ञायां हेतुमुत्तरार्धेनाऽऽह—**सत्यं वस्त्विति** । द्वैतस्य दोषजन्यत्वात्तद्विषयकप्रत्यक्षादेर्वस्तुतत्त्वावरणविपरीतकारित्वदर्शनात्तस्यैव कारणदोषानुविद्धता वेदान्तानां न तत्त्वावेदकत्वदर्शनान्न तेषां कारणदोषानुवेध इत्यर्थः । अयं भावः—प्रत्यक्संविदवच्छिन्नं ह्यज्ञानं प्रमाणाकारेण विवर्तते तत्राज्ञानदोषप्राधान्येन चक्षुरादिविवर्तः संवित्प्राधान्येन वेदाविवर्त इति स्थितेर्युक्तोऽयं विशेष इति ॥ १०२ ॥

**सु० टी०—एवमतत्त्वावेदकत्वेन प्रत्यक्षादीनां प्रत्यङ्मात्रविषयवेदान्तेष्वबाधकत्वं प्रसाध्य संप्रति भिन्नविषयत्वेनाप्याह—**

किं च प्रतीचि सकलोपनिषत्प्रवृत्ता
मानान्तरं सकलमेव तु तत्पराचि ।
प्रत्यक्पराग्विषयगोचरयोस्तु बुद्ध्योः
स्पर्धा न संभवति मेयविभागसिद्धेः ॥ १०३ ॥

किं चेति । **स्पर्धा विरोधः । तत्र हेतुमाह—मेयेति ॥ १०३ ॥**

अ० टी०— तदेवं प्रत्यक्षादेस्तत्त्वावेदकत्वाभावान्न तेन तत्त्वावेदकानां वेदान्तानां विरोध इति प्रतिपाद्यविषयभेदेनापि विरोधं परिहरति—**किंच प्रतीचि सकलेति** । प्रत्यक्पराग्रूपयोर्मिथो विरुद्धसंस्थानयोरर्थयोरवभासकत्वेन भिन्नविषयत्वाद्रवाश्वविषययोरिव ज्ञानयोर्न बाध्यबाधकभावो वेदान्तानां प्रत्यक्षादीनां चेत्यर्थः । अक्षरयोजना सुगमा ॥ १०३ ॥

**सु० टी०—किंच किं प्रत्यक्षादेर्भेदविषयत्वं यदद्वैतसमन्वयविरोधि स्यात्स्वरूपमात्रविषयत्वं वा घटाद्भिन्न इति बोधकत्वं वाऽऽद्ये न तद्भेदमानमित्याह—**

अभिन्न एवैष पटः समीक्ष्यते
न भेदगन्धोऽपि पटे समीक्ष्यते ।

---

१ क. °योग्यबु° ।

पटेऽपि भेदो यदि कल्प्यते तदा
पटो विदीर्येत कुतस्तदा पटः ॥ १०४ ॥

अभिन्न इति । अयं पट इत्यनुभवे भेदाभावोपलक्षितस्वरूप एव सोऽनुभूयते न तु तत्र भेदलेशोऽप्युल्लिख्यत इत्यर्थः । द्वितीये त्वाह—पटेऽपीति । पटस्वरूपे गृह्यमाणेऽपि घटाद्भेदो गृह्यते चेत् स किं पट एव तदन्यो वाऽऽद्ये दोषमाह—पटो विदीर्येत घटादिसापेक्षस्य तस्य निरपेक्षपटस्वरूपत्वं व्याहन्येत । यद्वा घटापेक्षं भेदत्वं प्राप्य स विदीर्णः स्याद्भेदस्य विदारणात्मकत्वात् । तस्य चाभावात्मकत्वात्कुतस्तदा भावरूपः पटोऽपि स्यादित्यर्थः ॥ ४ ॥

अ० टी०—इतोऽपि नानयोर्विरोधो भेदप्रत्ययस्य युक्तिबाधितत्वेन मिथ्यात्वप्रसिद्धेरित्याह—**अभिन्नेति** । समीक्ष्यमाणे पटे यदि भेदस्तदेदं वक्तव्यं स्वस्मादेव पटस्य भेदोऽन्यस्माद्वेति तत्राऽऽद्ये दोषमाह—**पटेऽपि भेदो यदीति** । स्वस्माद्भेदे हि विशकलीभावः पटस्य स्यात्तदा तस्य पटत्वहानिः सकलस्यापि स्वतो भेदाभावात्तस्यापि स्वतो भेदे स्वरूपहानेरेवं तच्छकलेष्वपि तथात्वान्निःस्वरूप एव पटः स्यादित्यर्थः ॥ १०४ ॥

सु० टी०—तदन्यो वेत्येवं दूषयति—

घटात्पटो भिन्न इतीष्यते यदि
स्फुटं प्रसज्येत विकल्पिता भिदा ।
न सत्यमापेक्षिकमीक्षितं क्वचि-
त्तथा च यत्नेन [1]निवेदयिष्यते ॥ १०५ ॥

घटादिति । घटाद्भिन्न इति तत्र गृह्यते भेदः स च पटभिन्न इत्येवं चेन्नूनं भेदः कल्पित एव स्यादित्यर्थः । कुत इति चेत्तत्राऽऽह—न सत्यमिति । यत्सापेक्षं तदसत्यं दृष्टं यथा मणौ लौहित्यं तथा यत्सत्यं न तत्सापेक्षं यथाऽऽत्मा । एतच्च तृतीये स्पष्टं वक्ष्यत इत्याह—तथा चेति ॥ ५ ॥

अ० टी०—द्वितीयपक्षमप्यनूद्य दोषमाह—**घटादिति** । विकल्पिता मिथ्याभूता भिदा प्रसज्येतान्यापेक्षत्वादित्यर्थः । अन्यापेक्षनिरूपणस्वभावत्वेऽपि भेदस्य कथं मिथ्या-

---

१ म. निरूपयि° ।

त्वमित्यत आह—**न सत्यमिति** । यदापेक्षिकमन्यापेक्षस्वभावं तत्क्वचिदपि न सत्य-मीक्षितं यदापेक्षिकं तदसत्यमेव दृष्टं यथाऽलक्तकाद्यपेक्षं स्फटिकलौहित्यमित्यर्थः । यथा सापेक्षस्वभावकं क्वचिदपि न सत्यं तथा यत्नेन निवेदयिष्यते तृतीयेऽध्याये पदार्थशोध-नावसरे प्रतिपादयिष्यत इत्यर्थः । तस्माद्भेदो न सत्योऽन्यसापेक्षस्वभावत्वात्स्फटिकलौ-हित्यादिवदित्युक्तं भवति ॥ १०५ ॥

**सु० टी०—किं च भेदबुद्धिरपि दुर्निरूपत्वादप्रामाणिकेत्याह—**

**न भेदबुद्धिर्घटते प्रमाणतो**
**विनाऽपि धर्मिप्रतियोगिसंविदा ।**
**न भेदबुद्धिं विरहय्य कल्पते**
**तथैव धर्मिप्रतियोगिधीरपि ॥ १०६ ॥**

न भेदेति । **भेदो हि घटाद्भिन्नः पट इति धर्म्याश्रयत्वात्प्रतियोग्यवधि-कत्वाच्च । न तदुभयज्ञानं विना मानेन बोधयितुं शक्यते । न च भेद-बोधं विना तदुभयमानमित्यन्योन्यापेक्षत्वमित्यर्थः। तथा हि घटाद्भेदज्ञानं तस्यावधित्वज्ञानं विना तच्च घटस्य न पटभिन्नत्वज्ञानं विनाऽन्यथा पटस्य स्वस्मादपि भेदमानापत्तेरेवं धर्मित्वस्यापि भेदघटितत्वात्तन्निरूप्य-त्वमिति भावः ॥ १०६ ॥**

अ० टी०—इतोऽपि न प्रामाणिको भेद इत्याह—**न भेदबुद्धिरिति** । धर्मिप्रति-योगिसंविदा विना प्रमाणतो भेदबुद्धिर्न घटते कस्य कुतो (त) इति तस्या धर्म्यादिबु-द्ध्यपेक्षत्वात्तथैव धर्मिप्रतियोगिधीरपि न भेदबुद्धिं विरहय्य कल्पत एकस्यैकदैकं प्रति धर्मिप्रतियोगित्वायोगात् । तथा च सिद्धे भेदे धर्मिप्रतियोगिसिद्धिरितीतरेतराश्रयापत्तेर्न भेदः प्रामाणिक इत्यर्थः ॥ १०६ ॥

**सु० टी०—अस्तु तर्हि वैधर्म्यधीरेव भेदधीरिति चेन्नोक्तदोषादे-वेत्याह—**

**परस्पराभावधिया न भेदधी-**
**र्विनोपपन्ना न तया विनेतरा ।**
**इतीदमन्योन्यसमाश्रयं यतो**
**मतिद्वयं तेन तदस्तु कल्पितम् ॥ १०७ ॥**

परस्परेति । **वैधर्म्यं हि विरुद्धो धर्मः । स चाऽऽश्रयभेदज्ञाननिरूप्यः ।**

**आश्रयभेदधीरपि न वैधर्म्यज्ञानं विना । साधर्म्यग्रहाद्धि शुक्तिरजतयो-र्भेदाग्रहेणाभेदभ्रमो वैधर्म्यज्ञानाच्च तन्निवृत्तिरिति सर्वसिद्धमतश्चान्यो-न्याश्रयाद्भेदधीमात्रं भ्रान्तिरित्यर्थः ॥ १०७ ॥**

अ० टी०—अन्योन्याश्रयान्तरमाह—**परस्पराभावेति** । पूर्वं धर्म्यादिबुद्धेर्भेदबुद्धेश्चा-न्योन्याश्रयतोक्ताऽत्र तु धर्मिप्रतियोगिनोस्तादात्म्याभावबुद्धेर्भेदबुद्धेश्चान्योन्याश्रयतोच्यत इति विवेकः । सुयोज्यान्यक्षराणि ॥ १०७ ॥

**सु० टी०—किं च जडार्थविषयप्रत्यक्षादेर्मानफलाभावेनाप्रमाणत्वा-दपि न बाधकत्वमित्याह—**

**असन्निवृत्तिर्न च सन्निवृत्ति-**
**र्न चोपपन्ना सदसन्निवृत्तिः ।**
**जडप्रमाणस्य फलं ततोऽपि**
**न तेन वेदान्तजबुद्धिबाधः ॥ १०८ ॥**

असदिति । **किं संशयादिनिवृत्तिर्मानस्य फलमुत प्रमोत्पत्तिर्नाऽऽद्यो निवर्त्यं ह्यसद्वा सद्वा सदसद्वा त्रितयस्यापि निवृत्त्यसंभवस्योक्तत्वादि-त्यर्थः॥ १०८ ॥**

अ० टी०—जडे भेदप्रपञ्चे प्रमाणयोग्यताभावान्न तद्विषया धीः प्रमेत्युक्तमिदानीं तत्र प्रमाणफलाभावाच्च न तद्धीः प्रमा किं तु भ्रान्तिरेवेत्याह—**असन्निवृत्तिरिति** । कस्य-चिन्निवृत्तिरुत्पत्तिर्वा सर्वत्र मानफलं वाच्यम् । तत्र निवृत्तिपक्षे किमसन्निवृत्तिः प्रमाणफलं सन्निवृत्तिर्वा सदसन्निवृत्तिर्वा सर्वथाऽपि न संभवतीति क्रमेणाऽऽह—**असन्निवृत्तिरि-त्याद्येनार्धेन** । असतो नित्यनिवृत्तिरूपत्वात्तस्य प्रमाणसाध्यत्वाभावात्सतो ज्ञाननिवर्त्यत्वा संभवादत एव सदसन्निवृत्त्ययोगः सदसदात्मकवस्तुनोऽभावाच्च तन्निवृत्त्यसंभव इत्यर्थः॥१०८॥

**सु० टी०—द्वितीयेऽप्येते विकल्पा अपरिहार्या इत्याह—**

**असत्प्रसूतिर्न च सत्प्रसूति-**
**र्न चोपपन्ना सदसत्प्रसूतिः ।**
**जडप्रमाणस्य फलं ततोऽपि**
**न तेन वेदान्तजबुद्धिबाधः ॥ १०९ ॥**

असत्प्रसूतिरिति । **असतः शशशृङ्गादेः सत आत्मनः प्रसूत्यसंभवादित-रस्य चासंभावितत्वादित्यर्थः ॥ १०९ ॥**

अ० टी०—विषयगतकिंचिन्निवृत्तिः प्रमाणफलमिति पक्षं निरस्योत्पत्तिपक्षमपि ततो निराकरोति—**असत्प्रसूतिरिति** । यतो विचार्यमाणे जडे प्रमाणफलत्वाभावस्ततोऽपि हेतोस्तेन प्रत्यक्षादिना न वेदान्तजबुद्धिबाध इति फलितमाह—**ततोऽपीति** ॥ १०९ ॥

**सु० टी०—नापि जडार्थसंविदुत्पत्तिरेव फलं विकल्पासहत्वादित्याह—**

**जडार्थसंविन्न हि कुर्वतः फलं**
**तदा हि कुर्वत्त्वमपीदृशं भवेत् ।**
**अकुर्वतस्तत्फलमित्युदीरय-**
**न्विहस्यते दुर्मतिरर्भकैरपि ॥ ११० ॥**

जडार्थेति । **सा किं तदनुकूलव्यापारवतः फलमुदासीनस्य वाऽऽद्ये व्यापारस्यापि कार्यत्वेन कुर्वत्फलत्वं स्यादेवं तस्य तस्यापीत्यनवस्था । निर्व्यापारात्फलोत्पत्तेरदर्शनात् । तच्च वदतो हास्यत्वमित्याह**—अकुर्वत इति ॥ ११० ॥

अ० टी०—यथा सदादिविकल्पासहत्वात्कस्यचिदुत्पत्तिर्निवृत्तिर्वा मानफलत्वं न संभवति तथा जडे मानस्य कुर्वत्त्वविकल्पानुपपत्त्याऽपि तत्र संविदुत्पत्तेर्मानफलत्वासंभवमाह—**जडार्थसंविन्न हीति** । कुर्वत्त्वं नाम व्याप्रियमाणत्वं तत्र कुर्वतोऽकुर्वतो वाऽपि प्रमाणस्य न जडार्थसंवित्फलमुपपद्यते । कुर्वतः फलं चेत्कुर्वत्त्वस्यापि कार्यत्वात्तदपीदृशं भवेत्कुर्वतः फलं भवेत् । तथा च तदपि तादृशमित्यनवस्थाप्रसङ्गः । कुर्वत्त्वस्याप्यकार्यत्वे तत्फलस्य संवेदनस्याप्यनादित्वेन फलत्वाभावप्रसङ्गात् । जडार्थसंविदकुर्वतः फलमिति पक्षान्तरं तु सर्वतो लोकानुभवविरुद्धमित्याह—**अकुर्वत इति** । स्पष्टोऽर्थः ॥ ११० ॥

**सु० टी०—नित्यैव संविदुपनीतावरणफलमिति चेन्नेत्याह—**

**सती न संवित्क्रियते हि सत्त्वा-**
**न्न चासती तद्वदसत्त्वहेतोः ।**
**न चोपपन्नं सदसत्त्वमस्या-**
**स्ततो न कार्यत्वमुपैति संवित् ॥ १११ ॥**

सतीति । **नापि प्रागसती ज्ञातताऽपि फलमित्याह**—न चेति । **असत्**

**उत्पत्त्यदर्शनादित्यर्थः । अस्तु तर्हि प्रागसत्युत्पत्त्यनन्तरं सतीति चेन्न स्वभावविरोधादित्याह**— न चेति । **फलितमाह**–तत इति ॥ १११ ॥

अ० टी०—संविदुत्पादकपर्यालोचनया संविदो मानफलं निरस्य संवित्स्वरूपपर्यालोचनयाऽपि तन्निरस्यति–**सती न संविदिति** । अक्षरार्थः स्पष्टः । सतोऽसतो वोत्पत्तिर्मानफलमिति पूर्वं सामान्यतो विकल्प्य दूषणमुक्तमत्र संविदि विशेषतो विकल्पदूषणं कृतमिति विशेषः ॥ १११ ॥

**सु० टी०—किंचिद्वस्तु मानफलं तत्किं शक्यं मानेनोत्पाद्यमशक्यं वा नाऽऽद्य इत्याह—**

**न शक्यमुत्पाद्यमिति प्रशस्यते**
**तदा हि शक्तेरपि जन्यताऽऽपतेत् ।**
**अशक्यमुत्पाद्यमितीष्यते यदि**
**द्रुतं नभश्चूर्णय मुद्गरादिभिः ॥ ११२ ॥**

न शक्यमिति । **शक्त्युपेतमित्यर्थः** । तदेति । **विशेषणीभूतायाः शक्तेरपीत्यर्थः । अन्त्यं दूषयति**—अशक्यमिति । **न हि सुशिक्षितोऽपि मुद्गरादिना नभश्चूर्णयतीत्यर्थः ॥ ११२ ॥**

अ० टी०—कार्यकारणभावसामान्यविषयमपि दोषं संविदुत्पत्तावाह—**न शक्यमिति** । शक्तं करणं शक्यं च कार्यमिति हि स्थितिः । तत्र संवेदनं मानस्य शक्यमशक्यं वाऽऽद्ये शक्त्यवच्छिन्नस्य शक्यत्वात्तदा शक्तेरपि जन्यताऽऽपतेत् । शक्तेरपि जन्यत्वे तत्रापि शक्त्यन्तरकल्पना प्रसज्येत । शक्त्यवच्छिन्नमुत्पाद्यमिति न प्रशस्यते न युक्तिसहितमित्यर्थः । द्वितीये दोषमाह—**अशक्यमुत्पाद्यमिति** । अतिप्रसङ्गान्नायमपि पक्षः साधुरित्यर्थः । न चाऽऽत्मन्यज्ञाननिवृत्तिः प्रमाणफलमितिपक्षेऽप्येतद्विकल्पदूषणगणप्रसरणं सममिति शक्यमज्ञानस्यानिर्वचनीयत्वान्मानस्य तन्निवर्तकत्वमप्यनिर्वचनीयत्वमेवेति मानयुक्त्यसहिष्णुताया अस्मन्मतालंकारत्वादिति भावः ॥ ११२ ॥

**सु० टी०–अस्तु जडप्रमाणमफलं किं तत इति चेत्तदप्रामाण्यात्तद्विषयस्यैकानेकत्वासिद्धेर्मिथ्यात्वमित्याह—**

**जडप्रमाणस्य फलानिरूपणा-**
**ज्जडस्य तत्त्वं न निरूपणक्षमम् ।**

अतो न मानान्तरमर्थतोऽपि न-
स्त्रयीशिरोवस्तु निराकरिष्यति ॥ ११३ ॥

जडेति । ततोऽपि किमित्याह—अत इति । **अर्थद्वारकोऽप्यद्वैतश्रुतेर्यो मानान्तरविरोधः सोऽपि नास्ति तद्विषयस्य द्वैतस्य मिथ्यात्वादित्यर्थः ॥ १३ ॥**

अ० टी०—एवं जडप्रमाणफलदूषणे फलितमर्थमाह—**जडप्रमाणस्येति ।** प्रत्यक्षादेर्जडप्रमाणत्वाभिमतस्य फलानिरूपणादफलस्य चाप्रमाणत्वात्तस्य भ्रान्तिमात्रत्वे सति तत्प्रमेयस्य जडस्य तत्त्वं च निरूपणक्षमं न प्रामाणिकं किंत्वनिर्वाच्यमेव तदपीत्यर्थः । जडार्थस्याप्रामाणिकत्वे वा किमायातं तदाह—**अत इति ।** प्रत्यक्षादेरद्वैतागमस्य चाभिन्नविषयत्वेन मिथोविरोधपरिहारेऽपि मानान्तरेण वस्त्वन्तरसद्भावावगमे त्वर्थादद्वैतरूपस्वप्रमेयांशे वेदान्तानां प्रत्यक्षादिभिर्विरोध इति य आर्थिकोऽपि विरोध उत्प्रेक्ष्यते सोऽप्यत्र नावतरति परमार्थमद्वैतार्थबोधकत्वादिति तात्पर्यार्थः । अत उक्तयुक्तिजालान्मानान्तरमर्थतोऽप्यपिशब्दात्स्वरूपेणापि नोऽस्माकं त्रयीशिरोवस्त्वद्वैतलक्षणं न निराकरिष्यतीत्यक्षरयोजना ॥ ११३ ॥

**सु० टी०—ननु घटाद्यवच्छिन्नस्यवाऽऽत्मनोऽज्ञातत्वात्प्रत्यक्षादेश्च तद्विषयत्वेन प्रामाण्यसंभवादवच्छेद्यावच्छेदकयोरात्मप्रपञ्चयोः प्रामाणिकत्वे कुतः समन्वयसिद्धिरिति चेत्तत्राऽऽह—**

आत्मन्येव समस्तमस्तु यदि वा मानान्तरं तेन च
स्पष्टं वेदशिरोविरुद्धमिति च स्वी कुर्महे कामतः ।
एवं सत्यपि पूर्वभावि सकलं मानान्तरं बाधते
पश्चात्कस्यचिदेव वेदशिरसो जाता परब्रह्मधीः ॥ ११४ ॥

आत्मन्येवेति । **सप्रपञ्चात्मनीत्यर्थः । मानान्तरमध्यक्षादि । वेदशिरो निष्प्रपञ्चात्मबोधकम् । तथा च कथं त्वदिष्टसिद्धिरिति चेत्तत्राऽऽह—** एवं सत्यपीति । **प्रत्यक्षादेर्वेदान्तस्य च विरोधे सत्यपि । पूर्वभावि संगतिसापेक्षवेदान्तपूर्वभावि । कस्यचिद्विशिष्टाधिकारिणः । बाधते विरुद्धयोरेकत्राप्रामाण्यादित्यर्थः ॥ १४ ॥**

अ० टी०—एवं युक्तिशतेन विरोधे निराकृतेऽपि यदि विरोधान्तरं प्रकारान्तरेणाऽऽशङ्क्येत तदङ्गीकृत्यापि परिहारमाह—**आत्मन्येवेति ।** आत्मन एवाज्ञाततया मेयत्वात्तस्यैव भोक्तृभोग्यादिगत्तयाऽवस्थानात्प्रत्यक्षादिना च प्रपञ्चविषयेणाऽऽत्मै-

याऽऽवेद्यते नानारूपो वेदान्तैस्तु तद्विपरीत[त]याऽद्वैतात्मोपदिश्यते । अत एकविषयत्वेन विरोधस्तदवस्थः । न च प्रत्यक्षादेर्व्यावहारिकप्रमाणत्वाद्वेदान्तानां च तत्त्वावेदकत्वान्न विरोध इति युक्तं वक्तुं प्रत्यक्षादेरपि तत्त्वावेदकतयैव सर्वसंप्रतिपत्तेस्तदानीं वेदान्तानामप्रवृत्तेर्विरोधाभावात्स्वतः प्रामाण्याच्च तत्त्वावेदकत्वस्यैवाभ्युपेयत्वादिति विरोधशङ्का । एतदभिप्रेत्योक्तमात्मन्येवेति । समस्तं प्रमाणान्तरमप्यात्मन्येवास्तु प्रमाणं तेन स्पष्टं वेदशिरोविरुद्धमिति च स्वी कुर्महे कामतस्तदिच्छयेत्यर्थः । उत्सर्गापवादन्यायमाश्रित्याङ्गीकृतं विरोधं परिहरति—**एवं सत्यपीति** । पूर्वभावि सकलं मानान्तरं सर्वान्प्रत्यविशिष्टं सदुत्सर्गः । सर्वमेव प्रमाणं तत्त्वावेदकं प्राप्तं यत्तत्पश्चात्कस्यचिदेव चतुष्टयसंपन्नस्य वेदशिरसो जाता मतिस्तदपवादकतयोत्पन्ना बुद्धिर्बाधते । तेनोत्सर्गादपवादो बलीयानिति न्यायः प्रसिद्धो भूतहिंसाप्रतिषेधाग्निष्टोमीयपश्वालम्भविध्यादौ । अतः प्रत्यक्षादेर्वेदान्तैरेव बाध इति विचारतो व्यावहारिकमेव प्रामाण्यं प्रत्यक्षादेर्न तत्त्वावेदकतेति तेन न वेदान्तबाध इत्यर्थः ॥ ११४ ॥

**सु० टी०—विपरीतं किं न स्यात्पूर्वस्यैवासंजातविरोधित्वेन प्रबलत्वादिति चेन्न लोके पश्चाद्भाविन एव विरुद्धस्य बाधकत्वदर्शनादित्याह—**

> **पूर्वोत्पन्नमृगाम्बुविभ्रमधियो बाधं विना नोत्तरं**
> **विज्ञानं समुदेतुमूषरभुवो याथात्म्यमावेदयत् ।**
> **शक्नोतीति यथा मृगाम्बुधिषणामुन्मृ[1]द्यदुत्पद्यते**
> **तद्वद्वेदशिरोवचोजनितधीर्भे[2]दभ्रमं ब्रह्मणि ॥ ११५ ॥**

पूर्वेति । **पूर्वस्य मृगतृष्णोदकभ्रमस्य बाधं विनेयमूषरभूरिति तद्याथात्म्यवेदकं विज्ञानं नोदेतुमर्हतीत्यतो यथा तन्मृगाम्बुबुद्धिं निराकुर्वदेवोत्पद्यते तथा प्रकृतेऽपीत्यर्थः ॥ ११५ ॥**

अ० टी०—पाश्चात्येन पूर्वबाधो लोके प्रसिद्ध इत्याह—**पूर्वोत्पन्नेति** । मृगाम्बुविभ्रमधीर्मृगतृष्णायामुदकमितिमिथ्याबुद्धिस्तस्याः पूर्वोत्पन्नाया बाधमपह्नतविषयत्वं विनोखरभुवो याथात्म्यमावेदयदुत्तरं विज्ञानमुदेतुं न शक्नोतीति प्रसिद्धमिति योजना । उक्तदृष्टान्तमनूद्य दार्ष्टान्तिके योजयति उन्मृद्यद्बाधमानमेवोत्पद्यते । ऊखरभुवो याथात्म्यधीरित्यनुषङ्गः । दार्ष्टान्तिकार्थः सुगमः । तथा च पूर्वप्रवृत्तस्य प्रत्यक्षादेर्मृगतृष्णिकोदकवद्भ्रान्तित्वं सिद्धमित्यर्थः ॥ ११६ ॥

---

१ क. °द्यद्भुत्प° । २ क. °मं बाधते ।

**सु० टी०—जैमिनेरपीदमभिमतमित्याह—**

**पौर्वापर्ये पूर्वदौर्बल्यमाह**
**षष्ठेऽध्यायेऽवस्थितो जैमिनिर्यत् ।**
**वक्ष्यामस्तत्सर्वमानीय तुभ्यं**
**बुद्धिं स्वीयां सम्यगत्रावधत्स्व ॥ ११६ ॥**

पौर्वापर्ये इति । **' पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् '** [जै० ६ । ५ । ५४] **इति सूत्रे ॥ ११६ ॥**

अ० टी०—पूर्वापरमात्रेण परेण पूर्वबाध इत्ययमर्थो जैमिनीयेऽपि तन्त्रे न्यायतो निर्धारित इत्याह—**पौर्वापर्ये पूर्वदौर्बल्यमाहेति** । पौर्वापर्ये पूर्वस्य निमित्तस्य दौर्बल्यं बाध्यत्वं जैमिनिराचार्यः षष्ठेऽध्यायेऽधिकारलक्षणेऽवस्थितो यदाह ' पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् ' [ जै० सू० ६ । ५ । ५४ ] इत्यत्र तत्सर्वं विषयाद्यङ्गैः परिपूर्णमानीय संग्रहेणोपानीय तुभ्यं वक्ष्यामो वयम् । अत्रास्मद्वाक्ये स्वीयां बुद्धिं सम्यगवधत्स्वावहितामेकाग्रां कुर्विति योजना । न्यायस्यास्य दुर्बोधत्वादत्र सावधानः सञ्शृण्वित्यर्थः ॥ ११६ ॥

**सु० टी०—वक्ष्याम इति प्रतिज्ञातं न्यायं दर्शयति—**

**उद्गातृप्रतिहर्तृकर्तृकतया जातौ वियोगौ क्रमा-**
**द्यस्मिन्कर्मविधिप्रयोगसमये तत्रैष नः संशयः ।**
**किं सर्वद्रविणव्ययो भवतु वा संस्थापनं दक्षिणा-**
**हीनस्येति तदा परं बलवदित्यूचे मुनिर्जैमिनिः ॥ ११७ ॥**

उद्गात्रिति । **ज्योतिष्टोमे बहिष्पवमानस्तोत्रार्थमृत्विजः संलग्नाः प्रह्वा उदञ्चश्चात्वालमुपसर्पन्ति । तत्र यद्युद्गाताऽपच्छिन्द्यादद्क्षिणो यज्ञः संस्थाप्यः । यदि प्रतिहर्ता सर्ववेदसं दद्यादिति प्रायश्चित्तमाम्नातं तत्र युगपदपच्छेदश्चेद्विकल्प इति विचार्य क्रमेणापच्छेदे संदिह्यते—किं सर्वस्वदाक्षिण्यं क्रतोरदक्षिणस्य वा संस्थापनमिति । तत्रासंजातविरोधित्वात्पूर्वोत्पन्ननिमित्तकस्य बलवत्त्वे प्राप्ते परनिमित्तकमेव बलवत् पूर्वानुपमर्दे परस्यानुत्थानादिति पूर्वं परमजातत्वादबाधित्वैव जायते परस्यानन्यथोत्पत्तेर्न त्वबाधेन संभव इति न्यायान्मुनिरुक्तवानित्यर्थः ॥ ११७ ॥**

अ० टी०—तदेव विषयादिविभजनेन कथयति—**उद्गातृप्रतिहर्तृकर्तृकतयेति।** 'अध्वर्युं निष्क्रामन्तमुद्गाता संतनुयात्' इत्यादिनोद्गातृप्रभृतीनामृत्विजां सोमयागसुत्यादिने बहिष्पवमानस्तोत्रार्थमेकैकस्येतरेतरसंसृष्टतयोत्तरवेद्याः सदः प्रति हविर्धानस्योत्तरतः प्रसर्पणं विहितम्। तत्र यदि विच्छेदो मध्ये यस्य कस्यापि स्यात्तदा प्रायश्चित्तं तत्तद्विविच्छेदनिमित्तमाम्नातमविरुद्धं यत्तद्यथाम्नातमनुष्ठेयमिति तदस्य न्यायस्य न विषयः। यत्पुनरुद्गातृप्रतिहर्त्रोर्विच्छेदे प्रायश्चित्तं विहितं 'यद्युद्गाता विच्छिन्द्यादक्षिणो यज्ञः संतिष्ठते यदि प्रतिहर्ता सर्वस्वं दद्यात्' इत्येतच्चोद्गातुरध्वर्योर्विच्छेदे प्रकृतस्य यागस्य विना दक्षिणादानं समापनं प्रतिहर्तुरुद्गातृसकाशाद्विच्छेदे तस्मिन्नेव यागे यजमानस्य सर्वस्वदानमित्येव मिथो विरुद्धं प्रायश्चित्तमवगतम्। तत्र द्वयोर्युगपद्विच्छेदे यजमानस्येच्छया विकल्पो निर्धारितः। क्रमेण विच्छेदे पुनरिदं विचार्यते कतरन्निमित्तं नैमित्तिकं प्रयोजयेदिति। एकस्मिन्नेव कर्मणि सर्वस्वदानदक्षिणाहीनत्वयोरयोगादन्यतरस्यैवानुष्ठेयत्वे कतरदनुष्ठेयमिति संशयस्यावश्यंभावादित्येतत्सर्वं पूर्वार्धेनोच्यते। तस्यैषाऽक्षरयोजना—यस्मिन्कर्मविधिप्रयोगसमय उद्गातृप्रतिहर्तृकर्तृकतया क्रमाद्वियोगौ जातौ भवतस्तत्रैष नोऽस्माकं संशयो जायत इति। एष इत्युक्तं संशयमेव स्फुटयति—**किं सर्वेति।** अत्र यथासंख्यक्रमो न विवक्षितः श्रुत्याम्नातविरोधादिति द्रष्टव्यम्। तदा पूर्वमसंजातविरोधित्वात्प्रबलं सदुत्तरं बाधेतेति पूर्वमेव निमित्तं नैमित्तिकं प्रयोजयेदिति पूर्वप्राप्तौ जैमिनिमुनिः परमुत्तरं बलवदित्यूचे पूर्वसमयेऽस्यानुत्पन्नत्वात्तेनास्य बाध्यत्वायोगादुत्तरस्य च पूर्वोपमर्दमन्तरेणोत्पत्त्यसंभवादुत्तरमेव बलवत्सत्प्राप्तबाधकं स्वनैमित्तिकं प्रयोजयेदिति पौर्वापर्ये पूर्वदौर्बल्यमित्यवोचदित्यर्थः। पूर्वोत्पन्नाविच्छेदविषया बुद्धिः पश्चादुत्पन्नयर्त्विगन्तराविच्छेदविषयया बुद्ध्या बाध्यते। अज्ञायमानयोर्विच्छेदयोरप्रयोजकत्वात्तज्ज्ञानयोरेव प्रयोजकतेति बुद्ध्योरेवेदमुदाहरणमिति द्रष्टव्यम्। तदुक्तं—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेदिति॥ ११७॥

**सु० टी०—प्रकृतिवदिति सौत्रं दृष्टान्तं विवृणोति—**

**यद्वत्प्राकृतवैकृतावतितरामन्योन्यसंस्पर्धिनौ**
**धर्मौ बाध्यनिवर्तकावभिमतौ बुद्धौ क्रमेणान्वयात्।**
**पाठव्यत्ययसंभवेऽपि हि तयोर्बुद्धिक्रमो विद्यते**
**पूर्वा प्राकृतधर्मधीरितरधीरन्त्या तथैवोत्थितेः॥ ११८॥**

यद्वदिति। **यथा विकृतौ पठितकतिपयधर्मायामपेक्षितप्राकृतकथंभा-**

**वायां वचननामधेयचोदनालिङ्गैः प्राकृतधर्मा आतिदिश्यमानाः क्वचिद्विरोधे बाध्यन्ते । तत्र प्रापकप्रमाणक्रमेण धर्मयोर्विकृतावन्वयादुपकारसापेक्षायां विकृतौ कॢप्तोपकारत्वेन प्रथमप्राप्तं प्राकृतं बाध्यमनन्यथोत्पद्यमानं च वैकृतं बाधकमिति स्वीकृतम् । यथा विकृतावाभिचारिके शरमयं बर्हिर्भवतीति प्रत्याम्नातेन शरेण प्राकृतं कौशं बर्हिर्बाध्यते । ननु न प्राकृतविध्यन्तस्य विकृतौ प्रथमप्राप्तिः किं तु वैकृतस्यैव पाठतः संनिधानादिति चेन्नेत्याह**—पाठेति । **बुद्धिक्रम उक्तरीत्याऽन्वयक्रमः । तमेव सहेतुकमुपपादयति**—पूर्वेति । **प्रकृतिवच्छब्दस्य वैकृतविधिशेषत्वादित्यर्थः । तथैव विकृतिभावनाकाङ्क्षाक्रमेणैवोत्थितेः प्राप्तेः॥११८॥**

अ० टी०—पौर्वापर्ये पूर्वदौर्बल्यमिति भागं व्याख्याय प्रकृतिवदिति सूत्रभागं दृष्टान्तपरं व्याचष्ट—**यद्वदिति** । प्रकृतावुपदिष्टः प्राकृतो धर्मः । विकृतावुपदिष्टो वैकृतः । तौ च क्वचिदन्योन्यसंस्पर्धिनौ मिथो बाध्यनिवर्तकावभिमतौ चात्राप्युत्तरेण पूर्वो बाध्यतयाऽभिमत इत्यर्थः । कुतो बुद्धौ क्रमेणान्वयात् । क्रमेण ज्ञायमानत्वादित्यक्षरयोजना । एतदुक्तं भवति—अस्ति हि प्रकृतिर्विकृतिश्चेति विहितानां कर्मणां द्वैविध्यम् । तत्र समग्राङ्गसंयुक्ततया विधीयमानं कर्म प्रकृतिः । विकलाङ्गतया विहितं कर्म विकृतिरिति । तयोर्लक्षणे यथा दर्शपूर्णमासौ सर्वासामिष्टीनां प्रकृतिः स्वप्रकरण एव सर्वाङ्गोपेततयाऽऽम्नानात् । 'सौर्यं चरुं निर्वपेद्ब्रह्मवर्चसकामः' इत्याद्या विकृतिर्विकलाङ्गतयाऽऽम्नानात् । तथा क्वचिद्विकृतिविशेषे कतिपयान्यङ्गानि विधीयन्ते । यथा 'अभिचरन्यजेत' इत्यभिचारकरणे शरमयं बर्हिर्विभीतक इध्मेत्यङ्गविशेषाम्नानम् । तत्र विकृतिविधावितिकर्तव्यताभावे करणोपकारासिद्धेः करणनिर्वृत्तितत्फलयोरप्यनिष्पत्तेरितिकर्तव्यतापेक्षा विद्यते सा चाङ्गानुष्ठाननिबन्धना । अङ्गानि च विकृतौ नाऽऽम्नातानीति तदपेक्षायां चोदनासामान्यादिना प्राकृतान्यङ्गानि विकृतावतिदिश्यन्ते दर्शपूर्णमासादिप्रकृतिवत्कुर्यादिति । यत्र पुनः प्राकृतानि साधनानि कुशमयादीनि बर्हिरादिवस्तूनि विकृतिविधिप्रतीतिसमय एव प्रथममतिदेशेन प्राप्तानि तैश्च यत्कार्यं निर्वर्तनीयं तदर्थतया यदि विकृतिप्रकरणविशेषे वस्त्वन्तरं शरमयाद्याम्नातं दृश्यते तत्र भवति विरोधस्फुर्तिर्विकल्पसमुच्चययोर्भिन्नप्रकरणत्वेनासंभवात् । तथा चैकेनैव निर्वर्तनीयस्याङ्गोपकारकस्यैकमेव साधनतामुपैतीति तयोरन्यतरेणान्यतरस्य बाधेऽवश्यं कर्तव्ये विकृतावुपदिष्टानां निरवकाशत्वात् 'सावकाशनिरवकाशयोर्निरवकाशं बलवत्' इतिन्यायादुत्तरेण वैकृतोपदिष्टेन पूर्वमतिदेशप्राप्तस्य प्राकृतस्य बाधोऽवसितो यथा तद्वदुद्गातृप्रतिहर्तृकर्तृकविच्छेदेऽपि पूर्वबुद्धिरुत्तरया बुद्ध्या बाध्येत्युत्तरमेव निमित्तं नैमित्तिकप्रयोजकं न पूर्वमिति निर्णयः । तथाऽत्रापि प्रथमोत्पन्नप्रत्यक्षादिबुद्धिः पश्चादुत्पन्नया वेदान्तवाक्यजनितया बाध्या नान्यथेति

सिद्धमिति । यद्येवं परेण पूर्ववाद इति नियमस्तर्हि यत्र क्वचिद्विकृतेः कतिपयाङ्गोपेतायाः प्रथममाम्नानं प्रकृतेश्च समग्राङ्गायाः पश्चात्पाठस्तत्र प्राकृतैरेवातिदिष्टैर्वैकृता धर्मा बाध्येरंस्तदा प्राकृतानामुत्तरत्वाद्यथापाठक्रममेदबुद्धयोरुत्पत्तिरिति चेत्तत्राऽऽह—**पाठव्यत्यय-संभवेऽपीति** । पाटक्रमविपर्यासेऽपि तयोः प्राकृतवैकृतयोर्बुद्धिक्रमो विद्यते । कीदृशः क्रम इति तमाह—**पूर्वेति** । उक्तबुद्धिपौर्वापर्ये नियामकमाह—**तथैवोत्थितेरिति** । अयमर्थः—विकृतिर्हीतिकर्तव्यताभागमाकाङ्क्षमाणा स्वसंनिधावु[प]दिष्टमङ्गसाधनमसंपूर्णत्वान्न स्वी करोति प्रकृतौ च समग्रस्य धर्मस्योपदिष्टत्वात्तदेव धर्मजातं चोदनासामान्यादिना स्वी करोति पश्चात्स्वप्रकरणोपदिष्टमपि संनिधिप्रमाणात्स्वी करोति तस्यानवकाशत्वेनोपेक्षानर्हत्वात्तदाम्नानवैयर्थ्यपरिहारायावश्यं स्वीकार्यत्वात् । तस्मादतिदेशोपदेशबुद्धयोः पूर्वोक्तक्रमेणैवोत्पत्तेः पाठव्यत्ययेऽपि पूर्वा प्राकृतधीरन्त्या चोपदेशधीरित्यनयोर्नियत एव क्रम इति ॥ ११८ ॥

**सु० टी०—ननु ' उच्चैर्ऋचा क्रियत उपांशु यजुषा ' इत्यत्र त्रयो वेदा असृज्यन्तेत्युपक्रमार्थवादस्थो मन्त्रब्राह्मणवाची वेदशब्दो विध्युद्देशगतमपि मन्त्रवाचकमृगादिपदं स्वार्थात्प्रच्यावयतीत्युक्तत्वात्कथमत्र पूर्वदौर्बल्यमित्याशङ्क्य तद्वैलक्षण्यमस्य न्यायस्य दर्शयति—**

**सापेक्षावुदितौ यदा तु भवतः पूर्वापरौ प्रत्ययौ**
**पूर्वस्तत्र निवर्तको भवति तत्रान्त्यो निवर्त्यो यथा ।**
**वेदोपक्रमजा मतिर्बलवती नर्गादिसंहारजा**
**वेदोपक्रममुख्यभाग्भवति तन्नर्गादिवाणी गुणात् ॥ ११९ ॥**

सापेक्षाविति । **परमपि यत्पूर्वसापेक्षं न तत्पूर्वस्य बाधकमुपजीव्यत्वेन पूर्वस्य बलवत्त्वात्तद्बाधे स्वस्याप्यसंभवादिति पूर्वेणैव तत्र परबाध इत्यर्थः । नर्गादीति । चरमश्रुतर्गादिशब्दजेत्यर्थः । वेदेति । तत्रोपक्रमस्थं वेदपदं मुख्यमुपसंहारस्थमृगादिपदं गुणाल्लाक्षणिकमित्यर्थः । तेन प्रत्यक्षादीनां व्यावहारिकप्रामाण्यं न वेदान्तैर्बाध्यत उपजीव्यत्वात्तत्त्वावेदकत्वं तु सुतरां बाध्यत इति हृदयम् ॥ ११९ ॥**

अ० टी०—यद्येवं पौर्वापर्ये पूर्वस्योत्तरेण बाध एव न्याय(य्य)स्तर्हि ' प्रथमश्रुतानुसारेण चरमश्रुतं नेयम् ' इतिन्यायस्य को विषय इति तमाह—**सापेक्षाविति** ।

---

१ ग. तत्रार्गा॰ ।

विरुद्धयोर्बुद्ध्योः परस्परनैरपेक्ष्ये परेण पूर्वबाधः । यदा तु पूर्वापरप्रत्ययौ सापेक्षावुदितौ भवतस्तदा तत्र तयोर्मध्ये पूर्वः प्रत्ययो निवर्तको भवत्यन्यस्तु निवर्त्य इति निर्णयः । पूर्वापेक्षयोत्पद्यमानस्योत्तरस्य पूर्वाविरोधेनैवोत्पत्तेः । पूर्वस्य तूत्तरोत्पत्तिसमये नापेक्षा नापि विरोधः किं तु पर्यवसानायैवापेक्षा तदा च विरोध इति तदवस्थायां पूर्वेणोत्तरं मुख्यार्थात्प्रच्याव्यते तद्यथा तथोदाहरिष्याम इत्यर्थः । उदाहरणमाह—**वेदोपक्रमजेति** । 'प्रजापतिर्वेदानसृजत' इत्युपक्रम्य श्रूयते—'उच्चैरृचा क्रियत उपांशु यजुषा' इति । तत्रर्गादिशब्दः किं मन्त्रमात्रपरः किं ऋग्वेदादिपर इति संदेहे मुख्यार्थपरिग्रहे बाधकाभावाद्यत्र यजुर्वेदेऽपि नियताक्षरपादावसाना मन्त्रास्तेऽप्युच्चैः प्रयोक्तव्या ऋग्वेदेऽपि ये ब्राह्मणप्रभवा निगदादयो मन्त्रास्त उपांशु प्रयोज्या इति प्राप्य्य सिद्धान्तितं 'प्रजापतिर्वेदानसृजत' इतिवेदशब्देनोपक्रमादुच्चैरृचा क्रियत इत्यादौ वेदसंबन्धि किंचिद्विधीयत इति तावत्प्रतीयते पश्चाच्चर्चा यजुषेति चर्ग्यजुःशब्दयोर्मन्त्रसंबन्धितयोच्चैश्च नीचैश्च कर्तव्यता भाति तत्र वेदशब्दोपक्रमजाता मतिरसंजातविरोधितया बलवती स्वार्थपरैव स्वीकर्तव्या । ऋगादिशब्दोपसंहाराज्जाता मतिर्न बलवती स्वार्थपरा न भवत्युपक्रमसापेक्षतया तद्विरोधे स्वार्थपरत्वायोगादित्यर्थः । एतदेव स्फुटयति—**वेदोपक्रममुख्येति** । तथा चोपक्रमतन्त्रतयर्गादिशब्दो मन्त्रविशेषे मुख्योऽपि गौण्या वृत्त्या वेदपर एवेति तस्मादृग्वेदविहिते कर्मण्यतिदेशे मन्त्रप्रयोगस्योच्चैष्ट्वं विधीयते यजुर्वेदविहिते चोपांशुत्वं न तु यत्र मन्त्रस्तत्र तथा प्रयोग इति निर्णयः ॥ ११९ ॥

**सु० टी०—शारीरकेऽपि प्रथमस्य चरमबाधकत्वं साधितमित्याह—**

**ब्रह्म पुच्छमितिवाक्यगामिनो-**
**र्ब्रह्म पुच्छमिति शब्दयोर्द्वयोः ।**
**ब्रह्मशब्दबलवत्तरत्वतः**
**पुच्छशब्दपरिपीडनं मतम् ॥ १२० ॥**

ब्रह्म पुच्छमिति । **आनन्दमयवाक्ये 'ब्रह्म पुच्छं प्रतिष्ठा' [ तै० २ । ५।१ ] इत्यत्र श्रुतयोर्ब्रह्मपुच्छपदयोर्मध्ये पूर्वस्य ब्रह्मपदस्य 'ब्रह्मविदाप्नोति' [ २ । १ । १ ] इत्युपक्रमस्थत्वेन 'असन्नेव स भवति' [तै०२।६।१] इत्यादिवाक्यशेषगताभ्यासवशेन च बलवत्त्वाच्चरमं यत्पुच्छपदं तत्प्रायपाठप्राप्तादवयववाचित्वात्प्रच्याव्याधिष्ठानलक्षणया परिपीडितमित्यर्थः ॥ १२० ॥**

अ० टी०—वेदान्तेष्वपि तादृशमुदाहरणमस्तीत्याह—**ब्रह्म पुच्छमितीति** ।

' ब्रह्म पुच्छं प्रतिष्ठा ' [ तैत्ति० २ । ५ । १ ] इतिवाक्यगतयोर्ब्रह्मपुच्छपदयोः प्रथमश्रुतब्रह्मशब्दस्य निरपेक्षित्वात्पुच्छशब्दस्यावयववाचिनोऽवयविसापेक्षत्वात्प्रथमश्रुतब्रह्मपदानुसारेण चरमश्रुतपुच्छशब्दो लक्षणयाऽऽधारपरत्वेन नि(नी)यत इति वाक्यार्थः । अक्षरयोजना सुकरा । यदि च ब्रह्मशब्दादप्यानन्दमयस्यैव तद्वाक्योपक्रमे श्रवणात्प्राथम्यमुच्येत तदा ' ब्रह्मविदाप्नोति परम् ' [ तै० २ । १ । १ ] इति महावाक्योपक्रमगतब्रह्मशब्दादानन्दमयशब्दस्य स्वार्थबाधो वक्तव्यः । अत एवोक्तं मान्त्रवर्णिकमेव च गीयत इति ॥ १२० ॥

**सु० टी०—कथं पुनः ' आकाशस्तल्लिङ्गात् ' [ ब्र० सू० १ । १ । २२ ] इत्यत्राऽऽकाशपदस्य प्रथमस्य ' सर्वाणि ह वा इमानि भूतानि ' [छा०१९१] इत्यादिवाक्यशेषानुसारेण भूताकाशाद्यच्याव्य ब्रह्मपदत्वं वर्णितमिति चेत्तत्राऽऽह—**

**अथ यद्युपक्रमणमल्पतरं**
**भवति प्रभूतमुपसंहरणम् ।**
**बलवत्तदा चरममेव भवे-**
**दुभयोर्विरोधसमये नितराम् ॥ १२१ ॥**

अथ यदीति । **अत्र पूर्वावगताऽप्याकाशश्रुतिरुपसंहारगतबहुतरब्रह्मलिङ्गानुरोधेनान्यथा नीयते भूयोनुग्रहाय । यथा पञ्चदशरात्रे चरमश्रुतानामपि भूयसामह्नामैन्द्री सुब्रह्मण्यानुग्रहाय प्राथमिकस्याप्यग्निष्टुत आग्नेयी सुब्रह्मण्या बाध्यते तथेत्यर्थः ॥ १२१ ॥**

अ० टी०—अयमपि न्यायो न निरपवाद इति प्रदर्शयन्प्रसङ्गाच्छारीरकाधिकरणे प्रदर्शितानां न्यायानां विवेकप्रतिपत्तये पुनर्न्यायभेदानुपन्यस्यति—**अथ यदीति ।** अथशब्दो न्यायान्तरोपक्रमार्थः । यद्युपक्रमणमुपक्रमोऽल्पतरं निर्देशमात्रं भवति उपसंहरणं वाक्यशेषपलक्षणं प्रभूतं बहुलं भवति तदोभयोरुपक्रमोपसंहारयोर्विरोधसमये चरममेव नितरां बलवद्भवेदिति योजना । अत्र तरपः प्रयोगादविरोधेऽपि क्वचिद्वाक्यशेषेणोपक्रमगतस्य निर्णयदर्शनादुपसंहरणबलवत्तां सूचयति । यथाऽन्तर्यामिशब्दस्योपक्रमगतस्यानिश्चितार्थतयाऽविरुद्धार्थत्वेऽपि वाक्यशेषाददृष्टो द्रष्टाऽऽत्माऽमृतइत्यादिरूपाच्चेतनेश्वरत्वनिर्णय इत्यर्थः । ' आकाशस्तल्लिङ्गात् ' [ ब्र० सू० १ । १ । २२ ] ' अत एव प्राणः ' [ ब्र० सू० १ । १ । २३ ] ' ज्योतिश्चरणाभिधानात् ' [ ब्र० सू०

१ । १ । २४ ] इत्याद्यधिकरणेषु प्रथमश्रुतानामप्याकाशप्राणगायत्र्यादिशब्दानां 'सर्वाणि ह वा इमानि भूतानि [ छा० १ । ९ । १ ] 'त्रिपादस्यामृतं दिवि' इत्यादिवाक्यशेषगतबहुलिङ्गश्रुत्यादिवशेन स्वार्थबाधो दर्शित इत्येतदिहोदाहरणम् ॥ १२१ ॥

सु० टी०—एवं चेत्कथम् 'आत्मगृहीतिरितरवदुत्तरात्' [ ब्र० सू० ३ । ३ । १६ इत्यत्रोपक्रमस्थेनाल्पेनापि निर्विशेषात्मलिङ्गेन भूयसामुपसंहारस्थसविशेषलिङ्गानां बाध इति चेत्तत्राऽऽह—

अथ यद्युपक्रमणमल्पमपि
प्रतिपाद्यवस्तुविषयं भवति ।
अविवक्षितार्थविषयं चरमं
भवति प्रभूतमपि बाध्यमदः ॥ १२२ ॥

अथेति । तत्र हि 'आत्मा वा इदमेकमेव' [ ऐ० १ । १ ] इत्यात्मैकत्वावधारणस्योपक्रान्तस्य विवक्षितस्याऽऽञ्जस्यानुरोधेन चरमश्रुतं बह्वपि सविशेषब्रह्मलिङ्गमविवक्षितार्थविषयत्वाद्बाध्यते तात्पर्यानुरोधित्वाच्छब्दस्येत्यर्थः ॥ १२२ ॥

अ० टी०—अस्यापि न्यायस्यापवादमाह—अथ यदीति । अक्षरार्थो निगदव्याख्यातः । अस्योदाहरणम्—'आत्मगृहीतिरितरवदुत्तरात्' [ ब्र० सू० १ । ३ । १६ ] इत्यत्र हि 'आत्मा वा इदमेक एवाग्र आसीत्' [ ऐ० १ । १ ] इत्यात्मैकत्वावधारणेनोपक्रमगतेन प्रतिपाद्यार्थविषयेण तद्विपरीतो वाक्यशेषगतो महान्प्रपञ्चस्ताभ्यो गामानयदित्यादिः सविशेषात्मविषयो बाध्यत इति निर्धारितमेवमन्यत्राप्युदाहरणमन्विष्येत्थं न्यायो योज्यः ॥ १२२ ॥

सु टी०—प्रकृतमनुसरन्वेदान्तानामासन्नविषयत्वादपि प्रत्यक्षादिबाधकत्वमौष्ण्यप्रत्यक्षस्येव वह्निशैत्यानुमितिबाधकत्वमित्याह—

आसन्नवस्तुविषयेण यथाऽक्षजेन
बाधो भवत्यनुमितेर्व्यवधानयोगात् ।
प्रत्यक्त्वमात्रविषयेण तथाऽऽगमेन
युक्तोऽक्षजादिविषयावगमस्य बाधः ॥ १२३ ॥

आसन्नेति । यथा हि प्रत्यक्षेण स्वसंनिकर्षोत्पन्नधीवृत्तिद्वारा प्रमात्रव्यवहितं प्रमित्सितवस्तुनो विशेषं गृह्णता स्वविरुद्धानुमितिः सामान्य-

**व्याप्त्या साध्यसामान्यं पक्षे निश्चित्य हेतोः पक्षधर्मताबलेन तद्विशेषं विषयीकुर्वाणा व्यवहितविषयत्वाद्बाध्यते । तथा प्रत्यक्तमोऽत्यन्ताव्यवहितो य आत्मा तद्विषयेणाऽऽगमेन बाह्यप्रपञ्चविषयप्रत्यक्षादिबोधस्य युक्तो बाध इत्यर्थः ॥ १२३ ॥**

अ० टी०—इदानीं प्रासङ्गिकं परित्यज्य प्रकृतमेव वेदान्तैः प्रत्यक्षादेर्बाधं पुनरपि न्यायान्तरेणाऽऽह—**आसन्नेति** । संनिहितार्थविषयेणाक्षजेन प्रत्यक्षज्ञानेनानुमितेर्बाधो भवति । कुतो व्यवधानयोगाद्व्याप्त्यादिज्ञानव्यवधानार्थप्रतिपादनाद्द्रष्टुः स्वगतव्यापारगोचरत्वेन व्यवहितार्थत्वाद्वा यथाऽग्निरनुष्णः पदार्थत्वादित्यादौ तथा प्रत्युक्तमात्रविषयेण द्रष्टुः स्वरूपमात्रगोचरेणाऽऽगमेन तत्त्वमस्यादिरूपेणाक्षजादिविषयावगमस्य कर्ता भोक्ता धनी गोमान्ब्राह्मण इत्याद्यात्मकस्य परोपाधिद्वारकतया व्यवहितार्थस्य बाधो युक्त इति योजना ॥ १२३ ॥

**सु० टी०—सर्वप्रमाणोपजीव्यविषयत्वादपि सर्वबाधकत्वं वेदान्तानामित्याह—**

**किं चाऽऽम्नायवचःप्रमेयबलतः सर्वं प्रमाणान्तरं**
**स्वार्थं साधयतीति तत्सकलमेवाऽऽयत्तमस्मिन्भवेत् ।**
**यद्यत्राऽऽयतते विरोधसमये तेनास्य तद्बाधने**
**सामर्थ्यं न च विद्यते श्रुतिवचोबाधो यथा हि स्मृतेः॥ १२४ ॥**

किं चेति । **सर्वं हि प्रमाणं जडत्वात्स्ववृत्त्यवच्छिन्नसंविद्बलादेव स्वविषयं साधयति । सा च संविदनादिनिधना सर्वसाक्षिणी 'आत्मैवास्य ज्योतिर्भवति' [ बृह० ४ । ३ । ६ ] इत्यादिवेदान्तवाक्यस्य प्रमेयम् । एवं च सर्वेषां प्रामाण्यस्य तद्व्यवस्थायाश्च संविदायत्तत्वात् सत्यपि विरोधे नैषामुपजीव्यवेदान्तबाधने शक्तिः स्मृतेरिव श्रुतिबाधन इत्यर्थः ॥ १२४ ॥**

अ० टी०—'व्यवहिताव्यवहितार्थविषययोर्विरोधे व्यवहितार्थकं ज्ञानमितरेण बाध्यम्' इति न्यायेन वेदान्तप्राबल्यमुक्त्वा 'उपजीव्योपजीवकयोर्विरोध उपजीव्येनोपजीवकबाधः' इतिन्यायेनापि वेदान्तप्राबल्यमाह—**किंचाऽऽम्नायेति** । आम्नायवचःप्रमेयं प्रमात्रादिसाक्षी कूटस्थानुभवस्तद्बलतस्तदाश्रित्य सर्वं प्रमाणान्तरं प्रत्यक्षादिकं विधिनिषेधार्थकं च स्वार्थं साधयति प्रमाणप्रमेयभावस्य तन्नियमस्य च नित्यानुभवापेक्षसिद्धिकत्वादिति

हेतोरस्मिन्वेदान्तप्रमेये कूटस्थानुभवे तत्सकलमेवेतरत्प्रमाणजातमायत्तं भवेदुक्तानुभवोपजीवकं मानान्तरं भवेदित्यर्थः । यद्यदधीनसिद्धिकं तन्न तस्य बाधकमित्येतत्साधयति—यद्यत्राऽऽयतत इति । स्मृतिर्धर्मशास्त्रवचनम् ॥ १२४ ॥

सु० टी०—ततश्च वाक्योत्थमतिरेवं स्वविषयसंविदधीनसिद्धिकविषयेन्द्रियसमस्तव्यवहारबाधिकेति सिद्धमित्याह—

**ब्रह्माज्ञानसमुद्भवं ग्रहगणं सातिग्रहं ब्रह्मणः**
**स्वाकारग्रहणेन वेदशिरसो जाता मतिर्बाधते ।**
**विद्या वस्तुबलेन जन्म लभते माया तु निर्वस्तुका**
**सा तामुद्भवमात्रतः क्षपयति ध्वान्तं यथा भास्करः॥१२५॥**

ब्रह्माज्ञानेति । **गृह्णन्ति बध्नन्ति क्षेत्रज्ञमिति ग्रहा इन्द्रियाणि तेषामप्याकर्षकत्वात् । अतिग्रहा विषयाः । ब्रह्मणः सर्वाधिष्ठानस्य स्वाकारः प्रत्यगद्वयत्वं तद्ग्रहणेन । ननु प्रमाणत्वाविशेषे कथं वेदान्तैः प्रत्यक्षादेर्बाध इति चेत्तत्राऽऽह—**विद्येति । **वस्तुबलेनाबाधितविषयत्वेन । सा हि वस्तुनि निश्चिततात्पर्येण वाक्येन जन्यत इति बलवती । प्रत्यक्षादिनिदानं तु माया निर्वस्तुकेत्यतो जातमात्रैव विद्या तामविद्यां दुर्बलां निवर्तयति ध्वान्तमिवाऽऽदित्य इत्यर्थः॥१२५॥**

अ० टी०—तस्माद्वेदान्तवाक्योत्था मतिर्विषयेन्द्रियव्यवहारं बाधत इत्युपसंहरति—**ब्रह्माज्ञानेति ।** ग्रहा इन्द्रियाणि 'प्राणो वै ग्रहः' [बृ० ३ । २ । २] 'चक्षुर्वै ग्रहः' [बृ० ३ । २ । ५] इत्यादिश्रुतेः । अतिग्रहा विषयाः 'सरूपेणातिग्रहेण गृहीतः' [बृ० ३ । २ । ५ इति श्रुतेः । वेदशिरसो महावाक्याज्जाता मतिः सातिग्रहं ग्रहगणं बाधते । तस्य सत्त्वात्कथमुक्तमतिबाध्यत्वमित्यत आह—**ब्रह्माज्ञानसमुद्भवमिति ।** 'इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः' [बृ० २ । ५ । १९] इतिश्रुतेरिन्द्रियाणामात्माज्ञानमयत्वावगमाद्युक्तं ज्ञानबाध्य[त्व]मित्यर्थः । ननु बाधितार्थवचनमेतदवगतवाक्यार्थानामपि केषांचित्तद्बाधादर्शनादिति चेत्तत्राऽऽह—**स्वाकारग्रहणेनेति ।** स्वोऽसाधारणो यः प्रत्यग्ब्रह्माकारस्तस्य ग्रहणेन प्रत्यगात्मतत्त्वाकारग्रहणसामर्थ्यादित्यर्थः । चित्तदोषप्रतिबद्धतया केवलात्माकाराग्रहणादेव केषांचिदज्ञानतत्कार्यबाधादर्शनं न तु वाक्यार्थज्ञानस्य तत्राशक्तिः सहायापेक्षा वेति भावः । नन्वज्ञानका-

---

१ क. सा तु स्वोद्भ° ।

येबुद्धिपीरणामत्वाद्वाक्यजन्यज्ञानस्याप्यनात्मकत्वात्कथमज्ञानादिनिवर्तकतेति चेत्तत्राऽऽह—विद्येति । मेयाकारतयैवोत्पत्तेः । सा च वस्तुबलेन मेयबलेन जन्म लभते । माया त्वज्ञानात्मिका निर्वस्तुका परमात्मवस्त्वाकाररहिता । तथा च स्वप्रकाशपरमार्थवस्त्वाकाराकारितया तद्रहितजडमात्राज्ञानादिविरोधित्वाद्विद्याऽविद्यां बाधेतेत्याह—सा तामित्यर्थः (ति) ॥ १२५ ॥

सु० टी०—तथाऽपि दृढभूमितया दुर्निवारः संसारः परमपि विद्योदयादनुवृत्तेरिति चेत्तत्राऽऽह—

रागद्वेषप्रशाखं विषयगुणसमुद्भासिधीवृत्तिशाखं
धर्माधर्मप्रवृत्तिप्रचुरसुखसमुद्वेगभोगप्रवालम् ।
छिन्द्याः संसारवृक्षं निशितमतिमहाशस्त्रनिक्षेपदक्षः
प्रत्यक्तत्त्वस्थलीगं निबिडतमतमोमूललब्धप्ररोहम् ॥ १२६ ॥

रागद्वेषेति । निशिता नितरां सूक्ष्मभावं नीता निरस्तसमस्तासंभावनादिदोषा या बुद्धिवृत्तिः सैव महाशस्त्रं तन्निक्षेपेऽत्यन्तं सुशिक्षितमतिस्त्वं तयैव शस्त्रेण संसारवृक्षं छिन्द्या इत्यर्थः । तं कीदृशं प्रत्यक्तत्त्वमेव स्थली स्वाध्यस्तसंसारबीजाविद्याधिष्ठानत्वात्तद्गतं तत्राध्यस्तं विचित्रानादिवासनानुबद्धत्वेनातिनिबिडं यत्तमस्तदेव मूलमाधारबन्धस्ततो लब्धः प्ररोहो येन तेन ज्ञाननिवर्त्यत्वं दर्शितम् । रागः सुखानुशयी लोभो द्वेषो दुःखानुशयी क्रोधस्तावेव प्रकृष्टे मुख्ये शाखे यस्य तदुद्भवाश्च याः शब्दादिविषयेषु शोभनत्वादिगुणाध्यासिन्यो धीवृत्तयोऽवान्तरशाखा यस्य । ताभ्यश्च रागद्वेषमूलाभ्यो धर्माधर्महेतुकर्मसु या प्रवृत्तिस्तद्धेतुकाश्च ये प्रचुरसुखसमुद्वेगरूपा भोगास्त एव प्रवालानि यस्य प्रवालतुल्यत्वेन भोगस्य दार्ढ्यं फलानुक्त्या च स्वर्गादेरप्यतितुच्छत्वं सूचितम् ॥ १२६ ॥

अ० टी०—विद्ययाऽविद्या निवर्ततां नाम द्वैतलक्षणः संसारः कथं निवर्तनीय इति तत्राऽऽह—रागद्वेषप्रशाखमिति । अत्र वृक्षरूपकालंकारेण संसारवर्णनं वृक्ष इव मूलोच्छेदे स्वमूलाविद्योच्छेदे संसार उच्छिद्यत इति दर्शयति । निशितमतिमहाशास्त्रनिक्षेपदक्षः संस्त्वं संसारवृक्षं छिन्द्या इत्यन्वयः । मतेर्नैशित्यमसंभावनादिप्रतिबन्धराहित्यम् । महत्त्वविशेषणेनोत्पन्नायां विद्यायां प्रयत्नबलाद्यपेक्षाभावः सूच्यते । दक्ष इति सावधानता चित्तवैयग्र्यहेतुपरिहारेण स्थिरीभावः सूचितः । विशेषणैः सर्वैरस्य वृक्षत्वं प्रपञ्च्यते । तत्र

बीजरूपं मूलमाह—**निबिडतमेति** । अतिनिबिडं महाजडं यत्तम आवरणविक्षेपशक्तिमदज्ञानं प्रतीच्यध्यस्तं तल्लक्षणं यन्मूलं तस्माल्लब्धः प्ररोहोऽङ्कुरीभावो येन स तथा तम् । कस्मिन्स्थानेऽस्योक्त(त)बीजात् प्रादुर्भाव इति तदर्थं विशिनष्टि—**प्रत्यक्त्वस्थलीगमिति** । ब्रह्मणि स्वबीजेन सहाध्यस्तमित्यर्थः । तत्र ये वृक्षस्योपादानबीजव्यतिरेकेणापि बाह्यतोयमृदाद्यवयवा उपचयदार्थहेतवः सन्ति ते नैवमिह किं त्वविद्यात एवोपचयोऽप्यस्येति दर्शयन्पुनर्विशिनष्टि रागद्वेषेत्यादिभिर्विशेषणैः । रागादेरविद्याक्षेत्रत्वं पातञ्जलसूत्रेणोपदिष्टम्—‘ अविद्याक्षेत्रमुत्तरेषां प्रसुप्ततनुविच्छिन्नोदाराणाम् ’ [ पात० २ । ४ ] इति रागद्वेषौ प्रकृष्टे शाखे स्थूलविटपौ यस्य । विषयाः शब्दादयस्तेषां गुणाः शोभनाः शोभनरूपाः संकल्पमात्रसिद्धास्तदवभासिन्यो या धीवृत्तयस्ताः शाखाः क्षुद्रा यस्य । रागद्वेषाभ्यां शोभनाशोभनाध्यासाभ्यां विषयावभासितो धीवृत्तय उत्पद्यन्ते विटपाभ्यामिव शाखा इत्यर्थः । अन्तः सूक्ष्मरूपेण बहिर्विस्तृतरूपेण प्रथमानपल्लवस्थानीयमिह यदस्ति तदाह—**धर्माधर्मेति** । धर्माधर्माभ्यां केवलवासनारूपाभ्यां प्रवृत्तिर्वृद्धिर्यस्य प्रचुरा असंख्याताः सुखसमुद्वेगभोगाः सुखदुःखानुभवाः प्रवालाः पत्राणि यस्य धर्माधर्मप्रवृत्तिश्चासौ प्रचुरसुखदुःखभोगप्रवालश्चेति तथा तमिति विग्रहः । तथा च प्रत्यगज्ञानमूलकत्वात्संसारस्य प्रत्यक्त्वज्ञानेनाज्ञाननिवृत्तौ मूलोन्मूलनेनेव वृक्षः संसार उद्वर्तेतैवेति न ज्ञानादन्यदज्ञानतत्कार्यसंसारनिवृत्तावपेक्ष्यत इति भावः ॥ १२६ ॥

**सु० टी—ननु नाविद्यामूलः संसारोऽपि तु ‘ मायां तु प्रकृतिम् ’ [ श्वेता० ४ । १० ] इत्यादिश्रुतेर्मायिक एवेति नास्य विद्योच्छेद्यत्वमिति चेत्तत्राऽऽह—**

**प्रत्यग्वस्तुन एव तत्र विषये माया तमः कारणं**
**ध्वान्तं बीजमबोध इत्यपि गिरा विद्यैव संकीर्त्यते ।**
**तस्या एव विलास एष भवता गुर्वादिभेदान्वितः**
**संक्लृप्तो न तु विद्यते पृथगसौ संध्ये यथा धामनि॥१२७॥**

प्रत्यगिति । **प्रत्यग्वस्तुनः स्वस्मिन्विषये याऽविद्या सैव माया तम इत्यादिगिरा संकीर्त्यते न तु तयोर्भेद इत्यर्थः । ‘ तरत्यविद्यां विततां योगी मायाम् ’ इति स्मृतेः । ततश्च गुर्वादिभे(*दस्याप्यज्ञानात्मकमायाकार्यत्वादद्वैतसिद्धिरप्रत्यूहेत्याह**—तस्या एवेति । **संक्लृप्तोऽध्यस्तः । त)देवाऽऽह—**

* ख पुस्तकस्थोऽयं ग्रन्थः ।

न त्विति । भवतः सकाशात्पृथगित्यर्थः । दृष्टान्तमाह—संध्य इति । स्वप्नदृष्ट इव चेतनाचेतनप्रपञ्च इत्यर्थः ॥ २७ ॥

अ० टी०—ननु भवेदेतदेवं यद्यज्ञानविलासो भेदप्रपञ्चलक्षणः संसार इत्यत्र प्रमाणं भवेन्न तु तद्दृश्यत इत्यत आह—प्रत्यग्वस्तुन इति । आत्मतत्त्वसंबन्धि प्रत्यक्चैतन्याश्रितमिति यावत् । तत्र प्रत्यग्वस्तुनि विषये विषयभूते प्रत्यगात्माश्रयं प्रत्यगात्मविषयं च यदज्ञानमविद्या साऽविद्यैव माया तम इत्यादिकयाऽपि गिरा जगत्कारणं श्रुतिस्मृतिपुराणेषु संकीर्त्यतेऽतोऽज्ञानहेतुकत्वं द्वैतप्रपञ्चस्य संसारस्य प्रामाणिकमित्यर्थः । तस्मात्तस्या अविद्याया एवैष विलासोऽचित्परिणामो गुर्वादिभेदान्वितो भवताऽविद्यावता त्वया संक्लृप्तः संकल्पमात्रेणास्तीति प्रतीतिपथमानीतो न त्वसौ परमार्थतः पृथक्प्रत्यगात्मनो भेदेन स्वतन्त्रो विद्यते । यथा संध्ये धामनि स्वप्नस्थानेऽविद्यामात्रविलसितो गुरुशिष्यादिभेदप्रपञ्चः केवल आत्मन्युपलभ्यमानस्ततः पृथङ्न विद्यते तद्वदिति योजना । विमतः संसारोऽविद्याविलसितोऽविद्यावस्थायामेव विभाव्यमानत्वात्स्वप्नवदित्यर्थः ॥ १२७ ॥

सु० टी०—ननु स्वप्नस्य दोषजत्वेनाध्यस्तताप्रसिद्धेरस्तु द्रष्टुरपृथग्भावो जागरस्य तु कथं तस्य तद्धर्मादिति चेन्नावान्तरभेदेऽप्यध्यस्ततायामविशेषादित्यत्यन्ताद्वैताभिनिवेशादेकजीववादेनोपक्रमते—

मुक्तामुक्तौ विद्वदज्ञौ त्वदन्या-
वाकाशादिक्ष्मावसानं च विश्वम् ।
स्वाविद्योत्थस्वान्तनिष्पन्दनं त-
द्विज्ञातव्यं मा ग्रहीरन्यथैतत् ॥ १२८ ॥

मुक्तामुक्ताविति । मुक्तः शुकादिरमुक्तो मैत्रादिर्गुरुर्विद्वानज्ञश्चैत्र इति स्वभिन्नतया गृह्यमाणो जीवप्रपञ्च आकाशादिप्रपञ्चश्चेत्येतत्स्वाविद्योत्थं यत्स्वान्तमन्तःकरणं तद्गतानादिवासनाविलसितमेव न तु स्वप्नविलक्षणं सत्यमिति गृहाणेत्यर्थः । 'अजामेकाम्' [श्वे० ४ । ५] इति श्रुतेर्लाघवादेकाविद्यासिद्धौ तत्प्रतिबिम्बरूपो जीव एकोऽप्यविद्ययाऽनेकमोक्तृभावं प्रतिपन्न इति सर्वव्यवहारोपपत्तौ नानेकजीवकल्पना युक्तेति भावः ॥ २८ ॥

---

१ क. ग. °यानेकान्तःकरणावच्छिन्नःवाद° ।

अ० टी०—गुर्वादिभेदान्वित इत्युक्तं प्रपञ्चयन्नुपपादितमर्थं विशदयति—**मुक्तामुक्ताविति ।** अक्षरार्थस्त्वतिरोहितः । समष्टिव्यष्टिशरीरेषु द्विविधेषु तत्कारणे चाव्याकृते साक्षिण एकत्वात्तदन्यस्य चाऽऽत्मनः स्वप्ने प्रमाणाभावाद्विद्वदज्ञमुक्तामुक्तत्वादिविरुद्धधर्मत्वेन येयमात्मभेदकल्पना या चाऽऽकाशादिभोग्यविश्वकल्पनैतत्सर्वं स्वाविद्याप्रसूतान्तःकरणपरिणतिमात्रं स्वप्नवदिति विज्ञातव्यं विवेकिना परमार्थमेव तद्यथा दृश्यमानमिति न ग्राह्यमविद्यान्वयव्यतिरेकानुविधायिनः स्वप्नादिवदविद्यामात्रशरीरत्वादित्यर्थः ॥ १२८ ॥

**सु० टी०—कथं तर्हि मुक्तामुक्तादिव्यवस्था न ह्यज्ञानैक्ये तस्य ज्ञानान्निवृत्तावन्यत्र क्वचिद्बन्धः संभवति । न हि प्रागूर्ध्वकालेन कश्चिन्मुक्तो न वा मोक्ष्यत इति शक्यं वक्तुं श्रुतिस्मृतिन्यायानुभवविरोधादतः कथं जीवैकत्वमिति शङ्कां दृष्टान्तेन प्रत्याचष्टे—**

**कालोऽतीतोऽनादिरेष्यन्ननन्तो**
**मुक्तामुक्तौ तत्र पूर्वं तथोर्ध्वम् ।**
**तस्मादेतद्दुर्घटं शङ्कसे चे-**
**न्मा शङ्किष्ठाः स्वप्नदृष्टान्तदृष्टेः॥ १२९ ॥**

कालोऽतीत इति । **अनादिरनन्त इति च हेतुगर्भं सुबोधमन्यत्॥ १२९ ॥**

अ० टी०—ननु बन्धमोक्षादिव्यवहारस्यानादिकालमारभ्य प्रवृत्तस्याऽऽगामिनि चानन्ते काले वर्तिष्यमाणस्य श्रुतिस्मृतिन्यायलोकानुभवसिद्धत्वात्तद्विरुद्धमिदं त्रिष्वपि कालेषु बन्धमोक्षादिभागविद्वदादिरूपः प्रत्यगात्मनोऽन्यो नास्तीति वचनमिति चोदयति—**कालोऽतीत इति ।** अतीतः कालोऽनादिरेष्यन्भविष्यंश्च कालोऽनन्त इति योजना । तत्र तयोः काल्योर्मुक्तामुक्तौ सर्वतः प्रसिद्धाविति शेषः । यस्मादेवं प्रामाणिकोऽयमर्थस्तस्मादेतदुक्तमस्याऽऽविद्यत्वं दुर्घटमित्यर्थः । उत्तरमाह—**मा शङ्किष्ठा इति ।** लोकप्रसिद्धेर्भ्रान्तिमात्रत्वाल्लोकप्रवादानुवादित्वाच्च श्रुत्यादेर्न तेनेदं प्रमीयते । तथा चाविद्यामात्रविपरीतवर्तिस्वप्नवन्मिथ्याभूतस्याप्यस्य व्यवहारास्पदत्वोपपत्तेर्दुर्घटमिति भावः ॥ १२९ ॥

**सु० टी०—जागरितलौकिकव्यवहारस्यात्यन्तदीर्घकालत्वान्न स्वप्नतुल्यत्वमित्याशङ्क्य दृष्टान्तेऽपि तत्साम्यं व्याचष्टे—**

**सुप्तो जन्तुः स्वल्पमात्रेऽपि काले**
**कोटीः पश्येद्वृत्तसंवत्सराणाम् ।**
**पश्येत्कोटीरेवमागामिनां च**
**जाग्रत्काले योजयेत्सर्वमेतत् ॥ १३० ॥**

सुप्त इति । चकारान्मुक्तामुक्तविद्वदज्ञादिव्यवस्थामपि पश्ये-दिति ॥ १३० ॥

अ० टी०—स्वप्नौपम्यमेव प्रपञ्चयति—सुप्तो जन्तुरिति ॥ १३० ॥

**सु० टी०—जाग्रत्काल इत्युक्तं विवृणोति—**

**कालोऽनादिस्तत्र मुक्तः शुकादिः**
**कालोऽनन्तो मोक्ष्यते तत्र चान्यः ।**
**इत्येवं ते बन्धमोक्षव्यवस्था-**
**संसिद्धिः स्यादापरात्मप्रबोधात् ॥ १३१ ॥**

कालोऽनादिरिति । यावद्ब्रह्मात्मैक्यसाक्षात्कारमात्मैकत्वाज्ञानात्स्वप्नव-न्मुक्तामुक्तादिभेदव्यवहारस्तत्प्रबोधे त्वैक्यदृष्टिरेवेति भावः ॥ १३१ ॥

अ० टी०—'जाग्रत्काले योजयेत्सर्वमेतत्' इत्युक्तं विशदयति—**कालोऽना-दिरिति ।** आप्रबोधात्स्वप्न इवाऽऽपरमात्मसाक्षात्कारात्ते बन्धमोक्षव्यवस्थासंसिद्धिः स्यादा-विद्यकत्वेऽपीत्यर्थः ॥ १३१ ॥

**सु० टी०—एवं स्वमतेन बन्धमोक्षव्यवस्थामुपपाद्य तद्विषये मतान्त-राण्युपन्यस्यति—**

**अज्ञानं सकलभ्रमोद्भवनकृत्पिण्डेषु सामान्यव-**
**ज्जीवानां प्रतिबिम्बकल्पवपुषां बिम्बोपमे ब्रह्मणि ।**
**विद्वांसं पुरुषं जहाति भजते विद्याविहीनं नरं**
**नष्टानष्टमिवाऽऽत्मपिण्डमधुना जातिस्तथैके जगुः ॥१३२॥**

अज्ञानमिति । व्यावहारिकप्रातिभासिकसमस्तद्वैतभ्रमकारणमज्ञानमेकं तच्च प्रतिबिम्बरूपानन्तजीवाश्रयं बिम्बात्मकब्रह्मविषयमेकैकस्मिञ्जीवे प्रतिव्यक्ति जातिवत्परिसमाप्तम् । तच्चोत्पन्नविद्यं जीवं त्यजति जाति-रिव नष्टां व्यक्तिमनुत्पन्नविद्यं तु नरं भजते जातिरिव विद्यमानां व्यक्ति-मित्येके व्यवस्थां जगुरित्यर्थः ॥ १३२ ॥

अ० टी०—तदेवमविद्यायास्तत्कार्यव्यवहारस्य च विदुषो निवृत्तत्वाद्बन्धमोक्षादिव्यव-स्थाऽपि तं प्रति निवर्तत एवाविदुषस्तु स्वाप्नव्यवहारवत्सा यथानुभवं सिध्यतीत्यविद्यावस्था-यामेव सर्वाऽपि व्यवस्था न विद्यावस्थायामिति स्वमते बन्धमोक्षव्यवस्थोपपादिता तत्रैव

पक्षानन्यानुक्तार्थविमलीकरणायोपन्यसति—**अज्ञानमिति** । सकलभ्रमः साधारणासाधारणरूपः समस्तद्वैतप्रपञ्चस्तस्योद्भवनकृदज्ञानमेकमेव तच्चानेकजीवाश्रयं ब्रह्मविषयकं च । नचैतावता जीवब्रह्मभेदो वास्तवोऽभ्युपगतो भवति बिम्बप्रतिबिम्बयोरिवौपाधिकभेदाभ्युपगमादित्यभिप्रेत्याऽऽह—**जीवानामिति** । बिम्बोपमे ब्रह्मणि विषये प्रतिबिम्बकल्पवपुषां जीवानामाश्रयभूतानामुक्तलक्षणमज्ञानमिति योजना । कथमनेकेष्वेकमज्ञानं प्रवर्तत [इ]त्यत्र दृष्टान्तमाह—**पिण्डेषु सामान्यवदिति** । प्रतिपिण्डं सामान्यमिव प्रतिजीवं कार्त्स्न्येन वर्तत इत्यर्थः । कथमस्मिन्पक्षे बन्धमोक्षव्यवस्थोपपत्तिरिति तत्राऽऽह—**विद्वांसमिति** । यथा नष्टं स्वपिण्डं परित्यज्यानष्ट एव जातिस्तिष्ठति न नश्यति तथा मुक्तं विद्वांसं परित्यज्याज्ञानमप्यविद्वांसममुक्तमाश्रित्य तिष्ठति न नश्यतीत्यर्थः । अधुना व्यवहारकाले जातिरिवेत्यन्वयः ॥ १३२ ॥

**सु० टी०—कथमेकस्यामविद्यायामेकस्य ब्रह्मणोऽनेके प्रतिबिम्बाः कथं वा सत्यामेव तस्यां प्रतिबिम्बत्वापगमात्तेषां मुक्तिः स्यादिति पूर्वास्वरसान्मतान्तरमाह—**

**अज्ञानानि बहून्यसंख्यवपुषो जीवान्मुमुक्षूनपि**
**ज्ञानाज्ञानसमाश्रयाननुयुगं तेषां च निःश्रेयसम् ।**
**मायामीश्वरसंश्रयामनुगमात्संसारसंवर्तिनीं**
**केचिद्दैवविघातनिघ्नमनसः स्वी चक्रुरल्पश्रुताः ॥ १३३ ॥**

अज्ञानानीति । **आध्यात्मिकसुखदुःखकर्तृत्वप्रमातृत्वादिजनकान्यज्ञानानि प्रतिजीवं भिन्नभिन्नानि । एवमसंख्या जीवा ज्ञानिनोऽज्ञानिनश्च तेषां च स्वस्वविद्यया प्रतियुगं निःश्रेयसमिति स्वी चक्रुः । कुतस्तर्हि वियदादेः सर्वसाधारण्यं तत्राऽऽह—**मायामिति । **सर्वानुगतसंसारप्रवर्तनीं मायामीश्वराश्रयां च स्वी चक्रुः । तन्मते च मायायास्तत्त्वज्ञानेन निवृत्त्यसंभवादद्वैतभङ्ग इत्यरुचिं व्यनक्ति—**दैवेति । **दैवविघातो दुरदृष्टप्रतिबन्धस्तेन निघ्नं वशीकृतं मनो येषामित्यर्थः ॥ १३३ ॥**

अ० टी०—पक्षान्तरमाह—**अज्ञानानीति** । केचिदज्ञानानि बहूनि स्वी चक्रुरित्यन्वयः । अस्मिन्पक्षे ज्ञानेनाज्ञानस्य निवृत्तिप्रसिद्धिर्न बाध्यतेऽज्ञानबहुत्वाच्च मुक्तामुक्तव्यवस्था सुस्थेत्यर्थः । असंख्यवपुषो जीवानिति स्वरूपत एव भिन्नाञ्जीवान्स्वी चक्रुरिति प्रत्येकं संबध्यते । मुमुक्षूनपि ज्ञानाज्ञानसमाश्रयान्कांश्चिज्ज्ञानसमाश्रयान् कांश्चिदज्ञानसमाश्रयान्स्वी चक्रुः । तेषां च मुमुक्षूणां प्रतियुगं युगे युग एकैकस्य निःश्रेयसं च स्वी चक्रुः ।

मायां चान्यां जीवाज्ञानेभ्य ईश्वरसंश्रयामेकां स्वी चक्रुः । किंलक्षणामनुगमात्संसारसंवर्तिनीं जीवाज्ञानेष्वनुप्रवेशतत्त्वक्षोभकतया च संसारप्रवर्तिकां तत्त्वज्ञानानाश्यां नित्यामित्यर्थः । अस्मिन्पक्षेऽद्वैतवादपरित्यागापत्तेर्मायाविद्यातद्भेदस्वीकारोऽनर्थक इति पक्षोपन्यासावसर एव तान् कुत्सयति—**दैवेनेति** । भाग्यक्षयेण विघ्नमवशीकृतं मनो येषां ते तथोक्ताः । विघ्नमनस इति पाठे प्रतिबद्धविवेकबुद्धय इत्यर्थः । एवं पक्षस्वीकारे हेतुगर्भविशेषणम्—**अल्पश्रुता इति** ॥ १३३ ॥

**सु० टी०—अत एवारुचेर्मतान्तरमाह—**

**आकाशे विहगोऽस्ति नास्ति च यथा तद्वत्परब्रह्मणि**
**स्वच्छे चिद्वपुषि स्वभावविमलेऽसङ्गे शिवे शाश्वते ।**
**निर्भेदेऽनुदयव्ययेऽनवयवे विद्या भवेन्नो भवे-**
**दित्येवं निरवद्यमाहुरपरे पक्षव्यवस्थार्थिनः ॥ १३४ ॥**

**सु० टी०—आकाश इति । यदैवैकेनैकस्मिन्नभसि विहगो दृश्यते तदैव तत्र स्थानान्तरेऽन्येन विहगाभावो नभसि चांशभेदाभावादवश्यमेकस्यैकत्र भावाभावावङ्गीकार्यावेवं ब्रह्मण्यपि स्वच्छचिद्रूपेऽविद्यायाः सत्त्वासत्त्वाविरोधात्तदेवाविद्याश्रयः संसरति तदेव च तच्छून्यं क्वचिन्मुक्तमित्येवं केचिद्व्यवस्थार्थिनो वदन्तीत्यर्थः ॥ १३४ ॥**

अ० टी०—पक्षान्तरमाह—**आकाश इति** । यथाऽऽकाश एकस्मिन्नेव विहगे सद्भावाभावौ तद्वत्परब्रह्मण्येकस्मिन्नेवाविद्या भवेन्नो भवेदित्येवं निरवद्यमविद्याया दुर्घटत्वस्यालंकारत्वादेकत्र भावाभावविरोधदोषहीनमद्वैतपक्षपरित्यागप्रसङ्गदोषहीनं चैतन्यमिति मुक्तामुक्तपक्षव्यवस्थार्थिन आहुरिति योजना । ब्रह्मविशेषणानामेषोऽर्थः स्वच्छे निर्मल आदर्श इवान्यकृतं नैर्मल्यं न भवतीत्याह—**स्वभावविमल इति** । तत्र हेतुः—**चिद्वपुषीति** । स्वभावविमलत्वेऽप्यागन्तुकमलयोगशङ्कां वारयति—**असङ्ग इति** । तत्साधयति—**शिव इति** । निर्गुण इत्यर्थः । तत्र हेतुः—**शाश्वत इति** । अनित्यं हि सगुणं सत्सङ्गि भवति । नेदं ब्रह्म तथेत्यर्थः । शाश्वतत्वं साधयति—**अनुदयव्यय इति** । सर्वस्योदयव्ययसाक्षित्वादधिष्ठानत्वाच्च स्वत उदयनाशशून्यमित्यर्थः । तथाऽप्यविद्याभावाभावयोरेकत्र विरोधात्तदाश्रयत्वाय कथंचिद्भेदोऽभ्युपेय इति चेन्नेत्याह—**निर्भेद इति** । स्वभावतो निर्भेदत्वं साधयति—**अनवयव इति** । भेदाभावेऽप्याकाश इव भावाभावाश्रयत्वं न विरुध्यत इति भावः ॥ १३४ ॥

सु० टी०—अन्ये त्वेकस्यैकत्र भावाभावौ द्वारं विना दुर्घटाविति पश्यन्त एवं स्वी चक्रुरित्याह—

शुद्धे वस्तुनि यद्यपि प्रविशति ध्वान्तं मनः कारणं
स्वीकृत्यैव तथाऽप्युपाधिमपरं ब्रह्मस्वरूपे विशेत् ।
तच्चान्तःकरणं सुसूक्ष्मवपुषा तिष्ठद्बहिः सर्वदा
चैतन्ये तमसो नियामकमिति स्वी चक्रुरन्ये पुनः ॥१३५॥

शुद्ध इति । कारणं कारणत्वेन कल्पितं यत् ध्वान्तमज्ञानं तद्यद्यपि शुद्ध एव वस्तुनि प्रविशति तथाऽपि निरंशे तस्मिन्नज्ञानस्य युगपद्भावाभावविरोधादवच्छेदकं मनोलक्षणमुपाधिं कोटिशः सृष्ट्वा तद्द्वारीकृत्य प्रविशेदिति संबन्धः । तच्च यद्यपि सुषुप्त्यादौ लीनं भवति तथाऽपि सूक्ष्मात्मना तिष्ठति । तच्च नाज्ञानाश्रयकोट्यन्तर्गतं तदा हि मनो विशिष्टेऽज्ञानं वर्तेत । न च तत्संभवति कार्ये कारणस्यावृत्तेः । किं तु दृतिहरिशब्दार्थे पशुत्वमिव बहिरेव तिष्ठद्ब्रह्मण्यज्ञानं संबन्धस्य नियामकमित्यतो यत्र मनोनाशस्तत्र नाज्ञानमिति व्यवस्था घटत इत्यर्थः ॥ १३५ ॥

अ० टी०—एकत्रैकस्यैव भावाभावौ निर्द्वारं विरुद्धाविति मन्यमानानां मतमाह—**शुद्धे वस्तुनीति** । यद्यपि ध्वान्तमज्ञानं शुद्धे वस्तुनि प्रविशति तथाऽप्युपाधिमपरं मनोरूपं कारणं द्वारं स्वीकृत्यैव ब्रह्मस्वरूपे विशेन्न निर्द्वारमित्यक्षरार्थः । अज्ञानं हि विक्षेपस्वभावत्वाद्ब्रह्मणि प्रविशदेवानेकानि मनांसि सृजति । तानि चोपाधिमात्रेण स्थितानि द्वारीकृत्य ब्रह्माश्रितं जायत इत्युक्तं भवति । एवंसति व्यवस्थाऽपि सुस्थेत्याह—**तच्चेति** । मनसोऽज्ञानाश्रयकोटिनिविष्टतया न तमोनियामकत्वं किं तु ततो बहिस्ताटस्थ्येन तिष्ठत् पशुत्वमिव दृतिहरिशब्दार्थं नियमयदज्ञानं ब्रह्मणि नियमयतीत्यर्थः । सुसूक्ष्मवपुषा सर्वदा तिष्ठदिति मनसोऽविनश्वरत्वमाह । तथा च ब्रह्मण्यज्ञानस्य मनोद्वारेणैव निवृत्त्यनिवृत्ती अपीत्यविरोधात्सुस्था व्यवस्थेति भावः ॥ १३५ ॥

सु० टी०—केचित्तु न तावत्स्वतन्त्रमज्ञानं किं तु चैतन्ये स्थित्वा मनः सृजति मनोद्वारा च चैतन्येन संबध्यत इत्यन्योन्याश्रयं पश्यन्त इत्थं कल्पयन्तीत्याह—

अज्ञानि ब्रह्म बुद्धीरनुसरति ततः स्थावरं जङ्गमं च
स्वाज्ञानादेव भूत्वा क्वचिदवगतितो मुक्तमन्यत्र बद्धम् ।

तच्चाज्ञानं विनष्टं स्थितमथ च तदेवांशभेदोपपत्ते-
रेवं सर्वव्यवस्था परमपुरुषगा जाघटीतीति केचित् ॥ १३६ ॥

अज्ञानीति । अनाद्येकाज्ञानसंबद्धमेव ब्रह्म व्यवस्थितानेककार्यानुरोधादज्ञानकार्यभूता बुद्धीरनुसरति तासु प्रतिबिम्बते । ततश्च स्वाज्ञानादेव स्थावरजङ्गमादिभावं बुद्धिगताभासेन प्राप्य क्वचिदधिकारिशरीरे साधनसंपत्त्या ब्रह्मज्ञानोत्पत्तेरुपादानाज्ञानांशतत्कार्यभूतदेहद्वयनिवृत्त्या मुक्तं भवत्यन्यत्र च तदभावेन बद्धमिति । नन्वज्ञानस्य निरंशस्य कुतोंऽशकल्पनेत्यत्राऽऽह—तच्चेति । अज्ञानस्यानिर्वाच्यत्वेन सांशत्वप्रयुक्तदोषासंभवादेकाज्ञानस्यापि नाशस्थितिभ्यां परमे पुंसि मुक्तामुक्तव्यवस्था घटत इति । अत्र चैकैकस्याज्ञानांशस्यैकैकजीवोपाधित्वेंऽशान्तराणामंशिनश्चादृश्यत्वं स्यात्स्वाविद्यातत्कार्यभिन्नस्य स्वदृश्यत्वायोगात् । अतस्तत्तद्बुद्धिकारणत्वेनाज्ञानस्यांशभेदव्यपदेशः । तादृगंशद्वारा च सर्वांशोपेतमज्ञानं तत्तद्बुध्युपाधिके ब्रह्मणि भासते । एकस्यां बुद्धौ विद्योदये तत्कारणांशद्वारा तद्भिन्नं सर्वं निवर्तते । अंशान्तरेण च तिष्ठतीत्ययमेवानेकमुमुक्षुपक्ष इत्याचार्येण न दूष्य इति विश्वतीर्थीयकृतः ॥ १३६ ॥

अ० टी०—यदि मनःसृष्टाज्ञानस्य तद्द्वारा चैतन्ये प्रवेशस्तदा स्यादितरेतराश्रयता यतोऽस्वतन्त्रस्याज्ञानस्य चैतन्यसंबन्धं विना मनःसर्जनासंभव इति मनसश्च सूक्ष्मरूपेण सदा सत्त्वे तस्यानादित्वासंभवदोषं मन्वानानां पक्षमाह—**अज्ञानि ब्रह्मेति** । अज्ञानमस्मिन्ननादितया सहजशक्तिरूपमस्तीत्यज्ञानि ब्रह्म चिन्मात्रमिति यावत् । तद्बुद्धीरनुसरति । एतदुक्तं भवति—चिन्मात्रगतमेव सदज्ञानं बुद्धीर्मनांसि च सृजति सृष्ट्वा च तत्र तत्रानुगतं वर्तते । ब्रह्म चाज्ञानसंबद्धं सत्ता बुद्धीरनुसरति तासु प्रतिबिम्बभावमापद्यत इति । तत एवं परस्परान्वयात्स्वाज्ञानसृष्टं स्थावरं जङ्गमं च सर्वं भूतभौतिकलक्षणं स्वाज्ञानादेव भूत्वा स्वाज्ञानकृतबुद्धिगताभासद्वारेण तत्तद्भावमिवाऽऽपद्य क्वचिदुपाधाववगतितस्तत्त्वज्ञानोदयात्तदेव ब्रह्म मुक्तं भवति । अन्यत्रावगत्युदयरहिते बद्धं यथापूर्वं संसरदेव भवति । तच्चाज्ञानं तस्मिन्नेवमुक्ते ब्रह्मणि विनष्टं स्वकार्येण समस्तद्वैतेन सह बाधितं सर्वात्मना भवति । अथ च तदेवाज्ञानं स्थितं तस्मिन्नेव ब्रह्मणि स्वकार्यं संसारमापादयद्वर्तते । कुत एवं स्यादित्यत आह—**अंशभेदोपपत्तेरिति** । अयमर्थः—यस्यां बुद्धौ विद्योत्पत्तिस्तदुपादानांश एवाज्ञानस्यैकोंऽशस्तद्द्वारा बुद्धिनाशात्सर्वात्मना सह कार्येणाज्ञानं नश्यति । उपाध्यन्तरोपादानांशद्वारेण तु तिष्ठतीत्येवमंशभेदो विवक्षितो न पुनरज्ञान एकदेशस्यैव

नाशो नाशान्तरस्यावस्थानमित्यंशभेदविवक्षा । तच्चाज्ञानं विनष्टं स्थितमथ च तदेवेत्येकत्वावधारणविरोधादिति । एवंसति सर्वव्यवस्थेत्युक्तार्थम् ॥ १३६ ॥

सु० टी०—तत्रापि पक्षेऽज्ञानस्यानन्तात्वयवानन्तप्रतिबिम्बकल्पनागौरवान्मतान्तरमाह—

बाह्याध्यात्मिकवस्तुजातजननी माया हरेर्बन्धिनी
शक्तिर्दाशकजालवत्प्रसरणं प्राप्नोत्यविद्यावतः ।
जीवान्संकुचतीच्छया भगवतः सत्याऽस्तु मिथ्याऽथ वा
संकोचश्च विलक्षणश्च भवतः स्वाभाविकावित्यपि ॥१३७॥

बाह्येति । तेषां बाह्याध्यात्मिकसाधारणासाधारणप्रपञ्चद्वयस्यापि जननीश्वरमायैव जीवाज्ञानानां तु भ्रान्तितद्वासनारूपत्वाद्भगवत्तत्त्वावरकत्वमेव न विक्षेपकत्वमिति द्वितीयपक्षाद्विशेषः । सा च माया बन्धनी जीवसंसारकारणं दाशकजालवन्मत्स्यघातकरज्जुवितानवदविद्यावतो जीवान्प्रति प्रसरति जगत्परिणत्या बध्नाति । भक्त्याद्यावर्जितस्य भगवतः प्रसन्नस्येच्छावशाद्विदुषः [ * प्रति संकुचति तान्न बध्नाति जालमिव दाशकेच्छया । ननु सा किं सत्याऽसत्या वा । आद्ये न ज्ञाननिवर्त्याऽन्त्ये ] सैवानाद्यज्ञानमिति न तद्भेद इत्यत्राऽऽह—सत्येति । उभयथाऽपि तन्निवृत्तेर्भगवदधीनत्वान्न सत्यत्वादावभिनिवेष्टव्यमित्यर्थः । संकोचविकासयोर्विकारत्वान्मिथ्यात्वे कुतः संसारसत्यतेति चेद्दोषाजन्यत्वादित्याह—संकोचश्चेति । विलक्षणो विकासः ॥ १३७ ॥

अ० टी०—मतान्तरमाह—बाह्याध्यात्मिकेति । अज्ञानानि बहूनीति पूर्वोक्ते द्वितीयपक्षे साधारणप्रपञ्च ईश्वरमायाकृतोऽसाधारणस्तु जीवाविद्याकृत इति मतम् । अत्र तु हरेः परमात्मनो मायाशक्तिर्बाह्याध्यात्मिकवस्तुजातजननी साधारणासाधारणसर्वप्रपञ्चकारणमिति विशेषः । जीवाज्ञानानि तु तेषां भगवत्तत्त्वावरकाण्येव केवलं न विक्षेपकराणीत्यर्थादुक्तं द्रष्टव्यम् । सा च मायाशक्तिरविद्यावतो जीवान्प्रति भगवदिच्छया दाशकानां कैवर्तानां जालवत्प्रसरणं विकासं प्राप्नोतीति तेषां बन्धिनी बन्धकरी भवति भगवदिच्छया जगद्रूपपरिणामं प्राप्ता सती जीवानविदुषो बध्नातीत्यर्थः । भगवत एवेच्छयाऽर्थाद्विदुषो जीवान्प्रति संकुचति तान्प्रति प्रपञ्चमकुर्वती निवर्तत इत्यर्थः । सा च माया सत्या वा

* नायं ग्रन्थः क. पुस्तके ।

१ क. बन्धनी ।

मिथ्या वाऽस्तु नास्माकं तत्राभिनिवेशोऽस्ति परं तूक्तव्यवस्थया तस्याः संकोचश्च विलक्षणश्च विकासश्च भवत एवेश्वरानुग्रहाद्विद्वत्सु संकोचो विद्याभावादविद्वत्सु विकासश्चेत्यर्थः । तौ च संकोचविकासौ स्वाभाविकौ केवलमीश्वरेच्छानिबन्धनौ न विद्यानिबन्धनः संकोचो नाप्यविद्यानिबन्धनो विकास इत्यर्थः ॥ १३७ ॥

**सु० टी०—बन्धमिथ्यात्वस्य भगवतोऽज्ञानाश्रयत्वस्य च साधितत्वान्नेदमपि सम्यगिति मतान्तरमाह—**

**संस्कारभ्रमसंततिं प्रतिनरं भिन्नां परब्रह्मणि**
**स्वी चक्रुर्विषये प्रवाहवपुषाऽनादिं तमः केचन ।**
**तामुच्छिद्य समुच्चयेन घटते मोक्षाय कश्चिन्नरः**
**कश्चित्तद्विरहेण संसरति ना जीवाश्रया सेति च ॥१३८॥**

संस्कारेति । **ते हि वाक्योत्थज्ञानप्रागभावरूपैकाऽविद्या मिथ्याज्ञानतत्संस्काररूपा चान्या भावरूपा । सा च प्रवाहरूपेणानादिः प्रतिजीवं भिन्ना । तयोश्च नाग्रहणात्मकाज्ञानजन्यः संस्कारः किं तु पूर्वपूर्वभ्रमतत्संस्कारान्निमित्तादण्वादेरात्मनश्चोपादानाद्भवति । तां चाविद्यां कर्मसमुच्चितेन ज्ञानेनोच्छिद्य कश्चिन्मोक्षाय लिङ्गशरीरप्रलयाय घटते । कश्चित्तु समुच्चयाभावेन संसरति । सा च जीवाश्रया ब्रह्मविषयेति न ब्रह्मणोऽज्ञानित्वं नाप्यहमज्ञ इत्यनुभवविरोध इति स्वी चक्रुरित्यर्थः ॥ १३८ ॥**

अ० टी०—मतान्तरमाह—**संस्कारभ्रमेति** । भ्रमो विक्षेपः संस्कारस्तज्जन्यस्तज्जनकश्च संस्कारभ्रमयोः संततिः प्रवाह एवैवाविद्या नान्या तदुपादानभूता दण्डायमानाऽविद्याऽस्तीत्येतदस्य मतम् । तां प्रतिनरं प्रतिजीवं भिन्नां प्रवाहवपुषाऽनादिं परब्रह्मणि विषये तमोऽज्ञानं स्वी चक्रुः केचन मण्डनमिश्रमतानुसारिण इत्यर्थः । यद्वा परब्रह्मणि विषये यत्तमः प्रसिद्धं जीवानां तां संस्कारभ्रमसंततिं केचन स्वी चक्रुरिति योजना । तत्र कश्चिन्नरः समुच्चयेन ज्ञानकर्मसमुच्चयानुष्ठानेन साधनेन तामविद्यामुक्तरूपामुच्छिद्य मोक्षाय घटते । कश्चिन्ना जीवस्तद्विरहेणोक्तसाधननिष्ठाभावात्संसरति । सा चाविद्या जीवाश्रयेति च तन्मतमित्यर्थः ॥ १३८ ॥

**सु० टी०—अत्र चासङ्गकूटस्थस्य प्रत्यगात्मनो भ्रमतत्संस्काराद्यसंभवात्समुच्चयस्य चतुर्थे निरस्यत्वाच्चात्यन्तायुक्तत्वं हृदि कृत्वैवाऽऽद्यं पक्षद्वयं दूषयति—**

अज्ञस्तावत्प्रत्यगात्माऽहमज्ञ
इत्येवं नः सिध्यति स्वप्रकाशात् ।
अज्ञातं तु ब्रह्म सिध्येत्कुतो वः
सम्यग्ज्ञानाद्भ्रान्तितः स्वप्रकाशात् ॥ १३९ ॥

अज्ञ इति । अज्ञानां जीवानां ब्रह्मविषयमज्ञानमिति यदुक्तं तत्र जीवस्य स्वसंवेद्यत्वेन स्वस्य स्वाज्ञानस्य च सिद्धावपि ब्रह्मरूपं तस्याज्ञातत्वं च भवतां कुतः सिध्येत् किं सम्यग्ज्ञानाद्घटादिवदुत भ्रान्तितः स्वप्नादिवत्किं वा स्वप्रकाशादात्मवदित्यर्थः ॥ १३९ ॥

अ० टी०—एवमुद्भाविताः सप्त पक्षास्तेष्वाद्ये पक्षद्वये जीवानां ब्रह्मविषयमज्ञानमिति यन्मतं तत्तावदसंगतमित्याह—अज्ञस्तावदिति । स्वप्रकाशात्स्वयंप्रकाशज्ञानरूपत्वात्प्रत्यगात्माऽहमज्ञ इति तावत्सिध्यति नोऽस्माकं नात्र विवाद इति शेषः । स्वयं भासमानः प्रत्यगात्मा स्वाश्रितामविद्यां स्वचैतन्याभासखचितां कुर्वन्नहमज्ञ इति स्वस्याज्ञत्वमनुभवतीत्यर्थः । अज्ञातं तु ब्रह्म स्वरूपेणाज्ञातत्वेन च नोऽस्माकं कुतः सिध्येदिति वक्तव्यम् । कुतःशब्दसूचितं विकल्पं स्फुटयति—सम्यग्ज्ञानादिति । किं सम्यग्ज्ञानाद्भ्रान्तितो वा स्वप्रकाशाद्वेति वाच्यमित्यर्थः ॥ १३९ ॥

सु० टी०—आद्ये दोषमाह—

सम्यग्ज्ञानाद्ब्रह्मणः सिद्धिपक्षे
जाड्यं तस्य स्याद्घटादेर्यथैव ।
सम्यग्ज्ञानाद्ब्रह्मणोऽज्ञानसिद्धौ
तस्यापि स्यात्सत्यता तद्वदेव ॥ १४० ॥

सम्यगिति । ब्रह्मणोऽज्ञातस्य । जाड्यमिति । ज्ञानविषयस्य जडत्वनियमादित्यर्थः । अज्ञानस्यापि ततः सिद्धौ तस्य सत्यत्वापत्तिरित्याह—सम्यग्ज्ञानादिति ॥ १४० ॥

अ० टी०—तत्राऽऽद्ये कल्पे दोषद्वयमाह—सम्यग्ज्ञानादिति । वेदनगोचरस्य जडत्वनियमादित्यर्थः । ब्रह्मणोऽज्ञानसिद्धौ । अज्ञानत्वसिद्धौ तस्याज्ञानस्यापि प्रमाणसिद्धत्वात्सत्यता स्यात् । तद्वद्ब्रह्मवदेवेत्यर्थः ॥ १४० ॥

सु० टी०—द्वितीये त्वाह—

भ्रान्तिज्ञानाद्ब्रह्मणः सिद्धिपक्षे
तस्यापि स्यात्कल्पितत्वं तमोवत् ।
अज्ञातं चेद्ब्रह्म नः स्वप्रकाशं
मा भाषिष्ठा नानुभूतिस्तथा नः ॥ १४१ ॥

भ्रान्तिज्ञानादिति । भ्रान्तिविषयस्य बाध्यतया ब्रह्मणोऽपि कल्पितत्वमज्ञानादेरिव स्यादित्यर्थः । तृतीयं दोषमाह—अज्ञातमिति । जीवातिरिक्तस्य सर्वज्ञब्रह्मणोऽस्मदाद्यनुभवविरुद्धं स्वप्रकाशत्वं मा वादीरित्यर्थः ॥ १४१ ॥

अ० टी०—द्वितीयं दूषयति—**भ्रान्तिज्ञानादिति** । तृतीयं प्रत्याह—**अज्ञातं चेदिति** । यद्येवं तदा तथाऽनुभूयेत तदभावादज्ञातं ब्रह्म स्वप्रकाशमिति मा भाषिष्ठा मा मृषा वादीरित्यर्थः ॥ १४१ ॥

सु० टी०—परेषां ब्रह्मणोऽज्ञातत्वे ये दोषा उक्तास्ते मायावित्वेऽपि तुल्या इत्याह—

अज्ञातत्वे यानवोचाम दोषान्
मायावित्वे ब्रह्मणस्तानवेहि ।
मिथ्याज्ञानात्स्वप्रकाशात्प्रमाणा-
त्संसिद्धिः स्यात्तस्य तत्कथ्यतां नः ॥ १४२ ॥

अज्ञातत्व इति । तत्र तानेव विकल्पानाह—मिथ्याज्ञानादिति ॥ १४२ ॥

अ० टी०—द्वितीयपक्षे यन्मायामीश्वरसंश्रयामिति ब्रह्मणो मायावित्वमुक्तं जीवानां तत्सिद्धिरप्युक्तन्यायेन निरसनीयेत्यत्रापि पूर्वविकल्पान्संचारयति—**अज्ञानित्व इति** । तस्य ब्रह्मणस्तन्मायावित्वमित्यर्थः ॥ १४२ ॥

सु० टी०—तानेव दोषानाह—

मिथ्याज्ञानाद्ब्रह्मणः सिद्धिपक्षे
मायेव स्यात्कल्पितं तच्च तद्वत् ।
मानादिष्टं ब्रह्म मायावि चेद्वो[3]
मायायाः स्यात्सत्यता जाड्यमस्य ॥ १४३ ॥

---

१ क. ज्ञानं चे° । २ क. °ह्मणः स्वः । ३ ग. °चे द्वा मा ।

मिथ्येति । **मायाया दृश्यत्वेन मिथ्यात्वसिद्धेर्दृष्टान्तत्वम् । अन्त्ये दोष-माह**—मानादिति । **मायाविशिष्टस्य मानविषयत्वे विशेषणस्य सत्यत्वं विशेष्यस्य ब्रह्मणो जडत्वं च स्यादित्यर्थः ॥ १४३ ॥**

अ० टी०—विकल्पक्रमेण दूपयति—**मिथ्याज्ञानादिति** । अस्य ब्रह्मणः॥१४३॥

**सु० टी०—द्वितीये त्वाह—**

**तन्मायावि ब्रह्म चेत्स्वप्रकाशं**
**मायाऽपि स्याद्ब्रह्मवत्स्वप्रकाशा ।**
**मायां पश्येद्ब्रह्म चेत्स्वप्रकाशं**
**तत्रापि स्यात्स्वानुभूत्या विरोधः ॥ १४४ ॥**

तन्मायावीति । **विशिष्टस्य स्वप्रकाशत्वे मायाया अपि स्वप्रकाशत्वेन चिद्रूपत्वादमायात्वमित्यर्थः । ब्रह्म स्वप्रकाशं माया तु तद्भास्या चेत्त-र्ह्यनुभवविरोध इत्याह**—मायामिति ॥ १४४ ॥

अ० टी०—तृतीयं कल्पं प्रत्याह—**तन्मायावीति** । विशिष्टस्य स्वप्रकाशत्वे विशेषणस्यापि तत्प्रसङ्गादित्यर्थः । मायाया अपि स्वप्रकाशत्वे चिद्रूपत्वात्सत्यत्वाच्च माया-त्वव्याकोप इति द्रष्टव्यम् । ब्रह्मण एव स्वप्रकाशत्वं मायायास्तु तद्वेद्यतेति स्वीकारान्नोक्त-दोष इति चेत्तत्राऽऽह—**मायां पश्येदिति** । अनुभवविरोधान्नेयं कल्पना प्रामाणि-कीत्यर्थः ॥ १४४ ॥

**सु० टी०—विरोधमेव व्यनक्ति—**

**आत्मा मूढः स्वप्रकाशो यथाऽयं**
**नैवं मायि ब्रह्म नः स्वप्रकाशम् ।**
**अज्ञादन्यद्ब्रह्म चेत्स्वप्रकाशं**
**द्वे विस्पष्टे स्वप्रकाशे स्फुरेताम् ॥ १४५ ॥**

आत्मेति । **मूढोऽज्ञः । नाऽऽत्मैव स्वप्रकाशः किं तु तदविविक्ततया ब्रह्मापीति चेत्तत्राऽऽह**— अज्ञादन्यदिति । **तर्ह्यविवेक एव दुर्घट इत्याह**— द्वे इति । **अन्यत्वे तत्प्रकाश्यत्वे च स्पष्टमेकत्वमनन्यत्वे स्वस्यैवाज्ञत्वं मायावित्वं फलितमिति भावः ॥ १४५ ॥**

अ० टी०—अनुभवविरोधमेव स्पष्टयति—**आत्मा मूढ इति** । ननु कथं न ब्रह्म स्वप्रकाशं स्वप्रकाशात्माविविक्ततयाऽस्यापि स्वप्रकाशत्वेन स्फुरणोपपत्तेरिति चेत्तत्राऽऽह—

**अज्ञादन्यदिति** । स्वप्रकाशं ब्रह्माज्ञादन्यदनन्यद्वा । तत्राऽऽद्ये दोषमाह—**द्वे इति** । तथाऽज्ञादन्यत्वे स्वप्रकाशत्वे च भेदस्य स्फुटत्वान्नाविवेककल्पनावकाश इति भावः । द्वितीये स्वात्मन एवाज्ञातत्वं मायावित्वं चोक्तं स्यात्तत्र च ब्रह्मान्यद्वेति स्वपक्षक्षतिरिति द्रष्टव्यम् ॥ १४५ ॥

**सु० टी०—ब्रह्मणो जीवभिन्नस्याज्ञातत्वं निरस्य तस्य जीवभेदमपि विकल्प्य दूषयति—**

**ज्ञायन्ते चेद्ब्रह्मणा जीवभेदा**
**जाड्यं तेषां कुड्यवन्निर्विवादम् ।**
**न ज्ञायन्ते ब्रह्मणा चेत्तदानीं**
**सर्वज्ञत्वव्याहतिर्दुर्निवारा ॥ १४६ ॥**

ज्ञायन्ते चेदिति । **ब्रह्मणा स्वस्माज्जीवानां तेषामन्योन्यं भेदाश्च यदि ज्ञायन्ते तदा तेषां भिन्नत्वेन दृश्यत्वादनात्मत्वं न चेज्ज्ञायन्ते ब्रह्मणः सार्वज्ञहानिरित्याह—**नेति ॥ १४६ ॥

अ० टी०—यद्यपि जीवा ब्रह्म तन्मायावित्वं च न जानीयुस्तथाऽपि ब्रह्म जीवानज्ञांस्तद्भेदं च जानीयादिति ब्रह्मणो विविक्तजीवसिद्धौ जीवविविक्तब्रह्मसिद्धिरपि भविष्यतीत्याशङ्काऽपि न कार्या तत्राप्युक्तविकल्पदूषणप्रसारादित्याह—**ज्ञायन्ते चेदिति** । स्पष्टोऽर्थः ॥ १४६ ॥

**सु० टी०—ब्रह्मणो जीवाः स्वभिन्नतया स्वप्रकाशा इति चेन्न तद्भेदस्य स्वप्रकाशत्ववेद्यत्वयोर्द्वयोरपि दूष्यत्वादित्याह—**

**जीवा एते स्वप्रकाशस्वभावा**
**निर्भासन्ते ब्रह्मणश्चेद्विभक्ताः ।**
**तेषां भेदः स्वप्रकाशो न वा स्या-**
**द्दोषं ब्रूमो दुर्निवारं द्विधाऽपि ॥ १४७ ॥**

**जीवा एत इति** ॥ १४७ ॥

अ० टी०—ब्रह्मणो भिन्नो जीवः स्वयंप्रकाशतया सिद्ध इत्यतो नोक्तदोष इति चेत्तत्राऽऽह—**जीवा एत इति** । ब्रह्मणो विभक्ताः सन्तो निर्भासन्ते चेदित्यन्वयः । तर्हि विभागस्तेषां स्वप्रकाशो न वेति वक्तव्यमिति विकल्पयति—**तेषां भेद इति** । दूषयति—**दोषं ब्रूम इति** ॥ १४७ ॥

सु० टी०—तत्राऽऽद्यं दूषयति—

तेषां भेदः स्वप्रकाशो यदीष्टः
सत्यत्वं स्यात्तस्य तेषां तथैव ।
वेद्योऽभीष्टस्तद्विभागो यदि स्या-
त्तानज्ञात्वा तद्विभागो न वेद्यः ॥ १४८ ॥

तेषामिति । ततश्च भेदस्य सत्यत्वान्नाद्वैतसिद्धिरिति भावः । द्वितीयं दूषयति—वेद्य इति । तान्धर्मिप्रतियोगिनो जीवान् । ततश्च तेषामपि वेद्यत्वाज्जाड्यमित्यर्थः ॥ १४८ ॥

अ० टी०—दुर्निवारदोषमेवाऽऽह—तेषामिति । तस्य भेदस्य चिदात्मवत्सत्यत्वं स्यात्तेषां जीवानामपि तथैव सत्यत्वं स्यात् । यद्यपि जीवाः स्वरूपतः सत्यास्तथाऽपि जीवत्वोपाधिवैशिष्ट्येन न सत्याः । स्वप्रकाशत्वे तु जीवत्वोपाधिरपि सत्यः स्यात्तथा च ज्ञानेन तन्निवृत्त्यभावादनिर्मोक्षप्रसङ्गो जीवभेदस्य च सत्यत्वेऽद्वैतमतहानिरिति भावः । द्वितीयं कल्पमनूद्य दूषयति—वेद्योऽभीष्ट इति । भेदस्य धर्म्यादिज्ञाननिरूप्यत्वात्तस्य वेद्यत्वे तद्विशेषणीभूतभेदिनामपि जीवानां वेद्यता वक्तव्या तदा च तेषां जडत्वादिप्रसङ्गो दुर्निवार इत्यभिप्रेत्याऽऽह—तानज्ञात्वेति ॥ १४८ ॥

सु० टी०—एवं जीवस्यापि जीवान्तरसिद्धिर्दूषणीयेत्याह—

जीवाः सर्वे त्वां प्रति प्रस्फुरन्तः
सम्यग्ज्ञानात्प्रस्फुरन्ति स्वतो वा ।
यद्वा मिथ्याज्ञानसामर्थ्यतोऽमी
पक्षः कस्ते रोचते ब्रूहि तन्मे ॥ १४९ ॥

जीवा इति । उक्ता एव विकल्पाः ॥ १४९ ॥

अ० टी०—यथेश्वरस्य जीवतद्भेदज्ञानमुक्तन्यायासहिष्णुत्वाद्दुर्वचं तथा जीवानामपि जीवान्तरतद्भेदज्ञानं दुःशकमित्याह—जीवाः सर्वे इति । स्वतो वा स्वप्रकाशाद्वेत्यर्थः ॥ १४९ ॥

सु० टी०—तान्क्रमेण दूषयति सम्यग्ज्ञानादिति द्वाभ्याम्—

सम्यग्ज्ञानाज्जीवभेदप्रसिद्धा-
वद्वैतत्वं ब्रह्मणो न प्रसिध्येत् ।

जीवाः सर्वे मां प्रति स्वप्रकाशा

इत्युक्तिस्ते स्वानुभूत्या विरुद्धा ॥ १५० ॥

सम्यगिति । प्रामाणिकस्य जीवभेदस्य सत्यत्वादित्यर्थः । द्वितीये त्वाह—जीवा इति । अन्येषामपि तद्वत्सर्वजीवानुभवप्रसङ्गादित्यर्थः ॥१५०॥

अ० टी०—विकल्पान्क्रमेण दूषयति—सम्यग्ज्ञानादिति । अद्वैतत्वं ब्रह्मणस्तःबाध्यमभीष्टमिति शेषः । द्वितीयेऽनुभवविरोधमाह—जीवा इति ॥ १५० ॥

सु० टी०—तृतीये त्वेक एव जीव इत्याह—

मिथ्याज्ञानाज्जीवभेदप्रसिद्धौ

सम्यग्ज्ञानाद्बाध एवाभ्युपेयः ।

मिथ्याज्ञानाद्रज्जुसर्पः प्रसिद्धः

सम्यग्ज्ञानात्तस्य बाधोऽपि सिद्धः ॥ १५१ ॥

मिथ्येति । तेषां बाध्यत्वेन तदर्थं बन्धमोक्षव्यवस्थोक्तिरपि वृथेत्यर्थः ॥ १५१ ॥

अ० टी०—तृतीयं निराकुर्वन्नाह—मिथ्याज्ञानादिति । सम्यग्ज्ञानबाध्यत्वे च तेषां मिथ्यात्वाद्बन्धमोक्षभाक्त्वं न स्यात्तथा च तद्व्यवस्थास्थापनाय पक्षोद्भावनं तव निरर्थकमिति भावः । जीवाः सम्यग्ज्ञानबाध्या मिथ्याज्ञानसिद्धत्वाद्रज्जुसर्पवदिति व्याप्तिमाह—मिथ्याज्ञानादित्युत्तरार्धेन ॥ १५१ ॥

सु० टी०—एवं जीवानां ब्रह्मविषयाज्ञानाश्रयत्वं ब्रह्म तु मायावीत्यस्मिन्पक्षे निरस्तेऽस्तु तर्हि ब्रह्मण्येवाज्ञानं तत्रैव तस्य स्थितिनाशाभ्यां बन्धमोक्षाविति तृतीयः पक्ष इति चेत्तत्राऽऽह—

एकोपाधावेकवस्तुप्रसिद्धौ

भावाभावौ नेक्षितौ क्वापि लोके ।

पक्ष्यादीनामस्तिता नास्तिता च

व्योम्न्येकस्मिन्नप्यवच्छिन्न एव ॥ १५२ ॥

एकेति । एकस्मिन्नधिकरण एकवस्तुनः प्रसिद्धौ सत्यां तस्यैव तत्र भावाभावौ न दृष्टौ विरोधादित्यर्थः । दृष्टावेकस्मिन्निर्भागेऽपि व्योम्नि पक्षिणां भावाभावाविति चेन्नेत्याह—पक्ष्यादीनामिति । तावपि नैकस्मिन्नाकाशेऽपि तु किंचिदुपाध्यवच्छिन्नकल्पिततत्प्रदेश एवेत्यर्थः ॥ १५२॥

अ० टी०—एवं पक्षद्वयनिराकरणेन पारिशेष्यात्प्रत्यगात्मैक एव स्वप्रकाशतया सिध्यति तदास्पदश्चायं प्रत्यगविद्याविलसितो जीवेश्वरजगद्भेदभ्रमः प्रत्यक्चिदाभास्यतया सिध्यतीत्यभ्युपेयमतश्च जीवानामज्ञानित्वं ब्रह्म च तदज्ञानविषयस्तच्च मायावीत्यादिकल्पना न संभवतीत्युपपादितमिदानीं ब्रह्मण्येवाज्ञानमेकं च तद्ब्रह्मण्येवैकस्मिंस्तस्य स्थितिनाशाभ्यां बन्धमोक्षव्यवस्थेति तृतीयः पक्षो य उत्प्रेक्षितः सोऽपि न युक्तिसह इत्याह—**एकोपाधाविति**। एकस्मिन्नविकरण इत्यर्थः। एकवस्तुनः प्रतियोगिभूतस्य संबन्धितया प्रसिद्धौ भावाभावौ लोके क्वापि नेक्षिताविति योजना। न हि द्वारभेदं विनैकस्मिन्नेकस्यैकदा भावाभावौ क्वचिद्दृष्टावित्यर्थः। तत्राऽऽकाशे विहगोऽस्ति नास्तीति तदुक्तं निदर्शनमाशङ्क्य तत्रापि कल्पितप्रदेशभेदं द्वारं विना नास्ति पक्ष्यादिभावाभावावस्थानमित्याह—**पक्ष्यादीनामिति**। अवच्छिन्न एव केनचिदुपाधिनेति शेषः ॥ १५२ ॥

सु० टी०—**नन्ववच्छेदकोपाध्योरपि भावाभावावेकस्मिन्नेव द्वारं विनेति स एव दृष्टान्त इति चेत्तावप्युपाध्यन्तरावच्छिन्न एवेत्याह—**

**सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे चे-**
**त्तत्रान्वेष्यः[1] सोऽप्यवच्छिन्नभावः[2] ।**
**सोऽवच्छेदोऽप्यस्ति नास्त्यम्बरे चे-**
**द्बाढं तस्मिन्सोऽप्यवच्छिन्न एव ॥ १५३ ॥**

सोऽवच्छेद इति। **एवमुपाध्यन्तरयोरपि योज्यमित्याह**—स इति। बाढमिति। **तत्राप्यन्योन्यावच्छेदसंभवात्परैरपि संयोगाद्याधारतावच्छेदकेषु तथाऽभ्युपगमादित्यर्थः ॥ १५३ ॥**

अ० टी०—ननु यदुपाधिव्यवच्छिन्ने नभसि पक्ष्यादेर्भावाभावौ तदुपाध्यवच्छेदस्यापि भावाभावावेकस्मिन्नाकाश एव भवत इति स एवास्तु दृष्टान्त इति शङ्कते—**सोऽवच्छेदोऽपीति**। तत्राप्युपाध्यन्तरावच्छिन्न एव नभसि तौ स्तो न केवल इति परिहरति—**तत्रान्वेष्य इति**। अवच्छिन्नभावोऽवच्छेदकान्तरेणावच्छिन्नत्वं तर्हि तस्यैवोपाधेर्भावाभावावेकस्मिन्नाकाशे स्यातामित्याशङ्क्य तावपि पूर्ववदवच्छिन्नप्रदेशगतावेव भवेतामन्यत्र भावाभावयोर्निरुपाधिकैकस्मिन्ननुपलम्भादित्याह—**सोऽवच्छेद इत्युत्तरार्धेन** ॥ १५३ ॥

सु० टी०—तत्र शङ्कते—

**नन्वेवं स्याद्दुर्निवाराऽनवस्था**
**बाढं का नो हानिरिष्टैव साऽपि ।**

---

१ क. 'ष्यः कोऽप्य°'। २ क. भागः।

कर्मोद्भूतं नः शरीरं शरीरा-
त्कर्मोद्भूतिस्तत्र किं नेष्यते सा ॥ १५४ ॥

नन्विति । **इष्यत एव सर्वैरदृष्टशरीरयोरीदृश्यनवस्थेति परिहरति**—बाढमिति । **वस्तुतस्तु संसारानादित्ववदुपच्छेदप्रवाहे मानाभावादनुपपन्नस्यापि मायावादिभिरनुभवमात्रेणाभ्युपगमान्नानवस्थेति रहस्यम्॥१५४॥**

अ० टी०—तर्ह्यनवस्था दुरवस्थानेति चोदयति—**नन्वेवं स्यादिति** । अनादित्वाददृष्टमूलत्वाच्च नेयमनवस्था मूलक्षयकरीति तामभ्यनुजानाति—**बाढमिति** । तादृश्या अनवस्थाया अन्यत्राप्यदोषतया दृष्टत्वाच्च नास्ति दोषतेत्याह—**कर्मोद्भूतमिति** । कर्म धर्माधर्मलक्षणम् । कर्मशरीरयोः प्रवाहरूपेण कार्यकारणभावे यथाऽनवस्था न दोषाय तथाऽत्राप्यवच्छेदकपरम्परायामनवस्था न दोषायेत्यभिप्रायः ॥ १५४ ॥

**सु० टी०—मानाभावादपि न ब्रह्मण्यज्ञानस्य भावाभावावित्याह—**

किं चाज्ञानं ब्रह्मणोऽप्यस्ति नास्ती-
त्येतत्कस्मात्त्वं विजानासि हेतोः ।
मूढोऽस्मीतिप्रत्ययादस्ति बुद्धि-
र्मुक्ते दाहान्मोहनास्तित्वबुद्धिः ॥ १५५ ॥

किं चेति । **अस्य निरंशस्य** । कस्मादिति । **प्रागुक्तयुक्त्या न कुतो विज्ञायत इत्यर्थः । ननु स्वानुभवादज्ञानसद्भावो विद्वदनुभवाच्च तदभावः सिध्यतीति शङ्कते**—मूढ इति । **अस्तिबुद्धिरस्तित्वबुद्धिः ॥ १५५ ॥**

अ० टी०—किं च ब्रह्मण्यज्ञानस्य स्थितिनाशयोः साधकाभावाच्च न तौ तत्र भवेतामित्याह—**किंचाज्ञानमिति** । अस्य ब्रह्मणोऽज्ञानमिति संबन्धः । प्रश्नं मत्वोभयमप्यनुभवादेव जानामीत्येकदेशी शङ्कते—**मूढोऽस्मीति** । पूर्वं मूढोऽस्मीत्यनुभवादज्ञानास्तित्वबुद्धिर्मुक्ते विदुषि मोहस्याज्ञानस्य दाहान्नास्तित्वबुद्धिर्न ह्यनुभवसिद्धेऽर्थे विवाद इत्यर्थः ॥ १५५ ॥

**मुक्तेऽज्ञाननास्तित्वज्ञानोपायं पृच्छन्पूर्ववद्विकल्पयति—**

मुक्तेऽज्ञानं दग्धमित्येतदेवं
कस्माद्धेतोर्वेत्सि तत्कथ्यतां नः ।

---

१ क. नास्तीत्येव क° ।

मिथ्याज्ञानात्स्वप्रकाशात्प्रमाणा-
न्मुक्तेऽज्ञानं दग्धमित्यस्य सिद्धिः ॥ १५६ ॥

मुक्तेऽज्ञानमिति । दग्धमिति । नास्तीत्यर्थः ॥ १५६ ॥

अ० टी०—तर्हि मुक्ते विदुषि तदज्ञाननाशे च साधकं किमपि वाच्यं तदसंभवान्न तत्सिद्धिरिति मत्वाऽऽह—मुक्तेऽज्ञानमिति । प्रमाणादिति सम्यग्ज्ञानादित्यर्थः ॥१५६॥

**सु० टी०**—पक्षत्रयमपि पूर्ववदेव दूषयति—

सम्यग्ज्ञानान्मुक्तिसिद्धिर्यदीष्टा
नूनं मुक्तः कुड्यवत्सो जडः स्यात् ।
मिथ्याज्ञानान्मुक्तिसिद्धिर्यदीष्टा
स्रक्सर्पादिर्मुक्त एवैष मुक्तः ॥ १५७ ॥
मुक्तो मह्यं स्वप्रकाशप्रकाशास्ती-
त्येषा वाणी स्वानुभूत्या विरुद्धा ।
न ह्यश्रुत्वा शास्त्रमेतन्मनुष्यः
कश्चिज्जानात्येष मुक्तः शुकादिः ॥ १५८ ॥

सम्यग्ज्ञानादिति द्वाभ्याम् । **सम्यग्ज्ञानकर्मत्वे जडत्वान्न तस्य मुक्तत्वमाद्य-पक्षे मिथ्याभूतस्य न मोक्ष इत्याह**—मिथ्येति । **द्वितीये त्वनुभवविरोध इत्याह**—मुक्त इति । **तमेव व्यतिरेकमुखेणाऽऽह**—न हीति । **शुकादिमुक्ति-बोधकशास्त्रमश्रुत्वेत्यर्थः** ॥ १५७–१५८ ॥

अ० टी०—विकल्पोद्देशक्रमं विहायाक्रमेणैव दूषयति—**सम्यग्ज्ञानादिति** । यत्प्रमाणज्ञानात्सिध्यति तत्कर्मतयैव सिध्यति । न ह्यविषयभूतं वस्तु प्रमाणेनावगम्यते । तथा च सम्यग्ज्ञानात्प्रमाणतो मुक्तिसिद्धिरिष्टा यदि तदा वेद्यस्य जडत्वनियमान्मुक्तस्ते मते जडः कुड्यवत्स्यादतश्च तस्य न बन्धमोक्षभाक्त्वमित्यर्थः । अथ विकल्पमनूद्य दूषयति—**मिथ्याज्ञानादिति** । अस्मिन्पक्षे बन्धमोक्षभागिता तस्यासंभाविनी-त्यर्थः ॥ १५७ ॥

अ० टी०—तर्हि स्वप्रकाशत एव तत्सिद्धिरस्त्विति मध्यमं पक्षमनूद्य स किं ताट-स्थ्येन भासते प्रत्यक्त्वेन वेति विकल्पासहत्वादयमपि पक्षो न युक्त इत्याह—**मुक्तो**

१ क. °क.शो प्र° ।

**मह्यमिति**। मुक्तस्य ताटस्थ्ये तमन्यः स्वप्रकाशतया जानातीत्येतदनुभवविरुद्धमेव तटस्थस्य वेद्यत्वनियमात् । प्रत्यक्त्वं त्वन्यस्यान्यं प्रत्यनुभवविरुद्धमेवेति 'मुक्तो मह्यं स्वप्रकाशश्च-कास्तीत्येषा वाणी स्वानुभूत्या विरुद्धा' मृषा वागेषेत्यर्थः । ननु शुको मुक्त इत्यादिरूपेण मुक्तसिद्धेः प्रसिद्धत्वाद्गत्यन्तराभावात्स्वप्रकाशतयैव तत्सिद्धिरेष्टव्येति चेन्नैवं तद्विषयकागमप्रमाणमन्तरेण तत्सिद्धेरदर्शनादित्याह—**न ह्यश्रुत्वेति** । एष मुक्तः शुकादिरित्येतद्वस्तु शास्त्रं श्रुतिस्मृत्यादिलक्षणमश्रुत्वोपलक्षणमेतत् । स्थितप्रज्ञलक्षणं तथा मुक्तलिङ्गं वाऽबुद्ध्वा मनुष्यो देवेभ्योऽन्यः कश्चिन्न हि जानातीति योजना । तस्मादात्मनः परत्वं तस्य च विद्वत्त्वं मुक्तत्वं वा स्वाविद्याविलसितमेव यावदज्ञानं भवति स्वतत्त्वज्ञानोदये तु सर्वमेव निवर्तते न किंचिदवशिष्यते मूलाभावादित्यभ्युपेयमिति सिद्धम् ॥ १५८ ॥

**सु० टी०—मनउपाध्यवच्छिन्नेऽज्ञानमिति चतुर्थं पक्षमनुभाष्य दूषयति—**

**ताटस्थ्येनोपाधिमादाय मोह-**
**श्चेतन्येऽस्मिन्स्वप्रकाशे प्रविष्टः ।**
**तेनेह स्याद्बन्धमोक्षव्यवस्थे-**
**त्युक्तं यत्तद्दूषणं तस्य सिद्धिः ॥ १५९ ॥**
**ताटस्थ्येनोपाधिरङ्गं यदि स्या-**
**न्मोहाविष्टेर्ब्रह्मणि स्वप्रकाशे ।**
**अग्निक्षेपस्योल्मुकं यद्वदेवं**
**मोहस्य स्यान्न प्रदेशस्थितत्वम् ॥ १६० ॥**

ताटस्थ्येनेति द्वाभ्याम् । **मनसोऽज्ञानाधारतावच्छेदकत्वे तदवच्छिन्नमात्रवृत्तेरज्ञानस्य न वियदाद्युपादानत्वसंभव उपलक्षणत्वे वा तदनवच्छिन्नेऽप्यज्ञानसत्त्वान्न व्यवस्थेत्यज्ञानस्य ब्रह्मणि प्रवेशे मनसो द्वारत्वं वाच्यमुल्मुकस्येवाग्नेर्गृहप्रवेशे तथा च तद्द्वारा प्रविष्टमज्ञानमग्निरिव गृहमात्रं कृत्स्नं ब्रह्म प्राप्नुयादिति न तत्र तदभावः स्यादित्याह**—ताटस्थ्येनेति । **मोहाविष्टेर्मोहावेशस्य ॥ १५९ ॥ १६० ॥**

अ० टी०—यः पुनर्मनउपाधिद्वारा ब्रह्मण्यज्ञानसंबन्ध उपाधीनां च भेदात्तद्द्वारेण ब्रह्मण्येव बन्धमोक्षादिव्यवस्थेति चतुर्थः पक्षस्तं दूषयितुमनुभाषते—**ताटस्थ्येनेति । तेनेति** । उपाधिनेत्यर्थः ॥ १५९ ॥

अ० टी०—दूषणमेवाऽऽह—**ताटस्थ्येनेति**। स्वप्रकाशे ब्रह्मणि मोहाविष्टेर्मोहावेशस्य यद्युपाधिस्ताटस्थ्येनैवाऽऽश्रयकोटावप्रविष्ट एवाङ्गं हेतुः स्यात्तदा मोहस्य न प्रदेशस्थितत्वं स्यात्किं तु संपूर्ण एव ब्रह्मणि मोहावेशः स्यादिति योजना। तत्र दृष्टान्तमाह—**अग्निक्षेपस्येति** ॥ १६० ॥

**सु० टी०—उक्तमर्थं दृष्टान्तेन स्पष्टयति—**

**अग्निः क्षिप्तो ह्युल्मुकेन प्रदेश-**
**मात्रव्याप्तिं वर्जयित्वा समस्तम्।**
**वेश्म व्याप्नोत्येवमेवेह कृत्स्नं**
**ब्रह्म व्याप्नोत्याधिनाऽस्तं तमोऽपि ॥ १६१ ॥**

अग्निरिति। **आधिनोपाधिद्वारेण। अस्तं क्षिप्तं तमोऽज्ञानम् ॥ १६१ ॥**

अ० टी०—उक्तदृष्टान्तं स्पष्टयन्दार्ष्टान्तिके योजयति—**अग्निः क्षिप्तो हीति**। न ह्युल्मुकेन वेश्मनि क्षिप्तोऽग्निर्वेश्मैकदेश एवावतिष्ठते किं तु समस्तं वेश्म यथा दृष्टान्त एवमेवेह दार्ष्टान्तिके तत्तमोऽप्याधिनोक्तान्तःकरणोपाधिना द्वारेण कृत्स्नं ब्रह्म व्याप्नोति न ब्रह्मैकदेशमतो न तन्निमित्ता व्यवस्थासिद्धिरित्यर्थः ॥ १६१ ॥

**सु० टी०—तस्मादुक्तपक्षाणां दुष्टत्वात्प्रागुक्तैव बन्धमोक्षव्यवस्थाऽऽश्रयणीयेत्याह—**

**तस्माद्ब्रह्माविद्यया जीवभावं**
**प्राप्याऽऽसित्वा तावके तु स्वरूपे।**
**त्वच्चित्तेन स्पन्दितं जीवजात-**
**माकाशादि क्ष्मावसानं च पश्येत् ॥ १६२ ॥**

तस्मादिति। **तावके स्वरूप आसित्वा त्वद्रूपेण स्थित्वेत्यर्थः। त्वच्चित्तेन स्पन्दितं त्वदविद्योत्थविकल्पितम् ॥ १६२ ॥**

अ० टी०—यस्माद्ब्रह्मण्येवाविद्याप्रवेशो नापि तत्र द्वारापेक्षा प्रत्यग्रूपमेव ब्रह्म तादृश एव चिद्रूपे परिकल्पितानि जीवत्वान्यनन्तानि तथेश्वरत्वं तदुपाधिभूतकार्यकारणप्रपञ्चव्यवहारस्तद्गताश्च व्यवस्थाः सर्वा अपि त्वदविद्याविलसिता एव तस्य सर्वस्य त्वयि चिद्रूपेऽध्यासात्त्वच्चिदाभासव्याप्ततया स्फुरणमित्यस्मन्मतमेव ग्राह्यमित्युपसंहरति—**तस्माद्ब्रह्मेति**। आसित्वा स्थित्वा। त्वच्चित्तेनेति चित्तशब्देनाविद्योच्यते ॥ १६२ ॥

---

१ क. °नाततमो°।

सु० टी०—नन्वहमेव मदविद्यया जीवश्चेत्कुतो मे जीवत्वनिवृत्ति-र्न हि सा ब्रह्मविद्यां विना न हि विद्या वेदाचार्याद्युपायं विना, न च मदन्यजीवाभावे तत्संभव इति प्रागुक्ताननुसंधानान्मुह्यन्तं प्रति प्रागुक्त-मेव स्मारयति—

स्वीयाविद्याकल्पिताचार्यवेद-
न्यायादिभ्यो जायते तस्य विद्या ।
विद्याजन्मध्वस्तमोहस्य तस्य
स्वीये रूपेऽवस्थितिश्चित्प्रकाशे ॥ १६३ ॥

स्वीयेति । प्रत्यगविद्याकल्पितेत्यर्थः । अत्र केचित्—एकाज्ञानप्रति-बिम्बितस्य जीवस्यैकत्वेऽप्यविद्याकार्यानन्तान्तःकरणावच्छिन्नस्य तस्या-नन्तप्रमात्रादिभावापन्नस्य यदन्तःकरणावच्छिन्ने श्रवणमननादिभिरपरो-क्षब्रह्मविद्योदेति स आचार्य इति । तादृशे विदुष्यन्योपाध्यवच्छिन्नानां स्वस्वकार्यार्थमनुवृत्तिर्घटते । नचैवं जीवभेद एकस्यैवाविद्याप्रतिबिम्बस्य तत्तदुपाधिना युगपत्क्रमाद्वा विद्यार्थं प्रवृत्तिसंभवादाचार्योऽपि तान् वस्तुतः स्वाभिन्नत्वेन जानन्नपि तत्तदवच्छिन्ने विद्योत्पादार्थमुपदेक्ष्य-तीति योजयन्ति । तत्तु व्यावहारिकप्रमातृभेदस्याप्येकजीववादिभिरनङ्गी-कारात्प्रकृतासंगतमित्येव योज्यम् । सत्यं वस्तुतस्तु त्वदन्यो गुर्वादि-र्नास्ति तथाऽपि यथा स्वाप्निकादपि गुर्वादेर्मन्त्रादिलाभेन कृतार्थता भवत्येवं त्वद्रूपापन्नस्यापि ब्रह्मणस्त्वदीयाविद्याकल्पिताचार्यवेदन्याये-भ्यो विद्याप्राप्तिः । ततश्च क्षीणायामविद्यायां ( * जीवत्वं विहाय स्वस्वरूपावस्थितिर्भविष्यतीति न किंचिदनुपपन्नमिति ॥ १६३ ॥

अ० टी०—यस्त्वज्ञानि ब्रह्म बुद्धीरनुसरतीति पञ्चमः पक्षस्तत्रापि निर्द्वारं ब्रह्मण्येवा-विद्यायाः स्थितिनाशाभ्युपगमे व्यवस्था न सिध्यति ब्रह्मण्येवैकस्मिन्नखण्डे तत्प्रवेशात्, यदि बुद्धिद्वारभेदादविद्या ब्रह्म प्रविशति बुद्धिभेदाच्च व्यवस्थेत्यभ्युपगमस्तदा बुद्धेरुल्मुकवद्द्वा-रमात्रत्वे ताटस्थ्यान्न तद्वशाव्द्यवस्थासिद्धिः । न च तटस्थाऽपि बुद्धिर्ब्रह्मण्यवि-द्याभावाभावयोर्नियामिका पशुत्वमिव दृतिहरिशब्दवृत्तेरिति वाच्यम् । तत्र दृतिहरणक-र्तृत्वाधिकरणानामनेकत्वादनेकरूपत्वाच्च स्वसामानाधिकरण्यवद्दृतिकर्तृत्वे दृतिहरिपद-नियामकत्वोपपत्तेः । अत्र तु ब्रह्मण एकत्वान्निरंशत्वाच्चोपाधिरपि कुत्राविद्याभावा-भावौ नियमयेत्तस्मादयमपि पक्षोऽत्रासंगत एवेति पूर्वोक्तदूषणेनैव दूषित इति । तथा

* खपुस्तकस्थोऽयं ग्रन्थः ।

षष्ठसप्तमयोः पक्षयोरपि दूषणं स्फुटमेव । हरेर्मायाशक्तेः प्रत्यगविद्यातिरिक्ताया अवगमहेतुविकल्पदूषणानामिहापि प्रसरादीशमायासिद्धौ च जीवेषु तदीयसंकोचविकासासिद्धेः षष्ठे पक्षे व्यवस्थाया नैव सिद्धिः । सप्तमेऽपि पक्षेऽनाद्यज्ञानानभ्युपगमे भ्रमतत्संस्कारयोरुपादानासंभवादसिद्धिः स्यात् । न च तयोः परस्परोपादानता बीजाङ्कुरयोरिवेति युक्तं गुणत्वाभिमतयोरुपादानत्वायोगात् । कार्यस्य स्थितस्य वा कार्यान्तरं प्रत्युपादानत्वासंभवाच्च । न चाऽऽत्मैवोपादानमस्तीति वाच्यम् । तथासत्युपादाननिवृत्तिमन्तरेण कार्यप्रवाहस्याऽऽत्यन्तिकनिवृत्त्यसंभवादात्मनश्च नित्यत्वादनिवृत्तेः संसारमोक्षणाभावप्रसङ्गात् । अविकृतस्य कूटस्थस्योपादानत्वादर्शनादात्मनो भ्रमसंस्कारोपादानत्वे विकारित्वापत्तावनित्यत्वादिदोषप्रसङ्ग इत्यादिदूषणगणोऽतिस्फुट एवेति नैतेषु पक्षेषु पृथग्दूषणमाचार्येणाभिहितमिति । यद्येवं सर्वस्यापि जीवाजीवभेदप्रपञ्चस्यैकचिन्मात्रविषयाश्रयैकाविद्याकल्पितत्वमिति मतं तदाऽऽचार्याद्यभावान्न विद्याप्राप्तिः । न च विनैवाऽऽचार्यादिना विद्या सिध्यति । 'आचार्यवान्पुरुषो वेद' [ छा० ६ । १४ । २ ]

'तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया ।
उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिनः ॥ [ भ० गी० ४ । ३४ ]

'नावेदविन्मनुते तं बृहन्तम्' इत्यादिश्रुतिस्मृतिन्यायैराचार्यादिपूर्वकत्वावगमाद्विद्याप्राप्तेरिति चेत्तत्राऽऽह—**स्वीयाविद्येति** । स्वाज्ञानकल्पितजगत्परमेश्वरत्वजीवत्वभेदकलुषीकृतभूमभावेत्यत्र चिदात्मस्वरूपव्यतिरिक्तस्य सर्वस्य चिदाश्रयविषयाविद्याकल्पितत्वं पूर्वमेव प्रसाधितं तस्मादाचार्यादीनि ज्ञानसाधनान्यन्यस्य जिज्ञासोः स्वीयाविद्याकल्पितानि । आदिपदाच्चित्तसमाधानं गृह्यते । एतेभ्यस्तस्य जिज्ञासोर्विद्या जायते । एवंविधमेवाऽऽचार्यादिकमभिप्रेत्य श्रुतिस्मृतिवादाः प्रवृत्ता इति नात्र काऽप्यनुपपत्तिरित्यर्थः । कल्पितकारणेभ्यो जाता विद्याऽपि कल्पितैवेति सा न किंचित्करीति च न शङ्का कार्येत्याह—**विद्याजन्मेति** । विद्योदयानान्तरीयकतयैव मोहध्वस्तिः प्रकाशस्य स्वविरोध्युपमर्दोदयस्वभावत्वदर्शनात् । अतः स्वरूपसत्यत्वाभावेऽपि विषयावभासात्मनैवोदयाद्विषयस्य च परमार्थत्वात्तद्गतमोहनिवृत्तिमात्रेण कण्ठगतमणिवल्लब्धस्वरूपलाभे कृतकृत्यता पुंसो भवतीति समर्थैव विद्येत्यर्थः । एतदुक्तं भवति—अत्र कल्पितत्ववचनं न स्वप्नशुक्तिरजतादितुल्यविषयं तथा सति समर्थार्थक्रियासंभवात् । न च समर्थत्वेनैव कल्पनाऽपीति वाच्यम् । निरधिष्ठानकल्पनायोगात्स्वेच्छामात्रकल्पिताच्चाऽऽचार्यादेः कार्यादर्शनात् । अतो व्यावहारिकप्रमाणाभिमतेनैव ज्ञानेन सर्वविकल्पाधिष्ठानं ब्रह्मैव ब्रह्मवित्तया कल्पितमाचार्यो वेदाद्यात्मना च कल्पितं प्रमाणादिरपि यथाऽज्ञत्वेन परिकल्पितं ब्रह्मैव शिष्यः । तस्माद्यथा शिष्यः स्वाविद्याकल्पितमाचार्यं द्वैतं च पश्यति तथा चाऽऽचार्योऽपि ब्रह्मविद्या-

बाधितया प्रारब्धकर्मशेषवशादनुवर्तमानया स्वाविद्यया शिष्यमन्यच्च पश्यति । दृष्ट्वा च तस्य बन्धोच्छेदाय तत्त्वमुपदिशतीति न मुक्तस्य भेददर्शनाभावेनोपदेष्टृत्वाभावशङ्काऽपि । तस्माद्ब्रह्मैव चिदात्मकं स्वाविद्याकल्पितानेकद्वैतप्रपञ्चं तच्छरीराद्युपाधिवशादापन्नगुरुशिष्यादिभावं स्वत एव विद्यामुत्पाद्य स्वाविद्यां तया प्रबाध्य निवृत्ताशेषद्वैतबन्धं स्वरूपावस्थितं भवतीति । तथा चोक्तं प्राक्—'सकलवाङ्मनसातिगता चितिः सकलवाङ्मनसव्यवहारभाक्' इति ॥ १६३ ॥

सु० टी०—नन्वहमज्ञ इत्याद्यविद्याया) जीवाश्रयत्वानुभवात्तथाऽऽचार्यैरपि कस्येयमविद्या यस्त्वं पृच्छसीत्यादिभाष्ये जीवस्यैवाज्ञानाभिधानात् कथं स्वीयाविद्यानाशात्स्वीये रूपेऽवस्थितिरिति ब्रह्माश्रयविषयत्वोक्तिरिति चेत्तत्राऽऽह—

अज्ञानि ब्रह्म जीवो भवति भवति च स्पष्टमज्ञानमस्य
प्रागस्पष्टं सदन्तःकरणनिपतितज्योतिराभासयोगात् ।
चैतन्यैकप्रतिष्ठं स्फुरति न हि तमस्तादृशं यादृशं त-
द्बुद्धिस्थाभासनिष्ठं स्फुरति तदुचितं जीवमौढ्याभिधानम् ॥

अज्ञानीति । ब्रह्मैव स्वविषयाज्ञानाश्रयस्तत्प्रतिबिम्बाज्जीवो भवति न तु जीवो भूत्वा पश्चादज्ञानवानज्ञानकार्याहंकारावच्छिन्नस्याज्ञानाश्रयविषयत्वायोगादित्युक्तत्वादित्यर्थः । कथं तर्ह्यहमज्ञ इतिधीरिति तत्राऽऽह—भवति चेति । अस्य जीवस्य प्राक्सुषुप्तादावस्पष्टं सदज्ञानं जाग्रदादावन्तःकरणाध्यासे सति तन्निपतितचिदाभासयोगेन स्पष्टं सविकल्पकं भवत्यहमज्ञ इतीत्यर्थः । तर्ह्यस्पष्टानुभवे मानाभावान्न शुद्धचिदाश्रयं तदिति चेन्न सुषुप्तादौ तज्ज्ञानस्य साधितत्वादित्याह—चैतन्यैकेति । बुद्धिप्रतिबिम्बितचिन्निष्ठं तद्यथा स्फुरति न तथा चिन्मात्रनिष्ठं निर्विकल्पकत्वादित्यर्थः । ततश्च स्पष्टानुभवनिबन्धनमेव भाष्यादौ जीवमौढ्याभिधानमित्याह—तदिति ॥ १६४ ॥

अ० टी०—तदेवमेकाविद्याविलसितमेव समस्तं द्वैतमविद्या च ब्रह्माश्रयविषयेति प्रतिष्ठापितं तत्राऽऽचार्यग्रन्थेषु क्वचिज्जीवस्याज्ञानमभिमतमिति प्रतिभाति कस्याविद्या यस्त्वं

पृच्छसि तस्य त इति वदाम इत्यादिभाष्यवाक्यदर्शनादतस्तस्य गतिर्वाच्येति चेत्तत्राऽऽह—**अज्ञानि ब्रह्मेति ।** ब्रह्म चिन्मात्रमज्ञान्यनाद्यज्ञानसंबन्धि जीवो भवति संसारी जायते । एतदुक्तं भवति—अज्ञानं ह्यावरणविक्षेपरूपाकारद्वयवत् । तत्र ज्ञानापनोद्यत्वमावरणाकारः । सर्वकार्यानुगतजाड्यं विक्षेपाकारः । यदाऽऽवरणात्मना चिदात्मतत्त्वमाच्छाद्यैवावतिष्ठते न तदाऽऽत्मनि जीवेश्वरजगद्भेदाभासो यथा सुषुप्तिप्रलययोः । यदा तु विक्षेपात्मना विवर्तते स्वाधिष्ठानमेवान्यथा प्रथयति तदा यथोक्तभेदावभासः । तत्र यदा स्वाज्ञानाच्चिदात्मनोऽज्ञानात्कल्पितान्तःकरणगतचिदाभासद्वारेण तदविविक्ततयाऽहमस्मीत्यभिमानो भवति तदाऽज्ञानि ब्रह्म चित्स्वरूपं जीवो भवति जीवत्वमनुभवतीति । यथा च चिन्मात्रगतमेवाज्ञानमन्तःकरणोत्पत्तेः प्राक् सुषुप्त्यादावस्पष्टमज्ञानत्वेनानभिव्यक्तं सदन्तःकरणनिपतितज्योतिराभासयोगादस्य चिदात्मनोऽज्ञानं स्पष्टं च भवति । चिन्मात्रगतत्वेन नाज्ञानं स्पष्टं भवति चिदात्मनो निर्विकल्पकत्वादन्तःकरणगताभासद्वारेण लब्धविशेषं तु स्पष्टं भवति । अहं न जान इत्येवंरूपेण हि स्फुटमज्ञानं भासते न चिदज्ञमिति । तदेतदाह—**चैतन्यैकेति ।** तत्तस्माद्भाष्यकारस्य जीवमौढ्याभिधानमुचितमहं न जानामीति विशेषस्फुरणाभिप्रायं भाष्यवचनमित्यर्थः ॥ १६४ ॥

**सु० टी०—जीवमौढ्याभिधानोपपादकतद्ज्ञाने वैलक्षण्यान्तरमाह—**

**अज्ञानं जडशक्तिमात्रवपुषा जीवाद्बहिः सिध्यति**
**जीवारूढमहं न जान इति तु ज्ञानापनोद्यात्मना ।**
**संसिद्धिं प्रतिपद्यते तदुचितं जीवाज्ञताभाषितं**
**द्वैरूप्ये सति रूपमेकमनिशं भात्येवमन्यन्न हि ॥ १६५ ॥**

अज्ञानमिति । **जडशक्तिर्ब्रह्मपरतन्त्रमायात्मिका तदात्मना जीवाद्बहिरहंकारानवच्छिन्नचिदात्मन्यज्ञानं स्फुरति । जीवाश्रितं पुनरहं न जान इत्याकारेणैव कथमिति चेत्तत्राऽऽह**—ज्ञानेति । **अज्ञानं हि प्रमातृगतेन ज्ञानेन बाध्यत्वात्तत्रैव ज्ञानविरोधित्वाकारेण स्वस्वभावेन सिद्धिं लभते । ब्रह्मणि तु स्वबाधकज्ञानाश्रये जडशक्तिमात्रत्वेनैव सिध्यतीत्यतोऽपि विशेषाज्जीवाज्ञत्वाभिधानं युक्तमित्यर्थः ।(* कथं जीवेऽपि जडशक्तित्वेन न भातीति चेत्तत्राऽऽह—द्वैरूप्य इति । अज्ञानद्वैरूप्ये सत्युक्तयुक्त्याऽज्ञानरूपं नित्यं साक्षिभास्यमन्यत्तु जाड्यं न तथेत्यर्थः)॥१६५ ॥**

---

* क. पुस्तके नायं ग्रन्थः ।

अ० टी०—यदि चिन्मात्रस्य निर्विकल्पकत्वात्तदाश्रयं सदज्ञानमस्फुटं कार्येण तद्गताभासेन चोपरागात्सविकल्पकं च भवेत्तर्ह्यन्तःकरणादन्यत्राऽऽकाशादावपि सविकल्पं भासेतेति चेत्तत्राऽऽह—**अज्ञानं जडेति** । जीवाद्बहिराकाशादावप्यज्ञानं सिध्यति भासत एवेति यावत् । केनाऽऽकारेणेत्युच्यते जडशक्तिमात्रवपुषा सर्वकार्यानुगतजाड्यात्मनेत्यर्थः । जीवारूढं त्वहं न जानेऽहमज्ञ इत्येवं ज्ञानापनोद्यात्मना ज्ञानपर्युदासस्वरूपेण ज्ञानविरोध्याकारेण सांसिद्धिं प्रतिपद्यते स्फुरणगोचरतामुपैति । तथा च जीवे तद्बहिश्चाज्ञानं यद्यप्यस्ति तथाऽपि यथोक्तद्वैरूप्ये सत्येकं ज्ञानापनोद्याकाररूपं भाति यथा स्पष्टमेवमन्यद्रूपं जडशक्त्याकारं हि यस्मान्न भाति तत्तस्माज्जीवाज्ञताभाषितमुचितं भाष्यग्रन्थ इति योजना ॥१६५॥

**सु० टी०—जाड्यरूपं तु ब्रह्मण्येव भासितुमर्हतीत्याह—**

**जडशक्तिमात्रवपुषा गगनश्वसनादिकार्यजननी भवति ।**
**पुरुषोत्तमस्य वशवर्तितया प्रकृतिः परस्य जगदेकगुरोः॥१६६॥**

जडशक्तीति । **अविद्या हि जडशक्तिमायात्मना गगनादिप्रपञ्चजननी भवतीति तथैव सेश्वरेण दृश्यत इत्यर्थः । तर्हि सांख्याभिमतप्रधानान्न भिद्येतेति चेन्नेत्याह**—पुरुषोत्तमस्येति । **जडत्वेन स्वातन्त्र्याभावादेवाऽऽत्मशक्तिमिति चाऽऽत्मशक्तित्वेन श्रवणात्सत्तास्फूर्त्यर्थक्रियासामर्थ्येषु सर्वज्ञचैतन्यपरतन्त्रैव सा प्रवर्तत इति न स्वतन्त्रप्रधानत्वेनाऽऽशङ्कनीयेत्यर्थः ॥ १६६ ॥**

अ० टी०—अज्ञानस्योक्ताकारभेदे प्रमाणमाह—**जडशक्तिमात्रवपुषेति** । प्रकृतिर्जगदुपादानमज्ञानं जडशक्तिमात्रवपुषा विक्षेपशक्तिप्रधानाकारेण गगनश्वसनादिकार्यजननी भवतीति योजना । जडकार्यदर्शनात्तत्कारणं जडप्रधानमवसीयते कारणानुरूपत्वात्कार्यस्येत्यर्थः । न चैतावता प्रधानवादाश्रयणप्रसक्तिरित्याह—**पुरुषोत्तमस्य वशवर्तितयेति** । सत्तास्फुरणार्थक्रियासु चिदात्मपराधीनत्वेन कार्यकरी न स्वातन्त्र्येणेत्यङ्गीकारान्न प्रधानवादप्रसक्तिरित्यर्थः । तथा च श्रुतिः—'यस्तमसि तिष्ठंस्तमसोऽन्तरो यं तमो न वेद यस्य तमः शरीरं यस्तमोऽन्तरो यमयति' [ बृ० ३ । ७ । १३ ] इति । परस्येत्यादि पुरुषोत्तमविशेषणद्वयं पुरुषोत्तमत्वसाधकं क्षराक्षराभ्यां परस्येत्यर्थः । 'उत्तमः पुरुषस्त्वन्यः' [भ०गी० १५।१७] इति स्मृतेः 'सर्वस्य चाहं हृदि संनिविष्टः' [ गी० १५ । १५ ] इति स्मृतेश्चार्थं स्मृत्वा जीवान्तर्यामित्वेन पुरुषोत्तमत्वं तेन तत्वानेनोक्तम् ॥ १६६ ॥

सु० टी०—अस्तु तर्हि जीवगतावरकाज्ञानादन्यदेव जाड्यं लक्षणभेदादिति चेन्न वैलक्षण्यस्य कार्यभेदप्रयुक्तत्वाद्भेदानुमानस्य च वक्ष्यमाणत्वादित्याह—

इयमेव सर्वजननी प्रकृति-
र्वशिनी शरीरिणमिमं पुरुषम् ।
अधिरुह्य जीवमहमज्ञ इति
स्फुरणैकगोचरवपुः स्फुरति ॥ १६७ ॥

इयमेवेति । प्रकृतिवेत्यर्थः । अमुं जीवमधिरुह्याऽऽश्रित्य वशिन्यावरणशक्त्या स्ववशं कुर्वाणा स्वप्रकाशमपि पूर्वरूपं तिरस्कृत्याहमज्ञ इति ज्ञानापनोद्यात्मना स्फुरति जीवस्य जगदुपादानत्वाभावेन तत्र जडशक्तिरूपेण मानासंभवादित्यर्थः । स्फुरणैकगोचरवपुर्यथा स्यादिति ॥ १६७ ॥

अ० टी०—अज्ञानस्य जडात्मतामुपपाद्य ज्ञानापनोद्यात्मत्वमुपपादयति—**इयमेवेति** । इयमेव प्रकृतिर्जीवमिमं पुरुषमधिरुह्येति संबन्धः । कार्यभूतान्तःकरणगतचिदाभासाविवेकद्वारा कार्यात्मभावमागतं चैतन्यं जीवः स एव पुरि शयनात्पुरुषस्तमिमं संनिहितमपरोक्षं च शरीरिणं शरीरेऽभिव्यज्यमानत्वाच्छरीराभिमानित्वाद्वा शरीरवन्तं जीवं पुरुषमधिरुह्य कार्यान्तःकरणद्वारेणाऽऽरुह्य परिच्छिन्नप्रतिभासयोग्यं कृत्वेति यावत् । वशिनी स्वकार्यान्तःकरणतद्विकारैस्तं वशीकुर्वती स्फुरणैकगोचरवपुः साक्षिमात्रविषयरूपा सत्यहमज्ञो मूढ इत्येवं ज्ञानापनोद्यात्मना स्फुरति जीवेनाऽऽवरणरूपेण ज्ञानापनोद्याकारेणाऽऽविर्भवति चिदात्मनः स्वविरोधिरूपावभासं स्वतो नित्यं प्राप्तमपि तिरस्कुर्वती स्फुरतीत्यर्थः । अज्ञानस्याऽऽवरणात्मकं रूपमनुभवसिद्धमित्युक्तं भवति ॥ १६७ ॥

सु० टी०—जीवं प्रति ज्ञानापनोद्यतया स्फुरति नेश्वरं प्रतीत्यत्र युक्त्यन्तरमाह—

चितिशक्तिबाधितवपुः परमं
पुरुषं प्रति स्फुरति सा प्रकृतिः ।
चितिशक्तिबाधकवपुः पुरुषं
पुरवर्तिनं प्रति पुनः स्फुरति ॥ १६८ ॥

चितीति । अज्ञानं हि यं प्रति वस्तुस्वरूपमावृणोति तेनैव न जानामीत्यनुभूयते । न च नित्यसर्वज्ञेश्वरं प्रति तदावृणोतीति तं प्रति

**स्वरूपचिच्छक्त्या बाधितरूपैव जडशक्तित्वेन तुच्छतया पारतन्त्र्येण स्फुरति स्थूलसूक्ष्मशरीरद्वयावच्छिन्नं तु जीवं प्रति न जानामीति स्वस्वरूपावरकत्वेन स्वतन्त्रमिव स्फुरतीत्यर्थः ॥ १६८ ॥**

एकस्यैवाज्ञानस्य चैतन्यमेकमेव प्रति स्वातन्त्र्यपारतन्त्र्ये किंकृते इत्यपेक्षायामाह—**चितिशक्तीति ।** चितिस्वरूपमेव शक्तिः चितेः सर्वाधिष्ठानत्वेन कारणत्वाच्छक्तित्वमुपचर्यते । सा प्रकृतिश्चितिशक्त्या ब्रह्मणः स्वाभाविकेन स्वरूपेण बाधितवपुरभिभूतस्वरूपा सती परमं पुरुषं प्रति स्फुरति । एतदुक्तं भवति यद्यदधीनसत्तास्फूर्तिकं तेन तन्न परमार्थतोऽभिभूयते यथाऽऽरोपितेन रजतेन शुक्तिस्वरूपं तथाऽत्राऽऽविष्कृतचैतन्याधीनसत्तास्फूर्तिकेनाज्ञानेन न चैतन्यस्वभावोऽभिभूयते । तस्याभिभवे स्वस्य सत्तास्फुरणयोरसंभवात् । किं तु चिदात्मना स्वाभासविक्षेपद्वारा तस्याऽऽवरणाकारः स्वस्मिन्नभिभूयते । एतदस्य चितिशक्तिबाधितत्वं न निवृत्तिर्नैसर्गिकत्वेन सह वृत्तेरत ईश्वरोऽहमज्ञ इति न मुह्यतीति । जीवे तु विपरीतमित्याह—**चितिशक्तिबाधकवपुरिति ।** अक्षरार्थस्त्वतिरोहितः । कार्यस्यान्तःकरणादेः कारणपरतन्त्रत्वात्कार्यमात्मत्वेनाभिमन्यमानस्याज्ञानपारतन्त्र्यं कार्यधर्ममात्मन्यध्यारोपयतोऽज्ञानेनाभिभूतनिजस्वभावता भवति यथाऽऽरोपितरजतोपरक्तशुक्तिसत्तायाः शुक्त्यज्ञानेनाभिभूतस्वभावता । तादिदमुक्तं—**चितिशक्तिबाधकवपुरिति ।** तथा च कार्यकारणोपाधिद्वयकृतेऽज्ञानस्यैकस्यैकस्मिंश्चिदात्मनि स्वातन्त्र्यपारतन्त्र्ये इत्यभिप्रायः ॥ १६८ ॥

**सु० टी०—इयमेवेत्यादिनोक्तं मायाविद्ययोरभेदं साधयति—**

**दृश्यत्वजाड्यपरतन्त्रचिदाश्रयत्वै-**
**र्मायेश्वरस्य तमआत्मतयाऽनुमेया ।**
**स्वप्नप्रपञ्चरजतभ्रमलिङ्गदेह-**
**दिक्चन्द्रबिम्बमरीचिजलोपमानैः ॥ १६९ ॥**

दृश्यत्वेति । **ईश्वरमाया जीवाज्ञानाभिन्ना चिद्भास्यत्वास्वप्रकाशत्वास्याधिष्ठेयत्वचिन्निष्ठत्वेभ्यः स्वप्नप्रपञ्चादिवत्स्वप्नादेर्जीवाज्ञानोपादेयत्वसंप्रतिपत्तेर्दृष्टान्तता मायायाश्चानादित्वान्नाज्ञानोपादानकत्वेनार्थान्तरम् ॥ १६९ ॥**

अ० टी०—ननु जडशक्त्यात्मकं मायाख्यमीश्वरेऽज्ञानमन्यदेवान्यच्चाऽऽवरणशक्त्याख्यमज्ञानं जीवगतमिति हि वदन्ति युक्तं चैतद्विरुद्धरूपयोरेकात्मत्वासंभवादिति नैवमैक्यानुमानविरोधाद्भेदासिद्धेरित्याह—**दृश्यत्वेति ।** ईश्वरस्य माया दृश्यत्वादिभिर्हेतुभिः स्वप्नप्रपञ्चादि-

दृष्टान्तैरतमआत्मतयाऽज्ञानात्मत्वेनानुमेया । न हि दृश्यं जडं परतन्त्रं चिदाश्रयं च यथोक्ताज्ञानस्वभावमतिवर्तते । न च पक्षे दृश्यत्वाद्यभावोऽपि चित्स्वरूपातिरिक्ते तत्संभवादित्यर्थः । बहुदृष्टान्तोपादानं व्याप्तिदृढीकरणार्थम् ॥ १६९ ॥

**सु० टी०—कार्यपक्षकमनुमानान्तरमाह—**

**एकाज्ञानविकल्पितं सकलमेवाऽऽकाशपूर्वं जग-**
**द्वाध्यत्वादिह यद्यदीदृशमदस्तादृङ्मतं स्वप्नवत् ।**
**बाध्यं चेदमभीप्सितं भवति वस्तस्मादिदं तादृशं**
**शुद्धं धूमवदेव साधनमिदं तत्पाञ्चरूप्यान्वयात् ॥ १७० ॥**

एकेति । **आकाशादि स्रक्सर्पान्तमेकाज्ञानकल्पितं तत्त्वज्ञानत्वप्रयुक्तनिवृत्तिप्रतियोगित्वात्स्वप्नवत् । यदीदृशं बाध्यं तत्तादृगेकाज्ञानकल्पितम् । इदमाकाशादि । वो वेदान्तिनाम् । हेतोरसिद्ध्यादिविरहमाह—** शुद्धमिति । **‘ नेह नाना’ [ बृह० ४ । ४ । १९ ] इत्यादिभिर्विश्वस्वप्नादेर्बाध्यत्वसिद्धेः । पाञ्चरूप्यं पक्षधर्मत्वादिना । नाज्ञानसिद्ध्याऽर्थान्तरवारणायैकेति ॥ १७० ॥**

अ० टी०—अनुमानान्तरमाह—**एकेति** । पूर्वत्र मायापक्ष इह तु कार्यमाकाशादीति पक्षभेदादनुमानभेदः । बाध्यत्वमधिष्ठानतत्त्वज्ञानापनोद्यत्वमेतद्दृश्यत्वादेरप्युपलक्षणम् । आकाशपूर्वं सकलमेव व्यावहारिकप्रमाणोपनीतं जगदेकाज्ञानविकल्पितमेकाज्ञानकृतमिति प्रतिज्ञा । एकत्वविशेषणमनेकाज्ञानपक्षमादायार्थान्तरत्वशङ्काव्यासेधार्थम् । अज्ञानमिति जगत्कारणस्य स्वतन्त्रमायाशङ्काव्यावृत्त्यर्थम् । यद्वैकेति मायाविद्याख्यस्वरूपभेदराहित्यं विवक्षितं न प्रत्यगज्ञानान्येशमायाविकल्पितमित्युक्तं भवति । व्याप्तिमाह—**इह यद्यदीदृशमिति** । हेत्वसिद्धिं परिहरति—**बाध्यं चेदमिति** । चेच्छब्दोऽसंदेहे संदेहवचनो यदि वेदाः प्रमाणमितिवत् । ‘ परेऽव्यये सर्व एकी भवन्ति ’ [ मुण्ड० ३ । २ । ७ ] ‘ अत्र ह्येते सर्व एकं भवन्ति ’ [ बृह० १ । ४ । ७ ] ‘ नेह नानाऽस्ति किंचन ’ [ बृह० ४ । ४ । १९ ] इत्यादिश्रुतिभिर्विद्वदनुभवेन च सकारणस्य जगतो बाध्यत्वादित्यभिप्रायः । उपनयनिगमने आह—**तस्मादिदं तादृशमिति** । एषामनुमानानां संक्षेपेणाऽऽभासानुद्धरति—**शुद्धमिति** । धूमवद्धूमानुमानवदिदं साधनं बाध्यत्वादिरूपं शुद्धं निर्दुष्टं तत्तद्रूपांञ्चरूप्यान्वयात्पक्षधर्मत्वादिपञ्चरूपोपेतत्वादित्यर्थः । अनेनान्वयव्यतिरेकत्वमेषामनुमानानां व्यतिरेकव्याप्त्यावात्मा दृष्टान्तः ॥ १७० ॥

**सु० टी०—ननु ‘ आत्मन आकाशः संभूतः ’ [तैत्ति० २ । १ । १]**

इत्यादिश्रुतिविरुद्धं जगतोऽज्ञानहेतुकत्वानुमानमित्याशङ्क्य निराकरोति—

अनुमानमागमविरुद्धमिदं
प्रतिवादिनो यदि मतं तदसत् ।
न तमोऽतिरिच्य जगतो जनक-
प्रतिपादकं वचनमस्ति यतः ॥ १७१ ॥

अनुमानमिति । कुतोऽसदित्याह—न तम इति । आत्मनः कूटस्थस्य परिणामासंभवात् ‘ इन्द्रो मायाभिः ’ [ बृ॰ २ । ५ । १९ ] इति च मायापरिणामत्वश्रुतेः ‘ तम आसीत् ’ [ ऋ० सं० ८ । ७ । १७ ] इत्यादिश्रुतौ चाज्ञानस्य जगत्कारणत्वश्रवणादज्ञानमाययोश्चाभेदादागमविरुद्धमिदमनुमानमित्यर्थः ॥ १७१ ॥

अ० टी०—ननु ‘ मायां तु प्रकृतिम् ’ [ श्वेता० ४ । १० ] इत्याद्यागमानामज्ञानव्यतिरिक्तजगदुपादानमायाभिधानत्वात्तैर्बाधितविषयाण्यनुमानानीति शङ्कित्वा परिहरति—**अनुमानमिति** । तदसदिति दूषणप्रतिज्ञायां हेतुमाह—**न तम इति** । ‘ नासदासीन्नो सदासीत् ’ इत्युपक्रम्य ‘ तम आसीत् ’ इति तमस एव जगद्बीजत्वं स्पष्टं प्रदर्श्यते । तमश्चाज्ञानमेव श्रुतिषु श्रूयमाणमिति तदेव क्वचिन्मायाऽक्षरमव्यक्तमसदव्याकृतमित्यादिशब्दैरभिलप्यते । अतस्तमोव्यतिरेकेणार्थान्तरं जगज्जनकमस्तीति प्रतिपादकं वेदवचनं नास्ति । तस्मान्मायाश्रुतिर्नानुमानबाधिका । अत एवात्रोपाधिशङ्काऽपि न यत इति तम आसीदित्यादिश्रुतिभिर्विरोधादिति भावः ॥ १७१ ॥

सु० टी०—नन्वज्ञानक्षोभिकेश्वरशक्तिर्माया सा च नाज्ञानं किं तु दोषत्वादज्ञानसहकारिणीति चेन्न दोषान्तरानपेक्षस्यैवाज्ञानस्य जगद्धेतुत्वमित्युक्तत्वादित्याह—

विषयकरणदोषान्न भ्रमः संविदि स्या-
दपि तु भवति मोहात्केवलादेवमेव ।
भगवति परमात्मन्यद्वितीये समस्त-
द्वयमतिरियमस्तु भ्रान्तिरज्ञानहेतुः ॥ १७२ ॥

विषयेति । कालात्मकं चैतन्यमेव मायाक्षोभकं नान्यदिति भावः । पूर्वमेव व्याख्यातमन्यत् ॥ १७२ ॥

अ० टी०—नन्वज्ञानं चेदुपादानं तर्हि तस्य क्षोभकतया सहकारि किंचिदभ्युपेयं काचादिस्थानीयं तच्चाभ्युपगम्यमानं श्रुतिस्मृतिप्रसिद्धेश्वराश्रयमायाख्यमज्ञानादन्यदेवेति चेन्नाज्ञानस्य स्वकार्ये सहकार्यपेक्षाभावादित्यभिप्रेत्याऽऽह—**विषयकरणदोषादिति**। पूर्वाध्याये पद्यमिदं व्याख्यातं सर्वत्राज्ञानक्षोभकं चैतन्यमेव काचादिरूपेणापि तस्यैव क्षोभकतयाऽवस्थानाङ्गीकारादिति भावः ॥ १७२ ॥

**मु० टी०—कथं पुनरेकमेवाज्ञानमेकस्मिन्नेव ब्रह्मणि दुःखित्वसर्वज्ञत्वादिविरुद्धधर्मकजीवेश्वरयोरुपाधिः स्याद्विरुद्धकार्यस्य भिन्नहेतुनियम्यत्वादिति चेदुक्तवैलक्षण्यादित्याह—**

**अज्ञानिनो भवति दुःखमनेन क्लृप्तं**
**सर्वेश्वरस्य न खलु प्रतिभासतोऽपि ।**
**सर्वज्ञतादिगुणजातममुष्य नास्य**
**संसारिणः स्फुरति मोहसमन्वितस्य ॥ १७३ ॥**

अज्ञानिन इति। **आवृतनित्यमुक्तानन्दत्वस्य जीवस्येत्यर्थः। अनेनाज्ञानेन बाधकात्मनेत्यर्थः। प्रतिभासतोऽपि स्वस्मिन्निति शेषः। अमुष्येश्वरस्य वशिनोऽनावरकत्वादस्मिन्नीश्वरे सर्वज्ञत्वजगत्कर्तृत्वादिविक्रियामात्रमनेनाज्ञानेन क्लृप्तं भवतीति संबन्धः। जीवस्य सर्वज्ञत्वाद्यस्फुरणे हेतुमाह—**मोहेति। **एकाज्ञानकार्यस्यापि सर्वज्ञत्वादेरज्ञानावृते जीवे स्फुरणाभावो युक्त इत्यर्थः॥ १७३ ॥**

अ० टी०—नन्वेकस्यैव चैतन्यस्येश्वरत्वे जीवत्वे वैकमेवाज्ञानमुपाधिश्चेत्स्यात्कथं मुक्तत्वसंसारित्वसर्वज्ञत्वाल्पज्ञत्वादिव्यवस्थेति चेदज्ञानोपाधेरेकत्वेऽपि पूर्वोक्तरूपभेदात्तदुपपत्तिरित्याह—**अज्ञानिन इति**। अनेनाज्ञानेन क्लृप्तं विवर्तितं दुःखमज्ञानिनो भवति। आवरणप्रधानं ह्यज्ञानं चैतन्यपारतन्त्र्यापादकमिव जीवे भाति। अतस्तस्मिन्दुःखित्वादिभ्रमबीजं भवति। अतोऽहं न जान इत्यज्ञानित्वमात्मनि पश्यतो जीवस्यैव दुःखित्वं भवतीत्यर्थः। सर्वेश्वरस्य विक्षेपप्रधानाज्ञानोपाधिकस्य न खलु प्रतिभासतोऽपि दुःखं भवति तस्य ज्ञानप्रतिबन्धकाहंकरणाद्यभावात्किं तु तस्मिन्स्वाभाविकस्वरूपातिरस्कारात्स्वोपरागतो विक्रियामिवाऽऽसञ्जयतीव जगत्स्रष्टृत्वादिकं धर्मजातमापादयतीवेत्यर्थः। एवमेव सर्वज्ञत्वादिव्यवस्थाऽपीत्याह—**सर्वज्ञतादीति**। अमुष्येश्वरस्य मोहसमन्वितस्येति जीवस्येश्वराभिन्नस्यापि सर्वज्ञत्वाद्यस्फुरणहेतुः ॥ १७३ ॥

**सु० टी०—एवं स्वमतेनोपपादितं भाष्यकारादीनां जीवाज्ञतावचनाभिप्रायमुपसंहरति—**

**जीवन्मुक्तिगतो यदाह भगवान्सत्संप्रदायप्रभु-**
**र्जीवाज्ञानवचस्तदीदृगुचितं पूर्वापरालोचनात् ।**
**अन्यत्रापि तथा बहुश्रुतवचः पूर्वापरालोचना-**
**न्नेतव्यं परिहृत्य मण्डनवचस्तद्ध्यन्यथा प्रस्थितम् ॥१७४॥**

जीवन्मुक्तिगत इति । **जीवन्मुक्तिनिरूपणे स्थित इत्यर्थः । ईदृगिति पूर्वोक्तं परामृशति । अन्यत्रापि भाष्ये । मण्डनाद्युक्तरीत्याऽपि जीवाज्ञत्वसमर्थं न संभवतीति चेन्न तस्य मतान्तरत्वेन भाष्यकारानभिमतत्वादित्याह**—परिहृत्येति ॥ १७४ ॥

अ० टी०—तदेवं चिन्मात्राश्रयविषयमज्ञानं तद्वशादेव च चैतन्यस्य जीवेश्वरभावस्तद्गतधर्मव्यवस्था चेत्युक्तं तत्र जीवस्याज्ञानमिति सिद्धवत्कृत्य जीवन्मुक्तिप्रकरणे व्यवहारोऽस्त्यन्यत्र च भाष्यकारीय एव तादृशो व्यवहारो दृश्यते सोऽप्युक्तरीत्यैव व्याख्येय इत्याह—**जीवन्मुक्तीति** । भगवाञ्श्रीकृष्णस्तदुक्तेः प्रत्येतव्यत्वे हेत्वर्थं विशेषणं सत्संप्रदायप्रभुरिति स जीवन्मुक्तिगतो जीवन्मुक्तिप्रकरणं प्रकृत्य स्थितो 'यदा ते मोहकलिलं बुद्धिर्व्यतितरिष्यति' [भ० गी० २ । ५२] इति यज्जीवाज्ञानवच आह तदीदृगुचितमुक्तन्यायेन चिन्मात्राश्रयविषयमप्यज्ञानं जीवकोटावावरकतया स्पष्टी भवतीश्वरकोटौ चिन्मात्रे च न तथा स्पष्टी भवतीति कृत्वा जीवाज्ञानव्यवहार इति युक्तमित्यर्थः । अन्यत्रापि ग्रन्थान्तरे च बहुश्रुतो भाष्यकारस्तस्य वचः पूर्वापरालोचनादित्थमेव नेतव्यं किं तु मण्डनवचः परिहृत्य त्यक्त्वा हि यस्मात्तदन्यथा प्रस्थितं प्रस्थानान्तरं तज्जीवस्यैवाज्ञानमिति मण्डनस्य मतं यत्तथैव तदस्तु नास्माकं तदुपरोध्यमित्यर्थः । यद्वा भगवानिति भगवत्पादाः श्रीमच्छंकराचार्या उक्ताः । सत्संप्रदायप्रभुरिति च तद्विशेषणम् । बहुश्रुताः सुरेश्वराचार्यप्रभृतयः । अन्यत्समानम् ॥ १७४ ॥

**सु० टी०—अन्यत्रापीत्युक्तं भाष्यमर्थतो दर्शयति—**

**जीवस्य कार्यकरणाधिपतेरविद्या**
**दोषान्वितस्य तमसाऽऽवृतमन्धदृष्टेः ।**

---

१ क. 'तमूढदृ'।

ज्ञानं निरावरणमैश्वरमित्यपीदं
भाष्याक्षरं कथितनीतिवशेन योज्यम् ॥ १७५ ॥

जीवस्येति । अक्षरब्राह्मणेऽविद्याविशिष्टः कार्योपाधिरात्मा जीवो निरतिशयज्ञानशक्तिरात्माऽन्तर्यामीत्यादि । तथाऽन्यत्र त्वं न जानीषे धर्माधर्मप्रतिबद्धज्ञानशक्तित्वादहं त्वनावरणज्ञानशक्तित्वाद्वेदेत्यादि । तदप्युक्तन्यायेन योज्यमित्यर्थः । कार्यं स्थूलशरीरं करणं लिङ्गम् । तदवच्छिन्नस्याविद्येत्यर्थः । अत्र हेतुः—दोषान्वितस्येति । पूर्वपूर्वसंसारवासना दोषः । त्वं न जानीष इति भाष्यं दर्शयति—तमसेति । अन्धदृष्टेः प्रतिबद्धज्ञानशक्तेः । ज्ञानमिति संबन्धः । तन्त्रेणोत्तरार्धद्वयं दर्शयति—ज्ञानमिति । ज्ञानं नित्यमुक्तात्मस्फुरणम् ॥ १७५ ॥

अ० टी०—तथाऽन्यदपि भाष्यं जीवाज्ञानाभिधायि यत्तदर्थत उपादायोक्तप्रकारेण योज्यमित्याह—जीवस्येति । अक्षरब्राह्मणभाष्ये तावदुक्तमविद्याविशिष्टः कार्यकरणोपाधिरात्मा जीव उच्यते । नित्यनिरतिशयज्ञानशक्त्युपाधिरात्माऽन्तर्यामीश्वर उच्यते । एतदिह पूर्वार्धेनार्थतोऽनूदितं धर्माधर्मप्रतिबद्धज्ञानशक्तित्वं जीवस्य दोषस्तेन दोषेणान्वितस्य जीवस्याविद्या न तद्रहितस्येश्वरस्येति योजना । तमसाऽऽवृतमूढदृष्टेरिति तस्याविद्यावत्त्वमनुभवसिद्धमिति दर्शयति । तथा भगवद्गीताभाष्येऽपि—त्वं न जानीषे धर्माधर्मप्रतिबद्धज्ञानशक्तित्वादहं तु नित्यशुद्धबुद्धमुक्तस्वभावत्वादनावरणज्ञानशक्तित्वाद्वेदेत्यादि यदुक्तं यच्च प्रागुक्तं यच्चान्यत्राप्युक्तं भवेत्तत्सर्वमपि कथितनीतिवशेनोक्तन्यायेन योज्यमित्युत्तरार्धेनाऽऽह—ज्ञानं निरावरणमिति ॥ १७५ ॥

सु० टी०—कथितनीतिमेव स्पष्टयति—

स्पष्टं तमःस्फुरणमत्र न तत्र तद्व-
त्सर्वेश्वरे सदिति तत्र निषिध्यते तत् ।
बिम्बे तमोनिपतिते प्रतिबिम्बके वा
देहद्वयावरणवर्जितचित्स्वरूपे ॥ १७६ ॥

स्पष्टमिति । अत्र जीवे । तत्र सर्वेश्वरे । न तत्स्पष्टमिति तत्तत्र निषिध्यत इत्यर्थः । अद्वैतवादिनः कथमत्र तत्रेति विभाग इति चेत्तत्राऽऽह—बिम्ब इति । औपाधिकस्वप्रतियोगिकस्वव्याप्यवृत्तिभेदाश्रयत्वे सत्यौपाधिक (* परिच्छेदशून्य इत्यर्थः । व्याप्यवृत्तीत्यवच्छिन्नव्यावृत्तौ ।

* ख. पुस्तकस्थोऽयं ग्रन्थः ।

प्रतिबिम्बक इति । **उपाधिनिष्ठत्वे सत्यौपाधिक)स्वप्रतियोगिकव्याप्यवृत्ति-भेदाश्रय इत्यर्थः । बिम्बे बिम्बेश्वरे । तमोनिपतिते मायाप्रतिबिम्बिते-श्वरे वा । कथमीश्वरे तमो न स्पष्टमिति चेत्तत्राऽऽह**—देहद्वयेति । **तस्य देहद्वयाभावेनाज्ञानव्यञ्जकाहंकारशून्यत्वादित्यर्थः ॥ १७६ ॥**

अ० टी०—कथितन्यायमेवाऽऽविष्करोति—**स्पष्टं तम इति** । अत्र जीवे तत्र सर्वेश्वरे तमःस्फुरणं तद्वज्जीव इव न स्पष्टमिति कृत्वा तत्र सर्वेश्वरे तत्तमो निषिध्यते न तमःसंबन्धस्यैवाभावादिति योजना । यदि जीवाश्रितमज्ञानं न भवतीश्वरे च तन्निषिध्यमानं तदाश्रितं न भवति तर्हि किमाश्रितं तदित्यपेक्षायामाह—**बिम्ब इति** । बिम्बे तमोनिपतिते कारणमायाप्रतिबिम्बित ईश्वरे प्रतिबिम्बके कार्योपाधिमायागताभासविशिष्टे जीवे वा न तम इति नकारानुकर्षणेन योजना । अपि तु चित्स्वरूपे । देहद्वयावरणवर्जितेति चित्स्वरूपविशेषणेनोपाधिसंबन्धं निरस्यति कार्यकारणोपाधिरहिते तदुपलक्षिते सर्वानुस्यूते चिन्मात्रे तम आश्रितमित्यर्थः ॥ १७६ ॥

**सु० टी०—एवं च किंचिज्ज्ञो जीवो मूढत्वात्सर्वज्ञं च ब्रह्माज्ञानतज्जराहित्यादित्यर्थकमपि भाष्यमावृतत्वानावृतत्वपरं न तु तयोरज्ञानभावाभावपरमित्याह—**

**किंचिज्ज्ञताऽस्य तमसाऽऽवृतनित्यदृष्टेः**
**सर्वज्ञता पुनरमुष्य परस्य पुंसः ।**
**अज्ञानतज्जकरणादिविवर्जितत्वा-**
**दित्येतदेवमुपपन्नतरं हि भाष्यम् ॥ १७७ ॥**

किंचिज्ज्ञतेति । **एतच्च जीवस्येश्वरविषयमज्ञानमिति पक्षे न घटते तदेश्वरस्यापि परिणामित्वेन सर्वज्ञत्वासंभवादिति भावः ॥ १७७ ॥**

अ० टी०—एवं चिन्मात्रमेवाविद्यावशाज्जीवत्वमीश्वरत्वं च भजत इत्यस्मिन्पक्षे जीवस्याज्ञानित्वादिकमीश्वरस्य सर्वज्ञत्वादिकमित्याद्यभिदधद्भाष्यं समञ्जसं न विपर्यय इत्यभिप्रेत्याऽऽह—**किंचिज्ज्ञतेति** । स्पष्टयोजनं पद्यम् ॥ १७७ ॥

**सु० टी०—उक्तमेव किंचिज्ज्ञत्वं सर्वज्ञत्वं च तत्कारणकथनेन द्रढयति—**

**अज्ञोऽहमित्यवगतिर्न परस्य पुंसः**
**सर्वज्ञतावगतिरात्मनि नास्य पुंसः ।**

---

१ ख. °स्याप° ।

अत्रापि कारणमहंकृतिवर्जितत्वं
तद्वत्तया च परमेऽल्पतरे च पुंसि ॥ १७८ ॥

अज्ञोऽहमिति । परस्य नाहमज्ञ इति धीर्बुद्ध्यादावभिमानराहित्यादस्य चाल्पकस्य जीवस्य नाऽऽत्मनि सर्वज्ञतावगतिरहंकृतिबद्धत्वात्तत्तादात्म्यापन्नत्वादित्यर्थः ॥ १७८ ॥

अ० टी०—ननु चिन्मात्रस्य चेदज्ञानाज्जीवेश्वरभावस्तर्हि तस्योभयत्र समत्वात्कथमीश्वरे सर्वज्ञत्वमज्ञानतत्कार्यविवर्जितत्वं च जीवे चाज्ञत्वादिव्यवस्था द्वयोश्चिन्मात्रगताज्ञानायत्तत्वाविशेषादिति चेत्तत्राऽऽह—**अज्ञोऽहमिति** । पूर्वार्धोक्तप्रतिज्ञायामुत्तरार्धेन हेतुमाह—**अत्रापीति** । अत्रोक्तव्यवस्थायामपि परमे पुंसीश्वरेऽहंकृतिवर्जितत्वमहंकारात्माभिमानरहितत्वं सर्वज्ञत्वादिप्रथनेऽज्ञत्वादेरप्रथने च कारणमल्पतरे पुंसि जीवे च पुनस्तद्वत्तयाऽहंकारात्माभिमानवत्तयाऽज्ञत्वादिस्फुरणं चेति योजना । तथाच चिदात्मनो जीवकोटावहंकाराद्यधिकोपाधिप्रवेशादीश्वरकोटौ च तदभावाद्युक्ता यथोक्तव्यवस्थेति भावः ॥ १७८ ॥

सु० टी०—नन्वीश्वरस्याप्यज्ञानसंबन्धश्चेत्कुतोऽहंकाराभिमानराहित्यमिति तत्राऽऽह—

बिम्बस्य नापि तमसि प्रतिबिम्बकस्य
संघट्टनं क्वचिदहंकरणेन शक्यम् ।
वक्तुं प्रभोः सकललोकहितावतार-
स्वेच्छाविनिर्मितवपुर्वरमन्तरेण ॥ १७९ ॥

बिम्बस्येति । बिम्बेश्वरस्य प्रतिबिम्बेश्वरस्य वा न क्वचिदहंकारेण संघट्टनं मोहनं शक्यं वक्तुमहमिहैवेत्यनुभवेन परिच्छिन्नस्य दुःखाद्याश्रयाहंकारस्य सर्वात्मकेश्वरेऽसंभवात्तस्य स्वरूपावरणशून्यत्वादित्यर्थः । ननु तस्यापि 'अहं सर्वस्य प्रभवः' [भ० गी० १०।८] इत्यादावहंमानः श्रूयत इति चेत्सत्यं स तु न व्यामोहकः स्वेच्छयैव गृहीतत्वादित्याह—सकलेति । रक्षोवधादिप्रयुक्तं भक्ताभिलषितवितरणप्रयुक्तं वा यत्समस्तप्राणिनां हितं तदर्थमवतारो यस्येदृशं स्वेच्छानिर्मितं न तु भोजककर्मार्जितं यन्मायिकं शरीररत्नं तद्व्यतिरेकेणेत्यर्थः ॥ १७९ ॥

---

१ ग. तद्भद्भता ।

अ० टी०—नन्वीश्वरस्याज्ञानसंबन्धश्चेदस्ति तर्ह्यहंकरणसंबन्धोऽपि स्यादितरस्येवेति चेन्नेत्याह—**बिम्बस्येति** । बिम्बस्य चिन्मात्रस्य क्वचिद्विषयेऽहंकरणेन संघट्टनं वक्तुं न शक्यं तस्य सर्वविकल्पाधिष्ठानतया कूटस्थस्य निर्विकल्पज्ञानरूपत्वान्नापि तमसि कारणाव्याकृतात्मकेऽज्ञाने प्रतिबिम्बकस्य क्वचिदहंकरणेन संघट्टनं वक्तुं शक्यं तस्याज्ञानतत्कार्याधिष्ठातृत्वेन स्वातन्त्र्यात्तस्मिन्नज्ञानतत्कार्यैक्यतातिशयायोगादिति योजना। कथं तर्हीश्वरस्य सतः श्रीकृष्णस्य 'अहमात्मा गुडाकेश' [ भ० गी० १० । २० ] इत्याद्यहंकरणसंबन्धव्यञ्जकं वचनं तत्राऽऽह—**प्रभोरिति** । सकललोकहिताय योऽवतारस्तस्मिन्स्वानां भक्तानामिच्छया प्रार्थनया विनिर्मितं संकल्पमात्रेण संपादितं वपुर्वरं वपुःश्रेष्ठमन्तरेण तद्वर्जयित्वा तत्र हि व्यवहारसिद्धये प्रभुणाऽहंकरणं स्वातन्त्र्येणाङ्गीकृतमिति भावः ॥ १७९ ॥

**सु० टी०—ननु माऽस्तु तस्याहमध्यासस्तथाऽप्यज्ञानाश्रयत्वादज्ञानित्वबुद्धिः स्यादिति चेन्नेत्याह—**

**नाहंकृतिं च परिहृत्य तमस्विताधीः**
**संभाव्यतेऽपहतपाप्मनि नित्यमुक्ते ।**
**तामन्तरेण घटते न च मूढभाव-**
**संभावनाऽपि परमेशितरि प्रसन्ने ॥ १८० ॥**

नाहंकृतिमिति । **अहमध्यासद्वारैवाहमज्ञ इत्यज्ञत्वधीदर्शनात्स्वाभाविकापहतपाप्मत्वादिबोधबाधितस्याज्ञानस्य नाऽऽवरणात्मनेश्वरे प्रतिभास इत्यर्थः । तदभावे च नतरां तत्र मूढत्वसंभावनेत्याह**—तामिति । **प्रसन्नेऽनवच्छिन्नतया प्रकाशमाने ॥ १८० ॥**

अ० टी०—तर्ह्यहंकारसंबन्धाभावेऽप्यज्ञानसंबन्धादेवेशस्याज्ञानित्वस्फुरणं स्यादिति चेन्नेत्याह—**नाहंकृतिं चेति** । स्वाभाविकं हीश्वरस्यापहतपाप्मत्वादि तादृशे परमेश्वरेऽहंकृतिं विरहय्य स्वतस्तमस्विताधीर्न संभाव्यतेऽपहतपाप्मत्वादिस्वभावविरोधादित्यर्थः । तामन्तरेण तमस्वित्वधियं विना मूढभावसंभावनाऽपि परमेशितरि प्रसन्ने स्वभावनिर्मले प्रकाशमाने न च घटते । तथा च चित्सदानन्देश्वरस्वभावबाधितवपुष्ट्वात्स्मिन्न ज्ञानावरणप्रतिभासस्तदभावे च न मूढभावोऽतः स्वभावानुरोधीश्वरत्वसर्वज्ञत्वादिकमेव तत्र भवति न विपरीतमिति भावः ॥ १८० ॥

सु० टी०—नन्वीश्वरस्यैच्छिकविग्रहपरिग्रहेऽप्यज्ञत्वमवर्जनीयं देहित्वस्याज्ञत्वव्याप्तत्वादिति चेन्न तस्य सर्वज्ञत्वेन वशित्वादित्याह—

स्वेच्छाविनिर्मितवपुर्भजनेऽपि तस्य
नाज्ञानितावगतिरस्ति वशित्वहेतोः ।
वश्यत्वहेतुकमिदं स्फुरणं नराणां
नाहं विजान इति नास्ति हृदीश्वरस्य ॥ १८१ ॥

स्वेच्छेति । वशित्वेति । अज्ञानं प्रति नियन्तृत्वादित्यर्थः । न हि वशीकृताज्ञानस्य तत्प्रभवैर्बुद्ध्यादिभिरभिभवसंभव इति भावः । जीवस्य त्वज्ञानपरतन्त्रस्य युक्तस्तदभिभूतत्वेनाज्ञत्वानुभव इत्याह—वश्यत्वेति ॥१८१॥

अ० टी०—तथाऽपीश्वरस्य स्वेच्छाविग्रहेऽहंकारादिसंबन्धदर्शनादज्ञत्वाद्यपि तस्मिन्संभाव्यत इति चेत्तत्राऽऽह—स्वेच्छाविनिर्मितेति । सत्यं स्वेच्छाविनिर्मितवपुरहंकरणमपि कदाचिद्भवेत् । एतावता तस्येश्वरस्याज्ञानितावगतिर्नास्ति न कल्प्यते कुतो वशित्वहेतोरज्ञानवशित्वात् । न हि योऽज्ञानं वशीकृत्याहंकारं शरीरं च स्वेच्छावशादसृजत तस्य स्वातन्त्र्यस्य स्फुटत्वात्तस्मिंस्तत्कार्यगतपारतन्त्र्यस्याऽऽरोपसंभावनेत्यर्थः । यस्मान्नराणां जीवानां नाहं विजान इतीदं स्फुरणं वश्यहेतुकं कार्यगतपारतन्त्र्यारोपनिमित्तकमतस्तदभावादीश्वरस्य तदावरणरूपेण नाहं विजान इत्यज्ञानस्फुरणं नास्ति स्वेच्छावतारेऽपीत्यर्थः ॥ १८१ ॥

सु० टी०—कथं तर्हि रघुनाथस्याज्ञत्वादिव्यवहारः पुराणादिषु श्रूयत इति चेन्न तस्य तत्रैव निरङ्कुशैश्वर्यश्रवणेन सर्वज्ञत्वेऽपि संकल्पितक्रियत्काळाज्ञानस्य स्वीकृतमानुषचारित्र्यनटनाय स्वयमेव प्रवर्तितत्वादित्याह—

संकल्पपूर्वकमभूद्रघुनन्दनस्य
नाहं विजान इति कंचन कालमेतत् ।
ब्रह्मोपदेशमुपलभ्य निमित्तमात्रं
तच्चोत्ससर्ज स कृते सति देवकार्ये ॥ १८२ ॥

संकल्पेति । ननु तदज्ञानं ब्रह्मोपदेशापनोद्यत्वाज्जीवाज्ञानवत्पारवश्यप्रयुक्तमेवाऽऽस्तामिति नेत्याह—ब्रह्मेति । देवकार्यरक्षोवधानन्तरमिदमज्ञानं

१ ग. °जतोऽपि । २ क. ग. °त्वेनापि° ।

**हास्यामीति संकल्पितत्वात्स्वयमेवोत्ससर्ज निमित्तमात्रं तु ब्रह्मोपदेश इति त्यागस्वातन्त्र्यबोधकपुराणादेव ज्ञायत इत्यर्थः ॥ १८२ ॥**

अ० टी०—नन्वज्ञत्वादिकमपीश्वरस्य श्रीरामावतारे दृष्टमिति चेत्तदपि स्वातन्त्र्यविजृम्भितमेव न जीवानामिव पारतन्त्र्यप्रयुक्तं तदज्ञत्वादेः संकल्पपूर्वकत्वश्रवणादित्याह—**संकल्पपूर्वकमिति** । कंचन कालं दुष्टराक्षसनाशपर्यन्तं नाहं विजान इत्येतदज्ञत्वं संकल्पपूर्वकमभून्नाहंकरणपारवश्येनेत्यर्थः । नन्वौपदेशिकविद्यापोदितत्वात्तस्याप्यज्ञत्वं जीवाज्ञत्वसममिति चेन्नेत्याह—**ब्रह्मोपदेशमिति** । ब्रह्मणः प्रजापतेरुपदेशं निमित्तमात्रं संकल्पत्यागस्य द्वारमात्रमुपलभ्याऽऽदाय तच्च देवकार्ये देवकण्टकोद्धारे कृते सत्युत्ससर्ज संकल्पगृहीतमप्यज्ञत्वं स्वातन्त्र्येणैव तत्याज न लोकवज्जन्यविद्याबलादिति गम्यते स्वातन्त्र्यस्य रामे कदाऽपि तिरोधानादर्शनादित्यर्थः ॥ १८२ ॥

**सु० टी०—उक्तमुपसंहरति—**

**अज्ञानवर्जिततया परमेश्वरोऽसौ**
**सर्वज्ञ एव यदहंकृतिबन्धहीनः ।**
**ज्ञानं निरावरणमिष्टममुष्य यस्मा-**
**ज्जीवस्य सावरणमेव यतोऽनभिज्ञः ॥ १८३ ॥**

अज्ञानेति । **बुद्ध्याद्यध्यासहीनतया स्वगतेनाप्यज्ञानेनाऽऽवृतत्वादीशः सर्वज्ञ इत्यर्थः ।** जीवस्येति । **यतश्च जीवस्य तत्सावरणमत एषोऽनभिज्ञ इत्यर्थः ॥ १८३ ॥**

अ० टी०—तस्मादीश्वरस्याज्ञानसंबन्धेऽपि ज्ञानावरणाभावादितरस्याहंकारकञ्चुकितया तत्सत्त्वादिति युक्ता सर्वज्ञत्वाज्ञत्वादिव्यवस्थाऽस्मन्मत इत्युपसंहरति—**अज्ञानवर्जिततयेति** । यच्छब्दस्तस्मादर्थे प्रथमं योज्यः । यतोऽहंकृतिरूपबन्धहीनोऽत आवरणात्मकाज्ञानवर्जिततयाऽसौ परोक्षः परमेश्वरः सर्वज्ञ एवेत्यन्वयः । अर्थादहंकृतिबन्धवतोऽज्ञत्वमल्पज्ञत्वमनीश्वरत्वं चेत्युक्तं भवति । उक्तव्यवस्थायां पूर्वोक्तं नियामकं स्मारयति—**ज्ञानमिति** । अमुष्येश्वरस्य ॥ १८३ ॥

**सु० टी०—ननु चेतनत्वाज्ञानाश्रयत्वाविशेषे कुत इदं जीवेश्वरयोर्वैलक्षण्यमिति तत्राऽऽह—**

**सर्वप्रमाणफलभूतसमस्तसंवि-**
**ज्ज्ञानं बिभर्ति परमः पुरुषो न जीवः ।**

ज्ञानं निरावरणमैश्वरमस्तु तस्मा-
ज्जैवं च सावरणमस्य विशेषहेतोः ॥ १८४ ॥

सर्वेति । **सर्वेषां प्रमातॄणां चक्षुरादिसर्वप्रमाणाभिव्यक्ततया तत्फलभूतायाः संविद आवरणानभिभाव्याः सर्वप्रमेयावच्छिन्नचैतन्यरूपास्तासां समूहमनन्तचिद्रूपः परमात्मैव बिभर्ति सर्वप्रमेयोपादानत्वान्न तु जावः परिच्छिन्नत्वादितीश्वरज्ञानस्य निरावरणत्वं जीवस्य तु स्वरूपमावृतमित्यर्थः ॥ १८४ ॥**

अ० टी०—ननूभयोश्चेतनत्वाविशेषे कथमीशस्य ज्ञानं निरावरणं जीवस्य तत्सावरणमिति व्यवस्थेति चेत्तत्राऽऽह—**सर्वप्रमाणेति** । अयमर्थः—अस्ति तावत्सर्वप्रमाणानां फलभूता विषयस्फुरणाभिधेया संवित्प्रसिद्धा । सा च नाज्ञानेनाभिभाव्या तस्या अज्ञाननिवर्तकत्वादन्यथा विषयव्यवहारासिद्धेः । तस्याश्च प्रतिप्रमाणव्यापारं जायमानतया भासमानाया उपादानं तावदपेक्ष्यते । तदपि स्वसमानस्वभावा संविदेव सर्वफलोपादनतया सर्वात्मिकाऽखण्डैकरसाऽभ्युपेया । सा च ' विज्ञानमानन्दं ब्रह्म ' [ बृ० ३ । ९ । २८ ] इतिश्रुतेर्ब्रह्मरूपैव सती तद्धर्मतया व्यवह्रियत इति । एषाऽक्षरयोजना—सर्वेषां प्रमाणानां फलत्वेन भवन्ती या समस्तसंवित्सर्वा एव संविदस्तदेव ज्ञानं तत्परमः पुरुषो बिभर्ति स्वात्मतया धारयति न जीवोऽन्तःकरणवृत्तिपरिच्छिन्नचिदाभासमात्रज्ञानत्वात्तस्य । फलितमाह—**ज्ञानं निरावरणमिति** । तस्मादिति प्रथमं योज्यम् । तथा च चेतनत्वसाम्येनेश्वरस्याज्ञतानुमानमेतद्विरोधाद्विपक्षे बाधकाभावाच्चाप्रयोजकमिति सिद्धम्॥१८४ ॥

**सु० टी०—किं च ' तस्य भासा सर्वमिदं विभाति ' [ कठ० ५ । १५ ] इति स्वत एवाज्ञानतत्कार्यभासकत्वश्रुतेरपि निरावरणमैश्वरं ज्ञानमित्याह—**

अज्ञानतज्जमखिलं जगदात्मभासा
नित्यं प्रकाशयति संनिहितः सदात्मा ।
जीवस्तु नैवमिति सावरणं तदीयं
ज्ञानं निरावरणमैश्वरमुच्यते हि ॥ १८५ ॥

अज्ञानेति । **न ह्यावृतेनासत्कल्पेन ज्ञानेन प्रकाशनं संभवति व्यवहितत्वादित्यनावृतचैतन्य ईश्वरः सर्वज्ञो भवतीत्यर्थः । यतः सदात्माऽत एव संनिहितः । सदधिष्ठानकं हि सर्वमावरणाव्यवधानात्सति संनिहितमित्यर्थः । जीवस्य तु स्वाध्यस्ताज्ञानव्यवहितेषु क्रमिकमेव ज्ञानमिति सावरणं तदनुभूयत इत्यर्थः ॥ १८५ ॥**

अ० टी०—विशेषहेतोरित्युक्तं विशेषमेव स्फुटयति—**अज्ञानतज्जमिति** । सदात्मा सच्छब्दनिर्दिष्टः परमात्माऽज्ञानाद्यखिलं जगत्तदधिष्ठानत्वेन सदा संनिहितस्तत्स्वभासा स्वाभाविकेन चैतन्यज्योतिषा प्रकाशयत्यादित्यवत्स्वयं प्रकाशयति । आदित्यवत्स्वयं प्रकाशमानः स्वाध्यस्तं सर्वं प्रकाशयति । जीवस्तु नैवं तस्य स्वतःसिद्धज्ञानरूपत्वेऽप्युपाधिप्रविष्टतया परिच्छिन्नत्वादित्यतो हेतोस्तदीयं ज्ञानं सावरणमैश्वरं तु ज्ञानं निरावरणमित्युच्यते । हिशब्दो विद्वत्प्रसिद्धद्योतकः । जीवस्य हि ज्ञानं पुण्यापुण्यप्रयुक्तं प्रमाकरणवद्दोषतारतम्यवशात्तरतमभावेन जायमानमन्तःकरणवृत्तिकञ्चुकितं भवति सावरणं वस्तुतत्त्वानवगाहितत्वात् । ईश्वरस्य त्वेवंविधदोषासंबन्धान्नित्यनिरतिशयमेकरूपं सन्निरावरणमेव भवतीत्यभिप्रायः ॥ १८५ ॥

**सु०टी०—ईश्वरस्यानावृतत्वादेव सर्वसंनिधानान्नित्यसार्वज्ञ्यं न त्वज्ञानसंबन्धाभावादित्यत्र विष्णुपुराणवाक्यं प्रमाणयति—**

**ज्ञानात्मकस्यामलसत्त्वराशे-**
**रपेतदोषस्य सदा स्फुटस्य ।**
**किं वा जगत्यत्र समस्तपुंसा-**
**मज्ञातमस्यास्ति हृदि स्थितस्य ॥ १८६ ॥**

ज्ञानात्मकस्येति । **अमलो रजस्तमोभ्यामनभिभूतः सत्त्वराशिर्यस्य सत्त्वप्रधानमायाप्रतिबिम्बितस्येत्यर्थः । अत एवापेतावरणादित्वान्नित्यापरोक्षत्वेन सर्वदाऽभिव्यक्तस्य सर्वान्तर्यामिणः किमज्ञातमस्तीत्यर्थः ॥ १८६ ॥**

अ० टी०—ईश्वरस्य निरावरणज्ञानत्वमावरणाभावादेव न त्वत्यन्तमेवाज्ञानासंबन्धादित्यत्र विष्णुपुराणवाक्यं प्रमाणमाह—**ज्ञानात्मकस्येति** । अत्रामलसत्त्वराशेरितिपदेनेश्वरस्याज्ञानसंबन्धः सूचितः सत्त्वस्याज्ञानधर्मत्वात् । अपेतदोषस्येत्यावरणात्मकाज्ञानसंबन्धो निरस्तः । तत्र हेतुगर्भं विशेषणं सदा स्फुटस्येति । वैपरीत्येन वाऽनयोर्हेतुहेतुमद्भावः । ज्ञानात्मकस्येति सदा स्फुटत्वे हेतुः । समस्तपुंसां हृदि स्थितस्येति सर्वजीवान्तर्यामित्वोक्त्या सर्वजीवविलक्षणत्वेन परमेश्वरत्वमुक्तमेवंविधस्यास्य भगवतोऽत्र जगति किं वाऽज्ञातमविदितं विद्यते न किमपीत्यर्थः ॥ १८६ ॥

**सु० टी०—ईश्वरस्य वशित्वे जीवस्य च वश्यत्वे पुराणान्तरमाह—**

**मायामसौ वितनुते विभुरेव मेनां**
**सर्वेश्वरः सततमेव वशी करोति ।**

इत्यादिवाक्यमुपपन्नतरं पुराणे
स्वाज्ञानमस्य च वशे चिदधीनभावात् ॥ १८७ ॥

मायामिति । **वितनुते कार्यात्मना विस्तारयति यतो विभुस्तद्वशी तदे-वाऽऽह**—एवमिति । **भवतु मायाया वशी तथाऽप्यज्ञानेनाभिभूयेतेति चेन्नेत्याह**—स्वाज्ञानमिति । **अज्ञानमाययोरभेदस्योक्तत्वाच्चिच्छक्तिरूपमज्ञानमपि तद्वश्यमित्यर्थः ॥ १८७ ॥**

अ० टी०—ईश्वरस्य मायावित्वविषयं श्रवणमपि तत्र साक्षान्निर्दिष्टमित्याह—**मायामिति** । यतोऽसौ भगवान्विभुरतो मायां वितनुते जगदात्मना विस्तारयति । यतश्च सर्वेश्वरोऽत एवैवमेनां मायां सततमेव वशी करोति न कदाऽपि परवशोऽसावित्यर्थः । इत्यादिवाक्यं पुराणे पठ्यमानमस्मदुक्तरीत्योपपन्नतरमन्यथा तद्बाधितार्थं स्यादित्यर्थः । तत्र मायासंबन्ध एवोक्त ईश्वरस्य नाज्ञानसंबन्ध इति प्रतिभासात्कथमिदमुक्तेऽर्थे प्रमाणमिति चेन्मैवं मायाविद्याज्ञानशब्दानामर्थभेदाभावादित्यभिप्रेत्याऽऽह —**स्वाज्ञानमस्य चेति** । चिदधीनभावादज्ञानस्य सत्तास्फूर्त्योरिति शेषः । चितश्चेश्वरस्वरूपत्वादुक्तमस्याज्ञानवशित्वमित्यर्थः ॥ १८७ ॥

**सु० टी०—ननु भाष्यादौ जीव एवाज्ञानमीश्वरे च तन्निषेधः सर्वत्रोद्घुष्यत इति कथमीश्वरेऽज्ञानसंबन्ध इत्याशङ्क्य तद्वचनं सकलमुक्तरीत्यैव योज्यं न यथाश्रुतमित्याह—**

जीवाज्ञतावचनमेवमिदं समस्तं
सर्वत्र योज्यमितरत्र च तन्निषेधः ।
तस्मात्समञ्जसमिदं मतमस्मदीय-
माचार्यवाक्यमुपपन्नतरं हि तत्र॥ १८८ ॥

जीवेति । **इतरत्रेश्वरे । फलितमुपसंहरति**—तस्मादिति । **यतोऽज्ञानस्य चिन्मात्राश्रयत्वेऽपि तत्र तत्र जीवाज्ञतावचनमुपपन्नं तस्मादित्यर्थः । ॥ १८८ ॥**

अ० टी०—एवं जीवेश्वरयोरज्ञत्वसर्वज्ञत्वधर्मव्यवस्थाभिधायिग्रन्थगतिमज्ञानोपाधिकतयैवोपपाद्योपसंहरति—**जीवाज्ञतेति** । समस्तमिदं जीवाज्ञतावचनं वृद्धैरुपनिबद्धमेवमस्मदुक्तप्रकारेण सर्वत्र ग्रन्थसंनिवेशेषु योज्यम् । चिदात्मनि जीवत्वोपाधावेवाऽऽवरणात्मकाज्ञानस्फुरणमित्यज्ञो जीव इति वृद्धानां वचनमितरत्रेश्वरे तादृग्रूपस्यास्फुरणाभिप्रायेण

तन्निषेध इत्यर्थः । तदेव प्रत्यक्चैतन्यमेवाविद्ययाऽनेकजीवेश्वरादिभेदेन प्रत्यवभासत इत्यस्मन्मतमाचार्यसंमतं युक्तमेवेति सिद्धमुपसंहरति—**तस्मादिति** । तत्रास्मन्मते ॥१८८॥

**सु० टी०—कीदृशं तन्मतं तदाह—**

**चैतन्यमेव तु तमस्वि तदप्रबुद्धं**
**सर्वज्ञमेतदिह विश्वमिमं विभागम् ।**
**जीवेश्वरौ च जगदित्यपि निर्मिमीत**
**इत्येव वेदशिरसः प्रथितः प्रचारः ॥ १८९ ॥**

चैतन्यमेवेति । **चिन्मात्रमेवाज्ञानाश्रयस्तदेवाप्रबुद्धं मूढं सर्वज्ञमपि तदेव । तच्चेह तमस्विनि चैतन्य इमं समस्तं जीवेशजगद्विभागं निर्मिमीत इत्यर्थः । न चेदमस्मदिच्छाकल्पितं मतं किं तु सर्ववेदान्तसिद्धमित्याह**—इत्येवेति ॥ १८९ ॥

अ० टी०—न केवलमाचार्यवाक्यमेवास्मन्मतानुसार्यपि तु वेदान्तवाक्यप्रवृत्तिरपीदमेव मतमाश्रितेत्याह—**चैतन्यमेवेति** । तमस्व्यनाद्यज्ञानशबलितं चैतन्यमेव तु स्वतो निर्विभागं स्वगततमोविकारानुरोधेन तच्चैतन्यमप्रबुद्धं कार्योपाधिप्रवेशेनाज्ञं जीवशब्दवाच्यं जायते । एतदेव चैतन्यं सर्वज्ञं कारणोपाध्यनुरोधेन सर्ववस्तूपरागेण प्रकाशमानं सत्सर्वावभासकतया सर्वज्ञं च सज्जीवेश्वरौ जगदित्यपि चेमं विश्वविभागमिह व्यवहारकाले निर्मिमीत इत्येव वेदशिरसः प्रचारः प्रथितः सर्वशाखासु प्रसिद्ध इति योजना । वेदान्तेषु हि ब्रह्मात्मविद्यया तदविद्यानिरासेनाखिलस्यास्य जीवेश्वरजगद्विभागस्य निवृत्तिर्ब्रह्मभावापत्तिश्च श्रूयते तत्सर्वस्याविद्याकल्पितत्वमन्तरेण नोपपद्यते विद्यापोह्यस्याविद्यात्मत्वनियमात्सत्यस्य विद्यापोह्यत्वासंभवात् । तद्यथा बृहदारण्यके तावत् 'तदाहुर्यद्[1]ब्रह्मविद्यया सर्वं भविष्यन्तो मनुष्या मन्यन्ते किमु तद्ब्रह्मावेत्' [ बृ० १ । ४ । ९ ] इत्याक्षेपपूर्वकं 'ब्रह्म वा इदमग्र आसीत्' [ बृ० १ । ४ । १० ] इति विद्योत्पत्तेः प्रागपि ब्रह्मण एवाज्ञत्वमभिधाय 'तदात्मानमेवावेत् । अहं ब्रह्मास्मीति तस्मात्तत्सर्वमभवत्' [ बृ० १ । ४ । १० ] इति तस्यैव विद्यया स्वतःसिद्धसर्वज्ञसर्वात्मकं ब्रह्मभावं श्रावयति ब्रह्मकण्डिकाश्रुतिः । अत्र सर्वमभवदिति श्रूयमाणसर्वात्मभावस्य न मुख्यार्थत्वं किं त्वपवादार्थत्वं च तथा च यदिदं सर्वं जीवेश्वरजगद्विभागरूपं विश्वं तत्सर्वं ब्रह्माभवद्ब्रह्मणः पृथङ्नाभूत्तद्भवति भविष्यच्चेत्यर्थः । तथाऽन्यत्राध्यारोपापवादाभ्यां विश्वस्य प्रत्यगज्ञानसिद्धत्वं तद्याथात्म्यज्ञानबाध्यत्वं चावगम्यमानमेकस्यैव चिदात्मनोऽज्ञत्वशुद्धत्वादिकं

---

१ क. 'वद्यदेतद्ब्र'।

स्वाविद्यया स्वविद्यया चोपपन्नमिति गमयति । तस्माच्छ्रुतिगतिपर्यालोचनायामप्यस्मन्मतं युक्तमेवेतिभावः ॥ १८९ ॥

सु० टी०—ननु तदेव तमस्वीत्यमुक्तमीश्वरस्य सर्वज्ञस्य मायित्वेन परव्यामोहकत्वादतश्च जीवव्यामोहकरीश्वरमाया जीवाज्ञानाद्भिन्नैवेति चेत्तत्राऽऽह—

जीवेशानजगद्विभागजननी शक्तिर्जडा वैष्णवी
मायेशानगता सती भवति सा जीवावधिर्मोहगीः ।
जीवानीश्वर एष मोहयति ते जीवा विमुह्यन्त्यतः
शश्वद्विश्वदृगीश्वरो भवति ते जीवा विमूढा मुहुः ॥ १९० ॥

जीवेशानेति । जीवेश्वरजगद्भेदनिदानभूता या वैष्णवी शक्तिः सैवेश्वरगता सती मायाशब्दवाच्या भवति सैव च जीवमपेक्ष्य मोहगीरज्ञानपदवाच्या भवति वृद्धव्यवहारादित्यर्थः । मोह्यमोहकत्वादिवैचित्र्यं तु पूर्वोक्तवशित्वादिनिमित्तकमित्याह—जीवानिति । ॥ १९० ॥

अ० टी०—नन्वीश्वरो जीवान्मोहयतीत्यभिधानाच्छ्रुतिस्मृत्योरीश्वरमाया जीवमोहकरी जीवाज्ञानादन्यैवेति चेन्नेत्याह—जीवेशानेति । या जीवादिजगद्विभागजननी प्रत्यग्ज्ञानात्मिका जडा शक्तिः सैवेशानगता सती वैष्णवी माया भवति नान्या । जीवावधिर्जीवमर्यादा जीवे स्फुटतरं व्यवह्रियमाणेति यावत्सैव शक्तिर्जीवावधिः सती मोहगीर्मोहादिशब्दवाच्या भवतीति योजना । मायामोहयोरनिर्वचनीयत्वस्वभावाविशेषान्न स्वरूपभेदः किं तूक्तशक्तिवशित्वेन तद्वश्यत्वेन चेशजीवयोर्मायित्वमूढत्वव्यपदेशो मायावीश्वरपारन्त्र्याज्जीवस्य मायामोहितत्वव्यपदेशव्यवहारश्चोपपद्यत इत्यभिप्रेत्याऽऽह—जीवानीश्वर । एवं सति सर्वज्ञत्वाज्ञत्वाद्यपि व्यवस्थितमुपपद्यत इत्याह—अत इति ॥ १९० ॥

सु० टी०—एवं चाज्ञानैक्येऽपि जीवस्य संसारित्वमाविद्यकमीश्वरस्य जगत्कर्तृता मायिकीति वृद्धानां प्रसिद्धिर्युक्तैवेत्याह—

अज्ञानिनो भवति मोहविजृम्भितं त-
द्दुःखं जगज्जनकता परमेश्वरस्य ।

मायामयी भवति तेन विलक्षणत्व-
मेकान्ततः श्रुतिशिरस्सु तयोः प्रसिद्धम्॥ १९१ ॥

अज्ञानिन इति । जीवस्येश्वरस्य चेत्यर्थः । तर्हि यस्याज्ञानं भ्रमस्तस्येति न स्यादिति चेत्तत्राऽऽह—तेनेति । जीवेश्वरयोरेकान्ततो वेदान्तप्रसिद्धं यद्वैलक्षण्यं तत्त्वेनैव प्रागुक्तस्वातन्त्र्यास्वातन्त्र्यादिनेत्यर्थः ॥ १९१ ॥

अ० टी०—अत एवैकाज्ञानं प्रति वशित्ववश्यत्ववशादीशस्य जगद्धेतुत्वं जीवस्य दुःखित्वादिसंसारधर्मवत्त्वं व्यवतिष्ठत इति प्रकरणोपसंजिहीर्षयाऽऽह—**अज्ञानिन इति।** तत्प्रसिद्धं दुःखमज्ञानिनो जीवस्य मोहविजृम्भितं भवति परमेश्वरस्य जगज्जनकता मायामयीह भवत्युपपद्यत इत्यर्थः । तेन यथोक्तन्यायेनोक्तप्रकारेण च तयोर्जीवेश्वरयोः श्रुतिशिरःसु विलक्षणत्वमेकान्ततः प्रसिद्धं न प्रकारान्तरेणेत्यर्थः ॥ १९१ ॥

सु० टी०—इतोऽपि चिन्मात्रनिष्ठमप्यज्ञानं जीवगततया व्यवहरन्तीत्याह—

चैतन्यस्याज्ञानशक्तेरनादे-
र्जीवत्वं तु व्यञ्जकं कल्पयन्तः ।
जीवारूढं व्यक्तमज्ञानमाहु-
र्जीवो मूढः कथ्यतेऽतो बहुज्ञैः ॥ १९२ ॥

चैतन्यस्येति । यतोऽनादेरपि चिन्निष्ठाज्ञानशक्तेर्जीवत्वं व्यञ्जकमनुभूयते यथा परेषां व्यक्तियोग्यत्वं जातेरित्यर्थः । कुत इत्याह—जीवारूढमिति । ततश्च जीवेश्वरजगद्भेदस्य प्रत्यगज्ञानवशादुपपत्तेर्नाद्वैतसमन्वयस्य भेदग्राहिप्रत्यक्षादिभिर्बाध इति भावः ॥ १९२ ॥

अ० टी०—एवं सति वृद्धानां जीवाज्ञत्ववचनमप्युक्तप्रकारेणोपपन्नमिति प्रकरणार्थमुपसंहरति—**चैतन्यस्येति** । चैतन्यस्य चिन्मात्रस्य संबन्धिनी या तदाश्रयविषयाऽज्ञानात्मिका शक्तिस्तस्या अनादेरज्ञानात्मना व्यञ्जकं जीवत्वं चैतन्यस्यान्तःकरणोपाध्युपरक्तत्वलक्षणं कल्पयन्त आचार्या जीवारूढं सदज्ञानमज्ञानात्मना व्यक्तमाहुरतो हेतोर्बहुज्ञैर्विद्वद्भिर्जीवो मूढः कथ्यत इत्यपि सिद्धमित्यर्थः । तस्मात्प्रत्यक्चैतन्यमेवाज्ञानसंबद्धं सदीश्वरभावेन जगत्स्रष्टृत्वादिभाग्भवति जीवभावेन च संसरति तत्त्वज्ञानेन च समस्तविभागप्रहाणेन मुच्यत इत्ययमेव सूत्रकारस्यापि सिद्धान्त इति द्रष्टव्यम् ॥ १९२ ॥

सु० टी०—ननु सूत्रकारस्य नेदृगभिप्रायो दृश्यते परिणामस्यैव प्रायशो वर्णितत्वेन तत्रैव तात्पर्योन्नयनादिति चेन्न प्रपञ्चस्य व्यावहा-

रिक्तत्वेन स्वप्नादिवैधर्म्यकथनाय तद्वर्णनं न तु तत्त्वबुद्ध्याऽन्यथा पूर्वोत्तरविरोधादित्याह—

अत्रैव वस्तुनि दृढं व्यवतिष्ठमानः
प्रौढिप्रदर्शनपरः पुनरन्यदन्यत् ।
भाषापदं किमपि निक्षिपति स्फुटं त-
दस्माभिरेवमुपपादितमञ्जसैव ॥ १९३ ॥

अत्रैवेति । नित्यमुक्ताद्वितीय आत्मा प्रपञ्चस्त्वनिर्वचनीय इत्यत्रैव सिद्धान्ते स्थैर्यमापन्नोऽपि प्रौढिपरोऽभ्युपेत्य वादी सन्नन्यदन्यद्भाषापदं सूत्रवाक्यं निक्षिपति गृह्णाति । क्वचित् 'स्याल्लोकवत्' [ ब्र० २ । १ । १३ ] इति, परिणामविषयं क्वचित् 'नेतरोऽनुपपत्तेः' [ ब्र० सू० १ । १ । १६ ] इति जीवेश्वरभेदविषयमिति । तर्हि सूत्रकृन्मतमेव तत्किमिति न भवतीत्यत आह—स्फुटमिति । लोकवदित्यादेरन्यथोपपादितत्वादित्यर्थः ॥ १९३ ॥

अ० टी०—यद्येवं कथं तर्हि 'स्याल्लोकवत्' [ ब्र० २ । १ । १३ ] इति सूत्रकारस्य परिणामाभिधानं जीवेश्वरभेदसिद्धवत्कारेण च 'नेतरोऽनुपपत्तेः' [ ब्र० १ । १ । १६ ] 'अधिकं तु भेदनिर्देशात्' [ ब्र० २ । १ । २२ ] इत्यादिविवरणं चोपपद्यत इति चेन्नायं दोषो यथोक्त एव सिद्धान्ते कंचनोपकारमालक्ष्य प्रौढिवादतया तथा निर्देशोपपत्तेरित्याह—अत्रैवेति । चिन्मात्रमेवाविद्याशक्तियोगादुक्तविधया जीवेश्वरादिभेदभागित्यत्रैव वस्तुनि दृढं स्वसिद्धान्तानिश्चिततया व्यवतिष्ठमानः सूत्रकारः प्रौढिदर्शनपरः सन्पुनरन्यदन्यद्भाषापदं किमपि निक्षिपति परिणामवादजीवेश्वरभेदादिद्योतकं पदं कथयति न तत्र तस्य तात्पर्यमित्यर्थः । यद्भाषापदं सूत्रकारोऽकथयत्तदस्माभिरेवमुक्तरीत्याऽञ्जसा सामञ्जस्येनोपपादितमेवेति योजना ॥ १९३ ॥

सु० टी०—इतश्च नेदं सूत्रकृन्मतमित्याह—

विस्पष्टमात्ममतमेव हि सर्वधर्म-
सूत्रेण सूत्रकृदिदं दृढमाचचक्षे ।
सर्वज्ञतादिपरिपालनतत्परः सं-
स्तत्रैव भाष्यकृदपीदमुवाच यत्नात् ॥ १९४ ॥

विस्पष्टमिति । 'सर्वधर्मोपपत्तेश्च' [ ब्र० सू० २ । १ । ३५ ] इति सूत्रेण जगत्कारणत्वतद्बीजसर्वज्ञत्वादिधर्माणां ब्रह्मण्युपपत्तिं वदतः

सूत्रकृतो जगद्विवर्ताधिष्ठानत्वमेवाभिमतं कूटस्थस्य तात्त्विककारणत्वासंभवादत इदं यत्प्रागस्माभिरुक्तं तदेव विस्पष्टमात्ममतत्वेन मुनिरुक्तवानित्यर्थः । दार्ढ्यमेव दर्शयति—सर्वज्ञतेति । न तावत्कर्तृत्वमुपादानज्ञानं विना, तच्च जगत्कर्तुः सर्वज्ञत्वं विना कर्तृत्वं च कूटस्थस्य न मायां विनेति विवर्त एवास्य संमत इत्यर्थः । अत एव भाष्यकारोऽपि सर्वज्ञं सर्वशक्ति महामायं ब्रह्मेति तथैव व्याख्यातवानित्याह—अत्रैवेति ॥ १९४ ॥

अ० टी०—नन्वयं सूत्रकारस्य प्रौढिवादो न सिद्धान्तत्वेनाभिमत इति कथमवगम्यते मायावाद एव तथा किं न स्यादिति चेन्मैवं 'सर्वधर्मोपपत्तेश्च' [ ब्र० सू० २ । १ । ३५ ] इति सूत्रेण स्वपक्षसाधनप्रकरणमुपसंहरता सूत्रकारेणाज्ञानमाययैव कारणत्वापेक्षितसर्वधर्मसिद्धिरीश्वरस्येति मुखतो मायावादस्य सिद्धान्तितत्वदर्शनादित्याह—विस्पष्टमिति । इदमेवाऽऽत्ममतमिति संबन्धः । ढढं विस्पष्टं चेदं मायानिबन्धनमीश्वरस्य कारणत्वायुक्तवानिति कथं तस्मिन्सूत्रेऽज्ञानमायादिशब्दादर्शनादिति चेत्तत्राऽऽह—तत्रैवेति । अस्मिन्नेव सूत्रे सर्वज्ञं सर्वशक्ति महामायं ब्रह्मेति वदन्भाष्यकृद्यत्नादिदं माययैव ब्रह्मणः सर्वज्ञत्वादिधर्मो जीवेश्वरजगदाकारश्चेत्येतदाहेति तथा च भाष्यवचनादेव सूत्राभिप्रायस्य सर्वत्र ज्ञायमानत्वान्नात्र विप्रतिपत्त्यवकाश इत्यर्थः ॥ १९४ ॥

सु० टी०—एवं स्वमतेन चिन्मात्राश्रयविषयमज्ञानं जगत्कारणमित्युक्त्वा जीवस्याज्ञानमिति पक्षं निरस्यति—

अज्ञानित्वं ब्रह्मणो जीवता चे-
न्नाज्ञानित्वं तत्र जीवस्य युक्तम् ।
अज्ञानित्वे चान्यदभ्युपेत-
मज्ञानित्वं यद्यहो कष्टपिष्टिः ॥ १९५ ॥

अज्ञानित्वमिति । जीवत्वं हि ब्रह्मणो न स्वाभाविकमसंसारित्वश्रुतिविरोधात् । नाप्युपाधिकृतमद्वैतवादिनो वास्तवोपाध्यसंभवात् । अतश्चाज्ञानावच्छिन्नत्वमेव ब्रह्मणो जीवत्वं चेत्तत्राऽऽह—नाज्ञानित्वमिति । किं जीवत्वापादकमज्ञानं तद्वृत्त्यज्ञानाद्भिन्नमुताभिन्नमाद्ये दोषमाह—अज्ञानित्व इति । अज्ञानित्वस्यापि शुद्धब्रह्मावृत्तित्वेन तदाश्रयावच्छेदकमज्ञानान्तरं वाच्यमेवं तस्य तस्यापीत्यनवस्थेत्याह—अहो इति॥१९५॥

अ० टी०—तदेवं प्रत्यङ्मात्राश्रयविषयमज्ञानं तद्विलासश्चायं सर्वो जीवेशादिभेदस्तस्यैव प्रत्यक्चिन्मात्रस्य विद्योदये सर्वात्मना निवर्तत इति स्वमतमुपपादितमिदानीं तत्स्थेमार्थं पुनरपि प्रत्यावृत्य जीवस्यैवाज्ञानं ब्रह्मविषयकं न ब्रह्मणोऽज्ञानसंबन्धस्तथात्वे तस्य जीवत्वापत्तेर्विशुद्धत्वं ब्रह्मेश्वरो वा न सिध्येदिति ये मन्यन्ते तन्मतं दूषयति—**अज्ञानित्वमिति ।** "सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य" [ छा० ६ । ३ । २ ] इत्यादिप्रवेशश्रुतीरनुसरता ब्रह्मण एव स्वसृष्टकार्यानुप्रवेशेन जीवभाव इति वक्तव्यम् । तत्रेदमभिधीयतां—ब्रह्मणो जीवत्वं नामाज्ञानित्वादन्यदज्ञानित्वमेव वेति । नाऽऽद्यो विद्यापोह्यस्य जीवभावस्याविद्यात्मत्वानपायाद्ब्रह्मण्यविद्याप्रवेशात् । द्वितीये ब्रह्मणो जीवता चेदज्ञानित्वमभिमतं तत्र पक्षे जीवस्याज्ञानित्वं न युक्तं ब्रह्मण एवाज्ञत्वाज्जीवस्य तदसिद्धेः । कुतो जीवस्याज्ञत्वादिसिद्धिरिति चेत्तत्र वक्तव्यं किं ब्रह्म येनैवाज्ञानेन जीवभावमापन्नं तेनैवाज्ञानित्वं जीवस्याज्ञानान्तरेण वेति । तत्राऽऽद्ये स्यादात्माश्रयताऽज्ञानविशिष्टे जीवेऽज्ञानाश्रयत्वमिति स्वाश्रयतापत्तेरित्यर्थः । द्वितीयमनूद्य दूषयति—**अज्ञानित्वे चेति ।** यद्यन्तः पक्षानुवादः । अहोइत्यादिर्दूषणभागः । पिष्टिः पिष्टपेषणं क्लिष्टं कल्पनं पूर्वाज्ञानेनैवाभिमतव्यवहारसिद्धेरज्ञानान्तरवैयर्थ्यादनवस्थापाताच्चेत्यर्थः ॥ १९५ ॥

**सु० टी०—पुनश्च तदज्ञानं शुद्धब्रह्माश्रयं प्रसज्जते तच्च तवानिष्टमेवेत्याह—**

**अज्ञानित्वं ब्रह्मणश्चानभीष्ट-**
**मस्मिन्पक्षे दुर्निवारं प्रसक्तम् ।**
**अज्ञानित्वं ब्रह्मणश्चेदभीष्ट-**
**मस्मत्पक्षस्त्यज्यते कस्य हेतोः ॥ १९६ ॥**

अज्ञानित्वमिति । **अभ्युपेयं चेत्तेनैवालं किं तदवच्छिन्ननिष्ठेनाज्ञा[ना]न्तरेणेति भावः । त्वन्मतासिद्धिश्चात्र दूषणमित्याह—**अज्ञानित्वमिति । कस्य हेतोरिति । **शुद्धब्रह्माश्रयादतिरिक्तेन किं साध्यमित्यर्थः ॥ १९६ ॥**

अ० टी०—न केवलमस्मिन्पक्षे जीवेऽज्ञानाभावोऽपि तु ब्रह्मण्यज्ञानमभ्युपगतं स्यादज्ञानित्वलक्षणजीवत्वस्य ब्रह्मण्येवाङ्गीकारादित्याह—**अज्ञानित्वमिति ।** दुर्निवारं पूर्वोक्तमेवानवस्थालक्षणं दूषणं प्रसक्तमतो ब्रह्मण्येवाज्ञानसिद्धिरित्यर्थः । नन्वस्माभिरपि ब्रह्मण्येवाज्ञानमिष्यते किं तु तज्जीवकोटावेव न साधारणतयेत्येतावद्विशेष इति स यदि

---

१ ग. सज्यते ।

ब्रूयात्तत्राऽऽह—अज्ञानित्वं ब्रह्मणश्चेदभीष्टमिति । तहीश्वरोऽप्यज्ञानोपाधिरित्यस्मत्पक्षः कस्मान्निमित्तात्त्यज्यत एकाज्ञानकल्पितत्वस्योभयत्राविशेषादित्यर्थः ॥ १९६ ॥

सु० टी०—कस्येति प्रश्नं मत्वाऽऽशङ्कते—

शुद्धत्वार्थं ब्रह्मणस्त्यज्यते चे-
दस्मत्पक्षेऽप्यस्ति शुद्धत्वमस्य ।
अस्मत्पक्षे शुद्धता वास्तवी चे-
द्युष्मत्पक्षे कल्पिता शुद्धता किम् ॥ १९७ ॥

शुद्धत्वार्थमिति । अपहतपाप्मत्वादिसिद्ध्यर्थमित्यर्थः । कल्पिताज्ञानसंबन्धेऽपि ब्रह्मणः स्वाभाविकी शुद्धिर्नापैति (*अध्यासाधिष्ठानस्याध्यासकालेऽपि निजस्वरूपाप्रच्यवादित्याह—अस्मत्पक्षेऽपीति ।) ननु ब्रह्माज्ञानपक्षे वस्तुत एव शुद्धता न प्रतीतितोऽज्ञानित्वेन कल्पिताशुद्धिसत्त्वादिति शङ्कते—अस्मत्पक्ष इति । भवत्पक्ष इत्यर्थः । युष्मत्पक्षेऽपि वास्तव्येव शुद्धिः प्रपञ्चाधिष्ठानेऽस्मिन्कल्पिताशुद्धेरपरिहार्यत्वादिति वक्रोक्त्या परिहरति—युष्मदिति ॥ १९७ ॥

अ० टी०—ईश्वरस्याज्ञानित्वेऽशुद्धिप्रसङ्गादपहतपाप्मत्वादिश्रुतिविरोधः स्यादतस्तन्मा भूदित्यज्ञानं तत्र नेष्यत इति शङ्कते—शुद्धत्वार्थमिति । अज्ञानसंबन्धाभ्युपगमेऽपि तस्य तत्र कल्पितत्वान्न वास्तवशुद्धिक्षतिरिति परिहरति—अस्मत्पक्षेऽपीति । नन्वेवं सति वास्तव्येव शुद्धिः स्यान्न प्रतीतितोऽपीति शङ्कामुत्थाप्य दूषयति—अस्मत्पक्ष इति । अक्षरार्थः स्पष्टः । वास्तव्येव विशुद्धिर्न प्रातीतिकीति वदतो वास्तव्याः शुद्धेरविरोधमालम्ब्य प्रतिभासत ईश्वरस्याप्यस्ति सविशेषत्वलक्षणाऽशुद्धिरिति गूढोऽभिप्रायः ॥ १९७ ॥

सु० टी०—जीवाज्ञाननिराकरणमुपसंहरति—

कष्टः कष्टः कल्पितब्रह्मवादः
श्रेयोमार्गाद्भ्रश्यतो भ्रान्तबुद्धेः ।
त्यक्तव्यस्ते सज्जनैरस्मदीयः
श्रेयोमार्गः श्रेयसे चाभ्युपेयः ॥ १९८ ॥

कष्टः कष्ट इति । वीप्सयाऽत्यन्तायुक्तत्वं सूचयति—कल्पितेति

---

* क. पुस्तकेनास्त्ययं ग्रन्थः ।

क्षितब्रह्मवाद इत्यर्थः । ब्रह्माश्रिताज्ञानास्वीकारे बन्धस्याऽऽविद्यकत्वासिद्धेरनिर्मोक्ष इत्याह– श्रेयोमार्गादिति । अज्ञयन्तं विशिनष्टि– भ्रान्तबुद्धेरिति । स्वकल्पितानुपपन्नजीवाज्ञानमानिनस्त इति संबन्धः । किं तत इत्याह– त्यक्तव्य इति । नन्वेतदपि बहुव्याख्यातृसंमतत्वाद्ग्राह्यमिति चेन्नाविवेकमूलकत्वादित्याह—सज्जनैरिति । तत्त्वदृष्टिभिरित्यर्थः ॥ ११८ ॥

अ० टी०—ईश्वरस्य व्यावहारिकविशुद्धिरपि जगत्स्रष्टृत्वादिलक्षणैव न जीववत्संसारित्वलक्षणेति पूर्वमेवोपपादिताऽस्मन्मते व्यवस्था तस्मादज्ञानकल्पितजीवभावविशिष्टस्यैवाज्ञानं तस्य च विद्यया ब्रह्मभावो मोक्ष इति कल्पितजीवस्य ब्रह्मभाव इति वदतः पक्षः सर्वन्यायविरुद्ध इति नोपादेयः श्रेयोर्थिभिः किंत्वस्मत्पक्ष एवोपादेय इत्युपसंहरति— कष्टः कष्ट इति । सज्जनैः श्रेयोर्थिभिः शुद्धबुद्धिभिः । स्पष्टमन्यत् ॥ १९८ ॥

सु० टी०—(*ननु यदि ब्रह्मण्यज्ञानं तर्हि तदेव संसरतु किमवच्छिन्नेन जीवेन कथं तर्हि बद्धमुक्तव्यवस्थेति चेदज्ञानतदभावाश्रयत्वाभ्यामिति ब्रूमः । ) न च नैकत्रैकस्य युगपद्भावाभावौ व्योम्नि पक्ष्यादीनां तद्दर्शनादिति शङ्कते—

एकोपाधावस्तिता नास्तिता च
मूढत्वस्य स्वीकृता चेत्परस्मिन् ।
व्योम्न्येकस्मिन्नस्तिता नास्तिता च
पक्ष्यादीनां यद्वदिष्टा तथैव ॥ १९९ ॥

एकोपाधाविति । यथैव सा पक्ष्यादीनां व्योम्नीष्टा तथैव परस्मिन्नप्येकोपाधौ मूढत्वस्यास्तिता नास्तिता च स्वीकृता चेदिति संबन्धः॥१९९॥

अ० टी०—अस्तु ब्रह्मण्येवाज्ञानं तथाप्यज्ञानित्वमेव तस्य जीवरूपत्वं तदसंबद्धरूपेण चेश्वरत्वं तत्त्वज्ञानादेव । एवं च नैकत्रैकस्य भावाभावविरोध एकस्मिन्नप्याकाशे पक्ष्यादीनां भावाभावविरोधादर्शनादिति शङ्कते—एकोपाधाविति । परस्मिन्ब्रह्मणि मूढत्वं चेद्भवतेष्यत इति योज्यम् । तदैकोपाधावस्तिता नास्तिता चाज्ञानस्य स्वीकृतैव न विरोधोऽपि दृष्टान्तसंभवादित्याह—व्योम्नीति । स्पष्टोऽर्थः ॥ १९९ ॥

सु० टी०—किमज्ञानसमानसत्ताकस्तदभावस्तदा तत्रास्तीत्युच्यते तद्विषमसत्ताको वा नाऽऽद्यः । तयोर्विरोधादेकसत्त्वेऽपराभावनियमात् ।

---

* क. पुस्तके नास्त्ययं ग्रन्थः ।

अन्त्ये वास्तवतदभावसत्त्वेऽपि बद्धत्वमुक्तत्वयोर्व्यावृत्त्यर्थं तद्भावाभावयोर्विरुद्धोपाधिद्वयावच्छेदो वाच्यो बिम्बप्रतिबिम्बत्वं वाऽऽश्रयणीयम् । एवं चानवच्छिन्नमेव संसरत्विति त्वदिष्टं हीयेतेत्याह—

नैतत्सारं सत्त्वमिष्टं यदि स्या-
दस्तित्वादेरिष्टहानिः प्रसक्ता ।
एकोपाधावस्तिता नास्तिता चे-
त्स्यादित्येवं स्वीकृतेऽस्मिन्हि पक्षे ॥ २०० ॥

नैतदिति । सत्त्वमेकवृत्तित्वम् । दूषणान्तरसमुच्चिचीषया पुनस्तं पक्षमनुवदति—एकोपाधाविति ॥ २०० ॥

अ० टी०—आकाशे पक्ष्यादेर्भावाभावप्रतीतिरुपाधिभेदापेक्षयैव न निर्द्वारं क्वापि भावाभावप्रतीतिरित्यनुभवबलमादाय परिहरति—नैतत्सारमिति । अस्तित्वादेरस्तित्वनास्तित्वयोरेकस्यैकस्मिन्सत्त्वं यदीष्टं स्यात्तदेष्टहानिः प्रसक्तेति योजना । कस्य मते प्रसक्तेत्यत आह—एकोपाधाविति । चेत्येतावदिह विवक्षितं चेदिति छन्दःपूरणार्थः प्रयोगः ॥ २०० ॥

सु० टी०—तत्र दूषणान्तरमाह—

धूमे सत्ता स्यादसत्ता च तस्मि-
न्धूमस्यैवं कारणं कल्प्यते किम् ।
कादाचित्कं कारणं नान्तरेण
स्यादित्येवं तस्य क्लृप्तिः कुतो वः ॥ २०१ ॥

धूमे सत्तेति । पर्वतवृत्तितेत्यर्थः । तस्मिन्धूमे तदैवासत्ता पर्वतावृत्तिताऽपि स्यादित्यर्थः । अस्तु सा व्योम्नि पक्षिण इवेति चेन्नेत्याह—धूमस्यैवमिति । एवं सतीत्यर्थः । किं कथमित्यर्थः । कादाचित्कत्वाद्धूमः । सकारण इति कल्प्यमिति चेत्तदपि न संभवतीत्याह—एवं तस्येति । एवं सति धूमकालेऽपि तत्र तदभावसत्त्वे धूमाभावकाल इव धूमकालेऽपि तत्कारणवह्निसत्ता कुतः कल्पेत कल्पकाभावनिश्चयादित्यर्थः ॥ २०१ ॥

अ० टी०—इष्टहानिप्रसङ्गमेव स्पष्टयति—धूमे सत्तेति । धूमे सत्त्वस्फुरणकाले तस्यासत्त्वस्यापि संभवाद्धूमेऽसत्ता स्यात्तस्मिन्नेव स्थाने काले च सत्ता च स्यात् । एवं सति धूमस्य कारणमग्निः किं कल्प्यतेऽनुमीयते नैवेत्यर्थः । यद्वा तस्मिन्धूमेऽसत्ता च

स्यादिति संबन्धः । तत्रासत्त्वपक्षे तेनाग्न्यनुमानासंभवं स्फुटयति—**कादाचित्कं कारणमिति** । कादाचित्कं कारणं लिङ्गमन्तरेण कारणानुमानं न स्यादित्येवं सति तस्याग्नेः क्लृप्तिरनुमानं धूमस्य सत्त्वासत्त्वपक्षे कुतो वः स्यादित्यर्थः ॥ २०१ ॥

**सु० टी०—नन्वभावसत्त्वेऽपि धूमनिश्चयादेव तत्कारणं कल्प्यमिति चेन्न व्योम्नि पक्षिण इव धूमस्यापि तदाश्रये तदानीमभावनिश्चयेन तत्प्रतिबन्धादेव तत्कल्पनानुदयादित्याह—**

**कादाचित्कात्कल्पनां कारणस्य**
**प्रत्याचक्षीताविरोधं ब्रुवाणः ।**
**एकोपाधावस्तिनास्तित्वयोर्हि**
**तस्मादेषा कष्टक्लृप्तिर्न कार्या ॥ २०२ ॥**

कादाचित्कादिति । **अस्तित्वनास्तित्वयोरेकोपाधावविरोधं ब्रुवाणः कार्यात्कारणस्य कल्पनां प्रत्याचक्षीतेति संबन्धः । उपसंहृति—**तस्मादिति ॥ २०२ ॥

अ० टी०—तदेवमेकोपाधावेकस्यास्तित्वनास्तित्वे वदन्विरोधं न परिहर्तुं शक्नुयादित्युपसंहरति—**कादाचित्कादिति** । हि यस्मादेकोपाधावस्तित्वनास्तित्वयोरविरोधं ब्रुवाणः कादाचित्कात्कार्यात्कारणस्य कल्पनामनुमानं प्रत्याचक्षीत तस्मादेषा कष्टक्लृप्तिर्न कार्येति योजना । एकस्मिन्नेव ब्रह्मणि प्रतीत्यैव भानाभावाविति कल्पना न कार्या न्यायविरोधादनुभवविरोधाच्चेत्यर्थः ॥ २०२ ॥

**सु० टी०— ननु यथा भवतामेकत्र चैतन्ये स्वतः स्फुरणमद्वयात्मना चास्फुरणमित्येतदुभयमविरुद्धतयाऽभ्युपेतमेवमज्ञानास्तित्वनास्तित्वे स्यातामिति शङ्कते—**

**ननु चैकरूपचितिवस्तुगतं**
**स्फुरणं तदस्फुरणमेव च वः ।**
**अविरुद्धमभ्युपगतं द्वितयं**
**तदिवास्तिनास्तियुगलं भवतु ॥ २०३ ॥**

ननु चेति ॥ **२०३** ॥

अ० टी०—निरस्तेऽप्येवं पक्षे पुनः सिद्धान्त्यभिमतं दृष्टान्तमुपालभ्य पूर्वपक्षी स्वपक्षस्थापनं शङ्कते—**नन्विति** । स्वप्रकाशसन्मात्रत्वमेकरूपत्वं स्वप्रकाशतया स्फुरणमज्ञा-

नादस्फुरणं चेतिद्वितयमेकस्मिन्ब्रह्मणि यथा युष्माकमभ्युपगतमस्तीति दृष्टान्तार्थः । अस्ति नास्तीति भावाभावरूपं युगलमज्ञानस्य ब्रह्मणि भवत्विति दार्ष्टान्तिकार्थः ॥ २०३ ॥

सु० टी०—चैतन्यस्य हि न स्फुरणं धर्मः किंतु वस्तुस्वरूपमस्फुरणं त्वविद्याकृतमारोपितम् । न चाऽऽरोपितवास्तवयोर्विरोधः । प्रकृते तु समसत्ताकभावाभावयोर्विरोध एवेति दृष्टान्तवैषम्यमभिप्रेत्य दूषयति—

न तदात्मनः स्फुरणमेव निजं
परतोऽप्रकाशनमबोधवशात् ।
न च किंचिदन्यदनयोरुभयो-
रविरोधसिद्धिकृदुदाहरणम् ॥ २०४ ॥

न तदिति । नापि संयोगादेरिवाज्ञानस्याप्येकत्र भावाभावौ तयोरपि भिन्नप्रदेशवृत्तित्वात् । न च नभस्यात्मनि वा स्वतः प्रदेशभेदोऽस्तीति न तद्दृष्टान्तेनापि त्वन्मतसिद्धिरित्याह—न चेति ॥ २०४ ॥

अ० टी०—वस्तुतस्तु स्फुरणं भ्रान्त्याऽस्फुरणमित्यस्माकमभ्युपगमोऽतो दृष्टान्तवैधर्म्यमिति परिहरति—न तदात्मन इति । न तदिति पक्षनिषेधार्थः । यत आत्मनः स्फुरणं निजमेव स्वाभाविकमेव निरपेक्षमेवेति वा यत् ( ति यावत् ) । अप्रकाशनं तु परतोऽन्यस्मात् । तदेवाऽऽह—अबोधेति । अबोधवशादज्ञानवशादित्यर्थः । अस्फुरणं चिदात्मन आरोपितं स्फुरणं निजं सत्यं सदातनमेवेति नास्माकमुभयमेकनिमित्तकमिति दृष्टान्तसिद्धिरिति भावः । एवमन्यत्रापि यत्र यत्र भावाभावसंकरशङ्का तत्र सर्वत्र द्वारभेदेन वा तात्त्विकत्वातात्त्विकत्वेन वा तत्परिहारोऽस्त्येवेत्याह—न च किंचिदिति ॥२०४॥

सु० टी०—ननु न स्फुरतीति नञा स्फुरणाभावप्रतीतेः कथं नैकत्र युगपद्भावाभावाविति पूर्ववादिशङ्कामपाकरोति—

स्फुरणास्फुरणे च नाऽऽत्मनः
सदसद्भावतया मनीषिते ।
स्फुरणं चितिरात्मवस्तुन-
स्तदविद्यास्फुरणं च कथ्यते ॥ २०५ ॥

स्फुरणेति । नैते भावाभावावभिमते किं तर्हि चितिरेवाऽऽत्मनः

१ क. °शमवबो° ।

स्फुरणं तद्विषयाश्रया या भावरूपाऽविद्या सैव स्फुरणविरोधित्वेनास्फुरणमिति नञाऽभिधीयते नेक्षेतेत्यादावीक्षणविरोधी संकल्प इत्युभयं भावरूपमेवेत्यर्थः ॥ २०५ ॥

अ० टी०—आत्मनः स्फुरणास्फुरणयोर्भावाभावत्वानभ्युपगमान्न भावाभावयोरविरोधायेदमुदाहरणमित्याह—स्फुरणास्फुरणेति ॥ २०५ ॥

सु० टी०—ततश्चानवच्छिन्नस्यैव ब्रह्मणोऽज्ञानित्वं जीवत्वमिति न किं त्वविद्यानिष्ठचिद्वस्तुप्रतिबिम्ब एवेत्याह—

अज्ञानित्वं जीवभावो न तस्मा-
ज्जीवत्वादेः कारणं युक्तमेतत् ।
प्राणोपाधेर्वाचको जीवशब्द-
श्चैतन्यस्य स्यात्प्रसिद्धो हि तत्र ॥ २०६ ॥

अज्ञानित्वमिति । कुत्र तर्ह्यज्ञानित्वस्योपयोग इति तत्राऽऽह—जीवत्वादेरिति । जीवत्वेश्वरत्वादेः कारणमुपाधितया प्रयोजकं तदित्यर्थः । कथं तर्हि सुषुप्तादौ न जीवव्यवहारस्तत्राऽऽह—प्राणोपाधेरिति । प्राणात्मकलिङ्गशरीरोपाधिरात्मा जीवव्यवहारावलम्बनं तत्रैव लोकप्रसिद्धेरतस्तदभावान्न सुषुप्तौ तद्व्यवहार इत्यर्थः ॥ २०६ ॥

अ० टी०—तस्मादज्ञानित्वं जीवत्वं न भवति किं तु ततोऽन्यदेवेत्याह—अज्ञानित्वमिति । तस्मादज्ञानित्वं न जीवभाव आत्माश्रयत्वादिदोषप्रसक्तेरित्यन्वयः । तर्ह्यज्ञानं क्वोपयुज्यत इति तदाह—जीवत्वादेरिति । जीवत्वस्येश्वरत्वस्य जडप्रपञ्चस्य साधारणं कारणमज्ञानमित्यर्थः । तर्हि जीवत्वस्य को विशेषहेतुरित्यपेक्षायामाह—प्राणोपाधेरिति । प्राणशब्देन ज्ञानक्रियाशक्त्यात्मकं प्राणेन्द्रियान्तःकरणसंघातरूपमज्ञानस्य प्रथमकार्यं लिङ्गशरीरं विवक्ष्यते । तस्मिन्नहमित्यात्मत्वाभिमानेन प्रविश्य तद्धारणनिमित्तं चिदात्मनो जीवत्वं नाज्ञानित्वमात्रमिति भावः । प्राणोपाधेश्चैतन्यस्य वाचको जीवशब्दः स्यादिति संबन्धः । कुतोऽवगम्यत एतदिति चेत्तत्राऽऽह—प्रसिद्धो हि तत्रेति । प्राणोपाधौ जीवशब्दः प्रसिद्ध इत्यर्थः ॥ २०६ ॥

सु० टी०—प्रसिद्धो हीत्युक्तमेव व्यनक्ति—

अज्ञानजन्यकरणप्रतिबिम्बवाचि
जीवाभिधानमिह वृद्धजनप्रसिद्धम् ।

अत्रैव निर्वचनमस्ति च तस्य तस्मा-
ज्जीवो भवेत्करणपूगवशीकृता चित् ॥ २०७ ॥

अज्ञानेति । करणमन्तःकरणादि । अज्ञानादिप्रतिबिम्बचैतन्ये जीवपदं रूढमित्यर्थः । योगशक्तिरपि तद्विषयैवेत्याह—तत्रैवेति । जीव प्राणधारण इति धात्वनुसारात् । करणात्मकलिङ्गोपहितचैतन्यमेव जीवशब्दार्थ इत्यर्थः ॥ २०७ ॥

अ० टी०—प्रसिद्धमेव स्पष्टयति—अज्ञानेति । करणशब्दो लिङ्गवचनः । प्रतिबिम्बत्वं तस्मिन्नभिमानित्वेन विशेषतोऽभिव्यक्तिर्वृद्धजनप्रसिद्धं जीवशब्दोऽत्र रूढ इत्यर्थः । जीवपदस्य योगवृत्तिरप्यत्रैवेत्याह—अत्रैवेति । तस्य जीवपदस्यात्रैवोक्तोपाधिके चिदात्मन्येव निर्वचनमस्ति जीव प्राणधारण इति धातुपाठदर्शनादिति योजना । उपसंहरति—तस्मादिति । पूगः समूहः । लिङ्गशरीरवशीकृता चिज्जीवो भवेदित्यर्थः ॥ २०७ ॥

सु० टी०—तस्मात्प्रपञ्चस्य सर्वस्य जीवत्वस्य चाज्ञानकार्यत्वेनाज्ञानात्मकत्वाद्ब्रह्मैवाज्ञानाश्रयः परिशिष्यत इत्याह—

ब्रह्मैवाज्ञानि तस्मादिह भवितुमलं नापरं वस्तु किंचि-
त्तस्याज्ञानात्मकत्वान्न च तमसि तमस्तन्निवृत्तेरयोगात् ।
नाज्ञानोत्थस्य विद्याजनिरिह घटते तां विना तन्न नश्ये-
न्न ह्यज्ञानं विनश्येदवगतिजनकज्ञानजन्मान्तरेण ॥ २०८ ॥

ब्रह्मैवेति । इह सिद्धान्ते । ब्रह्मभिन्नस्याज्ञानाश्रयत्व आत्माश्रय इत्याह—न चेति । जडेऽज्ञानवैयर्थ्याच्चेत्यर्थः । जडाश्रयाज्ञानस्य निवृत्तिरपि दुर्घटेत्याह—तन्निवृत्तेरिति । कुत इत्याह—नेति । न ह्यज्ञानोत्थस्य जडस्य प्रमातृत्वं न चाप्रमातुरज्ञाननिवृत्तिरित्यर्थः । अस्तु क्रियैव तन्निवृत्तिरिति नेत्याह—न हीति । विषयाभिव्यञ्जकान्तःकरणवृत्तिं विनेत्यर्थः ॥ २०८ ॥

अ० टी०—तस्माच्चिदात्मन्येवाज्ञानं न जीवे ततोऽन्यत्र जडप्रपञ्चे वेति प्रसिद्धमिति परमभक्तमुपसंहरति—ब्रह्मैवेति । अपरं वस्तु नाज्ञानि भवितुमलमित्यत्र मानमाह—तस्याज्ञानात्मकत्वादिति । तस्य जीवस्याज्ञानकार्यतयाऽज्ञानात्मकत्वादित्यर्थः । तादृशे च नाज्ञानमित्यत्र दृष्टान्तमाह—न च तमसीति । आत्माश्रयत्वापत्तेरित्यर्थः ।

---

१ ग. तत्रै ।

स्त्वनिवृत्त्यभ्युपगमेऽपि न तन्निवृत्तिसंभव इत्याह—**तन्निवृत्तेरयोगादिति** । अयोगमेवाऽऽह—**नाज्ञानोत्थस्य विद्येति** । अज्ञानकार्यस्य जडत्वात्तस्मिन्विद्याजनेरसंभवादित्यर्थः । जीवत्वविशिष्टे चिदात्मन्यज्ञानमितिमतेऽप्यात्माश्रयत्वादिदोषोऽनिवृत्तिप्रसङ्गश्चोक्तो वेदितव्यः । माऽस्तु तर्हि तमोनिवृत्तिर्ज्ञानादितिचेतत्राऽऽह—**तां विनेति** । 'तमेव विदित्वाऽतिमृत्युमेति' इतिश्रुतेर्नाऽऽत्मविद्यामन्तरेणाज्ञानात्मकतमोनाशः संभवतीत्यर्थः । उक्तमेव साधयति—**न हीति** । 'तस्मिन्दृष्टे परावरे' [ मुण्ड० २ । २ । ८ ] इति श्रुतेः प्रकाशोदयं विना तमोनिवृत्तेरदर्शनादित्युपपत्तेश्चेत्यर्थः ॥ २०८ ॥

**सु० टी०—अस्तु तर्हि वास्तवमेव जीवत्वं बाधकाभावात्तादृशे चाज्ञानादि संभवतीति चेन्नेत्याह—**

**अज्ञानात्मकवस्तु नाऽऽश्रयतयाऽज्ञानस्य संभाव्यते**
**नाज्ञानात्मकताबहिःकृतमिदं जीवत्वमङ्गीकृतम् ।**
**नाज्ञानाश्रयमध्यपाति घटते जीवत्वमेतेन व-**
**श्चैतन्याश्रयमेतदस्तु घटते तत्रैव हीदं तमः ॥ २०९ ॥**

अज्ञानात्मकेति । **अज्ञानघटिते हि नाज्ञानं भवति । न च जीवत्वमज्ञानबहिर्भावेन वास्तवमङ्गीकृतं विद्वद्भिः 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्यादिश्रुतिबाधितत्वादित्यर्थः । फलितमाह**—नाज्ञानेति । **जीवत्वविशिष्टं नाज्ञानाश्रय इत्यर्थः । एतेनोक्तन्यायेन । ततश्च परिशेषाच्चिदाश्रयमेवेत्यर्थः ॥ २०९ ॥**

अ० टी०—जीवत्वस्याज्ञानाश्रयत्वानभ्युपगमे च तवापसिद्धान्तप्रसङ्ग इति वदन्नुक्तमुपसंहरति—**अज्ञानेति** । अज्ञानस्येति च्छेदः । अङ्गीकृतं त्वयेति शेषः । अतः फलितं स्वमतमेवैकदेशिनाऽप्यास्थेयमित्याह—**नाज्ञानाश्रयमध्यपातीति** । स्पष्टार्थः ॥२०९॥

**सु० टी०—नन्वेवमद्वयब्रह्माश्रयमज्ञानमित्युक्तं भवति तच्चायुक्तं जीवाश्रयत्वेनानुभवादिति शङ्कते—**

**ननु चाद्वयाश्रयतमःस्फुरणं**
**न कथंचिदत्र न हि तत्स्फुरति ।**
**स्फुरदाश्रयस्य तमसः स्फुरणं**
**घटते न चाद्वयमिह स्फुरति ॥ २१० ॥**

ननु चेति । **न ह्यद्वयाश्रयं तदनुभवितुं शक्यमद्वयस्यास्फुरणादित्यर्थः ।**

**तर्हि स्वतन्त्रमेव तद्भासतामिति नेत्याह**—स्फुरदाश्रयस्येति । **अज्ञानस्याऽऽश्रयविषयनिरूप्यत्वादविद्यादशायां चाद्वयस्याभानादित्यर्थः ॥ २१० ॥**

अ० टी०-चिन्मात्राश्रयमज्ञानमित्येतदनुभवविरुद्धत्वादयुक्तमिति शङ्कते—**नन्विति** । अत्र व्यवहारभूमौ । तत्र युक्तिमाह—**न हि तत्स्फुरतीति** । तदद्वयं वस्तु व्यवहर्तॄणां नहि स्फुरति । तदस्फुरणे तदाश्रिततमःस्फुरणायोगान्न ह्याश्रयस्फुरणं विना तद्गतधर्मस्फुरणं संभवतीति प्रसिद्धमेतदित्यर्थः । उक्तमेव स्फुटयति—**स्फुरदाश्रयस्येति** । ॥ २१० ॥




**सु० टी०—समाधत्ते—**

**नाज्ञानमद्वयसमाश्रयमिष्टमेवं**
**नाद्वैतवस्तुविषयं निशितेक्षणानाम् ।**
**नाऽऽनन्दनित्यविषयाश्रयमिष्टमेत-**
**त्प्रत्यक्त्वमात्रविषयाश्रयतानुभूतेः ॥ २११ ॥**

नेति । **सत्यमद्वयमेव चैतन्यमज्ञानस्याऽऽश्रयो विषयश्च तस्यैवाज्ञानकार्यभेदविरोधित्वेन तद्योग्यत्वात्किं तु नाद्वयत्वाकारेण तस्याऽऽश्रयत्वविषयत्वे तथाऽननुभवादद्वयत्वस्याभावघटितत्वादप्रसिद्धत्वेन चाज्ञानानवच्छेदकत्वादपि तु यद्वस्तुतोऽद्वयं तदेव प्रत्यक्चैतन्यात्मनाऽऽश्रयो विषयश्चेति न विरोध इत्यर्थः । तर्हि भावरूपेणाऽऽनन्दत्वादिनाऽस्तु तथात्वमिति चेन्नेत्याह**—नाऽऽनन्देति । **तत्राप्युक्तदोषतादवस्थ्यान्मामहं न जानामीत्यनुभवावष्टम्भेन प्रत्यङ्मात्राश्रयविषयमेव तदिष्टमित्यर्थः ॥ २११ ॥**

अ० टी०—सत्यमद्वैताकारेणाज्ञानाश्रयत्वं नेष्यते तथाऽनुभवाभावादेवेति परिहरति—**नाज्ञानमिति** । निशितेक्षणानां निशितमतीनामस्माकमद्वयसमाश्रयमज्ञानं नेष्टं तटस्थब्रह्माश्रयत्वमज्ञानस्य नेष्टमित्यर्थः । तर्हि चिन्मात्राश्रयस्याज्ञानस्याद्वैताकारं ब्रह्म विषयः स्यादिति रूपभेदेन विषयाश्रयभेद दृष्टः स्यादिति चेन्नेत्याह—**एवं नाद्वैतवस्त्विति** । अज्ञानानुभवदशायामद्वैताकारवस्तुनोऽसिद्धत्वादेव विषयतयाऽपि तस्य नाज्ञानावच्छेदकत्वमवभासतेऽद्वैतानुभवदशायां त्वज्ञानमेव नानुभूयत इति कुतो विषयाश्रयभेदानुभव इत्यर्थः । अनुभवाभावादेव नाऽऽनन्दसत्याद्यात्मनाऽप्यज्ञानाश्रयविषयतेष्यत इत्याह—**नाऽऽनन्दनित्येति** । कथं नेष्टमित्यत आह—**प्रत्यक्त्वेति** । अहमज्ञो मामहं न जानामीति ह्यज्ञानमनुभूयते नाद्वैतं ब्रह्मानन्दादिरूपमज्ञानं न जानामीत्यतः प्रत्यक्चैतन्या-

श्रयविषयत्वेनैवाज्ञानानुभवाद्वस्तुतस्तस्याद्वयात्मत्वेऽपि न तेनाऽऽकारेणाज्ञानावच्छेदकता तस्य शास्त्रैकगम्यत्वादित्यर्थः ॥ २११ ॥

सु० टी०—नन्वस्तु प्रत्यग्रूपेणाऽऽश्रयत्वं न तु तेन रूपेण विषयत्वं तस्य प्रतिभासमानत्वेनाऽऽवरीतुमशक्यत्वादिति चेत्तत्राऽऽह—

प्रत्यक्त्वमात्रविषयाश्रयमोहहेतोः
प्रत्यक्तिरोहित इति प्रतिपादयामः ।
प्रत्यञ्चमेव खलु वेद्मि न वेद्मि चेति
प्रत्यक्षमस्ति ननु वेदनमस्य पुंसः ॥ २१२ ॥

प्रत्यक्त्वेति । मोहहेतोर्मोहात्कारणादित्यर्थः । विषयस्याज्ञानविशेषणत्वादज्ञानस्य च तदनुपपत्तेः स्फुरदेव रूपमज्ञानावच्छेदकत्वेनाऽऽवृतमित्यगत्याऽभ्युपेयमित्युक्तप्रायमेवेत्याह—प्रत्यगिति । यद्यपि सविषये ज्ञानादावाश्रयविषयभेदो दृष्टस्तथाऽपि तत्र ज्ञातुः स्वात्मनिवृत्तिविरोधात्तथाऽत्र तु तदभावाल्लाघवादुभयैक्येऽपि न क्षतिरिति निगर्वः । अत्रार्थेऽनुभवं प्रमाणयति—प्रत्यञ्चमेवेति ॥ २१२ ॥

अ० टी०—नन्वावृतत्वं ह्यज्ञानविषयत्वं प्रत्यग्रूपेण स्फुरतश्च चिदात्मनः कथं तद्रूपेणाऽऽवृतत्वं येन विषयत्वं स्यादतो विषयत्वमद्वैताकारस्यान्यस्य वा वक्तव्यमिति चेन्नेत्याह—**प्रत्यक्त्वेति** । यदाश्रयतया ज्ञानं स्फुरति तस्मिन्नेव तत्कृतोऽतिशयोऽस्तु तमस इव स्वाश्रयादन्यत्र तस्यातिशयजननसामर्थ्याभावादिति प्रतिपादयाम इत्यर्थः । तत्र हेतुमाह—**प्रत्यञ्चमिति** । प्रत्यक्षमस्ति स्फुटानुभवोऽस्तीत्यर्थः । नन्विति संबोधने । अस्य पुंसोऽज्ञस्येत्यर्थः ॥ २१२ ॥

सु० टी०—नन्वेकस्यैव निरंशचैतन्यस्याऽऽश्रयत्वेन स्फुरणं विषयत्वेनास्फुरणमिति विरुद्धमिति चेन्न संवित्स्वप्रकाशत्ववादिनामपि वादिप्रतिपत्तिवशेन स्फुरन्त्यामपि संविद्यज्ञातत्वाभ्युपगमवदविरोधादित्याह—

संवित्परिस्फुरति न स्फुरतीति तस्यां[1]
वैयात्यदूषितधियस्तु[2] विसंवदन्ते ।

---

१ क. तस्यां वैजात्य° । २ क. °यस्त्ववि° ।

अज्ञानतस्तदपि तद्वदिहाद्वयत्वं
भादप्यभादिति विमूढधियो वदन्ति ॥ २१३ ॥

संविदिति । वैयात्येन धाष्टर्चेन दूषितधियस्तस्यां संविदि स्फुरणास्फुरणयोर्यद्विवदन्ते तदप्यज्ञानत इति योज्यम् । एवमिहापि मूढधियोऽज्ञानादेव भादप्यद्वयचैतन्यमभासमानमिव पश्यन्तीत्यर्थः ॥ २१३ ॥

अ० टी०—ननु विरुद्धमेव तत्स्फुरत एव वस्तुनोऽस्फुरणमिति चेन्न संवित्स्वप्रकाशपक्षे तथा दृष्टत्वादादरणीयत्वादित्याह—**संविदिति** । तस्याः संविदो वैजात्यं स्वरूपेणैव स्फुरन्त्या अपि केनचिदाकारेणास्फुरणरूपमितरपदार्थविलक्षणत्वं तेन दूषिता कलुषीभूता धीर्येषां ते तथाऽविसंवदन्ते न विसंवदन्त इत्यर्थः । छन्दोविदामपि क्वचिच्छान्दसः प्रयोगो दृष्टत्वादेव न दुष्टः । यदा न विसंवदन्त इति पाठो लभ्यते तदा न काऽपि चिन्ता । ननु तत्राप्यनुपपत्तिरेवेति चेन्नास्फुरणस्य भ्रमत्वादित्याह—**अज्ञानत इति** । तदप्यस्फुरणमपि । स्पष्टमन्यत् ॥ २१३ ॥

सु० टी०—ननु स्फुरतो भ्रान्त्याऽपि कथमस्फुरणं विरोधादिति चेन्न स्फूर्त्यस्फूर्त्योर्भावाभावत्वानभ्युपगमादित्याह—

अव्युत्पत्तिं बिभ्रती भाति संवि-
त्तद्वद्ब्रह्माप्यद्वितीयस्वरूपम् ।
अव्युत्पत्तिं नाशयद्भाति वेद्यं
तस्मादेतच्चोद्यमस्मासु नास्ति ॥ २१४ ॥

अव्युत्पत्तिमिति । यथा स्वप्रकाशत्वाव्युत्पादनं बिभ्रती संविदज्ञाततया भासते तद्वदद्वितीयं ब्रह्मापि स्वस्मिन्नव्युत्पत्तिः स्वाश्रयस्ताज्ञानं तद्भिन्नदज्ञोऽस्मीत्यज्ञानाश्रयत्वेनैव भातीत्यर्थः । तर्हि तत्त्वज्ञानवैफल्यमिति चेन्नेत्याह—अव्युत्पत्तिमिति । यथा संवित्स्वप्रकाशत्वेन प्रमिता स्वाज्ञाततां नाशयन्ती भात्येवं ब्रह्मापि वेद्यं वेदान्तजन्यवृत्त्यभिव्यक्तं सत्स्वाव्युत्पत्तिं नाशयदद्वयत्वेन भातीत्यर्थः ॥ २१४ ॥

अ० टी०—ननु स्फुरतो भ्रान्त्याऽपि स्फुरणाभावो विरुद्ध एवेति चेत्तत्राऽऽह—**अव्युत्पत्तिमिति** । संवित्प्रत्यक्चिदात्मिका स्वयमलुप्तप्रकाशतया भासमानाऽप्यव्युत्पत्तिमावरणात्मकमज्ञानं बिभ्रती स्वाध्यस्तं धारयन्ती तस्य सत्तां स्फुरणं चाऽऽपादयन्ती भाति । तद्वदद्वितीयस्वरूपं ब्रह्मापि प्रत्यङ्मात्राकारेणाज्ञानं स्वावरणाकारमिव साधयत्स्वतो भाति । अत आवरणरूपमज्ञानमेव चिदात्मनोऽस्फुरणं न तु स्फुरणाभावः स्वरूपेण च स्फुरण-

मिति स्फुरणास्फुरणयोर्भावाभावरूपत्वाभावान्न विरोध इत्यर्थः । यद्यज्ञानावस्थायामप्यात्मनः स्फुरणमस्ति तर्हि तत्त्वज्ञानेन किमात्मनि स्यात्तत्राऽऽह—**अव्युत्पत्तिं नाशयदिति** । वेद्यं वाक्योत्थबुद्धिवृत्त्यारूढं सत्तदेवाऽऽत्मतत्त्वमव्युत्पत्तिशब्दितमज्ञानं नाशयद्बाधमानं भात्यज्ञानावरणनिरासाय तत्त्वज्ञानमर्थवदित्यर्थः । यस्मादेवं यथोक्ताज्ञानमेवास्फुरणं न तु ज्ञानाभावः स्वतश्च स्फुरणं नित्यमावरणाज्ञानबाधनाय च तत्त्वज्ञानमप्यर्थवदित्यस्मन्मते तस्माद्भवतामपि भावाभावविरोधः समान इत्येतच्चोद्यमस्मासु न प्रसरतीत्युपसंहरति—**तस्मादिति** । इदमत्राऽऽकूतं स्फुरमाणाऽपि संविन्न नित्यात्मरूपेण तद्धर्मत्वेन वा स्थिरत्वक्षणिकत्वाद्यात्मना वा स्फुरति किं तु स्वप्रकाशत्वेन स्वयं भाति । तत्रानवभासमान उक्ताकारो न संवित्स्वरूपादन्यस्तथात्वे मानाभावात्तथा च स्वप्रकाशायां संविद्यागन्तुकज्ञानस्यानपेक्षणान्न तदभावनिबन्धनं तदस्फुरणं किं त्वभावविलक्षणाज्ञाननिबन्धनमेवेति ॥ २१४ ॥

**सु० टी०—तदेवं ब्रह्मैव नित्यमुक्तमज्ञानप्रतिबिम्बितं संसरद्विद्यया मुच्यत इत्युक्तमेवं चेद्ब्रह्मविदः शुकादयो मुक्ता अन्ये त्वज्ञानात्संसरन्तीति बन्धमोक्षव्यवस्थाशास्त्रं विरुध्येतेति शङ्कते—**

**नन्वेवं चेद्बन्धमोक्षव्यवस्था-**
**शास्त्रं कुप्येन्नाऽऽप्रबोधात्प्रवृत्तेः ।**
**बद्धो मुक्तो ज्ञानवानज्ञ इत्य-**
**प्येतत्सर्वं यावदज्ञानमिष्टम् ॥ २१५ ॥**

नन्विति । **एकजीवपक्षेऽपि स्वप्न इव यावदविद्यं बन्धमोक्षव्यवस्थोपपद्यत इति परिहरति**—नेति । प्रवृत्तेरिति । **व्यवस्थाशास्त्रस्येति शेषः । एतदेव व्यनक्ति**—बद्ध इति । **चैत्रो बद्धः शुको मुक्तः कश्चिज्ज्ञानी परोऽज्ञ इत्यपि सर्वं यावदविद्यमेकस्यैव सर्वसाक्षिणो विचित्राविद्यकोपाधिवशादुपपद्यत इत्यर्थः ॥ १५ ॥**

अ० टी०—एवमियता ग्रन्थेन न जीवाश्रयमज्ञानं नाप्यद्वैतब्रह्माश्रयं किं तु प्रत्यङ्मात्राश्रयविषयं तन्निमित्तो जीवेश्वरभावो न त्वज्ञानभावाभावाभ्यां तयोरेकत्र विरोधादत एव चाज्ञानस्य स्थितिनिवृत्त्योरपि ब्रह्मण्यनुपपत्तेर्बन्धमोक्षव्यवस्थाया अपि तत्र न संभव इति प्रतिपादितं तत्र बन्धमोक्षव्यवस्थाभावे तच्छास्त्रविरोधं चोदयति—**नन्वेवमिति ।** एवं चेत्प्रत्यक्चिन्मात्रगतैकाविद्यानिबन्धना चेद्व्यवस्थाऽऽस्थीयते तदा जीवो बद्ध ईश्वरो मुक्तः शुको मुक्तो यज्ञदत्तोऽयं बद्ध इति बन्धमोक्षव्यवस्थाशास्त्रं कुप्येद्भेदाभावे तस्य निर्विषय-

त्वापत्तेरित्यर्थः । विद्वद्दृष्ट्या बन्धमोक्षव्यवस्थाभावेऽप्यविद्यादशायामविद्वद्दृष्ट्या तद्भावान्न शास्त्रविरोध इति परिहरति—**नेति** । न शास्त्रं कुप्येदित्यर्थः । कुत इत्यत आह—**आप्रबोधात्प्रवृत्तेरिति** । विदुषस्तु जीवतः शिष्यादिप्रतिभासो बाधितानुवृत्तिमात्रः प्रारब्धकर्माक्षिप्ताविद्यालेशनिबन्धन एवेति द्रष्टव्यम् । नन्वविद्वदवस्थायामप्यन्यस्याऽऽत्मनोऽभावात्स्वात्मनि बन्धस्य प्रत्यक्षत्वाद्विदुषो मुक्तस्यान्यस्याभावादाचार्यासंभवे कथं विद्याप्राप्तिरिति चेत्तत्राऽऽह—**बद्धो मुक्त इति** । अक्षरार्थोऽतिरोहितः । व्यवस्थाशास्त्रस्य व्यावहारिकप्रामाण्याद्व्यवहारस्य चाविद्यानिबन्धनत्वादेकस्यैव प्रत्यगात्मनः स्वाविद्याकल्पितानेकविचित्रोपाधिभिरनेकधा विभाव्यमानस्य बद्धमुक्तविद्वदज्ञत्वादिव्यवस्था सर्वाऽपि यावदज्ञानं स्वप्न इवोपपन्नैव निवृत्ते त्वज्ञाने तत्कल्पितसकलभेदनिवृत्तेव्यवस्थाप्यविषयाभावाद्विद्यावस्थायां सर्वव्यवस्थातत्प्रतिपादकशास्त्रादेरप्यभाव इष्ट एवेति भावः ॥ २१५ ॥

**सु० टी०—किं चाध्ययनविधिबोधितस्य व्यवस्थाशास्त्रस्य पुरुषार्थपर्यवसायिनो निष्फलाख्यायिकापरत्वायोगान्न ततः शुकादिमुक्तिसिद्धिराधुनिकसंसारोपलम्भविरोधादिति ब्रह्मात्मतामात्रपरमेव तदिति वक्तुं विकल्पयति—**

**किं चैतत्किं बन्धमोक्षव्यवस्था-**
**शास्त्रं यत्नात्तत्परं सत्प्रवृत्तम् ।**
**किं चान्यस्मात्प्राप्तमेवानुभाष्य**
**तस्या रूपं ब्रह्मतत्त्वं विदध्यात् ॥ २१६ ॥**

किं चैतदिति । **किमेतच्छास्त्रं स्वार्थपरमेव प्रवृत्तम्** । यत्नादिति । **मानान्तरबाधेऽपीत्यर्थः । उतान्यस्माद्वृद्धव्यवहारात्प्राप्तमेव तस्या मुक्ते रूपमनूद्येति विकल्पार्थः** ॥ २१६ ॥

अ० टी०—अपि च बन्धमोक्षशास्त्रस्यान्यपरत्वादपि न तद्विरोधः शङ्कनीय इति वक्तुं विकल्पयति—**किंचैतदिति** । एतद्बन्धमोक्षादिशास्त्रं यत्नात्प्रवृत्तं तत्र तत्परं सत्प्रवृत्तमिति योजना । अन्यस्मादविद्वल्लोकव्यवहारात् । तस्या इति तच्छब्दो व्यवस्थापरः । शास्त्रविशेषणत्वेनोपात्ताऽपि व्यवस्था बुद्ध्या निष्कृष्य परामृष्टेति द्रष्टव्यम् । रूप्यतेऽस्मिन्निति रूपं सर्वव्यवस्थाविकल्पास्पदं ब्रह्मतत्त्वमिति योजना ॥ २१६ ॥

**सु० टी०—नाऽऽद्य इत्याह—**

**शास्त्रं तावत्तत्परं नेष्यते त-**
**दानर्थक्यात्तत्स्वरूपप्रतीतेः ।**

ब्रह्मात्मैक्यप्रत्ययेनार्थवत्त्वं
वक्तुं युक्तं तच्च नोऽभीष्टमेव ॥ २१७ ॥

शास्त्रमिति । **तदध्येतॄणां शुक्तादिशुक्तिज्ञाने प्रयोजनाभावादित्यर्थः । द्वितीय इष्ट एवेत्याह**—ब्रह्मेति । '**तद्धैतत्पश्यन्नृषिर्वामदेवः' [बृ० १ । ४ १० ] इत्यादिना विद्यया वामदेवादेर्ब्रह्मभावप्राप्तावुक्तायामाधुनिकस्यापि तदुद्देशेन प्रवृत्तिः सिध्यतीति तत्प्ररोचनापरत्वमेव युक्तं तच्चेष्टमेवेत्यर्थः ॥ २१७ ॥**

अ० टी०—तत्राऽऽद्यं पक्षं दूषयति—**शास्त्रमिति** । तद्बन्धमोक्षादिबोधकं शास्त्रं तत्परं स्वार्थपरं तावन्नेष्यते कुतस्तत्स्वरूपप्रसिद्धेरानर्थक्यादसौ मुक्तोऽयं बद्ध इत्यादिज्ञानात्पुरुषार्थादर्शनादित्यर्थः । तर्हि किंपरं तच्छास्त्रमित्यपेक्षायां तदपि ब्रह्मात्मैक्यपरमेवेति द्वितीयपक्षमङ्गी करोति—**ब्रह्मात्मैक्येति** । जीवस्य ब्रह्मत्वबोधकमहावाक्यशेषतया तदेकवाक्यप्रत्ययपर्यवसानात्तेनार्थवत्त्वं बन्धमोक्षादिशास्त्रस्य वक्तुं युक्तमित्यक्षरार्थः । एतदुक्तं भवति—पूर्वेषां वामदेवादीनां ब्रह्मविद्यया मोक्षप्राप्तिकथनेनेदानींतनस्यापि विद्यया मोक्षः स्यादेवेत्याश्वाससिद्धिरत्र ब्रह्मात्मैक्यज्ञानस्य प्रवृत्तावेतदर्थवादवाक्यकृत उपकारस्तेन द्वारेणैव तादृशं शास्त्रं ब्रह्मात्मतत्त्वं विदध्यादिति । नन्वर्थवादत्वेऽपि नायं गुणवादस्तस्य मानान्तरविरोधित्वात्तेन व्यवस्थाया असंभवात् । नाप्यनुवादो वामदेवमुक्त्यादेरागमेतरप्रमाणासिद्धेः । परिशेषाद्देवताधिकरणन्यायेन भूतार्थवादतया व्यवस्थाहेतुताऽस्याऽऽस्थेयेति चेत्सत्यं तदास्थीयत एवेत्याह—**तच्च नोऽभीष्टमेवेति** । यादृग्व्यवस्थारूपमास्थितं सद्ब्रह्मात्मप्रत्ययोपयोगि स्यात्तादृशं शास्त्रप्रामाण्यं तस्मिन्दृष्टमेवेत्यर्थः । न चैवं सत्यन्यस्मात्प्राप्तमेवानुभाष्येत्यनुवादकत्वेन विरोधः शङ्कनीयः सामान्यतोदृष्टनिबन्धनत्वादविद्वद्व्यवहारत एतत्प्राप्तेः सामान्यतोदृष्टस्य च संभावनामात्रहेतुत्वेऽपि न निश्चयहेतुता । तस्मात्तदनुवादित्वेऽपि शास्त्रप्रामाण्यादेव बन्धमोक्षव्यवस्थासिद्धिर्ब्रह्माविद्यया बन्धस्तत्त्वविद्यया मोक्ष इति या व्यवस्था यत्र हि द्वैतमिव भवति यत्र त्वस्य सर्वमात्मैवाभूदिति शास्त्रोक्ता तां व्यवस्थामुपोद्बलयन्नयमर्थवादस्तच्छेषतया प्रामाण्यमश्नुत इत्यभिप्रायः॥२१७॥

**सु० टी०—नन्वेवमविद्वद्दृष्टयैव बन्धमोक्षव्यवस्थेत्यायातं ततश्च न मदन्यः कश्चिद्बन्धमोक्षभागस्त्यासीद्वेत्येतदनुभवविरोधादश्रद्धेयमिति शङ्कते—**

नन्वन्यो मद्बन्धमोक्षादिभागी
भूतो भावी वर्तते वा न कश्चित् ।

इत्युक्तार्थं स्वानुभूत्या विरोधा-
न्नाहं जातु प्रोत्सहे संग्रहीतुम् ॥ २१८ ॥

नन्वन्य इति । **मत् मत्त इत्यर्थः ॥ २१८ ॥**

अ० टी०—तदेवमविद्वद्दृष्ट्यैव बन्धमोक्षव्यवस्था तद्विषयमेव च शास्त्रमपि न विद्वद्दृष्ट्येत्युक्तमेवं तर्हि वस्तुतो बन्धमोक्षव्यवस्थाया अभावान्मत्तोऽन्यः कश्चिन्मुक्तो बद्धो वा कश्चिदपि नास्तीत्युक्तं स्यात्तच्चानुभवविरोधादयुक्तमिति चोदयति—**नन्विति** । मदन्यः कश्चिदिति संबन्धः । एक एवाऽऽत्मा बद्धश्च मुक्तश्च नान्यः कालत्रयेऽपीति योऽर्थो भवद्भिरुक्तस्तमर्थं संग्रहीतुं नोत्सहे स्वानुभूत्या विरोधात् । न ह्यनुभवविरुद्धं युक्तिशतेनापि व्यवस्थितं भवेदनुभवार्थत्वाद्युक्तीनामित्यर्थः ॥ २१८ ॥

**सु० टी०—येनानुभवेन व्यवस्थाविरहोक्तेर्विरोध आपाद्यते तं विकल्पयति—**

**किं द्वैतानुभवो विरोधपदभाक्किं वा परोऽस्मीत्ययं**
**यद्वा कश्चिदिहापरोऽस्त्यनुभवो यस्ते विरोधावहः ।**
**नाद्वैतानुभवः क्षतिं वितनुते तस्येति युक्तं वचो**
**नापि द्वैतमुपोल्लिखन्ननुभवस्तेनास्य बाधो यतः ॥ २१९ ॥**

किमिति । **स किं कर्तृत्वादिद्वैतानुभवः किमद्वयः पर एवास्मीत्यभेदविषयः किं वा सविशेषाद्वयवादिवद्द्वैताद्वैतविषय इति । तत्र क्रममतं स्वीकृत्य द्वितीयं दूषयति**—नाद्वैतेति । **तस्य बन्धमोक्षव्यवस्थाविरहस्याद्वयोऽस्मीत्यनुभवो मुक्तिमात्रविषयत्वान्न क्षतिकर इत्यर्थः । आद्ये दोषमाह**—नापीति । **अस्येदानींतनबन्धमात्रविषयत्वेन शुकादिमुक्त्यविषयत्वात्स्वयं बाध्यत्वाच्च न व्यवस्थाविरहबाधकत्वमित्यर्थः ॥२१९॥**

अ० टी०—येनानुभवेन विरोधात्परमार्थतो बन्धमोक्षादिव्यवस्था नास्तीत्यस्मदुक्तिर्न संगृह्यते कोऽसावनुभव इति वक्तव्यमिति विकल्पयति—**किं द्वैतानुभव इति ।** अध्यात्मादिद्वैतदर्शनं द्वैतानुभवः किं सविरोधपदभाक्त्विमयमस्मदुक्तेऽर्थे विरोधमाचरति किं वा परः परमात्माऽस्मीत्ययमद्वैतानुभवो वाक्यजन्यः । यद्वाऽन्य एव कश्चिदिह व्यवहारभूमावनुभवो द्वैताद्वैतग्राहकोऽस्ति यस्तव विरोधबुद्धिमावहतीति विकल्पत्रयार्थः । तत्र मध्यमे पक्षे न विरोध इति तावदाह—**नाद्वैतानुभव इति ।** बन्धमोक्षव्यवस्था नास्ति किं तु प्रत्यग्ब्रह्मैवास्तीत्यनुभवोऽद्वैतानुभावः । तस्मादस्मदुक्तार्थस्याद्वैतानुभवः क्षतिं वितनुत इति वचो न युक्तमित्यन्वयस्तस्य तद्रूपत्वेन विरोधाभावादित्यर्थः । आद्यं

पक्षं प्रतिक्षिपति—**नापीति**। अनुभव इत्यत्र क्षतिं वितनुत इत्यनुषङ्गः। कुत इत्यत्राऽऽह—**तेनास्येति**। तेनाद्वैतानुभवेन समस्तद्वैततदनुभवोपमर्दकेन विद्वत्प्रत्यक्षरूपेणास्य द्वैतानुभवस्याविद्वद्दृष्ट्या बन्धमोक्षादिव्यवस्थासद्भावोल्लेखिनो यतो बाधोऽत इति योजना। सर्वभेदव्यवस्थोपमर्द्याद्वैतानुभवसमये द्वैतानुभवस्यावस्थानाभावात्कथं तेन बाधशङ्कावकाश इत्यर्थः॥ २१९॥

सु०टी०—तृतीयपक्षमनुभाषते—

**द्वैताद्वैतनिवेशिनोऽनुभवनाद्बाधोभयस्येति चे-**
**त्तादृङ्नानुभवोऽस्ति कस्यचिदपि स्थानत्रये जीवतः।**
**भास्वच्छार्वरगोचरं ह्यनुभवं बिभ्रज्जनो दृश्यते**
**नास्मिन्संसृतिमण्डले स न भवेत्कस्मादयं चेद्भवेत्॥२२०॥**

द्वैतेति। **शास्त्राद्विरुद्धभेदाभेदविषयज्ञानोत्पादासंभवान्न ततोऽपि द्वैताद्वैतबाध इति समाधत्ते**—तादृगिति। **स्थानत्रये जाग्रदाद्यवस्थात्रये त्रैलोक्ये वा जीवतो वर्तमानस्य। विरोधादसंभवे दृष्टान्तमाह**—भास्वदिति। **यथा सूरतिमिरयोरभेदा(*नुभवं बिभ्रज्जगति न कोऽपि दृश्यते तथा भिन्नाभिन्नमनुभवन्नित्यर्थः। ननु दृष्टान्ते नास्ति मानं भेदा) भेदे तु 'तत्त्वमसि' [ छा० ६। ८। ७ ] इति श्रुतिर्मानमिति चेन्न विरोधाविशेषाच्छ्रुतेस्त्वखण्डार्थत्वेनोपपादितत्वात्। एतदेव विवृणोति**—स इति। **सूरतिमिराभेदानुभविता चेन्न भवेदयं कस्माद्भवेदिति योज्यम्॥ २२०॥**

अ० टी०—तृतीयं कल्पमनुवदति—**द्वैताद्वैतेति**। उभयस्येति द्वैतस्याद्वैतस्य चेत्यर्थः। एतादृशोऽनुभव एव नास्ति विरोधात्स्वबाधकत्वं तस्य दूरनिरस्तमेवेति परिहरति—**तादृगिति**। स्थानत्रये जाग्रदादिलक्षणे। जीवतो वर्तमानस्येत्यर्थः। यद्वा विद्योदयात्प्रागूर्ध्वं तत्काले च वर्तमानस्येत्यर्थः। विरोधमेव स्पष्टयति—**भास्वदिति**। भास्वान्सविता शार्वरं तमः युगपत्सवितृतमोगोचरमनुभवं बिभ्रज्जनोऽस्मिन्संसारमण्डले व्यवहारभूमौ न दृश्यते। अयं चेद्द्वैताद्वैतानुभवो भवेत्तदा स सवितृतमोगोचरोऽनुभवः कस्मान्न भवेदुभयत्र विरोधस्य

---

* ग्रन्थोऽयं ख. पुस्तकस्थः।

---

१ म. °धोद्भवस्ये°।

तुल्यत्वादिति योजना । व्यवस्थाप्रमाणस्य व्यवहारगोचरत्वादद्वैतप्रमाणस्य च तत्त्वावेदकत्वा-न्नानयोः संभूयप्रवृत्तिरित्यतो नायमस्मदुक्तार्थबाधक इति भावः ॥ २२० ॥

**सु० टी०—तस्माद्ब्रह्मैवाविद्यया प्रतिबिम्बात्मना संसरति स्वविद्यया च मुच्यत इत्ययमेव संप्रदायानुगतः पक्षो मुमुक्षुभिरुपादेय इत्युप-संहरति—**

> **यत एवमत्र न विरोधलवो-**
> **प्युपढौकते कथितनीतिवशात् ।**
> **उपगृह्यतामतमिदं सुदृढं**
> **गुरुसंप्रदायवचनानुगतम् ॥ २२१ ॥**

यत इति । **एवमुक्तयुक्तिभिर्निरस्तसमस्तविरोधतया सुनिश्चलत्वादि-त्यर्थः । अत्र विश्वतीर्थीयकृतः—आचार्यस्याप्यविद्यालेशदर्शितशिष्य-मुक्त्यर्थमुपदेशदर्शनान्नैकस्यैव बन्धमोक्षभागित्वं युक्तम् । यथा चैकयै-वाविद्ययैकत्र चैतन्ये बहुजीवकल्पनं बन्धमोक्षौ च तथाऽऽचार्यैः सिद्धान्तसिद्धौ वर्णितम् । एवं बह्वाचार्यसंमतिं श्रुतिसंमतिं च दर्शयि-त्वेत्थमेवाऽऽचार्यस्याऽऽशयस्तृतीये स्फुटो भविष्यति । तस्माद्विद्यया सर्वस्य हेयत्वसिद्ध्यर्थमेव जीवान्तराणां शिष्याविद्याकल्पितत्वोक्तिरि-त्याहुः ॥ २२१ ॥**

अ० टी०—तस्माद्बाधकानुभवाभावाद्वस्तुनि बन्धमोक्षव्यवस्थालक्षणमन्यद्वा द्वैतं वस्तुतो नास्तीत्यस्मन्मतं न केनापि विरुध्यत इत्युपसंहरति—**यत एवमिति** । एवंसत्यत्रास्मन्मते कथितनीतिवशान्न विरोधलवोऽप्युपढौकते यतोऽत इदं मतमस्मदीयमुपगृह्यतामङ्गी क्रियता यतः सुदृढमबाधितं न केवलं युक्तित एव सुदृढमपि तु गुरुसंप्रदायवेदवचनानुगतं प्रमाणसिद्धं चेति योजना । विवर्तवादे गुरुसंप्रदायवचनानुगतिः पूर्वमेव दर्शितेति भावः ॥ २२१ ॥

**सु० टी०—ननु तत्त्वबोधानन्तरं जीवब्रह्मभेदो निवर्ततां प्रपञ्चस्तु परमार्थतः भासमानः कथं निवर्ततेत्याशङ्क्याऽऽविद्यकत्वाविशेषादि-त्याह—**

> **तव गाढमूढतमसा रचितं**
> **जगदीशजीववपुषा सकलम् ।**

प्रतिभाति तावदद्दढं दृढव-
त्समुदेति यावदवबोधरविः ॥२२२ ॥

तवेति । त्वया गाढमनादितया स्वाभाविकत्वेनोढं गृहीतं यत्तमस्तेन रचितमीशजीवाद्यात्मना कल्पितं जगत् । यस्मादद्दढमनिर्वचनीयमतस्तावदेव सत्यं प्रतिभातीत्यर्थः । उत्तरावधिमाह—यावदिति ॥ २२२ ॥

अ० टी०——इदमुपगृह्यतामित्युक्तमेव स्वमतं दर्शयति——तव गाढेति । अवबोधरविर्वाक्यजन्यज्ञानभास्करो यावत्समुदेति तावत्तव प्रत्यगात्मनो गाढं दृढं मूढेन प्राप्तेन स्वस्मिन्नध्यस्तेन तमसाऽनाद्यनिर्वचनीयेनाज्ञानेन रचितं जगदीशजीवरूपेण विकृतं विश्वमदृढमपि दृढवत्प्रतिभाति स्वप्न इवाऽऽप्रबोधोदयमुदिते तु तत्त्वावबोधे द्वैतलेशोऽपि न प्रतिभासत इत्यर्थः ॥ २२२ ॥

सु० टी०——ननु सकललोकप्रतिपन्नस्येश्वरजगत्प्रबन्धस्यानादेः कथं शुक्तिरजतादिवदद्दढत्वं संभाव्यमिति चेदविद्याविलुप्तचेतसां देहात्माभिमानवदपभ्रंशादिवाचकत्वाभिमानवच्चेत्याह——

प्रभुरेष सर्वविदहं कृपणो
जगदेतदद्भुतमिवातनयेति ।
प्रतिपत्तयस्तिमिरलुप्तदृशो
यदिहोद्भवन्ति न तदद्भुतकम् ॥ २२३ ॥

प्रभुरिति । न तदिति । एता हि स्वप्न इव स्वशिरश्छेदनादिदृष्टयोऽमूढस्य नाश्चर्यमावहन्तीत्यर्थः ॥ २२३ ॥

अ० टी०——नन्वेतदाश्चर्यवद्विचित्रोदयद्वैतप्रपञ्चस्तद्विपरीतस्वभाव आत्मनि प्रतिभासत इति चेन्नाविद्यातिमिरावृतदृष्टेः सर्वाश्चर्यसंभवादित्याह——प्रभुरेष इति । स्पष्टार्थं पद्यम् ॥ २२३ ॥

सु० टी०——ननु सर्वजनानुभवविरुद्धमपि विश्वस्यानिर्वचनीयत्वं किमवष्टम्भेनाभ्युपेयत इत्याशङ्क्य सन्तु सहस्रं श्रुतियुक्तयो विद्वदनुभवोऽपि तावत्प्रमाणमित्याह——

अभयं सनातनमनातुरधी-
रवलोकयन्निजमनन्तसुखम् ।

---

१ क. 'विद्यया प्लुतचित्तानां दे°' ।

न मुनिः प्रपश्यति किमप्यसुखं
सकलं जिघत्सति जगत्स्वचिता ॥ २२४ ॥

अभयमिति । **अनातुरधीरविक्षिप्तधीः । अनन्तसुखं परमात्मानम् । असुखं संसारं जिघत्सति ग्रसते । स्वचिता स्वविद्यया ॥ २२४ ॥**

अ० टी०—अविद्यावस्थस्यैवैवं प्रपञ्चदर्शनं निवृत्तायामविद्यायां विद्वान् किंचिद्विचित्रं पश्यति दुःखं वाऽनुभवतीत्याह—**अभयमिति** । अनातुरधीरविक्षिप्तचित्तो मुनिस्तत्त्वज्ञानवाननन्तसुखमपरिच्छिन्नानन्दरूपं ब्रह्म निजं प्रत्यग्रूपं स्वरूपमवलोकयन्साक्षात्कुर्वन् किमप्यसुखं दुःखरूपं संसारं न पश्यति नानुभवति । निजमित्यस्य विशेषणे अभयं सनातनमिति च निर्विकारं नित्यं चेत्यर्थः । कस्मादेवं निजं तत्त्वं पश्यन्दुःखं किमपि न पश्यतीति तत्राऽऽह—**सकलमिति** । स्वचितेतीत्थंभावे तृतीया । यस्मात्सकलं जगत्स्वचिता स्वरूपचैतन्यात्मना जिघत्सति स्वादितुमिच्छति स्वात्मसात्करोतीत्येतदारोपितनिवृत्तेरधिष्ठानादन्यत्वासंभवादित्यर्थः ॥ २२४ ॥

**सु० टी०—नन्वात्मभिन्नद्वैताभावे कुतो विद्वदनुभवस्यापि सिद्धिर्गुर्वादेस्तदुपायस्याभावात् । न चाविद्यैव तत्साधिका वैपरीत्यादिति चेन्नाविद्याया एव सर्वद्वैतकल्पकत्वं व्यावहारिकगुर्वादिकल्पनया तन्निवर्तकत्वं चेत्युपगमादित्याह—**

तव चित्तमात्मतमसा जनितं
परिकल्पयत्यखिलमेव जगत् ।
तव कल्पनाविरचितः स गुरु-
स्तव रूपमद्वयमुदाहरति ॥ २२५ ॥

तवेति ॥ **२२५ ॥**

अ० टी०—नन्वात्मव्यतिरिक्तस्य सर्वस्याविद्यात्मकत्वे साधकाभावान्निजरूपवस्तुनः कुतः सिद्धिर्नचाविद्यैव तत्साधिकेति युक्तं तस्या विपरीतप्रत्ययहेतुत्वान्न चोभयहेतुत्वं विरोधादिति चेत्तत्राऽऽह—**तव चित्तमिति** । आत्मतमसा निजाविद्यया जनितं तव चित्तमखिलमेव जगत्परिकल्पयतीति हि शास्त्रस्थितिरित्यर्थः । तत्र स प्रसिद्धो गुरुरपि तव कल्पनाविरचितः संस्तवाद्वयं निजस्वरूपमुदाहरति बोधयतीति योजना । अविद्या पूर्वपूर्वप्रपञ्चभ्रमसंस्कारसचिवात्मनि लीनं चित्तमुत्पाद्य प्रपञ्चमात्मन्यवभासयति सैव कदाचिद्विशुद्धधिषणामुत्पाद्य तत्त्वजिज्ञासां जनयन्ती तत्त्वज्ञानसाधनं गुर्वादिकमपि कल्पयित्वा तद्द्वारा स्वरूपप्रकाशमपि जनयतीति नात्र कोऽपि विरोध इति भावः ॥ २२५ ॥

सु० टी०—अस्तु तर्हि पारमार्थिक एव गुर्वादिर्मिथ्यात्वे शुक्तिरजतादिवदर्थक्रियाकारित्वासंभवादिति चेन्नार्थक्रियाकारिणः सत्यत्वासंप्रतिपत्तेर्दृश्यत्वस्य च मिथ्यात्वव्याप्तत्वादित्याह—

न हि चित्तदृश्यमपि सत्यमिति
प्रतिपन्नमस्ति भुवि किंचिदपि ।
रशनाभुजङ्गसदृशं सकलं
जगदिन्द्रजालमिति सिद्धमतः ॥ २२६ ॥

न हीति । ततः किमित्यत आह—रशनेति । तस्माद्रूपमाह—इन्द्रजालमिति । मायिकमित्यर्थः ॥ २२६ ॥

अ० टी०—ननु चित्तदृश्यत्वेऽप्यर्थक्रियासमर्थत्वात्कथं जगतो गुर्वादेर्वाऽविद्यामयत्वं सत्यत्वोपपत्तेरितिचेत्तत्राऽऽह—न हि चित्तेति । यच्चित्तदृश्यं तन्न हि सत्यं क्वाप्युपपादयितुं शक्यं तस्य रशनाभुजङ्गवद्बाध्यत्वनियमाद्व्यवहाराविसंवादस्य च स्वप्न इवाऽऽप्रबोधमुपपत्तेरित्यर्थः । तस्माच्चित्तकल्पितस्य सर्वस्याविद्याकल्पितत्वं न विरुध्यत इत्युपसंहरति—रशनेति । अत इति प्रथमं योज्यम् ॥ २२६ ॥

सु० टी०—ननु कथं कल्पितस्य गुरोरुपदेष्टृत्वं न हि स्थाणावध्यस्तः पुरुषः क्वचिदुपदिशतीति चेन्न कल्पितत्वाविशेषेऽपि कस्यचिदेव व्यावहारिकगुर्वादिशरीरावच्छिन्नजीवस्य घटादिप्रमातृत्ववद्ब्रह्मप्रमातृत्वसंभवेनोपदेष्टृत्वोपपत्तेरिति लौकिकदृष्टान्तेनाऽऽह—

परिकल्पितोऽपि सकलज्ञतया
गुरुरेव पूर्णमवबोधयति ।
परिकल्पितोऽपि मरणाय भवे-
दुरगो यथा न तु नभो मलिनम् ॥ २२७ ॥

परिकल्पितोऽपीति । गुरुरेवेत्येवकारः स्थाणुपुरुषादिव्यवच्छेदार्थः ॥ २२७ ॥

अ० टी०—ननु यदि कल्पितोऽप्यर्थो वस्तु बोधयेत्तदा कोऽयमाचार्यादिष्वाग्रहोऽन्यस्मादपि कल्पितात्तत्सिद्धिरस्त्विति चेत्तत्राऽऽह—परिकल्पितोऽपीति । यद्वा

१ क. द्ववचः ।

यद्याचार्याद्यपि कल्पितमेव स्यात्तर्हि कल्पितस्य जडत्वान्न ततः परमार्थावबोधप्राप्तिरित्याह—**परिकल्पितोऽपीति ।** परिकल्पितोऽपि गुरुरेव गुरुत्वेनाभिमत एव पूर्णं ब्रह्मावबोधयति न यत्किमप्यन्यत्कुतः सकलज्ञतया तत्त्वज्ञत्वादिति योजना। एतदुक्तं भवति—न हि परिकल्पितस्य परिकल्पितत्वादेव तत्त्वावबोधहेतुत्वमिष्यते किंतु सर्वज्ञत्वादेव सर्वज्ञो हि गुरुत्वेन कल्प्यते न जड इति । यद्वा परिकल्पितोऽपि गुरुः सकलज्ञतयैव परिकल्पितः सम्पूर्णमवबोधयत्येवेति योजना । अत्र कल्पितानामपि कल्पनाविशेषवशाद्व्यवस्थितचित्रार्थक्रियाहेतुत्वस्य लोके दृष्टत्वान्नासंभावना कार्येत्यभिप्रेत्योदाहरणमाह—**परिकल्पितोऽपि मरणायेति ।** उरगो रशनायां परिकल्पितः शङ्काविषेणापि मरणदर्शनादित्यर्थः ॥ २२७ ॥

**सु० टी०—ननु सद्विलक्षणस्य गुर्वादेः कथं कारणत्वं सत्त्वगर्भत्वात्तस्येत्याशङ्क्य किं सत्त्वमेव कार्यविशेषप्रयोजकमुत तत्कार्यजननसामर्थ्यमिति विकल्प्याऽऽद्यं दूषयति—**

**यदि सत्यमित्यवगतिं कुरुते**
**घटेते घटादपि हुताशनधीः ।**
**यदि चानृतं न जनयेत्प्रमितिं**
**ननु चोदनाऽपि जनयेन्न धियम् ॥ २२८ ॥**

यदीति । **गुर्वादिर्यदि सामर्थ्यनिरपेक्षः सत्यत्वेनैव बोधयेत्ततो धूमादिव घटादपि वह्निधीः स्यात्सत्यत्वाविशेषादित्यर्थः । द्वितीये तु भ्रमविषयस्यापि शक्तस्य प्रमाजनकत्वं परैरप्यङ्गीकृतमित्याह**—यदि चेति । **चोदना वाक्यं धियं प्रमाम् ॥ २२८ ॥**

अ० टी०—मिथ्याभूतमपि सत्यार्थहेतुः क्वचिद्भवतीति संभावनामुक्त्वा सत्यत्वं सत्यार्थबोधे न प्रयोजकं किं तु शक्तत्वेनावधारितमात्रमेवेत्याह—**यदि सत्यमिति ।** सत्यत्वमेव चेत्सत्यार्थबोधहेतुस्तर्हि धूमादिवद्घटादपि हुताशनधीर्घटते घटेत जायेतेत्यर्थः । अनृतं चेत्प्रमितिं न जनयेत्तदा निश्चितं चोदना विधिवाक्यमपि धर्मविषयां धियं न जनयेत्तस्यानृतत्वादित्यर्थः । तस्मात्सत्यत्वानृतत्वे न प्रामाण्याप्रामाण्यप्रयोजके किंतु व्यावहारिकप्रमाणसमधिगता विशेषाः । ते च सत्यत्वपक्ष इवानृतत्वपक्षेऽप्यविशिष्टा इत्यतो नोक्तदोष इति भावः ॥ २२८ ॥

---

१ ग. °ते पटाद्° ।

सु० टी०—दृष्टान्तमुपपादयति—

जनयत्यसाविह मृषावपुषा
करणीयवस्तुनि मतिं सुदृढाम् ।
ध्वनिधर्मभेदघटितोऽपि मृषा
स्वरसेन सन्नपि तु वर्णगणः ॥ २२९ ॥

जनयतीति । इह लोके वेदे चासौ चोदना मृषावपुषा कल्पितानुपूर्वी स्वरादिविशिष्टात्मनाऽनुष्ठेयवस्तुनि प्रमां जनयतीति प्रसिद्धमित्यर्थः । स्वरादिवैशिष्ट्यं तस्याः स्वाभाविकमिति चेन्नेत्याह—ध्वनीति । वर्णगणो हि चोदना । स च स्वरूपेण सन्नपि सत्योऽपि वायवीयस्य ध्वनेर्ये धर्मा उदात्तादयो यो वा क्रमस्तद्घटित एव बोधकः । नित्यविभूनां वर्णानां पौर्वापर्यासंभवादिति तद्रूपेण मृषैवेत्यर्थः ॥ २२९ ॥

अ० टी०—चोदनाया अनृतत्वं सिद्धवत्कृत्योक्तं साधयति—**जनयत्यसाविति** । इह व्यवहारभूमावसौ चोदना मृषावपुषा मिथ्याशरीरेण करणीयवस्तुन्यनुष्ठेये यागादौ सुदृढां प्रमाणरूपां मतिं जनयति । कथमस्या मृषावपुष्ट्वं वर्णात्मकत्वाद्वर्णानां च सत्यत्वादित्यत आह—**ध्वनिधर्मेति** । वर्णगणः स्वरसेन स्वरूपतः सन्नपि सत्यो ध्वनिधर्मभेदैरुदात्तादिभिर्ह्रस्वादिभिश्च घटितो विशिष्टः सन्मृषा मिथ्यैव । न ह्युदात्तादिधर्मविशेषवैशिष्ट्यं विना वर्णेभ्योऽर्थप्रतीतिर्जायते । न च वर्णेषु ते परमार्था व्यभिचारित्वात्किंत्वारोपिता एवातो ध्वनिधर्मविशिष्टा चोदना मृषा चेत्यर्थः ॥ २२९ ॥

सु० टी०—अस्तु तर्हि वर्णसमूहत्वेनैव तस्याः प्रमाहेतुत्वं न स्वरक्रमवैशिष्ट्येनेति चेन्न स्वरादिभेदेनार्थभेदस्य नैरुक्तैः स्मर्यमाणत्वादित्याह—

मन्त्रो हीनः स्वरतो वर्णतो वा
मिथ्याप्रयुक्तो न तमर्थमाह ।
स वाग्वज्रो यजमानं हिनस्ति
यथेन्द्रशत्रुः स्वरतोऽपराधात् ॥ २३० ॥

मन्त्रो हीन इति । मिथ्याप्रयुक्त इत्यस्यार्थो हीन इत्यादिः । स्वाभाविकस्वरान्यस्वरादियुक्तः सन् न तं विवक्षितमर्थमाह । प्रत्युत विपरीतार्थबोधकतयाऽनिष्टहेतुरित्याह—स वाग्वज्र इति । उदाहरणं—यथेति ।

**त्वष्ट्रेन्द्रहतस्य वृत्रस्योत्पादनार्थमिन्द्रशत्रुर्वर्धस्वेति मन्त्रेण सोमः प्रवर्तितः। तत्र तत्पुरुषस्वरे प्रयोक्तव्ये प्रमादात्स्वरान्तरप्रयोगादिन्द्र एव तस्य शत्रुर्बभूवेति स्वरविशिष्टस्यैवार्थवत्त्वमेवं क्रमवतोऽपि राजा जारस्यादावर्थान्यत्वादिति ॥ २३० ॥**

अ० टी०—उदात्ताद्यारोपितधर्मविशिष्टस्यैव शब्दस्य बोधकत्वमित्यत्र नैरुक्तसंमतिमाह—**मन्त्रो हीन इति**। स्वरतो वर्णतो वा हीनो यथास्थानमपेक्षितस्वरादिवैशिष्ट्यहीनो मन्त्रः प्रयुज्यमानो मिथ्याप्रयुक्त इत्युच्यते। स्वराद्यन्यथात्वमेव मिथ्यात्वमित्यर्थः। एवं प्रयुक्तो मन्त्रो न तमर्थमाह। यस्मिन्नर्थे प्रयुज्यते तमित्यर्थः। न केवलं विवक्षितार्थाकथनमात्रं दोषो मिथ्याप्रयोगेऽपि त्वनिष्टजनकत्वं चेत्याह—**स वाग्वज्रो यजमानं हिनस्तीति**। स मन्त्रो वाग्वज्ररूपः सन्यजमानमनिष्टेन योजयतीत्यर्थः। तत्रोदाहरणमाह—**यथेति**। त्वष्टा हि देवो विश्वरूपाख्ये स्वपुत्र इन्द्रेण हते क्रुद्धः सन्निन्द्रनिग्रहसमर्थपुत्रोत्पादनायाऽऽभिचारिकं कर्म कुर्वन्स्वाहेन्द्रशत्रुर्वर्धस्वेत्यनेन मन्त्रेणातिशिष्टं सोममग्नौ जुहावेत्याख्यायिका वेदे पठ्यते। तत्रान्तोदात्ततत्पुरुषस्वरे प्रयोक्तव्ये बहुव्रीहिस्वरमाद्युदात्तमिन्द्रपदं मन्त्रे प्रयुक्तवांस्तेन दोषेणोत्पन्नस्य वृत्रासुराख्यस्य पुत्रस्येन्द्रो हंता संवृत्त इत्यनर्थपर्यवसायी मन्त्रप्रयोगो जात इत्यर्थः। तथा च ब्राह्मणम्—'स्वाहेन्द्रशत्रुर्वर्धस्वेति तस्मादस्येन्द्रः शत्रुर्भवेदिति'॥ २३० ॥

**सु० टी०—तर्हि स्वरादियुक्ता ध्वनय एव सन्तु चोदना न वर्णा इति चेन्नापसिद्धान्तादित्याह—**

**न च वर्णपूगमपहाय भवे-**
**दिह चोदनेत्यभिमतं विदुषाम्।**
**यदि सत्यमेव गमकं भवति**
**स्फुटमप्रमाणमियमप्युदिता ॥ २३१ ॥**

न चेति। **ततश्च चोदनाप्रामाण्यमिच्छद्भिर्भ्रमविषयस्यापि गमकत्वमभ्युपेयमित्याह—**यदीति ॥ **२३१** ॥

अ० टी०—नन्वेवं सति यस्य धर्मा उदात्तादयः सैव चोदनाऽस्त्वतो नानृता चोदना भविष्यतीति चेन्मैवं मीमांसकैस्तथाऽनभ्युपगमादित्याह—**न च वर्णेति**। विदुषां मीमांसकानां वर्णेष्वेवं चोदनात्वमाभिमतं न ध्वनिष्वित्यर्थः। तथा च सत्यमेव गमकं चेत्तदा चोदनायाः प्रामाण्यं न लभ्येतेत्याह—**यदि सत्यमिति**। इयमपि चोदना ॥ २३१ ॥

सु० टी०—नन्वनित्यानामनन्तवर्णव्यक्तीनामेव धर्मा उदात्तादय इति स्वरक्रमवैशिष्ट्यस्य सत्यत्वाद्दृष्टान्तसंप्रतिपत्तिरिति वैशेषिकास्तान्प्रति दृष्टान्तान्तरमाह—

श्रवणेन्द्रियं च किल कर्णगतं
परिकल्पनोपरचितं नभसः ।
वलयं प्रकाशयति शब्दगणं
परमार्थमित्यपि कणादमतम् ॥ २३२ ॥

श्रवणेति । तेषामपि कर्णशष्कुलीमध्यगतं नभोवलयं श्रवणेन्द्रियं शब्दग्राहकमभिमतम् । न च सर्वगतस्य नभसो निरंशस्य वलयत्वं कर्णस्थत्वं चाऽऽञ्जसं संभवतीति भ्रान्त्यैवोपचरितं वलयाकारो नभोंश इत्यभ्युपेयमिति कासंप्रतिपत्तिरित्यर्थः । कणादेत्यादिना स्वमते श्रोत्रस्य दिगवच्छिन्नत्वं सूचितम् ॥ ३२ ॥

अ० टी०—वर्णानामुत्पत्तिमत्वात्तद्धर्मा एवोदात्तादय इति न चोदनाया अनृतत्वप्राप्तिरिति तार्किकमतमाशङ्क्य तान्प्रत्युदाहरणान्तरमाह—**श्रवणेन्द्रियमिति** । कर्णगतं नभसो वलयं किल श्रवणेन्द्रियमिति परिकल्पनयोपरतं शब्दगणं यत्प्रकाशयति तत्परमार्थमिति कणादमतमपि दृश्यत एवातो न तैरपि सत्यत्वाग्रहः कार्य इत्यर्थः । न ह्याकाशस्य स्वरूपेण श्रोत्रत्वमस्ति तथा सति सकृदुत्पन्नस्य शब्दस्य सर्वत्रोपलम्भप्रसङ्गः किं तु कर्णदशावच्छिन्नस्य । न हि सोऽवच्छेदो नभसः परमार्थो निरवयवस्य पूर्णस्यैकदेशतः स्वरूपतो वाऽवच्छेदासंभवादतः कल्पितोऽवच्छेदः कल्पितं च यथाकल्पनमर्थाभावान्मिथ्यैव तादृशादपि सत्यार्थप्रतिपत्तिरभ्युपगतेति न चोद्यावसर इति भावः ॥ २३२ ॥

सु० टी०—ततश्च सर्वतान्त्रिकैरसत्यादपि सत्यबोधाभ्युपगमात्कल्पितगुर्वादिजन्यविद्यया भवबन्धनिवृत्तिरविरुद्धेत्युपसंहरति—

स्वमतः स्वमोहरचितं गहनं
भवसागरं तर परान्नगतेः ।

---

१ क. गाधारत्नं ।

परिकल्पितद्वयनिबन्धनतः
परमार्थसंविदुदये सति भोः ॥ २३३ ॥

त्वमत इति । **परिकल्पितं द्वयं गुर्वादि तन्निबन्धनं यस्याः परावगते-र्वृत्तिरूपायास्ततः परमार्थसंविदभिव्यक्ताविति योज्यम् ॥ २३३ ॥**

अ० टी०—तस्मात्कल्पितयैव विद्ययाऽविद्यानिवृत्तिं कल्पितेनैवाऽऽचार्यादिना विद्यो-त्पत्तिं चाङ्गी कुर्वीति शिष्यं प्रत्याह—**त्वमत इति** । यत एवमविरोधोऽत इत्यर्थः । भोः सुबुद्धे परिकल्पितगुरुशिष्यशास्त्ररूपद्वयनिबन्धनतो द्वैतावष्टम्भेन परमार्थसंविदुदये सति परावगतेः परब्रह्मणः साक्षादभिव्यक्तेर्हेतोः स्वमोहरचितं गहनं भवसागरं तर स्वस्थो भवेति योजना ॥ २३३ ॥

**सु० टी०—ननु परेषामनिर्वचनीयाभावाच्चोदनायाः श्रोत्रस्य चालीकत्वाभावेन दृष्टान्तासिद्धिरित्याशङ्क्य कैमुतिकन्यायेन स्वमतमुपोद्बलयति—**

भ्रान्तं तथोपचरितं च यथाविभाग-
मङ्गीकृतं कणभुगादिमुनीन्द्रमुख्यैः ।
यन्नास्ति तत्फलनिबन्धनमस्मदीये
तन्त्रे तमोविरचितं न फलाय कस्मात् ॥ २३४ ॥

भ्रान्तमिति । **भ्रान्तं स्वरादिविशिष्टवर्णजातमुपचरितं च यथोक्तश्रोत्रं यथाविभागं मतभेदेन । किं तत इत्याह**—यदिति । **यद्धि भ्रान्तमुपचरितं च परमते नास्ति विशिष्टात्मना तदपि चेत्फलजनकं स्वीकृतं तर्ह्यविद्याकल्पितं व्यावहारिकं गुर्वादि कुतो न फलायेत्यर्थः ॥ २३४ ॥**

अ० टी०—तदेवं प्रतिबन्द्या कल्पितस्य तत्त्वावगतिहेतुत्वमुक्तमिदानीं पराभिमतात्स्वाभिमतस्य विशेषं दर्शयन् कैमुतिकन्यायमनुसरति—**भ्रान्तमिति** । उदात्तादिभेदाविशिष्टवर्णस्वरूपं भ्रान्तं तथोपचरितमुक्तरूपं श्रवणेन्द्रियं च यथाविभागं स्वस्वमतानुसारेण कणभुगादिमुनीन्द्रमुख्यैरङ्गीकृतं जैमिनीयैः काणादैश्चाभ्युपगतमित्यर्थः । तच्च तैरसदेव सदर्थप्रतीतिकरणमभ्युपगतमित्याह—**यन्नास्तीति** । फलनिबन्धनं सत्फलकारणमिति यावत् । परमतयोरुक्तोदाहरणद्वयस्य केनापि रूपेण सत्त्वेऽपि सदर्थप्रतीतिहेतुविशिष्टाकारेणापि न सत्त्वमस्यारोप्यसंसर्गस्य तैरधिष्ठाने सत्त्वानङ्गीकारात् । एवमसदपि चेत्सदर्थं प्रत्यापयेत्तदाऽसद्विलक्षणमनिर्वचनीयं प्रत्यापयेदिति किमु वक्तव्यमित्याह—**अस्मदीय**

इति । तमोविरचितमनाद्यनिर्वचनीयाज्ञानविलसितमतद्विलक्षणतया सत्त्वेन प्रतीतियोग्य-मित्यर्थः ॥ २३४ ॥

सु० टी०—ननु यत्रास्तीत्यसिद्धं भ्रमविषयादेस्तन्मतेऽन्यत्र सत्त्वा-दित्याशङ्क्य पूर्वोक्तमेव व्यनक्ति—

असदपि फलवत्तामश्नुते युष्मदिच्छा-
मनुसरदथ कस्मान्मायया निर्मितं सत् ।
न भवति फलवत्ताभाजनं चित्रमेत-
द्वयमिह न समर्था यूयमत्यन्तशक्ताः ॥ २३५ ॥

असदपीति । यद्यपि स्वरादि ध्वन्यादावस्ति तथाऽपि तच्छब्दनिष्ठत्वेन ज्ञातं शाब्दधीहेतुस्तच्चासदेवान्यथा तद्बुद्धेर्भ्रमत्वानुपपत्तेर्नभसोऽपि वलयत्वाद्यसदिति नासिद्धिरित्यर्थः । युष्मदिच्छामिति । सदेवार्थक्रिया-कारि नासच्छशशृङ्गादीतिप्रसिद्धयुल्लङ्घनीमित्यर्थः । सदिति । असद्वि-लक्षणमित्यर्थः । वयमिति । भवतां धाष्टर्यमस्त्यस्माकं नेत्येतदेवात्र तन्त्र-मित्यर्थः ॥ २३५ ॥

अ० टी०—नन्वनिर्वचनीयस्यैव मुख्यतया सदर्थप्रत्यायकत्वानुपपत्तिरितीच्छावादिनं प्रत्याह—असदपीति । युष्मदिच्छामनुसरदिति वदताऽसतः फलवत्त्वकल्पने प्रमाण-युक्ती न स्त इति सूचितमसदपि सत्फलार्थं भवत्यसद्विलक्षणं मायानिर्मितं न भवतीत्ये-तच्चित्रमहो आश्चर्यमित्यर्थः । अन्यत्सुगमम् ॥ २३५ ॥

सु० टी०—इदानीं माऽस्तु परेषामसत्यस्य बोधकत्वमस्माकं तु माया-कारणत्वश्रुतिबलेन गुर्वादेः स्वरूपेणासत्यस्याप्यधिष्ठानसत्यतामात्रेणैव तदुपपत्तिरित्याह—

परमेव तत्त्वमगृहीतमभू-
दखिलस्य कारणमनर्थकरम् ।
परमेव तत्त्वमवबुद्धमतः
परितृप्तये भवति पुष्कलतः ॥ २३६ ॥

परमेवेति । न ह्यविद्यासामर्थ्यकृतः संसारः किं त्वधिष्ठानसामर्थ्यादि-ति प्रागेवोक्तत्वात् । परमेव तत्त्वमज्ञातमखिलबन्धकारणं तदेव कल्पि-

**तद्विद्वच्छरीरावच्छिन्नजीवरूपेण विद्याजनकं तदेव च स्वकल्पितवाक्य-जन्यवृत्त्यभिव्यक्तं मुक्तिहेतुश्चेत्याह**—परमेवेति ॥ २३६ ॥

अ० टी०—कल्पितस्य कल्पिताकारेणैव तत्त्वावगतिहेतुत्वमित्यङ्गीकारे परः कोऽपि दोषं तत्र वक्तुं न शक्नुयादिति स्थितमस्मत्प्रक्रियायां तु चोद्यस्यास्योदय एव नास्तीत्याह—**परमेवेति** । परमेवाखिलस्य कारणं सर्वाधिष्ठानं सत्त्वमविद्यावशादगृहीतं सदनर्थकरमभून्नाविद्यामात्रमनर्थकारणं तस्याः स्वतो जडाया अकिंचित्करत्वात्किंत्वधिष्ठान-सामर्थ्यावलम्बनेनैवाविद्याया अपि सामर्थ्यमेतत्प्रागुक्तमेवाऽऽत्मत्वमात्रविषयाश्रयतावलेनेत्यतः परमार्थमेव वस्त्वविदितं सत्साभासाविद्याद्वारा सर्वानर्थहेतुरित्यस्मन्मतमित्यर्थः । पुरुषार्थ-हेतुत्वमपि परमार्थस्य चिद्वस्तुन एवेत्याह—**परमेवेत्युत्तरार्धेन** । परमेव तत्त्वमनिर्वचनीयवाक्यार्थबुद्धावभिव्यक्ततयाऽवबुद्धं सत्पुष्कलतः पारितृप्तये भवति परिपूर्णचित्सदानन्दात्मनाऽवस्थानरूपपुरुषार्थायावकल्पते वाक्योत्थावृत्तिद्वारमात्रं न स्वयं पुरुषार्थ-हेतुरित्यस्मन्मतमित्यर्थः । तादृशवृत्तिहेतुत्वमपि परमात्मन एव परिकल्पितविद्वच्छरीरादि-द्वाराऽऽचार्यभावेन कल्पितवर्णकलापवेदत्वेन चेत्यपि द्रष्टव्यम् ॥ २३६ ॥

**सु० टी०—ननु मद्रूपमेव मत्तृप्तिकरं चेत्प्रागपि श्रवणादिवशात् कुतस्तृप्तिर्नाऽऽसीदितिचेदशुद्धान्तःकरणतया विषयरसाभिनिवेशादन-धिकारित्वेन तत्त्वानवबोधादित्याह—**

**तव रूपमेव तव दुःखकरं**
**यदि तन्न पश्यसि बहिर्मुखधीः ।**
**तव रूपमेव तव तृप्तिकरं**
**यदि तत्प्रपश्यसि निवर्त्य तमः ॥ २३७ ॥**

तव रूपमिति। **बहिर्मुखधीर्विवेकवैराग्याद्यभावेनानन्तर्निष्ठबुद्धिरित्यर्थः । इदानीं त्वधिकारसंपत्त्या साक्षात्कृतात्मतत्त्वस्तमःशमनेन परितृप्तोऽसीत्याह**—तवेति ॥ २३७ ॥

अ० टी०—ननु परतत्त्वमेव चेज्ज्ञानाज्ञानाभ्यामर्थानर्थहेतुस्तर्हि तस्य सदा सत्त्वात्तत एव बन्धमोक्षौ स्यातामिति कोऽपराधो मम यत्नो वा को मया कार्यः स्यादिति चेत्तत्राऽऽह—**तव रूपमिति** । न हि परं तत्त्वं त्वत्तो भिन्नं किं तु तव रूपमेव 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इत्यादिश्रुतेः । अतो बताहो कष्टं बहिर्मुखधीर्देहादावात्म-बुद्धिः सन्यदि तत्तव तत्त्वं न पश्यसि श्रुत्याचार्याभ्यां नावगच्छसि तव रूपमेव परं तत्त्वं तव दुःखकरं संसारापादकं भवत्यतस्तवैवापराधात्तव दुःखमित्यर्थः । तदुक्तं भगवता—

'आत्मैव रिपुरात्मनः' [ भ०गी० ६ । ५ ] इति । यदि पुनः श्रुत्याचार्यप्रसादेनानाद्यरूप तमो निवर्त्य तत्परं तत्त्वं पश्यसि साक्षादनुभवसि तदेव रूपं तव तृप्तिकरं कृतार्थत्वापादकं भवतीत्यर्थः । तदप्युक्तम्—' आत्मैव ह्यात्मनो बन्धुः ' [ भ० गी० ६ । ५ ] इति ॥ २३७ ॥

**सु० टी०—तथाऽपि न ज्ञानमात्रेण परितृप्तिः ' कर्मणैव हि संसिद्धिम् [भ० गी० ३ । २०] ' इत्यादिस्मृत्या कर्मणो मुक्तिहेतुत्वश्रवणादिति चेन्न कर्मणः सत्त्वशुद्धिहेतुत्वं तद्‌द्वारा न मुक्तिहेतुत्वं ' तमेव विदित्वा ' [ श्वेता० ३ । ८ ] इत्यादिश्रुतिविरोधान्मुक्तिस्तु बोधमात्रादेवेत्याह—**

**तव बोधमात्रमुपनेयमत-**
**स्तव मोहमात्रमपनेयमपि ।**
**तव बोधमोहजनिहानिकरं**
**वचनं त्रयीशिरसि तत्त्वमिति ॥ २३८ ॥**

तव बोधेति । **अज्ञानमूलकत्वादपि बन्धस्य ज्ञानैकनिवर्त्यत्वमित्याह—** तव मोहेति । **मोहमात्रं निरस्यं न वस्तुन्यतिशयः कश्चिज्जन्यत इत्यर्थः । प्रमाणागोचरस्य मम कुतो बोधोऽबोधनिवृत्तिर्वेति चेत्तत्राऽऽह—**तवेति । **बोधजनिद्वारा मोहहानिकरमित्यर्थः ॥ २३८ ॥**

अ० टी०—तदेवं यथोक्तरीत्या सर्वस्यापि द्वैतभानस्याविद्यामात्रत्वे सिद्धे प्रत्यगात्मनो हेयोपादेयाभावोऽपि सिद्ध इत्याह—**तव बोधमात्रमिति** । यतोऽनर्थरूपं सर्वमविद्यामयमात्मा च नित्यशुद्धबुद्धमुक्तस्वभावोऽतः कारणात्तव बोधमात्रं बुद्धिवृत्तिमात्रमात्मासाधारणाकाराकारितमुपनेयमुपादेयं संपाद्यं नान्यदित्यर्थः । तेन च तवापनेयमपि मोहमात्रमेव नान्यदित्यर्थः । उक्तबोधजन्मद्वारा मोहहानिमात्रं तत्त्वमस्यादिवाक्यस्यापि कृत्यं नापूर्वाधानमित्याह—**तव बोधमोहेति** ॥ २३८ ॥

**सु० टी०—नन्वात्मन्यनर्थः पूर्वमासीद्बोधजन्मनि तन्निवृत्तिरित्यतिशय इति चेन्नेत्याह—**

**तव बोधजन्मनि पुरा न पुन-**
**स्तव कश्चिदप्यतिशयो भवति ।**

तम एव पूर्वमभवन्न भव-
त्यवबोधजन्मनि ततो न परम् ॥ २३९ ॥

तवेति । बोधे जाते ततः पुरा पश्चाच्च ते कश्चिदतिशयोऽस्तीत्यर्थः । तर्हि निवर्त्याभावात्किं बोधेनेति तत्राऽऽह—तम एवेति । बोधे सति प्रागविद्यमानं तम एव न भवति नापरं किंचिज्जन्यत इत्यर्थः ॥ २३९ ॥

अ० टी०—पूर्वपद्योक्तमात्रशब्दद्वयव्यावर्त्यमाह—तव बोधजन्मनीति । तव प्रत्यगात्मनो बोधजन्मनि विद्योत्पत्तिसमये पुरा ततः पूर्वं पुनर्विद्योदयानन्तरं वा तव कश्चिदप्युपादानलक्षणो हानलक्षणो वाऽतिशयो न भवत्यनाधेयातिशयकूटस्थस्वरूपत्वात्तवेत्यर्थः । ननु विद्योदयात् पूर्वं ममानर्थोऽभूदिदानीं तन्निवृत्तिर्जातेत्यतः कथमतिशयाभाव इति चेत्तत्राऽऽह—तम एवेति । पूर्वं विद्योदयात्त्वयि तमोऽज्ञानमेवाभवन्न तदतिरिक्तोऽनर्थोऽभूदित्यर्थः । अवबोधजन्मनि सतीदानीं न भवति । तम इत्यनुवर्तते । ततस्तमोनिवृत्तेरपरं बोधकृतमतिशयरूपं नाभूदस्ति भविष्यति चेत्यर्थः ॥ २३९ ॥

सु० टी०—ननु पूर्वं तमसा सद्वितीय एवाऽऽत्माऽऽसीदिदानीं तदभिभव इत्ययमेवातिशय इति नेत्याह—

न तमोऽपि पूर्वमभवन्न भव-
त्यवबोधजन्मनि तमोभिभवः ।
तम एव केवलमिदं सकलं
न तमो विनाऽऽत्मनि किमप्यभवत् ॥ २४० ॥

न तमोऽपीति । तमोऽप्यात्मन्यध्यस्तत्वान्न ततः पृथगासीदित्यर्थः । तर्हि तन्निवृत्त्याऽपि सातिशयत्वमिति नेत्याह—न भवतीति । कुतस्तर्हि तमो नष्टमिति व्यवहारस्तत्राऽऽह—तम एवेति । इदं तमोऽस्ति तमो नष्टमित्यादि सकलं तम एव न वस्त्वित्यर्थः । न तमो विनेति । 'तम आसीत्तमसा गूढम्' इत्यादिश्रुतेरित्यर्थः ॥ २४० ॥

अ० टी०—तर्हि तमसो भावाभावावतिशयौ मयीति कथमनतिशयत्वं ममेति चेन्नेत्याह—न तमोऽपीति । पूर्वं विद्योदयात्तमोऽपि न भवेदेवात एवावबोधजन्मनि तमोभिभवोऽपि न भवति तमसो वस्तुसंस्पर्शित्वाभावादित्यर्थः । तर्हि किमिदमुद्घुष्यते पूर्वं तमोऽभूदिदानीं तन्निवृत्त्या कृतकृत्यता जातेति चेदेतदप्यज्ञानमेवेत्याह—तम एव केवलमिति । पूर्वं तमोऽनर्थकरमभूदिदानीं तन्निवृत्त्यैव कृतकृत्योऽभूवमहमित्यादि सकलमपि केवलं तम एवाज्ञानमात्रं न तु तमो विनाऽऽत्मनि किमप्यभवत् । आत्मा

सदैकरूप एव तस्मिन्बन्धमोक्षादिकं सर्वमज्ञानादेव भाति न परमार्थत इत्यभिप्रायः ॥ ॥ २४० ॥

**सु० टी०—नन्वस्तु तमस्तत्कार्यं च तमोमात्रं निवृत्तिस्तु कथं तन्मयी विरोधादिति चेत्तत्राऽऽह—**

**न तमः परिहृत्य लभ्यते**
**तमसो हानिगता निरूपणा ।**
**इति सा तम इत्युदीरिता**
**न निवृत्तिस्तमसस्तमोमयी ॥ २४१ ॥**

न तम इति । हानिगता हानिविषया । यतस्तमोदशायामेव तन्निरूपणं प्रतियोगितया च तन्निवृत्तिस्तमोऽपेक्षते तस्मादुपचारात् सा तम इत्युदीरिता न तु सा वस्तुतस्तमोमयी किं त्वधिष्ठानरूपा न हि घटनिवृत्तिर्घटमयीत्यर्थः ॥ २४१ ॥

अ० टी०—तमसो निवृत्तिरपि तम एवेति यदुक्तं तदयुक्तं प्रतियोगितदभावयोरैकत्वादिति भ्रमान्मन्वानं प्रति बोधयति—**न तमः परिहृत्येति** । तमसो हानिगता निरूपणा तमो निवर्तत इति प्रतिपादनं यत्तत्तमः परिहृत्य तमःप्रतियोगित्वेनानुल्लिख्य न लभ्यत इति कृत्वा सा तमोनिवृत्तिस्तम इत्युदीरितोक्ता न त्वात्मवस्त्वपेक्षया न तु तमसो निवृत्तिस्तमोमयीत्यस्माभिरुक्तमिति योजना । अयं भावः—तमो नाऽऽत्मनि परमार्थतः संगतं संभाव्यतेऽसङ्गकूटस्थस्वप्रकाशे तद्विपरीतस्य तमसो विरोधात्किं त्वारोपितं तत्र तत्प्रतिषिध्यते । यत्राऽऽरोपितं प्रतिषिध्यते तत्र तन्निवृत्तेर्यक्षानुरूपो हि बलिरितिन्यायेन तदानुरूप्यादनिर्वचनीयाज्ञाननिवृत्तिरप्यनिर्वचनीयैव । बोधो ह्यत्र निवृत्तिशब्दार्थः । स च कालत्रयाभावबोधलक्षण इत्यप्राप्तमेव प्राप्तवत्प्रतिषिध्यते । दिव्याग्निवपननिषेधवदितस्तमोरूपा तमोनिवृत्तिरिति वाक्प्रवृत्तिमात्रमेतदुक्तं मिथ्यात्वाभिप्रायेण न पुनस्तमःप्रतियोगिकाभावाभिप्रायेणेति ॥ २४१ ॥

**सु० टी०—तथाऽपि यावज्जीवश्रुत्या विदुषोऽपि नित्यनैमित्तिकप्रवृत्तेः कुतो बोधमात्रान्मुक्तिरिति चेन्न तस्या अविद्वद्विषयत्वादित्याह—**

**विधयश्च कर्मविषयाः स्वतमः-**
**पटलावृते त्वयि बहिर्मनसि ।**

कुत एव सम्यगवबोधहते
तमसि प्रवृत्तिरिति संभवति ॥ २४२ ॥

विषयश्चेति । **कुतस्तमःपटलावृतविषयत्वं विधीनामित्याशङ्क्य विशिनष्टि**—बहिर्मनसीति। **आत्मनो बहिः कर्तृत्वभोक्तृत्वादौ मनोभिमानो यस्य तादृशमेव कर्म विषयोऽधिकुर्वन्ति न तु सम्यग्बोधहताज्ञानतत्कार्याध्यासे त्वयि प्रवर्तन्त इत्यर्थः ॥ २४२ ॥**

अ० टी०—तदेवं प्रत्यक्षादिविरोधं ब्रह्मात्मनि वेदान्तसमन्वये परिहृत्येदानीं कर्मकाण्डे विरोधमपि परिहरति—**विषयश्चेति** । कर्मविषया विधयश्च स्वतमःपटलावृते बहिर्मनसि त्वयि सति प्रवर्तन्ते तयाविद्यावस्थायां भ्रान्तिसिद्धकर्तृत्वाद्यादाय त्वां प्रवर्तयन्त्यविद्यावद्विषयं कर्मकाण्डमित्यर्थः । इदानीं सम्यगवबोधेन निराकृते तमसि सतीह कर्मसु कुत एव प्रवृत्तिः संभवति क्रियाकारकफलभेदबुद्धेरुपमर्दित्वान्निर्विषयं कर्मकाण्डं कथं त्वामिदानीं प्रवर्तयेदित्यर्थः । विद्यावस्थायामधिकार्यभावाद्विधीनामपि न प्रामाण्यमित्यभिप्रायः ॥२४२॥

**सु० टी०—ननु जीवन्मुक्तोऽपि भोजनादाविव कर्मस्वपि प्रवर्ततामिति चेन्न कामनाविरहादित्याह—**

विदिते पदे भगवतः परमे
परिपुष्कले परमतृप्तिमतः ।
तव तृष्णया विरहितस्य कथं
विधिषु प्रवृत्तिरपवर्गवतः ॥ २४३ ॥

विदित इति । **परिपुष्कले सजातीयादिभेदरहिते आत्मतया विदिते तेन ब्राह्मण्याद्यभिमानाभाव उक्तः । तृप्तिमत्त्वे हेतुः**—अपवर्गवत इति । **आप्तकामस्येत्यर्थः ॥ २४३ ॥**

अ० टी०—यथा विद्यायां जातायामपि प्रत्यक्षादि प्रवर्ततेऽन्यथा जीवनासंभवात्तथा विधयोऽपि देहधारणकाले प्रवर्तन्तामिति चेन्न तस्यां दशायां पारलौकिकफलेच्छाभावात्तया विना तदर्थं प्रवृत्त्यनुपपत्तेः प्रत्यक्षादेश्च बाधितानुवृत्तिमात्रत्वाद्विदुष इत्यभिप्रेत्याऽऽह—**विदित इति** । परिपुष्कले क्रियाकारकादिसर्वव्यवहारातीततया परिच्छेदाभावात्परिपूर्णे भगवतः परमे सर्वोत्तमे पदे विदिते साक्षात्कृते सति परमतृप्तिमतः संप्राप्तसकलकामस्य परमानन्दरूपस्य तवात एवार्वाचीनस्वर्गादिविषयया तृष्णया रहितस्यापवर्गवतो निवृत्तसर्वक्लेशस्य कथं विधिषु प्रवृत्तिर्न कथमपि द्वाराभावादित्यर्थः ॥ २४३ ॥

सु० टी०—ननु कथमेकस्य कर्मविधेरेकमेव प्रति प्रवृत्तिरप्रवृत्तिश्चे-त्याशङ्क्य दृशाभेदादिति दृष्टान्तमुखेनाऽऽह—

अभिचारकर्मविधयो हि यथा
फलभागबाधमनु बाधयुजः ।
करणादिभागनिरुपाख्यतया
विधयस्तथैव परमात्ममतेः ॥ २४४ ॥

अभिचारेति । **यथा हि वैरिवधफलश्येनादिविधयः क्रोधातिशयाद्ब्रह्म-वधेऽपीष्टत्वाद्यभिमानिनि प्रवर्तमाना अपि तस्यैव पुंसो बहुविधनिषे-धशास्त्राभियुक्तस्य श्येनफले बलवदनिष्टहेतुत्वं भावयतो वीतक्रोधस्य फलभागबाधाद्बाधिता भवन्ति तस्मिन्न प्रवर्तन्त एवमद्वैतब्रह्मसाक्षा-त्काराद्देहादिप्रपञ्चबाधे सति भावनायाः करणाद्यंशत्रयबाधादेवंविदं प्रति न विधयः प्रवर्तन्त इत्यर्थः** ॥ २४४ ॥

अ० टी०—ननु फलेच्छाभावेऽपि यावज्जीवादिशास्त्रं कर्तव्यतां कर्मणां बोधयेदे-वातः कथमप्रवृत्तिर्विदुष इति चेत्तत्राऽऽह—**अभिचारेति** । अभिचारकर्मविधयो 'न हिंस्यात्सर्वा भूतानि' 'नाभिचरेत्' इत्यादिप्रतिषेधशास्त्रार्थज्ञानसंस्कारवतोऽभिचार-भावनायाः फलभागस्य भाव्यांशस्य बाधितत्वप्रतिपत्तेर्भाव्यबाधमनुबाधयुजो बाधिता न प्रवृत्तिकरा यथा तथैव परमात्ममतेर्विदुषः करणादिभागनिरूपणाख्यतयाऽद्वैतात्मतत्त्वा-वगमे च कर्तृकरणफलादिसर्वभागस्यैव बाधिततया सर्व एव विधयो बाधयुजो भवन्तीति योजना । एतदिह तात्पर्यं—यद्यपि कर्मकाण्डस्य न चक्षुरादिवद्विभ्रमहेतुत्वमस्ति निर्दुष्टवे-दरूपत्वाद्वेदान्तवत्स्वार्थतात्पर्योपपत्तेस्तथाऽपि भ्रान्तिसिद्धक्रियाकारकफलभेदावलम्बनेन तदुपहितमेव स्वार्थं बोधयति कर्मकाण्डं न वेदान्तवाक्यवत्प्रतीयमानभेदापवादेनेति यावद्वे-ददृष्टयनपवादस्तावत्पूर्वप्रवर्तकतया प्रामाण्यं लभते यथाऽभिचारविधिर्हिंसादोषानभिज्ञत-याऽनेनामुं हिंसिष्य इति भावयन्तं पुरुषमाश्रित्य तद्दृष्टयनपवादेनैव तं तत्र प्रवर्तयन्प्र-माणभावं भजते तद्वत् । यथा पुनर्हिंसानिषेधशास्त्रसंस्कारतया बाधितभाव्यांशामभिचार-भावनां पश्यन्तं बोधयितुं प्रवर्तयितुं वा शक्नुवन्नभिचारविधिस्तं प्रति प्रमाणभावान्निवर्तते तथा वेदान्तवाक्यादद्वैतात्मतत्त्वज्ञानबाधितसकलभेदवन्तं बोधयितुं प्रवर्तयितुं चाशक्नुवन्तः कर्म-विधयो विद्वांसं प्रति प्रमाणभावान्निवर्तन्ते ॥ २४४ ॥

सु० टी०—पूर्वश्लोकध्वनितं कैमुतिकन्यायमनुसंधत्ते—

यदि भाव्यभागविलये न भवे-
त्फलभावना कथमिहोत्सहते ।

करणादिभागविलये भवितुं
विधिरन्तरेण घटते न च ताम् ॥ २४५ ॥

यदीति । **भाव्यरूपैकभागविलयेऽपि चेद्भधादिफलिका ( * भावना न भवेत्कथमंशत्रयस्यापि विलये नित्यादिकर्मभावना स्यादित्यर्थः । नन्वर्थभावनांऽशत्रया)भावे मा भूल्लिङादिव्यापारात्मिका तु शब्दभावना कुतो नेत्याशङ्क्यार्थभावनाविषया हि सा न तां विना घटत इत्याह**—विधिरिति ॥ २४५ ॥

अ० टी०—ननु कथं करणादिबाधेन विधीनामप्रवृत्तिरिति चेद्भावनाया असंभवादित्याह—**यदि भाव्येति** । फलभावनाऽभिचारादौ भाव्यभागविलये सति यदि न भवेदंशत्रयवती भावना यद्येकांशविरहमात्रेऽपि न भवेदिति यावत् । तदा करणादिभागविलये करणेतिकर्तव्यताभाव्यरूपसमस्तांशविलये सतीह वेदान्तेषु विधिर्भवितुं कथमुत्सहते भावनाऽत्र कथं स्यादित्यर्थः । मा सिध्यतु भावनेति चेत्तत्राऽऽह—**अन्तरेणेति** । तां भावनामन्तरेण विधिर्न च घटते विधिपदं मध्यमणिवदुभयत्र संबध्यते । न हि क्रियाकारकफलभेदमन्तरेण विधिरुपपद्यत इत्यर्थः ॥ २४५ ॥

**सु० टी०—अस्तु भावनाविधावयं दोषो नियोग(+वादे तु नानुपपत्तिरिति चेन्नेत्याह—**

अधिकारिणं च विषयं च विना
न नियोगबुद्धिरुपपत्तिमती ।
न विना तमस्तदुभयं घटते
विदितात्मनश्च न तमो घटते ॥ २४६ ॥

अधिकारिणं चेति । **नियोज्यमित्यर्थः । विषयं कृतिद्वारा नियोगनिरूपकं धात्वर्थं यथा वीतक्रोधस्य वधकामनाविरहान्न श्येनः कार्य इति विषयनियोज्ययोरभावान्न श्येननियोगधीसंभव एवं विदितात्मतत्त्वस्यापि तमसो निवृत्तौ तत्कृतयोर्विषयनियोज्ययोरभावान्न कर्मसु नियोगधीरित्यर्थः)** ॥ २४६ ॥

अ० टी०—भावनाया अभावे विध्यसंभव इत्युक्तं प्रपञ्चयति—**अधिकारिणं चेति** । यद्वा भावनावाददृष्ट्या विध्यभावेऽपि नियोगवाददृष्ट्या तत्संभव इत्याशङ्क्य तत्रापि समाऽनुपपत्तिरित्याह—**अधिकारिणमिति** । अधिकारी नियोज्यः । नियोज्य-

* ग्रन्थोऽयं ख. पुस्तकस्थः । + ग्रन्थोऽयं ख. पुस्तकस्थः ।

विषयौ विना नियोगबुद्धिर्नोपपत्तिमती घटत इत्यर्थः । कथमिहाधिकारिविषययोरभावो येन नियोगासंभव इत्यत आह— **न विनेति** । न हि विनाऽऽत्मतत्त्वाज्ञानमहं ब्राह्मणो ममेदं कार्यमित्यादिबुद्धिरुपपद्यते । अस्त्वेतदपीति चेन्नैवं तत्त्वज्ञानबाधितत्वात्तमस इत्याह— **विदितात्मनश्चेति** ॥ २४६ ॥

**सु० टी०—नन्वविद्वद्विषयत्वे विधीनां बाधितार्थत्वादप्रामाण्यं स्यादिति चेन्न पारमार्थिकप्रामाण्यबाधेऽपि व्यावहारिकत्वाविरोधादित्याह—**

**व्यवहारगोचरमतः सकलं**
**विधिवाक्यमित्यवगतिं मनसि ।**
**उपनीय वेदशिरसो विधिभि-**
**र्न विरोध इत्यपि समाकलय ॥ २४७ ॥**

व्यवहारेति । **ततश्च न तद्विरोधेन वेदान्तानामप्रामाण्यं शङ्क्यसंभावनमित्यर्थः ॥ २४७ ॥**

अ० टी०—तस्माद्भ्रान्तिसिद्धक्रियाकारकाद्यवलम्बित्वात्कर्मकाण्डस्य न वेदान्तार्थबाधकत्वं संभवति किं तु व्यवहारगोचरमेव प्रत्यक्षवत्तस्यापि प्रामाण्यमित्युपसंहरति— **व्यवहारगोचरमिति** । निगदव्याख्यातमिदं पद्यम् ॥ २४७ ॥

**सु० टी—तदेवं सांख्ययोगादिस्मृतिभिस्तन्न्यायैश्च समन्वयाविरोधमाद्यपादार्थमेवं समन्वयेत्यादिना तत्तन्मतनिराकरणं चाऽऽरम्भणादीत्यादिना द्वितीयपादार्थमेवं सृष्ट्यादिश्रुतीनां जीवश्रुतीनां चान्योन्याविरोधं तृतीयपादार्थमेकाज्ञानविकल्पितमज्ञानतज्जेत्यादिना निरूप्य तेनैव चेन्द्रियादिश्रुत्यविरोधं चतुर्थपादार्थं सिद्धमभिप्रेत्याद्वयपरवेदान्तानां भेदग्राहिमानान्तरविरोध(*खण्डनमध्यायार्थमुपसंहरति—**

**एवं वेदान्तवाक्यैरवगतिपदवीमद्वये नीयमाने**
**प्रत्यक्तत्त्वे समस्तद्वयकृति तमसि क्षीयमाणे च सद्यः ।**
**स्वाराज्ये त्वय्यवाप्ते परमसुखभुजि स्वच्छचैतन्यमात्रे**
**शेषो मानान्तराणामपि दुरवगमस्तत्र दूरे विरोधः ॥२४८॥**

**इति श्रीसर्वज्ञात्ममहामुनिविरचिते संक्षेपशारीरकेऽविरोधाभिधो द्वितीयोऽध्यायः ॥ २ ॥**

---

* ग्रन्थोऽयं ख. पुस्तकस्थः ।

एवमिति । **अद्वये प्रत्यक्तत्त्वे वेदान्तैरभिव्यक्तिं नीयमान इति विरोध)-विषय उक्तः समस्तद्वयकृतीति भेदस्याऽऽविद्यकत्वान्न तद्ग्राहिभिः समन्वयस्य विरोध इत्युक्तं स्वाराज्यमित्यादिफलोक्त्या स्वरूपमात्रावशेषाद्विरोधे कैमुतिकन्यायः सूचितः ॥ २४८ ॥**

**इत्यग्निचिदुपाध्यायमिश्रश्रीपुरुषोत्तमविरचितायां सुबोधिन्यां द्वितीयाध्यायसंग्रहः ॥ २ ॥**

---

अ० टी०—तस्माद्वेदान्तेभ्योऽद्वैतात्मतत्त्वावगतौ न मानान्तरविरोधः स्वप्नेऽपि शङ्कनीयो मानान्तराणामपि तदानीं बाधितत्वेऽसत्त्वावगमादित्यध्यायार्थमुपसंहरति—**एवमिति।** एवमविरोधेन वेदान्तवाक्यैरद्वये ब्रह्मात्मरूपेऽवगतिपदवीं नीयमाने तन्नाऽऽन्तरीयकतया समस्तद्वयकृति सर्वद्वैतोपादाने तमसि प्रत्यक्तत्त्वे सद्यः क्षीयमाणे च सति त्वयि स्वच्छचैतन्यमात्रेऽनुदितानस्तमितस्वप्रकाशज्ञानैकस्वभावे परमसुखभुजि परमानन्दमनुभवति स्वाराज्येऽवाप्ते मानान्तराणां शेषोऽपि दुरवगमो मानान्तरावशेष एव तदा न भवति तत्रैवं सति तत्कृतो विरोधो दूरापास्त एवेति योजना ॥ २४८ ॥

इति श्रीकृष्णतीर्थशिष्यरामतीर्थकृतायां संक्षेपशारीरकटीकायामन्वयार्थप्रकाशिकायां द्वितीयोऽविरोधाभिधोऽध्यायः समाप्तः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

सु० टी०—अध्यायद्वयेन ज्ञानपौष्कल्यसिद्धेः किं तृतीयारम्भेणेत्याक्षिप्याविरोधेन समन्वयदार्ढ्यसिद्धावपि साधनाप्रतिपत्तेर्न ज्ञानपौष्कल्यमिति तन्निरूपणायाऽऽरभ्यत इत्याह—

श्रुत्वाऽविरोधमुपपन्नसमन्वयोऽथ
ब्रह्मात्मतामतिरयं पुनरप्युवाच ।
ब्रह्मात्मताफलशिरस्कमतिं प्रसूते
यत्साधनं तदखिलं प्रतिपित्समानः ॥ १ ॥

श्रुत्वेति । तेनाविरोधबोधस्य साधनप्रतिपित्साहेतुत्वादध्याययोः संगतिरुक्ता । ननूपपन्नब्रह्मात्मतामतेः किमर्थं साधनापेक्षेति तत्राऽऽह— ब्रह्मात्मतेति । उत्पन्नाया अपि विद्यायाः परिपाकार्थं किं साधनं मयाऽनुष्ठेयमिति जिज्ञासमान इत्यर्थः ॥ १ ॥

अ० टी०—तदेवं सर्ववेदान्तानां प्रत्यगेकरसे परे ब्रह्मणि समन्वयं विरोधपरिहारेण दृढीकृत्येदानीं यथोक्तब्रह्मज्ञानसाधनविचारपरं तृतीयाध्यायमवतारयिष्यन्नादौ शिष्यप्रश्नमवतारयति—श्रुत्वाऽविरोधमिति । अयं जिज्ञासुः शिष्यः प्रथमाध्यायनिरूपितवेदान्तसमन्वयस्य परैरुद्भावितसर्वप्रकारविरोधपरिहारं श्रुत्वोपपन्नसमन्वयः सम्यक्संभावितसमन्वयोऽत एव ब्रह्मात्मतामतिर्ब्रह्मात्मैक्यमतिरेव सम्यक्तत्त्वज्ञानं नान्यदिति निश्चितमतिः सन्नथाविरोधश्रवणानन्तरं गुरोरविरोधनिरूपणादुपरमानन्तरं वा पुनरप्युवाच पप्रच्छेति योजना । किमिच्छन्नुवाचेति तदाह—ब्रह्मात्मतेति । ब्रह्मात्मता मोक्षस्तदेव फलं परमपुरुषार्थरूपं शिरस्युह्यमानं यस्या मतेस्तां मतिं ब्रह्मात्मतत्त्वाविर्भावकारिणीं साक्षान्मोक्षफलां धियं यत्साधनं साक्षात्पारम्पर्येण कारणं प्रसूते जनयति तदखिलमशेषं प्रतिपित्समानः प्रतिपत्तुमिच्छन्नुवाचेति योजना ॥ १ ॥

सु० टी०—उक्तजिज्ञासामेव प्रपञ्चयति—

ऐदंपर्यमखण्डवस्तुविषयं वेदान्तवाक्यस्य य-
त्पूर्वं वर्णितमस्य भूदपहतिर्मा नाम मानान्तरैः ।

---

१ ग. °योत्थब्र° ।

**किं त्वस्याः परिनिष्ठितस्वविषयध्वान्तच्छिदो जन्मने**
**विद्याया वचनादृते किमपरं कृत्यं भवेत्साधनम् ॥ २ ॥**

ऐदंपर्यमिति । **अस्य मानान्तरैरपहतिर्मा भून्नाम किं त्वस्या इत्यन्वयः ।** परिनिष्ठितेति । **दृढभूमिस्वविषयाज्ञाननिवृत्तिक्षमाया इत्यर्थः ।** वचनादिति । **वाक्यानुसंधानादृत इत्यर्थः ॥ २ ॥**

अ० टी०—एतेन द्वितीयतृतीययोरध्याययोर्हेतुहेतुमद्भावलक्षणः संबन्धो दर्शितः शिष्यबुभुत्सामेव विशदयति—**ऐदंपर्यमिति** । पूर्वं प्रथमाध्याये यद्वेदान्तवाक्यस्याखण्डवस्तुविषयमैदंपर्यं वर्णितमासीदस्यैदंपर्यस्य मानान्तरैः प्रत्यक्षादिभिरपहतिर्विरोधो मा नाम भूत्तत्परिहारस्योपपादितत्वात्तत्र नास्ति ममासंभावनाशङ्का किं त्वन्यदस्ति बुभुत्सितंमिति योजना । तदेवाऽऽह—**अस्या इति** । अखण्डब्रह्मात्मैक्यमतेरस्या विद्यायाः किंलक्षणायाः परिनिष्ठितः सिद्धरूपो यः स्वविषयः स्वप्रमेयं तद्गतध्वान्तमज्ञानलक्षणं छिनत्तीत्येवंविधाया जन्मने वचनान्महावाक्यादृते किमपरं साधनं कृत्यं भवेन्मया कर्तव्यं भवेत्तन्मम बुभुत्सितमित्यर्थः । एतदुक्तं भवति—यद्यपि मानान्तरविरोधपरिहाराद्वेदान्तवाक्यजनिताखण्डवस्तुज्ञानमेव सम्यग्ज्ञानमिति ममास्ति दृढनिश्चयस्तथाऽपि शब्दयुक्तिपरतन्त्रतया तदनुसंधानावसर एव तदेवभासते न केवलवस्तुपरतन्त्रतया ब्रह्मात्माकारेण दृढा विद्योत्पन्ना दृश्यतेऽतः केवलवस्त्वाकारबुद्ध्युत्पत्तिसाधनमनुष्ठेयं किमपि भविष्यति यत्संपत्तावनायासेनोक्ता बुद्धिर्दृढा स्वयमेवोत्पद्यते तद्बुभुत्सितं कृपया कथयेति ॥ २ ॥

**सु० टी०—गुरुस्तृतीयस्य पादार्थान्संगृह्णन्साधनानि क्रमेणाऽऽह—**

**वैराग्यस्य दृढत्वमेकमपरं तत्त्वंपदार्थज्ञता**
**वाक्ये निर्गुणनिष्ठिते च सकले न्यायादियत्तामतिः ।**
**सम्यग्ज्ञानसमीपदूरभवयोर्हेत्वोर्विवेकज्ञता**
**वाक्यार्थप्रतिपत्तिसाधनमिदं यत्नेन कृत्यं यतेः ॥ ३ ॥**

वैराग्यस्येति । **तत्र जीवस्य लोकान्तरगतागतिनिरूपणेन वैराग्यदार्ढ्यमाद्यपादे द्वितीये पदार्थद्वयशोधनं तृतीये निर्गुणवाक्येषु शाखान्तरीयापुनरुक्तपदोपसंहारः सगुणेषु तादृशगुणोपसंहारानुपसंहारौ च चतुर्थे तु विद्याया अन्तरङ्गस्य शमादेर्बहिरङ्गस्य च यज्ञादेर्विवेक इति । एतानि च यतेर्नित्यान्येवेत्याह—**यत्नेनेति **॥ ३ ॥**

अ० टी०—गुरुः पृष्टमर्थमाविष्कुर्वन्नाह—**वैराग्यस्येति** । वैराग्यदार्ढ्यमेकं तावत्कार्यं साधनमपरं द्वितीयं तत्त्वंपदार्थशोधनं सकले निर्गुणनिष्ठिते वाक्ये न्यायाद्गुणोपसं-

हारन्यायत इयत्तामतिर्वाक्यपरिमाणावधारणं तृतीयं चकारादुपासनापरवाक्येष्वपीयत्तावधारणं समुच्चीयते । एतदप्युपासकानुग्रहाय भविष्यतीति भावः । चतुर्थं साधनमाह—**सम्यगिति** । समीपभवो हेतुः संनिपत्योपकारको दूरभव आरादुपकारकः । अनयोर्हेत्वोर्विवेकज्ञतेतीदं चतुष्टयं वाक्यार्थप्रतिपत्तिमस्मिन्नध्याये चतुर्भिः पादैः क्रमेण प्रतिपाद्यमानं यतेः संन्यासिनो यत्नेन कृत्यं कर्तव्यमिति योजना । यतिग्रहणेन तस्यावश्यमनुष्ठेयत्वमेषां विवक्ष्यते । एतेषां साधनानामननुष्ठाने यतेः प्रत्यवायापत्तेः । तथा यतिनैवैतानि सम्यगनुष्ठातुं शक्यानि नान्याश्रमिभिस्तेषां तत्तत्क्रियास्वधिकृतानां सर्वात्मना यथोक्तसाधननिष्ठत्वानुपपत्तेरिति च द्रष्टव्यम् ॥ ३ ॥

**सु० टी०—नन्वनेकसुखसाधनवति संसारे कथं वैराग्यं कथं वा तस्य विद्याहेतुत्वमिति चेत्तत्राऽऽह—**

**संसारदोषमवधारयतो यथाव-**
**द्वैराग्यमुद्भवति चेतसि निष्प्रकम्पम् ।**
**वैराग्यजन्मनि दृढे च सति प्रवृत्ति-**
**स्तत्त्वंपदार्थपरिशोधनकर्मणि स्यात् ॥ ४ ॥**

संसारेति । **निष्प्रकम्पं निश्चलम् । पदार्थविवेचनहेतुत्वाच्च विद्यासाधनत्वमित्यर्थः ॥ ४ ॥**

अ० टी०—तत्र वैराग्यमेव तावत्कथं संपाद्यं को वा ब्रह्मज्ञानोत्पत्तौ तज्जन्य उपकार इत्यपेक्षायामाह—**संसारदोषमिति** । रागाक्रान्तचित्तस्य पदार्थद्वयतत्त्वावधारणासंभवाद्वैराग्ये सति तु तत्संभवात्पदार्थज्ञानपूर्वकवाक्यार्थावधारणानुकूले श्रवणादौ प्रवृत्तिर्वैराग्यकृत उपकार इत्यर्थः । अक्षरयोजना सुगमा ॥ ४ ॥

**सु० टी०—एवंविधे संसारे दोषावधारणमपि कुत इति चेत्तत्राऽऽह—**

**संसाररूपमवगच्छ विविच्यमानं**
**यस्मिञ्श्रुते भवति तद्विषया जुगुप्सा ।**
**वेदः प्रकाशयति संसरणं यथाऽस्य**
**जीवस्य जन्ममरणे व्रजतः क्रमेण ॥ ५ ॥**

संसारेति । **जुगुप्सा निन्दा । तद्विवेचनोपायमाह**—वेद इति । **कथं प्रकाशयतीत्याह**—जन्मेति । '**पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति**'

[ छान्दो० ५ । ९ । १ ] 'तद्यथाऽनः सुसमाहितम्' [ बृह० ४ । ३ । ३५ ] इत्यादिनेत्यर्थः ॥ ५ ॥

अ० टी०—तर्हि संसारदोषमेव कथमहमवधारयेयमिति जिज्ञासमानं प्रत्याह—**संसाररूपमवगच्छेति** । किंप्रमाणबलमाश्रित्य संसारस्य दुष्टत्वं वर्ण्यत इति तत्राऽऽह—**वेद इति** । यथा क्रमेण जन्ममरणे व्रजतोऽस्य जीवस्य संसरणं वेदः प्रकाशयति तथा विविच्यमानं संसाररूपमवगच्छेत्यन्वयः ॥ ५ ॥

**मु० टी०—ननु कथं ब्रह्मणः संसरणं नित्यमुक्तत्वादित्याशङ्क्य सत्यं न स्वाभाविकं तर्हि त्वनाद्यविद्याकल्पितलिङ्गशरीरोपाधिकजीवत्ववशादेवेत्याह—**

**शुद्धः परो न खलु वाङ्मनसव्यतीतः**
**संसारदुःखमतिदुःसहमश्नुवीत ।**
**स्वाविद्यया हि पर एव स जीवभाव-**
**मागत्य[1] संसरति लिङ्गसमागमेन ॥ ६ ॥**

शुद्ध इति । **यतो वागादिव्यतीतोऽत एव न वस्तुतः संसारदुःखमागीत्यर्थः ॥ ६ ॥**

अ० टी०—ननु जीवस्य संसरणमिति कथं विशेषनिर्देशो यावताऽद्वैतवादे परस्मादन्यो न जीव इति चेत्सत्यं तथाऽपि जीवभावापत्त्यैव चिदात्मनः संसारित्वं न स्वरूपेणेत्येतदुपपादयन्नाह—**शुद्धः पर इति** । परः परमात्मा दुःसहं संसारदुःखं न खल्वश्नुवीतेति संबन्धः । कुतो यतः शुद्धो निरञ्जनः । कुतः शुद्धो यतो वाङ्मनसव्यतीतो वाङ्मनसगोचरसर्वव्यवहारातीत इत्यर्थः । न हि सर्वव्यवहारागोचरे वस्तुतः संसारव्यवहार उपपद्यत इति भावः । तर्हि किं परस्मादन्यो जीवो यस्य संसारो हन्त तर्हि कथमद्वैतमतस्थितिरित्यत आह—**स्वाविद्ययेति** । स एव परः परमात्मा स्वाविद्यया स्वाश्रयविषयाज्ञानेन कल्पितलिङ्गसमागमेन वक्ष्यमाणलिङ्गशरीरात्माध्यासाज्जीवभावमागत्य संसरति न तोऽन्यो जीवोऽङ्गीकृत इत्यर्थः । एतच्च 'इन्द्रो मायाभिः पुरुरूप ईयते' [ बृह० २ । ५ । १९ ] इत्यादिवेदान्तप्रसिद्धमितिद्योतनाय हिशब्दः ॥ ६ ॥

१ ग. गम्य सं° ।

**सु० टी०—तर्हि मुक्तिरपि सोपाधेरेव स्याद्बद्धस्यैव मुक्तिभागित्वादिति चेन्नेत्याह—**

**ब्रह्मैव संसरति मुच्यत एतदेव**
**दौवारिकं भवति संसरणं तु तस्य ।**
**मुक्तिः पुनर्भवति चिद्वपुषैव तस्य**
**स्वाज्ञानतः स्वमहिमप्रतिबोधतश्च ॥ ७ ॥**

ब्रह्मैवेति । **न सोपाधिकस्य बन्धो येनैवं स्यात्किं तु परस्यैवेत्यर्थः । कथं तर्हि शुद्धः पर इत्युक्तं तत्राऽऽह**—दौवारिकमिति । **न तस्य परमात्मरूपेण संसारित्वं किं त्वविद्योत्थलिङ्गद्वारकं तत्सापेक्षमित्यर्थः । तर्हि मुक्तिरपि किं सापेक्षरूपेण नेत्याह**—मुक्तिरिति । **कुतोऽयं विशेष इति चेत्तत्राऽऽह**—स्वेति । **न हि वस्तुस्वभावानुरोध्यज्ञानं येन तत्कृतबन्धस्य वास्तवत्वं स्यात्सम्यग्ज्ञानं तु स्वाभाविकवस्तुमहिमानुरोधीति तत्कृता मुक्तिरपि स्वाभाविकीत्यर्थः ॥ ७ ॥**

अ० टी०—ननु यस्य बन्धस्तस्यैव मुक्तिरिति नियमात्केवलस्य परस्यैव संसारबन्धो वक्तव्यस्तस्यैव मुक्तिभाक्त्वात्सोपाधिकस्य तस्य संसारित्वे मुक्तिरपि सोपाधिकस्यैव स्यात्तच्चायुक्तं मुक्तावुपाधिसद्भावे मुक्तत्वव्याघातादिति चेत्तत्राऽऽह—**ब्रह्मैवेति ।** न ह्युपाधिविशिष्टस्य संसारोऽस्माभिरुच्यते येन प्रसञ्जयेम विरोधं किं तु ब्रह्मैव संसरत्येतदेव ब्रह्म मुच्यत इति वदामः । तर्हि किमिति तस्य संसरणे जीवभावो व्याख्यात इति तत्राऽऽह—**दौवारिकमिति ।** तस्य परस्य संसरणं प्रति लिङ्गसमागमनं दौवारिकं ब्रह्मणि स्वतः शुद्धे लिङ्गसंगमः संसारारोपद्वारमात्रं न पुनस्तद्वैशिष्ट्येन संसरणमसङ्गस्य तद्वैशिष्ट्यायोगादित्यर्थः । संसार इव मुक्तौ तस्य न द्वारापेक्षेत्याह—**मुक्तिः पुनरिति ।** चिद्वपुषेतीत्थंभावे तृतीया वस्तुतो नित्यमुक्तत्वादित्यर्थः । उक्तव्यस्थायां क्रमेण हेतुद्वयमाह—**स्वाज्ञानत इत्यादि ।** लिङ्गसमागमस्याज्ञानकृतत्वादज्ञानतः संसरणं तच्च न वस्तुतो वस्तु स्पृशत्यज्ञानस्याऽऽरोपितत्वादारोपितस्य चाधिष्ठाने विकारहेतुत्वासंभवादज्ञानकृतोपाधिसंबन्धाध्यासद्वारा चिदात्मैव संसरतीत्यर्थः । मुक्तिः पुनः स्वमहिमप्रतिबोधतः केवलवस्तुमहिमानुरोधिज्ञाननिबन्धना भवतीति वस्त्वनुसारित्वात्तत्त्वज्ञानस्येत्यर्थः । यद्यपि वाक्यजन्यवृत्त्यधीनाऽज्ञाननिवृत्तिरूपा मुक्तिस्तथाऽपि स्वरूपानन्दाविर्भावरूपा नान्यापेक्षेति भावः ॥ ७ ॥

**सु० टी०—अज्ञानमेव तर्हि लिङ्गद्वारकं स्यात्संसारवदस्वाभाविकत्वाज्ज्ञानस्य तु वस्त्वनुरोधित्वात्किमन्तःकरणोपरागेणेति चेन्नेत्याह—**

**स्वाज्ञानान्वयिनी चिदेव भवति स्वज्ञानमस्याः पुन-**
**र्नास्त्यन्तःकरणोपरागशबलीभावं विना युक्तितः ।**

कूटस्थे न तमस्विता न घटते नो विक्रिया तत्र न-
स्तस्मादेष विशेष ईषदुचितः स्वीकर्तुमेते प्रति ॥ ८ ॥

स्वाज्ञानेति । शुद्धस्याज्ञानसंबन्धः शबलस्य च ज्ञानित्वमिति युक्तित एवाभ्युपेयमित्यर्थः । का युक्तिरिति चेत्तत्राऽऽह—कूटस्थ इति । अज्ञानित्वं हि काल्पनिकत्वान्न कौटस्थ्यविशुद्ध्यादिना विरुध्यत इत्युक्तं न तु ज्ञानित्वं तथा तस्य विक्रियारूपत्वात् । एवं चास्य तत्र कूटस्थेऽसंभव एवेति युक्ता परिणामिबुद्धिद्वारतेत्यर्थः । न चैवं ज्ञानस्य वस्त्वनुरोधित्वविरोधो विषयकोटौ बुद्ध्यनपेक्षत्वादिति भावः । कथं तर्हि भिन्नाश्रयज्ञानाज्ञानयोर्बाध्यबाधकत्वं तत्राऽऽह—तस्मादिति । द्वयोश्चिदाश्रयत्वात्तद्वारत्वाद्वारत्वरूपे षड्भेदमात्रेण न काऽपि क्षतिरित्यर्थः । एते प्रति ज्ञानाज्ञाने प्रतीत्यर्थः ॥ ८ ॥

अ० टी०—एवं तर्ह्यज्ञानमपि परोपाधिकमेवास्तु संसारवत्तस्यापि वस्तुस्वभावानुरोधित्वाभावाज्ज्ञानस्य च वस्तुस्वभावानुरोधित्वादन्तःकरणोपरागमन्तरेणैव तत्प्राप्तिरस्त्विति चेत्तत्राऽऽह—**स्वाज्ञानान्वयिनीति** । चिदेव निरुपाधिकाऽन्तःकरणादिसंबन्धद्वारमनपेक्ष्य स्वाज्ञानान्वयिनी भवति युक्तित इति संबन्धः । तथाऽस्याश्रितः पुनः स्वज्ञानमन्तःकरणोपरागलक्षणं शबलीभावं विना युक्तितो नास्तीत्यन्वयः । उभयत्र युक्तिमाह—**कूटस्थ इत्यादिना** । कूटस्थे निर्विकारचिन्मात्रे तमस्विताऽज्ञानान्वयित्वं न घटत इ[ति न] अपि तु घटत इति योजना । न ह्यज्ञानसंबन्धः कौटस्थ्यविरोधी चिदात्मस्वरूपप्रकाश्यस्याज्ञानस्य चिदात्मस्वभावविरोधित्वायोगात् । किं तु विरोधिभवदज्ञानं चिदात्मनः शुद्धत्वादिप्रतिभासं विरुणद्धि । अज्ञानतत्कार्यसंबन्धो ह्यशुद्धिरित्यतोऽज्ञानसंबन्धस्य कौटस्थ्याविरोधान्न परिणाम्यन्तःकरणादिद्वारत्वं कल्प्यमिति भावः । अज्ञानसंबन्धस्य कौटस्थ्याविरोधमुक्तं स्फुटयति—**नो विक्रिया तत्र न इति** । अज्ञानसंबन्धमात्रेण यदि चिदात्मनि विक्रिया भवेत्तदा तस्य विरोधिता स्यात्तन्नास्ति नोऽस्माकं तत्र चिदात्मनि विक्रिया न प्रतिभाति सुषुप्तावज्ञानसंबन्धेऽपि तत्र विक्रियानुपलम्भादित्यर्थः । अर्थाज्ज्ञानस्य परिणामिमनोद्रव्यद्वारता सिद्धेत्युपसंहरति—**तस्मादिति** । ज्ञानं ह्यागन्तुकं परिणामस्तस्य स्वतःकूटस्थत्वात्परिणामिद्रव्यान्तरसंबन्धद्वारत्वमेष्टव्यं तच्चान्तःकरणशबल्यं तेन विना तददर्शनादेवमपि ज्ञानस्याऽऽश्रयकोटावेवान्तःकरणद्वारत्वापेक्षणाद्विषयकोटौ तदनपेक्षणात्केवलवस्त्वाकारतया वस्तुस्वभावानुरोधित्वस्य चाविरोध इत्येष विशेष ईषन्मात्र एते ज्ञानाज्ञाने प्रति स्वीकर्तुमुचित इत्यर्थः ॥ ८ ॥

सु० टी०—कोऽसावुपाधिः संसारद्वारमिति चेत्तत्राऽऽह—

पुर्यष्टकं भवति तस्य परस्य मोहा-
त्तेनान्वितस्य तु नभोमलवद्व्यलीकम् ।
दुःखं त्रिधा भवति संसरणाभिधानं
नान्यः परादधिकरूपभृदस्ति[1] जीवः ॥ ९ ॥

पुर्यष्टकमिति । न तु लिङ्गमात्रमित्यर्थः । त्रिधाऽऽध्यात्मिकादिभेदभिन्नं यद्दुःखत्रयं तदेव संसरणमित्यर्थः । अस्तु तर्हि जीव एव संसारो न परमात्मनीति चेत्तत्राऽऽह—नान्य इति । स्वतश्चिद्रूपात्मतया न पराज्जीवो भिन्न इत्यर्थः ॥ ९ ॥

अ० टी०—तदेवं चिदात्मनोऽज्ञानसंबन्धोऽज्ञानमात्रद्वारकस्तस्य संसारस्त्वज्ञान-कार्यलिङ्गसंघातद्वारकस्तत्त्वज्ञानमपि लिङ्गद्वारकं मोक्षस्तु वस्तुस्वभावानुरोध्येवेति चेत्येतदुपपादितमिदानीं संसरति लिङ्गसमागमेनेत्युक्तं संसरणोपाधिं लिङ्गशरीरं व्याख्यास्यस्तत्संबन्धस्य संसारहेतुत्वं विशदयति—पुर्यष्टकमिति । तस्य चिदात्मनः परस्य संघातविलक्षणस्य मोहादज्ञानमात्रात्पुर्यष्टकं वक्ष्यमाणलक्षणं भवति जायते तेन पुर्यष्टकेनान्वितस्य तत्तादात्म्याध्यासमापन्नस्य संसरणाभिधानं त्रिविधमाध्यात्मिकादिरूपं दुःखं भवति न स्वत इत्यर्थः । भवदप्युपाधिवशाद्दुःखं न परमार्थं किं तु प्रतिभासमात्रमेवेत्येतद्दृष्टान्तेनाऽऽह—नभोमलवद्व्यलीकमिति । नन्वेवं यदि परस्मिन्स्वतः संसारित्वं न संभवति तर्हि किमिति तस्मिन्नुपाधिं परिकल्प्य संसारित्वमारोप्यते परस्मादन्य एव जीवः संसारी कस्मान्नेष्यत इति चेन्मैवं परस्मादन्यस्य जीवस्य स्वरूपतोऽसंभवादित्याह—नान्यः परादिति । जीवस्यापि चित्स्वरूपत्वेन परस्मात्स्वतो विशेषाभावादित्यर्थः ॥ ९ ॥

सु० टी०—कुतो नेत्यपेक्षायां जीवः किं परस्यांशभूत उत विकारोऽथवाऽत्यन्तभिन्न इति विकल्प्य न त्रिधाऽपि संभवतीति दूषयति—

नांशः परस्य न च तस्य विकार एष
नात्यन्तमेव च विभिन्नवपुः परस्मात् ।
जीवोऽयमभ्युपगतः कुत एतदेवं
ब्रह्मात्मतावचनजातविरोधहेतोः ॥ १० ॥

नांश इति । तस्य निष्कलत्वश्रुतेः । न चैतद्विकारः । तेजःप्रभृतीनां

---

[1] ख. ग. पधृगस्ति ।

सृष्टौ जीवस्य पृथक्सृष्ट्यनुपदेशात् । 'आत्मानो व्युच्चरन्ति' इत्यस्य जीवोपाधिजनिपरत्वाज्जन्यस्य विनाशनियमेन कृतहान्याद्यापत्तेः । न च तद्भिन्नो 'नान्योऽतोऽस्ति द्रष्टा' [ बृ० ३ । ७ । २३ ] इत्यादिश्रुतेः । कथं नेत्यत्राऽऽह— ब्रह्मात्मतेति ॥ १० ॥

अ० टी०—जीवस्य परादन्यत्वं प्रतिषिद्धं प्रतिपादयति—**नांश इति** । अन्यत्वं वदन्प्रष्टव्यः स किं परस्यांशः पुरुषस्य हस्तादिवत्किंवा भूमेरूषरादिवद्विकारोऽथवाऽत्यन्तमेव घटात्पट इव भिन्न इति पक्षत्रयमपि निषेधति क्रमेण—**नांश इति** । योऽयं जीव एष परस्य नांशोऽभ्युपगत इत्यादि योज्यम् । निषेधप्रतिज्ञायां प्रश्नपूर्वकं हेतुमाह—**कुत इत्यादिना** । तत्त्वमस्यादिवाक्यानां निरुपचरितात्मैक्यपरत्वस्य प्रतिपादितत्वात्तद्विरुद्धेयं कल्पना न प्रामाण्यमर्हतीत्यर्थः ॥ १० ॥

सु० टी०—दूषणान्तरमाह—

अपि च विश्वमनुप्रविवेश तत्<br>
परममेव पदं परमात्मनः ।<br>
इति वदत्सु सुहृत्स्विव तत्पर-<br>
श्रुतिवचःसु कथं स ततोऽधिकः ॥ ११ ॥

अपि चेति । परमात्मनो मायोपहितं स्वरूपमेव सर्गादौ 'बहु स्याम्' [ छा० ६ । २ । ३ ] इत्येवमीक्षापूर्वकं मायिकं भूतसूक्ष्मजातं सृष्ट्वा तावता च व्यवहारानुपपत्तिमालोच्य 'हन्ताहमिमास्तिस्रो देवताः' [ छा० ६ । ३ । २ ] सूक्ष्मभूतात्मिका 'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' [ छा० ६ । ३ । २ ] इति विमृश्य स्वाभिन्नेन जीवरूपेण ताः प्रविश्य श्रुत्यन्तरोपसंहृताकाशवायुसहिततेजोबन्नात्मिकानि पञ्चभूतसूक्ष्माणि प्रत्येकं द्विधा विभज्य द्वितीयभागान्प्रत्येकं चतुर्धा कृत्वा पूर्वभागेषु स्वजातीयचतुश्चतुर्भागनिक्षेपेण पञ्चीकृत्य स्थूलान्यकरोदित्येवमर्थकच्छान्दोग्यश्रुतेः 'तत्सृष्ट्वा तदेवानुप्राविशत्' [ तै० २ । ६ । १ ] । 'पुरः पुरुष आविशत्' [ बृ० २ । ५ । १८ ] इत्यादिश्रुत्यन्तरसद्भावाच्च कथं जीवः परमात्मनोऽधिक इत्यर्थः ॥ ११ ॥

अ० टी०—अपि च स्रष्टुरेवाविकृतस्येश्वरस्य जीवभावेनानुप्रवेशश्रुतिविरोधाच्च न जीवस्य ब्रह्मविकारत्वादिपक्षसिद्धिरित्याह—**अपि चेति** । तत्स्रष्टृत्वेनोपलक्षितं परमात्मनः परमं पदमिति संबन्धः । 'तत्सृष्ट्वा तदेवानुप्राविशत्' [ तैत्ति० २ । ६ । १ ]

'अनेन जीवेनाऽऽत्मनाऽनुप्रविश्य' [ छा० ६ । ३ । २ ] इत्यादिप्रवेशवादिश्रुतीनामर्थवादत्वात्स्वार्थाभावे सति न पक्षविरोधितेत्याशङ्क्योक्तं—**तत्परेति** । अर्थवादत्वेऽपि प्रमाणान्तरसंवादविसंवादाभावात्स्वार्थपरत्वस्य न्यायप्राप्तत्वादस्ति तत्परत्वमपीत्यर्थः॥ ११ ॥

**सु० टी०—पूर्वश्लोकं मोहजन्यमित्युक्तं तत्र प्रमाणमाह—**

**प्रच्यावि वस्तु यदिहास्ति निजस्वरूपा-**
**दप्रच्युतैकरससंविदधीनमस्य ।**
**प्रच्यावितास्फुरणमित्यवगत्य तत्र**
**तत्कल्पितं सकलमाकलयानुमानात् ॥ १२ ॥**

प्रच्यावीति । **अस्याऽऽत्मनो निजस्वरूपात्प्रच्यावि भिन्नं यदिहास्ति वस्तु तत्तत्राऽऽत्मनि कल्पितं सकलमाकलयेति संबन्धः । कुत इत्याह—** अनुमानाल्लिङ्गादित्यर्थः । **किं तदिति चेत्तत्राऽऽह—**अप्रच्युतैकरससंविदधीनमस्य प्रच्यावितास्फुरणमिति । **धर्मप्रधानं प्रच्यावितास्फुरणत्वमित्यर्थः । प्रच्यावितं दूरीकृतमस्फुरणं यस्य तत्तथा तस्य भावस्तत्त्वं संविदधीनस्फुरणत्वात्स्वप्नवदित्यर्थः ॥ १२ ॥**

अ० टी०—ननु जीवपरयोश्चिद्रूपत्वे समानेऽपि कार्यप्रविष्टस्य परस्यैव जीवभावेऽपि न तयोरत्यन्तमेकरूपत्वं संभवति जीवे परस्माद्ब्रह्मणोऽधिकस्य कर्तृत्वादिलक्षणस्य रूपान्तरस्य दर्शनादिति चेद्दृश्यतां नाम जीवे रूपान्तरं तस्याऽऽरोपितताया अनुमानेन निश्चयान्न तत्तस्य स्वाभाविकं किं तु मिथ्येत्यभिप्रेत्याऽऽह—**प्रच्यावि वस्त्विति** । अस्य जीवस्य निजस्वरूपात्प्रत्यक्चैतन्यलक्षणाद्यदिह जीवे प्रच्यावि परस्मादुद्रिक्तमागमापायि वा वस्त्वस्ति प्रतिभासमानतया वर्तते तत्प्रच्यावितास्फुरणं प्रच्याविरूपत्वेन स्फुरणमप्रच्युतैकरससंविदधीनं कूटस्थसाक्षिसंविदायत्तं न स्वप्रकाशं किं तु दृश्यमेवान्तःकरणादिवदित्यवगत्य दृग्दृश्यविवेकेन निश्चित्य तत्सकलमधिकरूपं तत्र चिदेकस्वभावे प्रत्यगात्मनि कल्पितमारोपितमनुमानादाकलय विजानीहीति योजना । विप्रतिपन्नं प्रत्यक्चिन्मात्रादधिकं रूपं प्रत्यक्चिदेकरसाधीनप्रकाशं भवितुमर्हति प्रत्यक्चिदतिरिक्तत्वादागमापायित्वाद्बुद्ध्यादिवदिति प्रयोगः । न च हेत्वसिद्धिः सुषुप्त्यादौ प्रत्यक्चैतन्ये स्फुरत्यपि रूपान्तरस्यास्फुरणेनास्यातिरेकागमापायित्वयोरध्यवसितत्वात् । तथा च दृश्यस्य कल्पितत्वात्कल्पितस्य चावस्तुत्वात्प्रत्यक्चैतन्यस्वरूप एव जीवो न तदंशस्तद्विकाराऽन्यो वेति समाकलयेत्यर्थः ॥ १२ ॥

**सु० टी०—ननु स्वाविद्यया शुद्ध आत्मा संसरतीत्युक्ते ब्रह्माश्रयमज्ञानमङ्गीकृतं स्यात्तच्चानुभवादिविरुद्धमिति नेत्याह—**

चैतन्यवस्तुविषयाश्रय एव मोहो
नाद्वैतवस्तुविषयाश्रयकोऽप्रतीतेः ।
बुद्ध्यादिवेष्टितचितो न तमस्वितेति
ब्रह्माश्रयत्वमुदितं तमसः पुरस्तात् ॥ १३ ॥

चैतन्येति । **चिन्मात्राश्रयविषय एव मोहः संसारोऽपि तत्रैवेत्यर्थः । कथं तर्हि ब्रह्मण्येवाज्ञानं न जीव इति चेत्राऽऽह**—बुद्ध्यादीति । **बुद्ध्यादिविशिष्टस्य नाज्ञानमित्येतदभिप्रायकं तदित्यर्थः** ॥ १३ ॥

अ० टी०—नन्वज्ञत्वं संसारित्वं च दृश्यमानं न ब्रह्मण्युपपन्नं तस्य तदयोग्यत्वादतस्तस्मिंस्तत्कल्पनमनुभवन्यायविरुद्धमिति चेन्न तथाऽनभ्युपगमादित्याह—**चैतन्यवस्त्विति ।** मोहोऽज्ञानं चैतन्यवस्तुविषयाश्रय इत्येवास्माभिरभ्युपगम्यते यत्राज्ञानं तत्रैव संसारानुभवश्च नाद्वैतवस्तुविषयाश्रयको न ब्रह्माश्रयविषयकस्तथा प्रतीत्यभावादित्यर्थः । तर्हि ब्रह्मण्येवाज्ञानसंबन्धो न जीव इत्ययं निर्बन्धः प्राकृतोऽसंगत इति चेत्तत्राऽऽह—**बुद्ध्यादीति ।** बुद्ध्यादिसंघातवेष्टितचितो बुद्ध्यादिगतप्रतिबिम्बस्य वा तद्गताभासमात्रस्य वा न तमस्वितेति प्रतिपादयितुमेव पुरस्तात्पूर्वं ब्रह्माश्रयत्वमुदितं तमसो नाद्वैतवस्त्वाश्रयत्वाभिप्रायेणेत्यर्थः ॥ १३ ॥

**सु० टी०—अस्तु ब्रह्माश्रयत्वमेवेति चेन्न प्रमाणाभावादित्याह—**

ब्रह्माश्रयं न हि तमोऽनुभवेन लभ्यं
नाप्यागमान्न च किमप्यपरं प्रमाणम् ।
ब्रह्माश्रयत्वविषयं तमसस्ततश्च
प्रत्यक्प्रकाशविषयाश्रयमेतदस्तु ॥ १४ ॥

ब्रह्माश्रयमिति । **तमसो ब्रह्माश्रयत्वविषयं किमप्यपरं प्रमाणं न चेति संबन्धः** ॥ १४ ॥

अ० टी०—नाद्वैतवस्तुविषयाश्रयको मोहः किं तु प्रत्यक्चिदाश्रयविषयक एवेत्युक्तमुपपादयति—**ब्रह्माश्रयमिति ।** अपरमनुमानादीत्यर्थः । न हि ब्रह्म मूढमिति प्रतीतिहेतुरागमो वाऽनुमानादि वाऽस्तीत्यर्थः । न च किमप्यपरं तमसो ब्रह्माश्रयत्वविषयं प्रमाणं संभवतीति योजना । ततो जडस्य मोहाश्रयत्वासंभवात्परिशेषात्प्रत्यक्चैतन्यविषयाश्रय एव मोह इत्युपसंहरति—**ततश्चेति ।** जीवब्रह्मविभागानालिङ्गितं सर्वभेदकल्पनाधिष्ठानं चिन्मात्रमिह प्रत्यक् प्रकाश इत्युच्यते । तदाश्रयविषयत्वं मोहस्यास्माकं विवक्षितमिति भावः ॥ १४ ॥

सु० टी०--ननु ब्रह्मण्यज्ञानाभावे जीवे बलादज्ञानं प्राप्तमन्यस्याभावादिति चेत्तत्राऽऽह--

जीवत्वमेव तु तदाश्रयमध्यपाति
नेच्छन्ति युक्तिकुशला न हि युज्यते तत् ।
अज्ञानमेव खलु तन्न तमस्तमस्वि
चैतन्यवस्तु पुनरस्तु न तद्विरोधः ॥ १५ ॥

जीवत्वमिति । **न जीवत्वं तदाश्रयकोटिप्रविष्टं किं तु चिन्मात्रमित्यर्थः।** न हीति । **जीवत्वस्य तत्प्रविष्टत्वमित्यर्थः । तत्र हेतुः**--अज्ञानमेवेति । **अज्ञानित्वमेवेत्यर्थः । किं तत इत्याह**--न तम इति । **तर्हि निराश्रयत्वमज्ञानस्येति नेत्याह**--चैतन्येति । **निर्विभागं चिद्वस्तु पुनरस्तु तमस्वीत्यनुषङ्गः ॥ १५ ॥**

अ० टी०--जीवत्वविशिष्टस्य चिदात्मनो नाज्ञानाश्रयत्वमिष्टमित्येतत्प्रतिपादयति--**जीवत्वमेव त्विति ।** कस्मान्नेच्छन्तीत्यत आह--**न हि युज्यते तदिति ।** जीवत्वस्याज्ञानाश्रयमध्यपातित्वं न हि युज्यत इत्युक्तेऽर्थे युक्तिमाह--**अज्ञानमेवेति ।** तज्जीवत्वमज्ञानमेव खलु संसारित्वं हि जीवत्वं तच्चाज्ञानान्वयव्यतिरेकानुविधायित्वादज्ञानमयमिति तद्विशिष्टस्याज्ञानाश्रयत्वाङ्गीकारे स्यादात्माश्रयतेत्येषाऽत्र युक्तिरित्येतदाह--**न तमस्तमस्वीति ।** तस्माज्जीवत्वोपलक्षितप्रत्यक्चैतन्याश्रयविषयमज्ञानमित्यभ्युपगमे न कोऽपि न्यायविरोधोऽनुभवविरोधो वाऽस्तीत्युपसंहरति--**चैतन्यवस्तु पुनरिति ।** अस्तु तमस्वीत्यनुषङ्गः ॥ १५ ॥

**सु० टी०--पुर्यष्टकवेष्टितस्य दुःखमित्युक्तं तत्र पुर्यष्टकं दर्शयति--**

कर्मेन्द्रियाणि खलु पञ्च तथा पराणि
बुद्धीन्द्रियाणि मनआदिचतुष्टयं च ।
प्राणादिपञ्चकमथो वियदादिकं च
कामश्च कर्म च तमः पुनरष्टमी पूः ॥ १६ ॥

कर्मेन्द्रियाणीति । मनआदीति । **मनो बुद्धिरहंकारश्चित्तमिति चतुष्टयम् ॥ १६ ॥**

अ० टी०--तस्मात्प्रत्यक्चैतन्याश्रयविषयत्वादज्ञानस्य तन्निबन्धनं संसारित्वमपि तस्यैव न पुर्यष्टकविशिष्टस्य पुर्यष्टकं तु तत्र द्वारमात्रमित्युक्तं तत्र किं तत्पुर्यष्टकमित्यपेक्षायां तदाह--**कर्मेन्द्रियाणीति ।** कर्म धर्माधर्मलक्षणं तमो भ्रान्तिज्ञानम् । अन्यत्प्रसिद्धम् ॥ १६ ॥

सु० टी०—नन्वष्टभ्योऽतिरिक्तमपि संसारहेतुरस्ति विद्या पूर्वप्रज्ञा चेति कथं तत्परित्यागस्तत्राऽऽह—

विद्या च विश्वविषयानुभवोत्थपूर्व-
प्रज्ञा च कर्मवचसैव तु संगृहीते ।
बन्धप्रयोजकतया सदृशत्वहेतो-
रेकत्र च श्रुतिवचस्युपसंग्रहेण ॥ १७ ॥

विद्या चेति । विश्वविषयानुभवोत्थः संस्कारः पूर्वप्रज्ञा । कथं संगृहीते इति तत्राऽऽह—बन्धेति । साद्दृश्यान्तरमाह—एकत्रेति । एकवाक्योपात्तत्वादित्यर्थः ॥ १७ ॥

अ० टी०—नन्वष्टभ्योऽतिरिक्तमपि संसारप्रयोजकमस्ति विद्यापूर्वप्रज्ञारूपमतः कथमयं संख्यानियम इत्यत आह—विद्या चेति । विद्या वक्ष्यमाणविधा विश्वविषयानुभवोत्था पूर्वप्रज्ञासंस्काररूपा च कर्मवचसैव कर्मपदेनैव संगृहीते तत्र निमित्तमाह—बन्धेति । एकत्र चैकस्मिन्नेव श्रुतिवाक्ये बन्धप्रयोजकतयोपसंग्रहेण सदृशत्वाद्धेतोः । यद्वैकत्र च श्रुतिवचस्युपसंग्रहेण सह पाठेन बन्धप्रयोजकतया सदृशत्वहेतोः समानार्थत्वनिश्चयादित्यर्थः ॥ १७ ॥

सु० टी०—एतदेव दर्शयति—

तं विद्येति हि वाक्यमेकमिह च स्पष्टं त्रयं कीर्तितं
तस्मात्कर्मवचस्तयोरपि भवेत्संग्राहकं कारणात् ।
विद्या चात्र चतुर्विधाऽप्यभिमतैवाऽऽरम्भिका कर्मवत्
संस्कारोऽपि तथा चतुर्विध इति ज्ञेयस्तथा संभवात् ॥ १८ ॥

तं विद्येति । 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च' [ बृह० ४ । ४ । २ ] इति श्रुतौ त्रयं कीर्तितमित्यर्थः । तस्मात्कारणादित्यन्वयः । विद्येति । अत्रोत्क्रान्तौ । मानसधीमात्रं विद्या सा च विहिता तत्समा प्रतिषिद्धा तत्समा चेति चतुर्विधा यथा कर्म यागवधाहारविहारादि विहितप्रतिषिद्धाविहिताप्रतिषिद्धभेदैश्चतुर्विधमित्यर्थः । कियती प्रज्ञेति तत्राऽऽह—संस्कार इति । सोऽपि विद्याकर्मजन्यः कारणचातुर्विध्याच्चतुर्विध इत्याह—तथेति ॥ १८ ॥

---

१ क. °हीता । २ क. ग. °भवेत् ।

अ० टी०—पदैकवाक्यतया कर्मणा सह पाठाद्विद्यापूर्वप्रज्ञयोः कर्मपदेनोपसंग्रहण-मुक्तं स्पष्टयति—**तं विद्येति** । इह वाक्ये तस्मात्कारणादित्यन्वयः । तदेव संसारप्रयो-जकं विद्यादिस्वरूपमाह—**विद्या चात्रेति** । अत्रोत्क्रान्तिप्रकरणस्थवाक्ये । विद्या ज्ञानमात्रं मानसं सा चतुर्विधाऽप्यारम्भिकाऽभिमता । विहिता तत्समा प्रतिषिद्धा तत्समा चेति विद्या चतुर्विधाऽपि चतुर्विधकर्मवत्संसारारम्भिकाऽभिमतैव । तथा संस्कारोऽपि विद्या-कर्मकृतस्तथा कारणवच्चतुर्विध इति ज्ञेयः । कुतस्तथा संभवात्कार्यस्य कारणानुविधायित्वेन कारणस्य चातुर्विध्ये कार्यस्यापि चातुर्विध्यसंभवादित्यर्थः । तथा च विद्याकर्मपूर्वप्रज्ञा-ख्यैका पुरी कामाख्यैका कर्मप्रवर्तिका पुरी तमःशब्दितमोहात्मिका कामस्यापि हेतुभूताऽपरा पुरीति विवेकः । अन्यत्पुरीपञ्चकं प्रसिद्धम् ॥ १८ ॥

**सु० टी०—ननु क्वचिल्लिङ्गं जीवोपाधिरुच्यते क्वचित्पुर्यष्टकमिति न त्वंपदवाच्यनिर्धारणमिति चेत्तत्राऽऽह—**

**पुर्यष्टकं तदिदमप्यभवद्धि लिङ्गं**
**तेनोच्यते तदपि लिङ्गगिरा क्वचित्तु ।**
**पुर्यष्टकं न खलु लिङ्गगिरोऽभिधेयं**
**मुख्यं तु सप्तदशकं प्रथितं हि लिङ्गम् ॥ १९ ॥**

पुर्यष्टकमिति । **लिङ्गशब्देन क्वचित्पुर्यष्टकमेवोच्यते लक्षणया सृष्टीरुप-दधातीतिवदित्यर्थः । किं तर्हि मुख्यं लिङ्गमिति तत्राऽऽह**—मुख्यमिति । **प्रथितं प्रसिद्धम् ॥ १९ ॥**

अ० टी०—ननु क्वचिल्लिङ्गशरीरं जीवोपाधित्वेनोच्यते 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' [ कठ० ३ । ४ ] 'लिङ्गं मनो यत्र निषक्तमस्य' [ बृह० ४ । ४ । ६ ] इत्यादिश्रुतेस्तदपि किं पुर्यष्टकमेव किं वाऽन्यदिति तत्राऽऽह—**पुर्यष्टक-मिति** । इदमप्युक्तं पुर्यष्टकमपि हि यस्माल्लिङ्गमभवत्प्रत्यगात्मसद्भावगमकमभूत्तेन हेतुना क्वचित्तु तदपि लिङ्गगिरोच्यते लक्षणया न मुख्यया वृत्त्या । कुत इत्यपेक्षायां पुर्यष्टके लिङ्ग-शब्दस्य प्रसिद्ध्यभावादित्याह—**पुर्यष्टकं न खल्विति** । सप्तदशकं तु वक्ष्यमाणं लिङ्गं प्रथितं लिङ्गगिरो मुख्यार्थत्वेन प्रसिद्धमिति योजना । वक्ष्यमाणसप्तदशकस्याऽऽमो-क्षमविपरिवृत्ततयाऽनुवृत्तेस्तदेव जीवत्वोपाधिभूतं लिङ्गशब्दस्य मुख्यमभिधेयं न तु विद्याकर्मपूर्वप्रज्ञाभ्रान्तिभूतसूक्ष्माण्यपि तेषां प्रतिजन्मविपरिणामभेदादतः पुर्यष्टकेऽपि सप्त-दशकस्य सत्त्वात्तदपि लिङ्गं जीवोपाधिरित्युपचारेणोच्यत इति भावः ॥ १९ ॥

सु० टी०—किं तत्सप्तदशकं तत्राऽऽह—

इह तावदक्षदशकं मनसा
सह बुद्धितत्त्वमथ वायुगणः ।
इति लिङ्गमेतदमुना पुरुषः
खलु संगतो भवति जीव इति ॥ २० ॥

इहेति । अमुनेति । यद्यपि लिङ्गसंबन्धेन जीवत्वं संसरणं तु न पुर्यष्टकं विनेत्यर्थः ॥ २० ॥

अ०टी०—मुख्यं सप्तदशकं लिङ्गमाह—इह तावदिति । बुद्धिरेव तत्त्वं बुद्धितत्त्वं प्राणादिपञ्चकं वायुगण इत्येतत्सप्तदशकं लिङ्गममुना सङ्गतः खलु पुरुषो जीव इति प्रसिद्धो भवति । उक्तलिङ्गतादात्म्याध्यासनिबन्धनो हि प्रत्यगात्मनो जीवत्वव्यवहार इत्यर्थः ॥ २०

सु० टी०—कुत इति चेत्तत्राऽऽह—

न पुराष्टकेन रहितस्य तव
क्वचिदस्ति संसरणदुःखयुजा ।
न पुराष्टकेन सहितस्य तथा
क्वचिदस्ति दुःखविगमश्च तव ॥ २१ ॥

न पुराष्टकेति । संसरणात्मकं यद्दुःखं तेन युजा संबन्धस्तेनान्वयव्यतिरेकाभ्यां पुर्यष्टकं संसारहेतुः ‘अशरीरं वाव सन्तम्’ [ छा० ८ । १२ । १ ] इत्यादिश्रुतेरित्यर्थः ॥ २१ ॥

अ० टी०—उक्तलिङ्गस्य जीवत्वनियामकत्वेऽपि न तावन्मात्रेण संसारित्वं किं तु पुर्यष्टकोपेतस्यैवेत्यत्रान्वयव्यतिरेकौ प्रमाणयन्पुर्यष्टकस्य चिदात्मनि संसरणद्वारत्वमुक्तं समर्थयति—न पुराष्टकेनेति । दुःखयुजा दुःखयोगः ॥ २१ ॥

सु० टी०—तर्हि स्वाभाविकस्य तस्य हानासंभवान्मुक्त्यभाव इति चेन्न स्वाभाविकत्वासिद्धेरित्याह—

तव नित्यमुक्तसुखचिद्वपुषो
न कदाचिदस्ति पुरसंगमनम् ।

तव मायया विरचितं सकलं
पुरसंगतिप्रभृतिकं[1] वितथम् ॥ २२ ॥

तवेति । **तर्हि कथं संसारस्तत्राऽऽह—**तव माययेति ॥ **२२** ॥

अ० टी०—अयं पुरसंबन्धश्चेदात्मनः स्वाभाविकः स्यात्तदा संसारोऽपि स्वाभाविक एवेति तस्य ज्ञानान्निवृत्तिर्न स्यादिति चेन्मैवं पुरसंबन्धस्याऽऽरोपितत्वादित्याह—**तव नित्यमुक्तेति** । कदाचित्कालत्रयेऽपीति यावत् । प्रमाणसिद्धनित्यमुक्तसुखचिद्रूपत्वविरोधादित्यर्थः । तस्मात्पुरसंबन्धस्तन्निबन्धनं संसारित्वादिकं च सर्वमात्मनि मोहमात्रायत्तमित्युपसंहरति—**तव माययेति** । अनेन स्वाज्ञानत इति पूर्वोक्तं प्रपञ्चितम् ॥ २२ ॥

**सु० टी०—उक्तमर्थं दृष्टान्तेन संभावयति—**

मलिनं नभो न हि कदाचिदभू-
द्विमलं कदाचिदभवन्न नभः ।
उभयं नभस्यभवदेवमिह
त्वयि नित्यमुक्तचिति संसरणम् ॥ २३ ॥

मलिनमिति । **न हि नभसि मालिन्यवैमल्ये स्तस्तस्य शुद्धत्वात्किं तु बालैरध्यस्येते एवमात्मनि बन्धमोक्षावित्यर्थः** ॥ **२३** ॥

अ० टी०—कल्पिताभ्यामपि संसारमोक्षाभ्यामात्मनो योगाद्विकारित्वप्रसङ्गो दुर्वार इति चेन्मैवमाभासधर्मस्याधिष्ठानास्पर्शित्वादिति दृष्टान्तेनाऽऽह—**मलिनं नभ इति** । नभसः स्वभावतोऽसङ्गत्वान्निरवयवत्वाच्च न मलेन संश्लेषः संभवति तथाऽपि मलिनं नभ इति प्रतीयते मलसंश्लेषाभावे च न तन्निवृत्तिरूपं विमलत्वमपि तस्मिन्नुपपद्यते तथाऽपि घनधूमाद्यपाये विमलं नभ इति प्रतीयते । यथेदं द्वयं नभसि भ्रान्तिमात्रं कल्पितमेवैवं चिदात्मनि नित्यमुक्तस्वभावे सदैकरूपे संसरणं मोक्षश्चेत्युभयं भ्रममात्रसिद्धं न परमार्थमित्यर्थः ॥ २३ ॥

**सु० टी०—नन्वसिद्धो दृष्टान्तोऽनेकान्तवादिनोभयस्यापि नभसि परमार्थत्वाभ्युपगमादित्याशङ्क्याऽऽह—**

न हि कल्पनाविरचितं वितथं
परमात्मवस्त्ववितथं स्पृशति ।

---

१ ख. °कं च तथा ।

परमात्मवस्तु च तथा तमसा
परिकल्पितं न किमपि स्पृशति ॥ २४ ॥

न हीति । **काल्पनिकमालिन्यादेर्वास्तवनमोधर्मत्वानुपपत्तेः । अनुभवयुक्तिविरोधादनेकान्तवादोऽयुक्त इत्यर्थः** ॥ २४ ॥

अ० टी०—यद्यत्र कल्पितं न तत्तत्र परमार्थमिति प्रतिपादयन्दार्ष्टान्तिकं प्रपञ्चयति—**न हि कल्पनाविरचितमिति** । कल्पनाविरचितं यतो वितथमतोऽवितथं परमात्मवस्तु न हि स्पृशतीति योजना । ननु कल्पितस्याज्ञानादिबन्धस्य जडत्वात्स्वयं स्प्रष्टृत्वासंभवेऽपि परमात्मनो नित्यसिद्धस्य चेतनस्य स्प्रष्टृत्वं स्यादिति चेन्नेत्याह—**परमात्मवस्तु चेति** । कल्पितपरमार्थयोर्विरोधान्नान्योन्यसंस्पर्श इत्यर्थः ॥ २४ ॥

**सु० टी०—कल्पितपरमार्थसतोः परस्परासंस्पर्शे दृष्टान्तमाह—**

न हि भूमिरूषरवती मृगतृड्-
जलवाहिनीं सरितमुद्वहति ।
मृगवारिपूरपरिवारवती-
न नदी तथोषरभुवं स्पृशति ॥ २५ ॥

न हि भूमिरिति । **ऊषरात्मिकेत्यर्थः** ॥ २५ ॥

अ० टी०—कल्पितपरमार्थयोः संसृष्टतया भासमानयोरपि परस्परासंस्पर्शित्वे दृष्टान्तमाह—**न हि भूमिरिति** ॥ २५ ॥

**सु० टी०—ननु 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' [ बृह० ४ । ४ । २ ] 'तदन्तरप्रतिपत्तौ रंहति' [ ब्रह्म० ३ । १ । १ ] इत्यादिश्रुतिसूत्रसिद्धं संसरणं कथं कल्पितमित्याशङ्क्याऽऽह—**

न तव क्वचिद्गमनमस्ति विभो-
र्न पुराष्टकस्य जडरूपभृतः ।
न च मध्यवर्तिजडचिद्वपुषो-
र्गमनक्षमं किमपि संभवति ॥ २६ ॥

न तवेति । **वास्तवसंसरणवादी प्रष्टव्यः किं चैतन्यस्य संसरणमुत पुरस्याथ मिलितस्येति नाऽऽद्य इत्याह**—न तवेति । **तत्र हेतुमाह**—विभोरिति । **नापि द्वितीय इत्याह**—न पुरेति । **हेतुमाह**—जडेति । **न**

**तृतीय इत्याह**—न चेति । **जडाजडयोर्विरुद्धयोस्तात्त्विकसंबन्धायोगादित्यर्थः ॥ २६ ॥**

अ० टी०—इतश्चाऽऽत्मनि संसारः कल्पित एवेत्याह—**न तवेति** । कश्चित्परलोकादौ तव गमनं नास्ति विभुत्वात् । विभौ च क्रियासंभवादित्यर्थः । पुराष्टकस्यापि न कश्चिद्गमनमस्ति जडस्वरूपत्वात् । न हि जडं स्वतःप्रवृत्तिमदृष्टमित्यर्थः । ननु तथाऽपि चिदात्मपुराष्टकयोर्मध्ये किमपि स्वतोगमनसमर्थं भविष्यति येन स्वयं गच्छता चिदात्मपुराष्टके अपि नीयेते इत्याशङ्कायामाह—**न च मध्यवर्तीति** । चिज्जडातिरिक्तस्य वस्तुनोऽसंभवादित्यर्थः ॥ २६ ॥

**सु० टी०—तथाऽपि घटगत्या घटवेष्टिताकाशगमनवत्पुरवेष्टितस्य गमनं किं न स्यादिति तत्राऽऽह—**

**पुरवेष्टितं न तव चिद्वलयं**
**परलोकमार्गमनुसर्तुमलम् ।**
**घटवेष्टितं न हि नभोवलयं**
**व्रजति व्रजत्यपि घटे वितते ॥ २७ ॥**

पुरवेष्टितमिति । **उपाधिगमनादौपाधिकं रूपं नश्यति न तु गच्छतीत्यसिद्धो दृष्टान्त इत्यर्थः । ननु गच्छति घटे घटाकाशगमनस्य प्रत्यक्षत्वात्कथं दृष्टान्तासिद्धिरिति तत्राऽऽह**—व्रजत्यपीति । **यदि घटे गते नभोऽपि गच्छेत्तदा स प्रदेशो घटेनेव नभसाऽपि शून्यः स्यान्न च तथेति न तत्र नभो गच्छतीत्यर्थः ॥ २७ ॥**

अ० टी०—ननु यद्यपि चिदात्मा विभुत्वात्स्वयं न गतिमांस्तथाऽपि पुराष्टपरिवेष्टिततया परिच्छिन्नत्वाद्गच्छेदिति चेन्नेत्याह—**पुरवेष्टितमिति** । उपाधिगमनेऽपि नौपाधिकस्य गमनमस्ति घटगमनेऽप्याकाशस्येवेत्यर्थः । उपाध्यपसरणे च स्वरूपस्योपहितत्वमपसर्पति केवलं न स्वरूपमप्यपसरतीति भावः ॥ २७ ॥

**सु० टी०—ननु नभोन्तरस्योत्पन्नत्वान्न तच्छून्यत्वं तद्देशस्येति तत्राऽऽह—**

**घट एव गच्छति[१] नभस्त्वचलं**
**व्रजता घटेन तु ततश्च[२] ततः ।**

---

१ क. ग. ति न न° । २ क. ग. °तन° ।

परिवेष्टनेन घटखं क्रियते
घटखानि तत्र सुबहूनि ततः ॥ २८ ॥

घट एवेति । **निरवयवद्रव्यत्वान्न नभोन्तरमुत्पद्यते किं त्वचलमेव नभ इत्यर्थः । का तर्हि नभो गच्छतीति बुद्धेर्गतिरित्याह**—व्रजतेति । **घटखमिति । ननु नभोन्तरमित्यर्थः ॥ २८ ॥**

अ० टी०—ननु गच्छत्युपाधावौपाधिकस्यापि गमनं दृश्यते घटे गच्छति तदवच्छिन्नाकाशस्य गमनदर्शनादतो नोक्तदृष्टान्तः स्पष्ट इति चेन्नेत्याह—**घट एवेति** । कथं तर्हि गमनप्रतीतिर्नभस इति चेत्तत्राऽऽह—**व्रजतेति** । व्रजता तु घटेन नीयमानेनेति यावत् । ततश्च ततः पदे पदे नभसः परिवेष्टनेन घटखं क्रियते तत्र तदा ततो वेष्टनात्सुबहूनि घटखानि केवलं भवन्तीति योजना । तत्र भेदाग्रहाद्घटाकाशो गच्छतीति भ्रमो लोकस्य निरवयवस्य परमार्थतो घटेनाऽऽकर्षासंभवादित्यर्थः ॥ २८ ॥

**सु० टी०—दार्ष्टान्तिकेऽप्येवमेवेत्याह—**

पुरमेव गच्छति चितिस्त्वचला
व्रजता पुरेण यदि साऽपि चितिः ।
परिवेष्ट्यते तु सुबहूनि तदा
वलयानि पूर्ववदुपाश्रयसे ॥ २९ ॥

पुरमेवेति । **विपक्षे बाधकमाह**—व्रजतेति । **यदि परिवेष्ट्यते तदा वलयानि वलयाकारानपूर्ववत्पूर्वदूषितवैशेषिकश्रवणेन्द्रियवदुपाश्रयस उपाश्रयेथाः ॥ २९ ॥**

अ० टी०—दृष्टान्ते साधितमर्थं दार्ष्टान्तिके योजयति—**पुरमेवेति** । साऽपि चितिर्व्रजता पुरेण यदि नभ इव घटेन परिवेष्ट्यते तदा तु बहूनि वलयानि परिच्छेदान्पूर्ववत्पूर्वतुल्यानुपाश्रयस इति योजना ॥ २९ ॥

**सु० टी०—भवतु चिद्वलयान्तरोत्पत्तिः को दोष इति तत्राऽऽह—**

अकृतागमश्च कृतनिष्फलता
फलतः समापतति कर्तृगतेः[1] ।

---

१ क. थ. कर्त्रग° ।

अपरस्य भोक्तुरुदयाच्च दिवि
व्यसनस्य संततिरहो विषमा ॥ ३० ॥

अकृतागम इति । कर्तृगतेरिति । **पूर्वं येन पुरवेष्टितचैतन्येन कर्म कृतं तस्य गतेर्नाशात्कृतवैयर्थ्यमित्यर्थः।** अपरस्येति। **द्युलोके भोक्त्रन्तरोदयात्त्वं प्रत्यकृतस्य कर्मणः फलमागच्छेदिति दुरुत्तरं व्यसनमित्यर्थः। विषमा वेदाप्रामाण्यापादिकेत्यर्थः ॥ ३० ॥**

अ० टी०—तर्ह्येतदेवास्तु परलोकगमनं यत्पुरगमनमनु नैरन्तर्येण चिद्वलयानां जननमिति चेत्तदा महान्दोषः प्रादुःष्यादित्याह—**अकृतागमश्चेति** । विना करणानुष्ठानं कार्यनिष्पत्तिरकृतागमः कृतप्रयत्नस्य निष्फलत्वं फलजननमन्तरेण पर्यवसानं कृतनिष्फलतैतद्द्वयं फलतोऽर्थात्समापतति । यदि चिद्वलयानां जन्माभ्युपेयत इति योजना । कुत इत्यत आह—**कर्तृगतेरपरस्य भोक्तुरुदयाच्चेति** । भूगतं हि ब्राह्मण्यादिविशेषितचिद्वलयं कर्मणां कर्तृ तस्य कर्तुर्गतेर्गमनान्नाशात्तत्कृतस्यापि नाश इत्यर्थः । तथा स्वर्गादावपरस्य कर्तुरन्यस्य भोक्तुरुदयात्तस्य क्रियाभावेऽपि भोगस्याकृतस्याऽऽगम इत्यर्थः । प्रमाणन्यायविरुद्धं कल्पयतो न स्वास्थ्यं कदाऽपीत्याह—**व्यसनस्येति** । विषमा दुरन्तेत्यर्थः ॥ ३० ॥

**सु० टी०—ननूपाधेः पुरस्य चलने सत्यपि वेष्ट्यमानस्य चैतन्यस्य सर्वत्रैक्यान्न कर्तृभोक्तृभेद इति तत्राऽऽह—**

चलने ह्युपाध्यभिमतस्य भवे-
ज्जनितस्य तेन विगमः सुदृढम् ।
ननु कुण्डलापसरणे पुरुषा-
दथ न प्रणश्यति न कुण्डलिता ॥ ३१ ॥

चलने हीति । **विगमो विनाशः । चैतन्यस्यैक्येऽपि न तन्मात्रस्य कर्तृभोक्तृत्वं किं तु पुरावच्छिन्नचिद्वलयस्य तस्य च भेदात्स एव दोष इत्यर्थः । दृष्टान्तमाह**—नन्विति **॥ ३१ ॥**

अ० टी०—ननु कुतो व्यसनसंततिरापद्यते, उपाधिगमनेनौपाधिकं तदेव गच्छतीति प्रतीतेर्बाधकादर्शनात्प्रतिपदमुपाधिगमने चिद्वलयोत्पत्तिनाशकल्पनायोगादतोऽकृताभ्यागमादिदोषप्रसङ्गाभावश्च स्यादिति चेन्मैवं न्यायबाधितत्वादुपाधिगमनेनोपहितगमनस्येति दृष्टान्तेनोपपादयति—**चलन इति** । उपाध्यभिमतस्य चलने जायमाने तेनोपा-

धिना जनितस्यौपाधिकस्य सुदृढं सुनिश्चितं यथा स्यात्तथा वियोगो विच्छेदो विनाशो भवेदिति योजना । कुण्डलिनः पुरुषात्कुण्डलापसरणे जायमानेऽथ तदा कुण्डलिता न प्रणश्यतीति न किंतु प्रणश्यत्येव ननु प्रसिद्धमित्युत्तरार्धयोजना । तथा च कुण्डलापगमे तन्नाशे वा कुण्डलोपधानविशिष्टस्य कुण्डलिनो नाशदर्शनात्तद्वद्घटचलने घटवेष्टितस्याऽऽकाशस्य नाश एवाभ्युपेयः । एवं पुरवेष्टितस्य चिद्वलयस्यापि नाश एव पुरचलने युक्त इति स्यादेवोक्तदोषप्रसङ्ग इत्यर्थः ॥ ३१ ॥

**सु० टी०—इदानीमुपाधिसंबन्धोऽपि चैतन्यस्य दुर्निरूप इत्याह—**

**न पुरान्वयश्च तव चिद्वपुषः**
**परमार्थतो भवति तर्कसहः ।**
**नभसो यथा घटसमागमनं**
**न ततोऽपि लिङ्गघटितो व्रजसि[1] ॥ ३२ ॥**

न पुरान्वयश्चेति । **यथा नभसो घटसंबन्धः पारमार्थिको न तर्कसह एवमात्मनोऽपि पुरसंबन्ध इत्यर्थः ॥ ३२ ॥**

अ० टी०—पुरसंबन्धमात्मनोऽङ्गीकृत्येदमुक्तं वस्तुतः स एवाऽऽत्मनि न संभवतीत्याह—**न पुरान्वयश्चेति** । नभसो यथा घटसमागमनं परमार्थतस्तु तर्कसहं न भवतीति योज्यम् । फलितमाह—**न तत इति** । ततोऽपि पुरसंगमस्य दुर्निरूपत्वादपि तत्कृतचिद्वलयस्य कल्पितत्वान्नाऽऽत्मनो लोकान्तरगमनं भोक्तृत्वादि वा परमार्थतः संभवतीति न लिङ्गघटितः परिवेष्टितस्त्वं व्रजसीत्यर्थः ॥ ३२ ॥

**सु० टी०—स कथं न तर्कसह इत्याशङ्क्य किं घटेनाऽऽकाशप्रदेशो वेष्ट्यते किं वा कृत्स्नमाकाशमिति विकल्प्याऽऽद्य आह—**

**नभसः प्रदेशविरहान्नभसो**
**न घटः प्रदेशपरिवेष्टनकृत् ।**
**न नभः समस्तमपि वेष्ट्यते**
**नभसोऽवशेषविरहापतनात् ॥ ३३ ॥**

नभस इति । **द्वितीये त्वाह**—न नभ इति **॥ ३३ ॥**

अ० टी०—दृष्टान्तत्वेनोपात्तनभःपरिवेष्टनस्य तर्कासहत्वं तावदुपपादयति—**नभसः प्रदेशेति** । किं घटेन नभएकदेशः परिच्छिद्यते सर्वात्मना वा । नाऽऽद्यः संगच्छते यतो

---

१ क. घ. °जति ।

घटो न नभसः प्रदेशपरिवेष्टनकृत्संगच्छते नभसः प्रदेशविरहान्निरवयवत्वेन प्रदेशाभावादित्यर्थः । द्वितीयं दूषयति—**न नभः समस्तमिति ।** घटाद्बहिर्नभसोऽभावप्रसङ्गात्तत्र निर्गमनप्रवेशादिव्यवहारलोपः स्यादित्यर्थः ॥ ३३ ॥

**सु० टी०—उक्तमर्थं दार्ष्टान्तिके योजयति—**

**परमात्मभागपरिवेष्टनकृ-**
**न्न पुरं तथाऽनवयवो हि परः ।**
**न च कृत्स्नमेव परमं पुरुषं**
**पुरवस्तु वेष्टयितुमुत्सहते ॥ ३४ ॥**

परमात्मेति । न चेति । **परिच्छिन्नेन पुरेणापरिच्छिन्नस्य पुंसः कृत्स्नवेष्टनमशक्यमित्यर्थः ॥ ३४ ॥**

अ० टी०—दार्ष्टान्तिकेऽपि तथैव तर्कासहत्वमाह—**परमात्मेति ।** स्पष्टार्थं पद्यम् ॥ ३४ ॥

**सु० टी०—भवत्वल्पेनापि महत आवरणमङ्गुल्येव सूर्यस्येत्याशङ्क्य कृत्स्नस्य पुरवेष्टने जीवानामीश्वरस्य चासिद्धिप्रसङ्ग इत्याह—**

**यदि कृत्स्न एव परमः पुरुषः**
**पुरवेष्टितो भवति जीवतया ।**
**न तदेश्वरो भवितुमुत्सहते**
**न च जीवजातमपरं सकलम् ॥ ३५ ॥**

यदीति ॥ **३५ ॥**

अ० टी०—परममहतश्चिदात्मनः परिच्छिन्नेन पुरेण कृत्स्नशो वेष्टनमसंभावितमित्युक्तं तदभ्युपगमे च दोषान्तरप्रसक्तिर्दुर्वारेत्याह—**यदि कृत्स्न एवेति ।** एकेनैव पुराष्टकसंघातेन चिदात्मनो जीवतया क्रोडीभावे जीवान्तरमीश्वरो वा नावशिष्येतेत्यर्थः ॥३५॥

**सु० टी०—मा भूदीश्वरो जीवान्तरं चेति तत्राऽऽह—**

**गुरुशिष्यसंगतिरतो न भवे-**
**न्न च बन्धमोक्षनियमो घटते ।**
**विषयं विना सकलमापतति**
**स्फुटमत्र वेदवचनं च वृथा ॥ ३६ ॥**

गुरुशिष्येति । **एकस्य ज्ञत्वाज्ञत्वादिविरोधादित्यर्थः । अस्तु स्वप्नवदिति**

**चेन्न कल्पितस्य तत्त्वोपदेष्टृत्वायोगात् । युक्तं सर्वज्ञत्वेन कल्पितत्वादिति चेत्तर्हि ब्रह्मैव विद्वत्तयाऽज्ञतया च कल्पितं व्यावहारिकान्योन्यशरीरद्वारा गुरुशिष्यभावमेतीत्युपेयमन्यथा बन्धमोक्षभाजां जीवानामनुग्रहीतुरीश्वरस्य च स्वाप्निकतुल्यत्वे निर्विषयत्वात्तत्तज्ज्ञानकर्मफलबन्धमुक्त्यादिव्यवस्थापकवेदाप्रामाण्यापत्तेरित्यर्थः । प्रकटकारास्त्वाहुः–एका तावद्भूतप्रकृतिश्चिन्मात्रस्था माया । तस्यां चित्प्रतिबिम्ब ईश्वरस्तत्परिणामैः सर्वज्ञः । तस्या एवानिर्वाच्यानन्तप्रदेशेष्वज्ञानाभिधेषु प्रतिबिम्बितं तदेव चैतन्यमनन्तजीवव्यवहारास्पदम् । निरंशस्यैकस्यानन्तप्रतिबिम्बाश्च नभसि दृष्टाः । एवं च मुक्तामुक्तविभागोऽपि सुगमः । यस्य च बिम्बब्रह्मात्मतानुभवस्तस्य स्वोपाध्यज्ञानभङ्गे तत्स्वरूपावस्थितिर्मुक्तिः । इयमेव च विश्वमायानिवृत्तिः । मायायास्तु मिथ्यात्वेऽप्यनादित्ववदनुच्छेदाविरोध इति ॥ ३६ ॥**

अ० टी०—माऽस्त्वीश्वरो जीवान्तरं वेति चेत्तत्राऽऽह—**गुरुशिष्येति** । अतोऽवशिष्यमाणजीवान्तराभावे गुरुशिष्यसंबन्धादिः प्रसिद्धो व्यवहारो न भवेत्कुत इत्यत आह—**न च बन्धेति** । बद्धो हि शिष्यो मुक्तश्च गुरुरतो बन्धमोक्षयोर्जीवान्तरानङ्गीकारे व्यवस्थाभावाद्गुरुशिष्यव्यवस्थाऽपि न स्यादित्यर्थः । माऽस्तु काऽपि व्यवस्थेति चेत्तत्राऽऽह—**विषयं विनेति** । अत्राव्यवस्थापक्षे सकलं च वेदवचनं स्फुटं यथा स्यात्तथा विषयं विना वृथाऽऽपतत्यप्रमाणं भवेदित्यर्थः । एतदुक्तं भवति–जिज्ञासोः शिष्यस्याभावे शास्त्रं कं प्रति बोधयेत्तत्त्वं तथा ज्ञानवत्याचार्येऽसति क उपदेष्टा कमाश्रित्य शास्त्रं जिज्ञासुं बोधयेत्तथा च गुर्वाद्यभावे निर्विषयं शास्त्रमप्रमाणमेव स्याद्गुर्वादिभावश्च मुक्तत्वबद्धत्वे विना नोपपद्यते । तथेश्वराभावे चान्तर्यामिब्राह्मणम् ' एष सेतुर्विधरणः ' [ बृह० ४ । ४ । २२ ] ' एष ह्येव साधु कर्म कारयति ' [ कौषी० १ । ८ ] ' रातिर्दातुः परायणम् ' बृह० ३ । ९ । २८ ] इत्यादीश्वरविषयश्रुतिस्मृत्यादिवादा अपि निर्विषयतया न प्रमाणं भवेयुरिति ॥ ३६ ॥

**सु० टी०—फलितमुपसंहरति—**

**न पुरान्वयोऽत उपपत्तिसहः**
**परमार्थतोऽस्ति परमात्मदृशेः ।**
**वियतो घटान्वयवदेव ततः**
**परिकल्पितं पुरसमागमनम् ॥ ३७ ॥**

न पुरान्वय इति । **किं तु विचारासहत्वात्काल्पनिक एवेत्यर्थः ॥ ३७ ॥**

अ० टी०—अत्र परमात्मन एवाविद्ययानेकजीवभावस्तेषामेकैकस्य बन्धमोक्षभाक्त्वमित्येवं व्यवस्थापक्षमभ्युपगम्याऽऽचार्यः प्रवृत्तोऽतो व्यवस्थापक्षोऽप्यनेकजीववादोऽस्येष्ट एवेति गम्यते पूर्वत्रैकजीवस्वीकारो गुर्वादेः शिष्याविद्याकल्पितत्वाभिधानं वा सर्वमपि द्वैतस्य तत्त्वज्ञानेन निवृत्तिप्रदर्शनार्थमेवेति निश्चीयते । यद्वा पूर्वत्र सर्वस्य गुर्वादिभेदस्य चिदविद्याकल्पितत्वेन मिथ्यात्वनिरूपणं सदद्वैतमेव सत्यं नान्यत्सत्यमस्तीति प्रदर्शनायेह व्यवस्थया जीवसंसारस्य निरूपणं तु व्यवहारदृष्ट्येति ग्रन्थकारस्याभिप्रायो गम्यते । सर्वथा युक्तिबाह्यात्परिकल्पित एव पुरसंबन्धस्तद्द्वारं च चिदात्मनः संसरणं न स्वत इत्युपसंहरति—**न पुरान्वयोऽत इति** । परमात्मदृशेः पुरान्वयो न परमार्थतोऽस्ति तत्रोपपत्त्यसहिष्णुत्वात् । यद्यत्रोपपत्तिं न सहते न तत्तेन परमार्थतः संबध्यते यथा वियतो घटान्वयस्तथाचायं ततस्तस्मात्पुरसमागमनं परिकल्पितमेवाऽऽत्मनो न परमार्थमिति योजना ॥ ३७ ॥

**सु० टी०—ततश्च तदुपाधिकं परलोकगमनमपि तत्त्वतोऽनुपपत्तेर्नभश्चलनवत्काल्पनिकमित्याह—**

**यत एवमेतदुपपत्तिपथं**
**न तव प्रयाति विरहय्य तमः ।**
**परलोकमार्गगमनं स्वतमः-**
**परिकल्पितं चलनवन्नभसः ॥ ३८ ॥**

यत इति ॥ ३८ ॥

अ० टी०—एवं सति पुरसङ्गनिबन्धनं परलोकगमनमपि कल्पितमेवास्येत्याह—**यत एवमिति** । सुगमार्थं पद्यम् ॥ ३८ ॥

**सु टी०—पुरसंबन्धेनाऽऽत्मनो गमने पुरेणाहं गच्छामीति स्यादश्वेनेतिवदिति चेत्तत्राऽऽह—**

**पुरधर्ममात्मनि विकल्प्य तथा**
**स्वचिदात्मतां च पुरधर्मतया ।**
**स्वपुरं स्वयं च दृढमेकतया**
**परिकल्पयन्व्रजसि मूढमतिः ॥ ३९ ॥**

पुरधर्ममिति । **परस्परात्मताध्यासान्न भेदेन प्रतीतिरित्यर्थः ॥ ३९ ॥**

अ० टी०—कथं तर्हि 'उभौ लोकावनुसंचरति' [बृह०४।३।७] इति श्रुत्युक्तगमनमुपपद्यत इत्यत आह—**पुरधर्ममिति** । 'स समानः सन्नुभौ लोकावनुसंचरति' [ बृ०

४ । ३ ७ । इति समानश्रुत्या पुरात्मनोः परस्पराध्यासस्योक्तत्वात्पुरात्मनोरन्योन्यधर्माध्यासात्पुर आत्मत्वावभास आत्मनि च गमनाद्यवभासस्तयोरेकतापत्त्या विभाव्यत इति तात्पर्यार्थः । अक्षरार्थस्त्वतिरोहितः ॥ ३९ ॥

**सु० टी०—नन्वेतैरेवोक्ततर्कैरात्मनि बन्धाभावसाधकैर्ब्रह्मतत्त्वबोधनात्किं महावाक्येनेत्याशङ्क्याऽऽह—**

**परिपूर्णचिद्रसघनः सततं**
**स्वमहिम्नि तिष्ठसि निरस्तमले ।**
**न तथाऽपि तत्त्वमितिवाक्यकृतां**
**मतिमन्तरेण तव केवलता ॥ ४० ॥**

परिपूर्णेति । **नित्यमुक्तेऽपि त्वयि तर्कजनितज्ञानस्य परोक्षत्वान्नापरोक्षभ्रमनिवर्तकत्वमित्यर्थः ॥ ४० ॥**

अ० टी०—तस्मादात्मनि संसारस्यानिरूपणान्नित्यमुक्त एवाऽऽत्मेत्याह—**परिपूर्णेति ।** यद्यहं निरस्तमले स्वमहिम्नि सततं तिष्ठामि तर्हि किं शास्त्रेण मम कृत्यमित्यत आह—**न तथाऽपीति ।** यद्यपि वस्तुतो नित्यमुक्तोऽसि त्वं तथाऽपि तत्त्वमसीतिवाक्यकृतां मतिमन्तरेण तव केवलता निवृत्ताविद्यातत्कार्यप्रतिभासतया स्वरूपावस्थानलक्षणं कैवल्यं न भवतीत्यर्थः ॥ ४० ॥

**सु० टी०—कथं तर्हीन्द्रियैरेवापरोक्षं ज्ञानं न भवतीति तत्राऽऽह—**

**न तव प्रतीचि करणानि बहि-**
**र्विषयाणि येन करणानि सदा ।**
**सहजं च गाढमतिमूढतमं**
**तम इत्यतः पुरमनुव्रजसि ॥ ४१ ॥**

न तवेति । **करणानि न प्रत्यग्विषयाणीति साध्यम् । हेतुमाह**—बहिरिति । **‘ पराञ्चि खानि ’ [ कठ० ४ । १ ] इति श्रुतेः । तर्हि स्वरूपज्ञानमेव भ्रमं निवर्तयत्विति नेत्याह**—सहजमिति । **अज्ञानतत्कार्यस्य चैतन्यभास्यत्वेन स्वरूपचिद्विरोधान्न तेनाज्ञानादिनिवृत्तिरित्यर्थः । अतोऽसङ्गस्यापि वेदान्तजबोधात्पूर्वं संसरणं युक्तमित्याह**—अत इति ॥ ४१ ॥

अ० टी०—यदि वस्तुतो मयि नास्त्येव संसरणं किमिति नित्यमुक्ततां विना वाक्यश्रवणं न जानामीति चेत्तत्राऽऽह—**न तव प्रतीचीति ।** करणानि मनःप्रभृतीन्द्रियाणि

यानि तव सन्ति तानि प्रतीचि प्रत्यग्विषयाणि न यतः सदा करणानि बाहिर्विषयाणि 'पराञ्चि खानि' [ कठ० ४ । १ ] इति श्रुतेरतस्तव स्वरूपनिर्भासः करणसाध्यो न भवतीति न त्वं तैः स्वस्वरूपं जानासीत्यर्थः । स्वतोऽपि तद्यथावन्न भासत इत्याह—**सहजं चेति** । अतिमूढतममत्यन्तानिबिडतमं गाढं दृढं च सहजमनादिसिद्धं तमस्त्वत्सतत्वावरणमनुवर्ततेऽतोऽपि न जानासि । तथाऽपि यद्यनुसंधीयते कदा तदा ज्ञातुं शक्यते । अनुसंधानमेव दुर्लभं गुरूपदेशवेदान्तवाक्यं विनेति भावः । यत एवं वाक्यजन्यतत्त्वज्ञानहीनोऽतः पुरमनुव्रजस्यात्मनो नित्यमुक्ततामजानन्संसारमनुभवसीति ॥ ४१ ॥

**सु० टी०—पुरसहित एव गच्छतीत्यमूलकमित्याशङ्क्य तत्र मानमाह—**

**स समान इत्युपनिषद्वचनं**
**प्रतिपादयत्युदितमर्थमतः ।**
**स्वमनीषिकेति न कदाचिदपि**
**प्रतिपत्तिरत्र भवतो भवतु ॥ ४२ ॥**

स समान इति । **'स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव' [ बृह० ४ । ३ । ७ ] इत्यादिश्रुतिरिवशब्दाद्धीसाम्याध्यासात्संविदात्मनो गमनागमनमतात्त्विकमिति वदतीत्यर्थः ॥ ४२ ॥**

अ० टी०—एवमुपाधिपरतन्त्रं कल्पितमेव परलोकगमनादीति युक्त्या निरूपितेऽर्थे श्रुतिप्रमाणमवतारयति—**स समान इति** । धिया समान इत्यर्थः । अतः प्रमाणयुक्तिसिद्धत्वान्नायमर्थः स्वकपोलकल्पित इति मन्तव्यमित्याह—**स्वमनीषिकेति** । स्वबुद्धिकल्पितेतीयं कल्पनेति शेषः । अत्र मद्वचने ॥ ४२ ॥

**सु० टी०—अज्ञानकल्पितं गमनमित्युक्तमिदानीं प्रतिबिम्बस्य गमनमिति केचित्तन्मतमाह—**

**पुरहेतुकं यदभवच्च विभोः**
**परिकल्पितं किमपि चित्सदृशम् ।**
**जलपात्रहेतुकमिव द्युमणे-**
**स्तदसंततं भवति तद्व्रजति ॥ ४३ ॥**

पुरहेतुकमिति । **विभोः पुरहेतुकं यदभवत्तद्व्रजति । चशब्दात्पुरमपि ।**

---

१ क. °नमित्यु° । २ ख. ल्पिते कि° ।

**ननु चिज्जडव्यतिरिक्तप्रकाराभावात्कथं तस्य गमनमिति तत्राऽऽह—** चित्सदृशमिति । **किमपि दुर्निरूपमत एव कल्पितम् । कुत इदं संभाव्यत** इत्याह—जलेति । **जलपात्रद्युमणिव्यतिरिक्तप्रतिबिम्बदर्शनात्पुरचैतन्यातिरिक्तं तत्प्रतिबिम्बमपि स्यादित्यर्थः । ननु सुषुप्तादावपि पुरनाशोत्पादाभ्यां प्रतिबिम्बस्यापि तथात्वे कृतहान्यादि स्यात्तत्राऽऽह—**तदसंततमिति । **परिच्छिन्नं सूक्ष्ममित्यर्थः । ततश्च विद्यापर्यन्तं सुषुप्तादावपि संस्कारात्मनोपाध्यनुवृत्तेर्नैष दोष इत्यर्थः ॥ ४३ ॥**

अ० टी०—परिकल्पितमपि किं तदात्मनो गमनं तदाह—**पुरहेतुकमिति ।** त्वयि स्वाविद्याध्यस्तपुरहेतुकं यत्किमपि विभोश्चित्सदृशं चिदाभासनं परिकल्पितमभवत्तदसंततं परिच्छिन्नं भवति तत्परिच्छिन्नत्वाद्व्रजतीति योजना । चित्सदृशं परिकल्पितमित्यत्र दृष्टान्तो—**जलपात्रहेतुकमिव द्युमणेरिति** । द्युमणिः सूर्यः ॥ ४३ ॥

**सु० टी०—ननु न पुरं प्रतिबिम्बं वा स्वतो गन्तुमर्हति जडत्वान्नाप्यात्मोदासीनत्वान्न चानुग्राहकोऽपि दृश्यत इत्याशङ्कां परिहर्तुमीश्वरोपाधिं साधयति—**

**जडशक्तिरस्ति च परस्य विभोः**
**परमात्मनस्तम इति प्रथिता ।**
**पुरमष्टकं तव यथा भवति**
**श्रुतितः प्रसिद्धमिदमप्यखिलम् ॥ ४४ ॥**

जडशक्तिरिति । **तत्र प्रमाणमाह—**श्रुतित इति । **तव जीवस्य यथा पुरहेतुकं जीवत्वमेवं जडशक्त्युपाधिकमीश्वरत्वमपि ‘ मायिनं तु ’ [ श्वेता० ४ । १० ] इत्यादिश्रुतिसिद्धमित्यर्थः ॥ ४४ ॥**

अ० टी०—ननु कथमेवमपि परलोकगमनसंभवः पुरस्य न स्वातन्त्र्येण गमनं संभवति जडत्वात्तस्मिंस्तदा चिदाभासोऽपि न संभवति बुद्धिद्वारकत्वाच्चिदाभासोदयस्य बुद्धेश्च तदानीं लीनत्वादिति चेन्न ‘ तद्यथाऽनः सुसमाहितमुत्सर्जद्यायात् ’ [ बृह० ४ । ३ । ३५ ] ‘ प्राज्ञेनाऽऽत्मनाऽन्वारूढ उत्सर्जन्याति ’ [ बृह० ४ । ३ । ३५ ] इतिश्रुत्युक्तप्रकारेणेश्वराधीनतया गमनसंभवादिति वक्तुं प्राक्प्रतिपादितमर्थं स्मारयति—**जडशक्तिरिति** । यथा तव जीवस्य पुर्यष्टकं भवत्युपाधिस्तथा परस्य विभोः परमात्मनः परमेश्वरस्य तम इत्येवं प्रथिता जडशक्तिरस्त्युपाधिरिति योजना । यथा प्रत्यगज्ञानस्यैव तमसो जडशक्तित्वेन परमेश्वरोपाधित्वमज्ञानात्मना च जीवोपाधित्वं निर्वहति तथोपाधित्वं

पूर्वमेवेति भावः । अज्ञानिनो जीवस्य पुर्यष्टकयोगो जडशक्त्युपाधेरीश्वरता चेति कुतोऽवसीयत इत्यत आह—**श्रुतित इति** ॥ ४४ ॥

**सु० टी०—ततः किमित्यत आह—**

**पुरहेतुकं तव यथा च वपु-**
**र्भवतीह जीववचसो विषयः ।**
**जडशक्त्युपाधिकममुष्य तथा**
**परमेश्वरत्ववपुरुद्भवति ॥ ४५ ॥**

पुरेति । **तवाज्ञस्य । वपुराकारविशेषः । अमुष्येश्वरस्य । ततश्च तदायत्तं गमनमिति भावः ॥ ४५ ॥**

अ० टी०—ततः किं जातं तदाह—**पुरहेतुकमिति** । यथा पुरहेतुकं तवाज्ञस्य जीववचसो विषयो जीवशब्दवाच्यं वपुराकारविशेषरूपं भवति तथाऽमुष्य परमेश्वरस्य जडशक्त्युपाधिकं वपुराकारविशेष उद्भवति एवं तस्य जीवोत्क्रान्तिसमयेऽपि सत्त्वात्तदायत्तमस्य गमनं संभवतीति भावः ॥ ४५ ॥

**सु० टी०—तथाऽपीश्वरनिमित्तकं जीवस्य संसरणमित्यत्र किं मानमिति चेत्तत्राऽऽह—**

**पुरहेतुरूपघटितस्य द्दशे-**[१]
**र्जडशक्त्युपाधिपरमेश्वरतः ।**
**भयमुद्भवत्यनवबोधवशा-**
**दिति च त्रयीशिरसि राजपथः ॥ ४६ ॥**

पुरहेत्विति । '**भीषाऽस्माद्वातः पवते**' [ **तैत्ति० २ । ८ । १** ] '**एष एव साधु कर्म कारयति यमुन्निनीषते एष ह्येवासाधु कर्म कारयति यमधो निनीषते** [ **कौषी० ३ । ८** ] **इत्यादिश्रुतिर्मानमित्यर्थः ॥ ४६ ॥**

अ० टी०—परमेश्वरतन्त्रतया परलोकगमनमित्यत्र श्रुतिप्रसिद्धं जीवस्य संसारमोक्षयोः परमेश्वरायत्तत्वं प्रमाणमाह—**पुरहेतुरूपेति** । 'यदिदं किं च जगत्सर्वं प्राण एजति निःसृतम् । महद्भयं वज्रमुद्यतम्' [ कठ० २ । ३ । २ ] । 'यदा ह्येवैष

---

१ घ. °द्दशो ज° ।

एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवति ' [ तैत्ति० २ । ७ । १ ] इत्यादि-त्रयीशिरसीत्यर्थः । सुगममन्यत् ॥ ४६ ॥

सु० टी०—एतदेव प्रपञ्चयति—

परमेश्वरेण विभुना रणयन्
परिबृंहितः शकटवद्व्रजसि ।
शकटं हि शाकटिकयोगवशा-
द्व्रजति स्वयं न परतन्त्रतया ॥ ४७ ॥

परमेश्वरेणेति । **विभुना परिबृंहित इति संबन्धः । 'प्राज्ञेनाऽऽत्मनाऽन्वारूढः ' [ बृह० ४ । ३ । ३५ ] । इति श्रुतेः । रणयन्दुःखवशाच्छब्दं कुर्वन् । दृष्टान्तं विवृणोति**—शकटं हीति । **' तद्यथाऽनः सुसमाहितम् ' [ बृह० ४ । ३ । ३५ ] इति श्रुतेः ॥ ४७ ॥**

अतः परमेश्वरतन्त्रतया मरणावस्थायां पुर्यष्टकगमनमुपपन्नमित्याह—**परमेश्वरेणेति ।** विभुना परमेश्वरेण परिबृंहित उत्तेजितो रणयन्हिक्कादिशब्दं कुर्वञ्छकटवद्व्रजसीति योजना । शकटदृष्टान्तं स्फुटयति—**शकटमिति** ॥ ४७ ॥

**सु० टी०—ननु परमेश्वराधीनं संसरणं चेत्कुतः कर्मणि वैराग्यं तत्राऽऽह—**

पुरवेष्टितः पुरवशानुगतः
पुरतन्त्रचिन्निभविभिन्नवपुः ।
दिवि यातनाभुवि च कर्मफला-
न्यनुभूय भूय इह संभवति ॥ ४८ ॥

पुरवेष्टित इति । पुरवशेति । **मूर्छितत्वेन स्वातन्त्र्याभाव उक्तस्तत्र हेतुः**—पुरतन्त्रेति । **पुरगतचिदाभासाविविक्तः । कर्मफलानि यातनादीनि नानाविधान्यनुभूय पुनरपीह भुवि संभवतीत्यवरोहत्यतो वैराग्यमित्यर्थः॥४८॥**

अ० टी०—ननु शकटस्याचेतनत्वाद्युक्तं शाकटिकाधीनत्वं जीवस्य चेतनत्वात्कथं चेतनान्तराधीनं गमनमिति चेन्नैष दोषो जीवस्य चेतनत्वेऽपि भ्रान्त्या परतन्त्रत्वोपपत्तेरित्याह—

---

१ ख. भसि ।

**पुरवेष्टित इति** । यतः पुरवेष्टितोऽतः पुरवशानुगतः पुरपरतन्त्रः । कीदृशं तत्पारतन्त्र्यं तदाह—**पुरतन्त्रेति** । पुरानुप्रविष्टतया पुरतन्त्रो यश्चिन्निभश्चिदाभासस्तेन विभिन्नं विशिष्टं वपुर्यस्य स तथा पुरगतचिदाभासाविवेकादात्मानं परिच्छिन्नं मन्यमान इत्यर्थः । अतः परमेश्वरेण परिबृंहितो व्रजसीति युक्तमिति पूर्वानुषङ्गेण योजना । एवं परलोकगमनस्य मायामयत्वं पारतन्त्र्यं च वैराग्यार्थमुपपाद्यावरोहप्रकारमाह—**दिवीति** । स्वर्गे यातनाभुवि च वैतरण्यादिनरकप्रदेशे च क्वचित्कदाचित्कर्मफलान्यनुभूय पुनः कर्मशेषवशादिह मनुष्यलोके यथाकर्म संभवसि जन्म प्रतिपद्यस इत्यर्थः । श्रुतौ धूमादिमार्गेण चन्द्रस्थलं गतानामवरोहप्रकारकथनं नरकस्थानादवरोहप्रकारस्याप्युपलक्षणार्थमित्यभिप्रेत्य तुल्यवन्निर्देश इति द्रष्टव्यम् ॥ ४८ ॥

**सु० टी०—ननु 'ये केचास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते गच्छन्ति' [ कौ० १ । २ ] इति पुण्यभोक्तृत्वमेव श्रूयते न तु यातनाभुव इति तत्राऽऽह—**

**सुकृतदुष्कृतकर्मवशादयं**
**दिवमथो यमसादनमेव वा ।**
**अनुभवेन समाप्य पुनर्महो-**
**तलमबोधवशादवरोहति ॥ ४९ ॥**

सुकृतेति । **'पुण्यः पुण्येन कर्मणा भवति पापः पापेन' [ बृह० ४ । ४ । ५ ] इति श्रुतेर्द्युलोकं यमलोकं वा गच्छन्तीत्यतः सुकृतिपरत्वे न संकोचनीया 'ये के च' इति श्रुतिरित्यर्थः । ननु समारोपितं चेत्कर्म शेषाभावान्नावरोहः स्यादिति तत्राऽऽह**—पुनरिति । **'रमणीयचरणा रमणीयां योनिमापद्यन्ते' [ छा० ५ । १० । ७ ] इत्यादिश्रुतिसिद्धानुशयवशादित्यर्थः ॥ ४९ ॥**

अ० टी०—उक्तमेव स्पष्टयति—**सुकृतदुष्कृतेति** । यमसादनं नरकभूमिः ॥४९॥

**सु० टी०—ननु कर्मणां संसारहेतुतानियमस्तेषामिह न पुनरावृत्तिः 'इमं मानवमावर्तं नाऽऽवर्तन्ते' [ छा० ४ । १५ । ६ ] । इत्यादिश्रुत्या विद्यासमुच्चितानां तेषामनावृत्तिफलश्रवणादिति चेत्तत्राऽऽह—**

**यदि वा समुच्चयवशात्पुरुषः**
**कमलासनं व्रजति कामुकधीः ।**

पुनरेव मानवमिमं तु विना
परिवर्तमाव्रजति मूढमतिः ॥ ५० ॥

यदि वेति । इममिहेति विशेषणात्कल्पान्तरे त्वावर्तन्त इति न कर्मणां संसारहेतुत्वं व्यभिचरतीत्यर्थः ॥ ५० ॥

कर्मसंबन्धिनो ज्ञानस्योपासनालक्षणस्यापि संसारफलत्वमेवेत्याह--**यदि वेति ।** शास्त्रीयज्ञानकर्मणोः संसारफलत्वं कामिन एव निष्कामस्य तस्य तु बुद्धिशुद्धिद्वारा तत्त्वज्ञानहेतुत्वादित्यभिप्रेत्योक्तं—**कामुकधीरिति ।** तत्र गतोऽपि यदि मूढमतिः परमात्मरूपप्रत्यक्तत्त्वज्ञानशून्यस्तदा पुनरेव पुनरपि परिवर्तं संसारं प्रत्याव्रजत्यागच्छति किंविमं मानवं विनाऽस्मिन्कल्पे नाऽऽव्रजति कल्पान्तरे त्ववश्यमाव्रजतीत्यर्थः ॥ ५० ॥

सु० टी०—ननु—

‘ ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे ।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ’ ॥

इतिस्मृतिसहकृतानावृत्तिश्रुत्येममिहेतिविशेषणबाधादपुनरावृत्तिरेव विद्याकर्मणोः फलमिति तत्राऽऽह—

अथ वा स तत्र परमात्ममतिः
परिमुच्यते सकलबन्धनतः ।
क्रमयोगमुक्तिरुदिता श्रुतिषु
प्रतिशाखमेवमुपपन्नतरा ॥ ५१ ॥

अथ वेति । कृतात्मान इति वचनात्परमात्ममतेः कारणात्परिमुच्यते न विद्याकर्मभ्यामित्यर्थः । तत्रापि ज्ञानस्यैव मुक्तिसाधनत्वं चेत्किं समुच्चयानुष्ठानेनेति तत्राऽऽह--क्रमेति । मन्दाधिकारिणामिह श्रवणादिभिर्ज्ञानसंपादनासमर्थानां ब्रह्मलोके विशिष्टोपदेशेन ज्ञानोत्पत्त्यर्थं ज्ञानकर्मानुष्ठानमित्यर्थः ॥ ५१ ॥

अ० टी०—समुच्चयफलस्यापि कृतकत्वेन क्षयावश्यंभावात्पुनरावृत्तिरुक्तेदानीं तु ब्रह्मलोकगतानां तेषामपि केषांचिद्भोगावसाने तत्रोत्पन्नज्ञानवशान्मुक्तिमाह-**अथ वेति ।** परमात्ममतिश्चेदिति शेषः । तत्र प्रमाणमाह—**क्रमयोगेति ।** क्रमयोगेण क्रमप्राप्त्या ब्रह्मलोकप्राप्तिक्रमेण श्रुतिषु प्रतिशाखं या मुक्तिरुदिता सा त्वेवमस्मदुक्तप्रकारेणोपपन्नतरा परब्रह्मक्रतूनां क्रममुक्तिस्तद्रहितानां मानवान्तरे पुनरावृत्तिरिति व्यवस्थेति भावः ॥ ५१ ॥

सु० टी०—ननु कर्मणां संसारहेतुत्वं चेत्तदनधिकारिणां स्थावरादीनां कुतो न मुक्तिस्तत्राऽऽह—

देवयानपितृयाणयोः पथो-
र्ज्ञानकर्मरहितत्वकारणात् ।
नैकमप्यनुसरन्ति ये पुनः
क्षुद्रजन्तव इहोद्भवन्ति ते ॥ ५२ ॥

देवयानेति । 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि' [ छा० ५ । १० । ८ ] इति श्रुतेर्न तेषां मुक्तिसंभावनेत्यर्थः ॥ ५२ ॥

अ० टी०—क्षुद्रजन्तुभावलक्षणामपि कष्टतरां संसारगतिं श्रुत्युक्तां वैराग्यार्थमाह—**देवयानेति** । देवयानमर्चिरादिमार्गः पितृयाणं धूमादिमार्गः । ज्ञानकर्मरहितत्वात्कारणाद्यथाक्रमं देवयानपितृयाणयोः पथोर्मध्ये ये पुनर्नैकमपि पन्थानमनुसरन्ति त इह भूलोके क्षुद्रजन्तवः कीटपतङ्गादिरूपाः सन्त उद्भवन्त्यहो कष्टमित्यर्थः ॥ ५२ ॥

सु० टी०—एवं ससारगतिं वर्णितामुपसंहरति—

इति कामुकस्य तव संसरणं
शतशो बभूव बत मूढमतेः ।
इह विप्रजन्मनि विरक्तमतिः
कुरु साधनं यदपवर्गकरम् ॥ ५३ ॥

इतीति । संसारयाथात्म्यज्ञानस्य किं फलं तत्राऽऽह—इहेति ॥ ५३ ॥

अ० टी०—संसारचिन्तां संक्षेपेण प्रदर्श्य तत्प्रकरणमुपसंहरति—**इति कामुकस्येति** । तवेतिपदावृत्तिपाठः प्रामादिकः परिमूढेतियोज्यम् । वैराग्याय संसारवर्णनेन सिद्धवैराग्यस्य कृत्यं व्यपदिशति—**इहेति** ॥ ५३ ॥

सु० टी०—किं तदपवर्गसाधनमिति चेत्तत्राऽऽह—

श्रवणादिकं शमदमादिपरः
परमात्मनः परमभागवतः ।

---

१ क. ग. यानयोः ।

कुरु तावता परममेव पदं
परमात्मनस्त्वमवलोकयसि ॥ ५४ ॥

श्रवणादिकमिति । **ज्ञानोत्पत्तौ श्रवणादेर्नैरपेक्ष्यमाह**—तावतेति ॥ ५४ ॥

अ० टी०—किं तदपवर्गकरं साधनमिति तदाह—**श्रवणादिकमिति** । शमदमादिपरः परित्यक्तसकलेषणः परमभागवतो भगवत्येव परमात्मन्यर्पितमनाश्च सन्परमात्मनः श्रवणादिकं कुरु तावता श्रवणादिजनितज्ञानमात्रेण सहायान्तरनिरपेक्षेण परमात्मनः परमं पदं त्वमवलोकयस्येवेति योजना ॥ ५४ ॥

**सु० टी०—आत्माज्ञाने का क्षतिरिति चेत्तत्राऽऽह—**

**यदि तन्न पश्यसि हरेः परमं पदमम्बुशीतलमिवेद्धशिराः ।**
**न खलु प्रदीप्तशिरसोऽस्ति सुखं तव दुःखपावकशिखाभिरहो[1] ॥**

यदीति । **आत्यन्तिकदुःखोच्छित्तेरनन्योपायत्वादित्यर्थः** ॥ ५५ ॥

अ० टी०—विपर्यये पुंसोऽनर्थप्रदर्शनेन श्रवणादौ प्रोत्साहं जनयति—**यदीति** । यदि तद्धरेः परमं पदमुक्तसाधननिष्ठः सन्निद्धशिरा इव शीतलमम्बु न पश्यसि तदा तवाहो कष्टं दुःखपावकशिखाभिः प्रदीप्तशिरसो न खलु सुखमस्तीति योजना । तीव्रातपादिनेद्धशिरा यदि शीतलमम्बु न पश्यति न लभते तस्य यथा न सुखमस्ति तद्वदिति दृष्टान्तार्थः ॥ ५५ ॥

**सु० टी०—सप्रयोजनं वैराग्यप्रदर्शनमुपसंहरति—**

**एवं विज्ञाय तापत्रयमतिगहनं मोहमूलं परस्मि-**
**न्नात्मन्यात्मप्रकाशे त्वयि परमसुखे निष्कले निष्कलङ्के ।**
**सत्ये नित्यस्वभावे परिहृतसकलद्वैतकूटानुषङ्गे**
**सम्यग्ज्ञानानुरागं कुरु विषयगतं भिन्धि निर्बन्धमेनम् ॥५६॥**

एवमिति । **परिहृतनिखिलानर्थहेतावपि कूटस्थचिदात्मनि त्वयि तापत्रयस्याऽऽविद्यकत्वेन सम्यग्ज्ञाननिवर्त्यत्वाद्विषयेभ्यो विरज्य तत्साधनपरो भवेत्यर्थः । ननु सहजमेव मे दुःखमित्याशङ्क्य विशिनष्टि**—परमेति । **कुत एवं तत्राऽऽह**—परस्मिन्निति । **परभिन्ने । तत्र हेतुमाह**—आत्मेति । **तत्रापि हेतुर्निष्कले निरंशे । तत्र मानमाह**—नित्येति । **सांशस्यानित्य-**

---

१ क. °भिद्गतेः ।

त्वात् । तत्साधयति—सत्य इति । अबाध्ये । निर्दोषत्वादपि तव निर्दुःखतेत्याह—निष्कलङ्के [इति] । रागाद्यदूषिते ॥ ५६ ॥

अ० टी०—यस्मात्सम्यग्ज्ञानं विनोक्तोऽनर्थोऽपरिहार्यस्तस्मादाध्यात्मिकादिदुःखत्रयरूपं दुःसहं संसारमुक्तप्रकारेण विदित्वा तद्विलक्षणे ब्रह्मात्मनि परिपूर्णे सम्यग्ज्ञानावताराय वेदान्तश्रवणादिनिष्ठो भवेदिति फलितार्थमाह—**एवं विज्ञायेति** । एवमुक्तप्रकारेणातिगहनं दुरन्तं तापत्रयं मोहमूलं विज्ञाय परस्मिन्नात्मनि त्वयि ब्रह्मस्वरूपे प्रत्यगात्मनि प्रत्यग्रूपे ब्रह्मणि सम्यक्ज्ञानानुरागं कुरु तज्ज्ञानानुकूले व्यापारे प्रयत्नवान्भवेति योजना । सर्वाण्येव विशेषणानि श्रुत्युक्तब्रह्मस्वरूपलक्षणपराणि ज्ञेयानि । एनमनुरागं विषयगतमैहिकामुष्मिकविषयानुषक्तं निर्बन्धं यथा स्यात्तथा भिन्धि विदारय यथा पुनर्विषयप्रवृत्तिकरो न स्यात्तथा विनाशयेत्यर्थः ॥ ५६ ॥

**सु० टी०—वैराग्यानन्तरं पदार्थजिज्ञासा प्रवर्तत इति तामुत्थापयति-**

**इत्युक्त्वोपरते गुरौ पुनरयं जिज्ञासया प्रेरित-**
**स्तत्त्वंशब्दनिगद्यलक्ष्यविषयं शिष्यो गुरुं पृच्छति ।**
**वैराग्येऽतिदृढीकृते सति यतः प्राज्ञो यतिर्मन्यते**
**संदीप्तं शिरसीव पावकमिदं संसारदुःखं महत् ॥ ५७ ॥**

इत्युक्त्वेति । **कोऽनयोः पौर्वापर्ये हेतुरिति तत्राऽऽह**—वैराग्य इति । **विरक्तस्य पदार्थविचाराधिकाराद्धेतुहेतुमद्भावादानन्तर्यमित्यर्थः ॥ ५७ ॥**

अ० टी०—उत्पन्नवैराग्यस्य तत्त्वंपदार्थशोधनावसर इति क्रमं विवक्षन्पदार्थशोधनप्रकारजिज्ञासाप्रयुक्तं शिष्यप्रश्नमुत्थापयति—**इत्युक्त्वोपरत इति** । निगद्यो वाच्यार्थः । संसारनिरूपणानन्तरजिज्ञासाहेतुमाह—**वैराग्य इति** ॥ ५७ ॥

**सु० टी०—तत्र शिष्यस्य प्रश्नं दर्शयितुं वैराग्यसाधनं हेतुत्वेन दर्शयति—**

**वैराग्यं विषयेषु पूर्वमपि मे जातं हरेरर्चना-**
**यज्ञादिक्रियया निरस्तफलया किं त्वद्य दार्ढ्यं गतम् ।**
**संसारस्य निरूपणेन धिगिदं कर्मादिजन्यं फलं**
**विश्वं नश्वरमम्बुबुद्बुदसमं पद्मासनान्तं जगत् ॥ ५८ ॥**

वैराग्यमिति । **यज्ञादिक्रियया हरेरर्चनादिति संबन्धः । किं तु संसारनिरूपणेनाद्य दार्ढ्यं गतमिति योज्यम् । दार्ढ्यमेवाभिनयति**—धिगिति॥५८॥

अ० टी०—प्रश्नप्रकारमाह—**वैराग्यमिति** । निरस्तफलया यज्ञादिक्रियया हरेः परमात्मनोऽर्चनात्पूर्वमपि मे विषयेषु वैराग्यं जातं किं त्वद्य संसारस्य निरूपणेन दाढर्यं गतमिति योजना । वैराग्यदाढर्यमेवाभिनयति—**धिगिदमित्यादिना** ॥ ५८ ॥

**सु० टी०—तर्हि किं प्रश्नेन तावतैव कृतार्थत्वादिति चेत्तत्राऽऽह—**

**किं तु त्वंपदलक्ष्यमर्थमधुना कर्तृत्वभोक्तृत्वयो-**
**र्जाग्रद्भूगतयोरपोहमुखतो वाञ्छाऽवगन्तुं मम ।**
**कर्तृत्वादिकमस्य किं निजमभूत्स्वाभाविकं जाग्रतः**
**किं वा तत्परतः कुतश्चिदभवच्चैतन्यधातोरिति ॥ ५९ ॥**

किं त्विति । **वैराग्यमात्रान्न ब्रह्मज्ञानं तस्य शाब्दस्य पदार्थधीपूर्वकत्वादिति युक्तः प्रश्न इत्यभिप्रेत्याऽऽह**—त्वंपदेति । **संदिग्धं हि जिज्ञास्यते । न चात्र संदेहोऽहं कर्ता भोक्तेत्यात्मनो निश्चितत्वादिति चेत्तत्राऽऽह**—कर्तृत्वादिकमिति । **अस्य चिद्धातोर्निजमनादिसिद्धं कर्तृत्वादि साहजिकमौपाधिकं वेत्येवं कर्तृत्वादेः सुषुप्तादावदर्शनेनाऽऽत्मधर्मत्वसंदेहात्तद्धर्मकत्वतद्रहितत्वाभ्यामनिश्चित आत्मन्युपपन्ना जिज्ञासेत्यर्थः ॥ ५९ ॥**

अ० टी०–एवं संसारनिरूपणफलमुपपन्नं प्रदर्श्य प्रथमं त्वंपदलक्ष्यार्थजिज्ञासामाह—**किं तु त्वंपदेति** । जाग्रद्भूगतयोर्जाग्रदवस्थापन्नयोः कर्तृत्वभोक्तृत्वयोरपोहमुखतस्त्वंपदलक्ष्यमर्थमवगन्तुमद्य मम वाञ्छा जातेति योजना । यद्यपि कर्तृत्वादिकं प्रतीच्यध्यस्तमिति शास्त्रारम्भे जीवप्रकरणे च प्रदर्शितं तथाऽपि तदपोहेन तत्साक्षि त्वंपदलक्ष्यं सम्यङ्न प्रदर्शितमतः सर्वदृश्यधर्मापवादेन केवलः प्रत्यगात्मा प्रदर्शयितव्य इत्यभिप्रेत्य कर्तृत्वादेरस्वाभाविकत्वमुक्तमप्यनुक्तमिव कृत्वा संदिहानः पृच्छति—**कर्तृत्वादिकमिति** । अस्य चैतन्यधातोश्चैतन्यैकस्वभावस्येति संबन्धः । सुगममन्यत् । कर्तृत्वादेः स्वाभाविकत्वे तदपोहो न शक्यः परकृतत्वे हेत्वपोहेनापोदितुं शक्योऽतोऽन्यकृतं चेत्कर्तृत्वादि तर्हि तदपवादेन साक्षात्प्रत्यग्रूपं प्रदर्शयेत्यभिप्रायः ॥ ५९ ॥

**सु० टी०—ननु ब्रह्मात्मैक्यजिज्ञासोः पदार्थजिज्ञासाऽनुपपन्ना व्यधिकरणत्वादित्याशङ्क्याऽऽह—**

**यावत्त्वंपदलक्ष्यवस्तुविषयो बोधो न मे वर्तते**
**तावन्मे बधिरेषु गीतमिव तच्छ्रौतं वचोऽनर्थकम् ।**
**तस्मात्त्वंपदलक्ष्यवस्तुविषयः कर्तृत्वभोक्तृत्वयो-**
**र्जाग्रद्भूगतयोरपोहमुखतो बोधो ममोत्पाद्यताम् ॥ ६० ॥**

यावदिति । **ब्रह्मात्मैक्यस्य वाक्यार्थत्वात्तस्य च शुद्धपदार्थबोधं विनाऽसंभवाद्युक्ता तज्जिज्ञासेत्यर्थः । प्रश्नमुपसंहरति**—तस्मादिति ॥ ६० ॥

अ० टी०—केवलप्रतीचोऽप्रदर्शने को दोष इति तत्राऽऽह—**यावदिति**। तच्छ्रौतं वचस्तत्त्वमस्यादिवाक्यमनर्थकं विरोधस्फुरणानपायात्केवलाद्वितीयवस्त्वाकाराग्रहादित्यर्थः। यस्मादेवं तस्मादिति सुगमम् ॥ ६० ॥

**सु० टी०—गुरुरुत्तरमाह—**

**कर्त्रादेरवभासकत्वमगमः शुद्धः स्वयंभास्वर-**
**श्चैतन्येन निजेन तेन भवतः कर्त्रादिबुद्धिभ्रमः ।**
**कूटस्थस्य चिदात्मनस्तव कुतः कर्तृत्वभोक्तृत्वयोः**
**शङ्का जागरितेऽपि कारकगणं कर्त्रादिकं पश्यतः॥ ६१ ॥**

कर्त्रादेरिति। **कर्तृभोक्तृप्रमातृत्वादेरित्यर्थः। आदिपदेन क्रियाकरणकर्मभोगतत्साधनभोग्यप्रमातत्करणप्रमेयाणां संग्रहः। बाधाभावे कथं भ्रमत्वमिति तत्राऽऽह**—कूटस्थस्येति। **विमतं दृश्यं विचारासहत्वाच्छुक्तिरजतवदित्यनुमानसहकृताद्वैतश्रुतिबाधितत्वादित्यर्थः ॥ ६१ ॥**

अ० टी०—आचार्य आह—**कर्त्रादेरिति**। शुद्धो दृश्यधर्मसंसर्गरहितः कुतो यतः स्वयंभास्वरः स्वयंप्रकाशः। न हि प्रकाशस्वभावस्य प्रकाश्यधर्मः स्वाभाविकः संभवतीत्यर्थः। अत एव निजेन स्वरूपभूतेन चैतन्येन कर्त्रादिकं विकारजातं पश्यतः साक्षिमात्रस्येति यावत्। एवंभूतस्य भवतस्तत्र कर्त्रादिबुद्धिरहं कर्तेत्यादिर्धीर्भ्रमो मिथ्याज्ञानमेव स्वाध्यस्ताहंकाराविवेकनिबन्धन इत्यर्थः। विमतः कर्तृत्वादिर्न द्रष्टृधर्मो दृश्यत्वाद्रूपादिवदित्यनुमानमाह—**तव कुत इति**। हेतोर्व्यभिचारमात्मन्याशङ्क्याऽऽह—**चिदात्मन इति**। चिद्रूपत्वमेव साधयति—**कूटस्थस्येति**। ज्ञातृत्वादिविकाररहितस्येत्यर्थः। यद्वा निजेन चैतन्येन यतस्त्वं कर्त्रादेरवभासकत्वमगमः स्वयंभास्वरतया शुद्धो दृश्यधर्मानास्कन्दितः संस्तेन हेतुना भवतस्तव कर्त्रादिबुद्धिरहं कर्तेत्याद्या धीर्भ्रमः। कुतो भ्रम इत्यपेक्षायामाह—**कूटस्थस्येति**। निर्विकाराचिदात्मतया कर्त्रादिकं कारकगणं पश्यतस्तव जागरितेऽपि कर्तृत्वभोक्तृत्वयोः शङ्का कुतः स्याद्दृश्यानां द्रष्टृधर्मत्वासंभवादित्यर्थः॥६१॥

**सु० टी०—भासकस्य भास्यधर्मत्वाभावं सदृष्टान्तमाह—**

**व्यापारं सकलस्य भासयति यो भास्वत्करो भास्करो**
**नासौ कर्तृतया जनस्य विदितो भूमौ द्युलोकस्थितः ।**
**एवं स्वे महिमन्यवस्थितवतः संघातमुत्पश्यतः**
**स्वव्यापारसमन्वितं तव कुतः कर्तृत्वमुत्प्रेक्षते ॥ ६२ ॥**

व्यापारमिति । **आत्मा कर्तृत्वादिशून्यस्तद्भासकत्वाद्यो यद्भासयति न स तद्धर्मा यथाऽऽदित्यो न लोकव्यापारधर्मा, इति ॥ ६२ ॥**

अ० टी०——ननु कूटस्थस्य कथं कर्त्रादिकारकगणद्रष्टृत्वमतो दृश्यदर्शनाय दर्शनक्रियाऽभ्युपेयाऽन्यथा द्रष्टृत्वानुपपत्तेरिति चेन्नेति दृष्टान्तेनोपपादयति—**व्यापारमिति ।** द्युलोके स्थितो यो भास्वत्करो भास्करो व्यापारं सकलस्य जगतो भासयति असौ भूमौ स्थितस्य जनस्य कर्तृतया न विदितो न हि सविता प्रतिविषयं प्रकाशं कुर्वन्केनापि विज्ञातोऽस्तीत्यर्थः । दार्ष्टान्तिकमाह—**एवमिति ।** अक्षरार्थः स्पष्टः । आत्माऽपि स्वरूपभूतचित्प्रकाशेन सवितृवदविक्रिय एव सर्वमवभासयत्यन्यथा तस्यापि कारकत्वेन द्रष्टृत्वाभावप्रसङ्गात्तस्मात्साक्षितामात्रेण सर्वावभासके त्वयि कर्तृत्वादिकमुत्प्रेक्षितुमपि न शक्यमिति भावः ॥ ६२ ॥

**सु० टी०—तर्हि किं धर्मः कर्तृत्वादिकमिति चेत्तत्राऽऽह—**

**भूतानि पञ्च तव मोहसमुद्भवानि**
**संघातरूपपरिणाममुपागतानि ।**
**कुर्वन्ति कर्म फलमश्नुवते च तेषां**
**साक्षी त्वमन्तरविलुप्तचिदेकरूपः ॥ ६३ ॥**

भूतानीति । **आविद्यकभौतिककार्यकरणसंघातस्यैव धर्म इत्यर्थः । किं तत्र प्रमाणमिति तत्राऽऽह**—साक्षीति । **साक्षित्वमेवाऽऽत्मनः कुत इति तत्राऽऽह**—अविलुप्तेति ॥ ६३ ॥

अ० टी०—कस्य धर्मस्तर्हि सर्वा विक्रियेत्यत आह—**भूतानीति । संघातरूपेति ।** देहद्वयाकारं परिणतानीत्यर्थः । तान्येव कर्म कुर्वन्ति तत्फलं चाश्नुवते । कर्तृत्वभोक्तृत्वलक्षणा विक्रिया साभासस्य भूतसंघातस्यैव तदविवेकात्त्वय्यध्यारोपितैवावभासते न त्वयि कोऽपि विकारोऽस्तीत्यर्थः । यतस्तेषां भूतानामन्तःसाक्षी यतोऽविलुप्तचिदेकरूप इति योजना ॥ ६३ ॥

**सु० टी०—कथमचेतनानामपि कर्तृत्वभोक्तृत्वे संभवत इत्याशङ्क्य चिच्छायात इति सदृष्टान्तं परिहरति—**

**क्षीरस्य पूर्णे चषके नियुक्तो**
**मणिर्यथा मारकतो महार्हः ।**
**क्षीरं समस्तं क्षणमात्रतस्त-**
**त्करोति तच्छायमनूनतेजाः ॥ ६४ ॥**

तथा तमःसंभवमच्छगन्त-
र्बहिर्जडिम्नाऽन्वितमन्तरात्मा ।[1]
जगच्चिदेकच्छवि चित्स्वरूपः
करोति सांनिध्यवशेन विश्वम् ॥ ६५ ॥

क्षीरस्येतिद्वाभ्याम् । तृतीयार्थे षष्ठी । यथा महार्हमणिच्छायापरया समस्तमपि क्षीरं तच्छायं भवत्येवं तमस्तत्संभवं विश्वमसङ्गस्याप्यात्मनः संनिधिमात्रेणैव तच्चिदाभासानुविद्धं चेतनमिव भवतीत्यर्थः । अस्तु स्वच्छाज्ञानबुद्ध्यादौ चिदाभासस्तामसभूतभौतिकादौ तु कथमिति तत्राऽऽह—अच्छमन्तारिति । तदपि सकलमन्तरधिष्ठानचैतन्यसंनिकर्षादच्छमेव तदात्मकत्वात् । बहिस्तु जडिम्ना जाड्येनान्वितं मायिकत्वात् । तेन चाऽऽभासेन स्वमहिमस्थ आत्मा सर्वमवभासयन्सर्वसाक्षी भवतीत्यर्थः ॥ ६४ ॥ ६५ ॥

अ० टी०—नन्ववभास्यसंबन्धं विना नावभासकत्वं संभवति संबन्धे च विक्रिया प्राप्तेति चेन्नाऽऽभासद्वाराऽवभासकत्वोपपत्तेरिति वक्तुं दृष्टान्तमाह—क्षीरस्येति । तच्छायं मरकतमणिच्छायाभासम् ॥ ६४ ॥

अ० टी०—दार्ष्टान्तिकमाह—तथा तम इति । यथा मरकतमणिः क्षीरपूर्णचषके निक्षिप्तः क्षीरेण संश्लिष्ट एवान्तःस्थितश्चषकस्थं क्षीरं मरकतमणिच्छायं स्वाकारतामापादयति तथाऽन्तरात्मा तमःसंभवं जगदन्तरच्छं चैतन्यसंनिविष्टाकारेण स्फटिकादिवन्निर्मलं बहिर्जडिम्नाऽन्वितं जाड्येनाऽऽस्कन्दितं चिदेकच्छवि चैतन्यच्छायं स्वचैतन्याभासव्याप्तं करोति सांनिध्यवशेन न विकारयोगेणेत्यर्थः । विश्वं जगदिति संबन्धः । सर्वं जगदित्यर्थः । चित्स्वरूप इत्यन्तरात्मविशेषणम् । अतोऽशेषस्य जगतश्चिदात्मन्यध्यस्तत्वादाध्यासिके च संबन्धे विकाराप्रसङ्गादविक्रिय एवाऽऽत्मा संनिधिसत्तामात्रेण स्वाध्यस्तं सर्वं चिच्छायं कुर्वन्नवभासमानोऽवभासक इति व्यपदेशभाग्भवतीति भावः ॥ ६५ ॥

सु० टी०—प्रतिसंघातमात्मभेदात्कथं वाक्यार्थसिद्धिरित्याशङ्क्यौपाधिक एवाऽऽत्मभेदो न स्वत इत्याह—

तान्येव कार्यकरणानि बहुप्रकारं
भेदं च बिभ्रति भवानपि तत्र लग्नः ।

---

१ ख. °म्नाचित° ।

भेदेन भाति जलपात्रनिविष्टमूर्ति-
मार्तण्डमण्डलवदन्वयमन्तरेण ॥ ६६ ॥

तान्येवेति । तज्जातीयान्येवेत्यर्थः । भेदं सुरनरतिर्यगादिरूपम् । कर्तृत्वादि चेति चार्थः। तत्र लग्नस्तत्रोपाधिगतचिदाभासाविविक्तः सन्भिन्न इव भातीत्यर्थः । दृष्टान्तमाह—जलेति । अन्वयं संबन्धम् । वास्तवमिति शेषः ॥ ६६ ॥

अ० टी०—तदेवं सर्वभूतभौतिकविक्रियाजातस्य साधकत्वात्स्वयं विक्रियारहितः कूटस्थचिद्रूप आत्मेत्युपपादितं तथाऽपि प्रतिशरीरमात्मभेदस्य प्रसिद्धत्वान्नाद्वैतब्रह्मभावयोग्यताऽस्यास्तीति चेन्नैवमुपाधिभेदनिबन्धनत्वाद्भेदावभासस्याकाशस्येव न स्वतो भेदसंभव इत्याह—तान्येवेति । यानि पञ्चमहाभूतविकारात्मकानि कार्यकरणानि तान्येव बहुप्रकारं देवमनुष्यतिर्यगादिरूपेण भेदं बिभ्रति चकारात्समष्टिब्रह्माण्डरूपेणाभेदं च बिभ्रति । भवानपि चिदात्मान्वयमन्तरेण वास्तवसंबन्धं विनाऽपि तत्र तेषु लग्नोऽभिमानेनाऽऽत्मभावमापन्नो भेदेन भाति । तथा चैकत्वमनेकत्वं च तवोपाधिनिबन्धनमेव न परमार्थमुपाधयश्च पञ्चभूतव्यतिरेकेण न सन्ति । पञ्चभूतानि च तत्कारणसाभासाज्ञानव्यतिरेकेण न सन्ति । अज्ञानं चाऽऽत्मन्यध्यस्तमिति न परमार्थतः कोऽपि कस्यापि भेदोऽस्ति । अतः कुतो जीवभेदशङ्केति भावः । अपरिच्छिन्नस्यासङ्गस्याप्यन्यत्र प्रवेशेन परिच्छिन्नतयाऽवभासे दृष्टान्तमाह—जलपात्रनिविष्टेति ॥ ६६ ॥

सु० टी०—समष्टिव्यष्टिदेहादिगतभेदस्याऽऽत्मन्यारोपे किं कारणमिति चेत्तत्राऽऽह—

अध्यात्ममेवमधिभूतमथाधिदैवं
सूत्रं विराजमपि पश्यसि साक्षिभूतः ।
साक्षित्वकारणमशेषजगन्निदान-
मज्ञानमात्मचिदवज्वलितं सदैव ॥ ६७ ॥

अध्यात्ममिति । अध्यात्मादिसाक्षित्वेन तद्गतस्य भेदस्याऽऽरोप इत्यर्थः । तत्राध्यात्मं देहादि । अधिभूतमाकाशादि । अधिदैवं करणाधिष्ठातृसूर्यादि । शेषं स्पष्टम् । नन्वसङ्गस्य कथं साक्ष्यप्रतियोगिकं साक्षित्वमपि स्यात्तत्राऽऽह—साक्षित्वकारणमिति । आत्माविविक्ताभासावद्योतिताज्ञानद्वारेत्यर्थः ॥ ६७ ॥

अ० टी०—एवं च सति समष्टिव्यष्टिसर्वशरीरसाक्षितया सर्वात्मैकत्वं सिद्धमित्याह—**अध्यात्ममिति** । यदि साक्षिभूत आत्मा तदा तस्य साक्ष्येण संबन्धो वाच्य एव तदा तदाभासोऽपि सदाऽनात्मसंबद्धः स्यादिति चेत्तत्राऽऽह—**साक्षित्वकारणमिति** । आत्मचिदवज्वलितमात्मचैतन्याभासखचितमशेषजगन्निदानमज्ञानमेव सदा साक्षित्वकारणम् । तथा च साक्ष्यसंबन्धोऽविद्याध्यस्तो न परमार्थ इत्यर्थः ॥ ६७ ॥

**सु० टी०—नन्वात्मैक्ये प्रमाणाभावान्न भेदस्याऽऽरोप इत्याशङ्क्याऽऽह—**

**देहव्यक्तिर्विप्रतीत्यास्पदत्वं**
**याता सर्वा तावकी तावकीव ।**
**देहव्यक्तिर्देहताकारणेन**
**तस्मादात्मा सर्वभूतस्थ एकः ॥ ६८ ॥**

देहव्यक्तिरिति । **विवादविषयत्वमापन्ना सर्वा देहव्यक्तिर्धर्मिणी तावकी त्वदात्मनाऽऽत्मवती भवितुमर्हतीत्यर्थः । देहताकारणेन देहत्वाद्धेतोः । तावकीव शिष्यदेहव्यक्तिरिवेति दृष्टान्तः । ततः किं तत्राऽऽह—** तस्मादिति ॥ **६८** ॥

अ० टी०—सर्वाण्येव कार्यकरणान्येकस्यैवाऽऽत्मन उपाधिभूतानीत्युक्तमर्थमनुमानेन साधयति—**देहव्यक्तिरिति** । विप्रतीत्यास्पदत्वं याता सर्वा देहव्यक्तिः पक्षः । सा तावकी त्वदीयैवेति साध्यनिर्देशः । देहताकारणेन देहव्यक्तित्वादिति हेतुनिर्देशः । तावकी देहव्यक्तिरिव संप्रतिपन्नदेहव्यक्तिरिवेत्युदाहरणोक्तिः । फलितार्थमाह—**तस्मादात्मा सर्वभूतस्थ एक इति** । विमतानि त्वच्छरीरातिरिक्तानि सर्वाणि त्वयैवाऽऽत्मनाऽऽत्मवन्ति शरीरत्वात्संप्रतिपन्नत्वच्छरीरवदिति प्रयोगः । तथा च सर्वशरीरेष्वात्मैक्यं सिद्धमित्यर्थः ॥ ६८ ॥

**सु० टी०—अत्रैवानुमानान्तरमाह—**

**संविद्व्यक्तिर्विप्रतीत्यास्पदत्वं**
**याता सर्वा तावकी तावकीव ।**
**संविद्व्यक्तिः संविदात्मत्वहेतो-**
**स्तस्मादात्मा सर्वभूतस्थ एकः ॥ ६९ ॥**

बुद्धिव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
बुद्धिव्यक्तिर्बुद्धिताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७० ॥

अक्षव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
अक्षव्यक्तिस्त्वक्षताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७१ ॥

ज्ञानव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
ज्ञानव्यक्तिर्ज्ञानताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७२ ॥

रागव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
रागव्यक्ती रागताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७३ ॥

द्वेषव्यक्तिर्विप्रतीत्यास्पदत्वं
याता सर्वा तावकी तावकीव ।
द्वेषव्यक्तिर्द्वेषताकारणेन
तस्मादात्मा सर्वभूतस्थ एकः ॥ ७४ ॥

संविद्व्यक्तिरिति । अनावृतचिद्व्यक्तिः । एवमस्थूलदेहविषयं बुद्धिव्यक्तिरक्षव्यक्तिरिति । वृत्तिविषयं च ज्ञानादि द्वेषव्यक्तिपर्यन्तम् । प्रयोगस्तु विप्रतिपन्नाः कार्यकरणसंघाताः शिष्यदेहस्थेनाऽऽत्मनाऽऽत्मवन्तः संघातत्वात्तदीयसंघातवदिति लाघवतर्केणैकात्म्यसाधक इति ॥ ६१—७४ ॥

अ० टी०—*स्थूलदेहभेदादात्मभेदशङ्कामनुमानेनोद्धृत्य बुद्धिभेदादपि भेदशङ्कामपाकरोति—**बुद्धिव्यक्तिरिति** । पूर्ववद्योजना ॥ ६९ ॥

अ० टी०—बाह्येन्द्रियविषयेऽप्याह—**अक्षव्यक्तिरिति** । अत्र प्रत्येकमपि चक्षुरादिकं पक्षीकृत्य प्रयोक्तव्यं चक्षुर्वृत्तिर्विप्रतीत्यास्पदत्वामित्यादि ॥ ७० ॥

अ० टी०—बुद्धिवृत्तिपक्षीकारेणाप्याह—**ज्ञानव्यक्तिरिति** ॥ ७१ ॥

अ० टी०—प्रमाणफलविषयमप्यनुमानमाह—**संविद्यक्तिरिति** ॥ ७२ ॥

अ० टी०—राग इच्छा तत्राप्याह—**रागव्यक्तिरिति** ॥ ७३ ॥

अ० टी०—द्वेषो मत्सरस्तत्राप्याह—**द्वेषव्यक्तिरिति** ॥ ७४ ॥

**सु० टी०—फलितमाह—**

**एवं सतीदमविवेकनिबन्धनं ते**
**कर्तृत्वमात्मनि विभाति न वस्तुभूतम् ।**
**बालेन कल्पितमतीव विशुद्धरूपे**
**व्योम्नीव भूम्नि मलिनत्वमबोधहेतोः ॥ ७५ ॥**

एवं सतीति । **तत्र दृष्टान्तमाह**—बालेनेति ॥ ७५ ॥

अ० टी०—एवमनुक्तेष्वप्यनुमानं प्रयोक्तव्यं तस्मात्सर्वसाक्षित्वात्कर्तृत्वप्रमुखं संसारित्वमात्मन्यविवेकिभिः कल्पितमेव न वस्तुभूतमिति सिद्धमित्युपसंहरति—**एवं सतीति** । आत्मनि भूम्नीति संबन्धः । निगदव्याख्यातं पद्यम् ॥ ७५ ॥

**सु० टी०—ननु संघातात्मकानां भूतानामादित्यादिज्योतिर्गणोपकारादेव कर्तृत्वाद्युपपत्तेः किं चैतन्येन चिदाभासेन वेत्याशङ्क्य समाधत्ते—**

**बाह्यैरसौ रविनिशाकरवह्निवाग्भि-**
**र्ज्योतिर्गणैरुपकृतोऽपि हि कर्मजातम् ।**
**निर्वर्तयन्न खलु तावकमन्तरेण**
**चैतन्यसंनिधिबलं पुरुषः करोति ॥ ७६ ॥**

बाह्यैरिति । **स्वप्ने मनस एव विषयत्वेन तत्र ज्योतिरन्तराभावात् 'अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि किंज्योतिरेवायं पुरुष इत्यात्मैवास्य ज्योतिर्भवति' [ बृह० ४ । ३ । ६ ] इतिश्रुतेश्चैतन्यज्योतिर्मात्राधीन एव व्यवहारः संभवतीति**

* मूलक्रमस्तु पूर्वटीकानुसारेण ।

**जागरेऽपि घटमहं जानामीत्यादिस्तदधीन एवेति न तद्वैयर्थ्यशङ्केत्यर्थः ॥ ७६ ॥**

अ० टी०—यद्येवं कर्तृत्वभोक्तृत्वादिः कार्यकरणधर्मोऽनात्मधर्मस्तदा किमात्मना तत्र कृत्यमस्ति संघातप्रकाशनमेव संघातातिरिक्तात्मकृत्यमिति चेन्नाऽऽदित्यादिज्योतिर्भिरेव तत्सिद्धेरित्यत आह—**बाह्यैरसाविति** । असौ पुरुषः संघातात्मा कर्मजातमासनोत्थानगमनागमनादिरूपं निर्वर्तयन्बाह्यैर्देहबहिःस्थितैः रव्यादिभिर्ज्योतिर्गणैरुपकृतोऽपि प्रकाशेनानुगृहीतोऽपि तावकं त्वत्स्वरूपभूतं चैतन्यसंनिधिबलमाविर्भूतचिदाभासव्याप्तिरूपमात्मसांनिध्यबलमन्तरेण न खलु करोति स्वव्यापारं न निर्वर्तयतीति योजना । ‘ अस्तमित आदित्ये याज्ञवल्क्य चन्द्रमस्यस्तमिते शान्तेऽग्नौ शान्तायां वाचि ’ स्वप्नावस्थायामपि ‘ आत्मनैवायं ज्योतिषाऽऽस्ते पल्ययते कर्म कुरुते विपल्येति ’ [ बृ० ४ । ३ । ६ ] इति श्रुतेरवस्थान्तरेऽपि बाह्यज्योतिःप्रकाशितोऽप्यान्तरचैतन्यज्योतिःप्रकाशं विना न किमपि पुरुषः कर्तुं शक्नोतीत्यर्थः ॥ ७६ ॥

**सु० टी०—तर्ह्यव्यभिचाराच्चैतन्यज्योतिष एव समस्तव्यवहारोपयोगित्वमस्तु किं बाह्यज्योतिषेत्याशङ्क्याऽऽह—**

**ज्योतिर्द्वयान्तरित एव हि कर्मजातं**
**सर्वं करोति पुरुषोऽन्नमयः सदैव ।**
**कर्मादिकारणविनिर्मितमस्य बाह्यं**
**ज्योतिस्त्वनित्यमनिमित्तकमान्तरं चित् ॥ ७७ ॥**

ज्योतिर्द्वयेति । **इन्द्रियैरर्थोपलब्धिर्जागरितमिति विश्वजीवव्यवहारस्येन्द्रियसापेक्षत्वनियमादिन्द्रियाणां च बाह्यज्योतिरन्तरेणाप्रवृत्तेस्तदपेक्षाऽवश्यंभाविनीति न तद्वैयर्थ्यमित्यर्थः । नन्वन्वयव्यतिरेकाभ्यामस्त्वन्नमयपुंव्यवहारस्याऽऽदित्याद्यपेक्षा चैतन्यापेक्षा तु नोपपद्यते केवलव्यतिरेकाभावादिति चेत्तत्राऽऽह**—कर्मादीति । **व्यवहारहेतुत्वाविशेषेऽप्यादित्यादीनामनित्यत्वाद्व्यतिरेकित्वं न चैतन्यस्य नित्यत्वादन्यथा मृतशरीरेणापि व्यवहारः स्यादित्यर्थः ॥ ७७ ॥**

अ० टी०—यदि जागरणे बाह्यज्योतिःसद्भावेऽप्यान्तरज्योतिरपेक्षा तदा स्वप्ने बाह्यज्योतिरपेक्षाऽपि तुल्या स्यादविशेषादिति चेत्तत्राऽऽह—**ज्योतिरिति** । अन्नमयः पुरुषः स्थूलसंघातात्मा ज्योतिर्द्वयान्तरितो बहिरादित्यादिज्योतिषाऽन्तश्चैतन्यज्योतिषा व्याप्त एव हि सर्वं कर्मजातं सर्वेन्द्रियैः करोति तस्य भौतिकत्वेन भौतिकज्योतिरुपकारापेक्षणात् ।

आन्तरस्य लिङ्गात्मनोऽपि यद्यपि भौतिकत्वं तथाऽपि तस्य नित्यं चैतन्यज्योतिर्मयत्वादान्तरेणैव ज्योतिषा तस्य व्यवहारोपपत्तिरिति न स्वप्नादौ बाह्यज्योतिरपेक्षेति भावः । तथाऽपि जागरिते ज्योतिर्द्वयान्तारेतत्वमस्य न सिध्यति तत्रान्तज्योतिःसद्भावे मानाभावात्तत्र कर्मादिकार्यस्याऽऽदित्यादिज्योतिषैव सिद्धेरित्यत आह—कर्मादीति । अस्य संघातात्मनो बाह्यं ज्योतिस्त्वनित्यं यतः कर्मादिकारणत्वेन विनिर्मितं लोकयात्रामात्रार्थत्वेन सृष्टम् । यद्वा कर्मादिकारणेन कर्मकरणगमनागमनादिलक्षणेन लिङ्गेन विनिर्मितं विस्पष्टं नितरां मितमान्तरज्योतिरनुमातुं व्याप्तिग्रहणस्थानत्वेन निर्णीतम् । अथ वा व्यवहर्तुः प्राणिनो यत्कर्मज्ञानपूर्वप्रज्ञादि तदेव कारणं तेन निर्मितमुपचितं बाह्यं ज्योतिरस्य व्यवहर्तुरनित्यं सर्वदा सर्वव्यवहारेष्वननुवृत्तेरित्यर्थः । चिच्चैतन्यं त्वान्तरं ज्योतिरनिमित्तकमनागन्तुकमनागमापायि सर्वावस्थासु प्रकाशतयाऽनुगतं नित्यमित्यर्थः । एतदुक्तं भवति—' आदित्येनैवायं ज्योतिषाऽऽस्ते ' [ बृ० ४ । ३ । २ ] इत्यादिबाह्यज्योतिरुपन्यासो न तत्सद्भावविधानार्थः किं तु संघातस्य व्यवहारः प्रकाशव्याप्तो यथा बहिः क्षेत्रादिगमनव्यवहार आदित्यादिज्योतिषा व्याप्त इति व्याप्तिप्रदर्शनार्थः । अतो न तैरेवायं व्यवहरति तेषामभावेऽपि गाढान्धकारावृतगिरिगुहादिषु स्वप्ने चास्य व्यवहारोपलम्भात् । भवितव्यं च तत्र प्रकाशकेन ज्योतिषेति सामान्यतः सिद्धौ परिशेषादात्मज्योतिरान्तरं तत्र प्रकाशकतया सिध्यत्सर्वावस्थाव्यवहारहेतुतयैव सिध्यति । न हि बुद्ध्यन्तर्ज्योतिःप्रकाशनं विना कर्मणि कोऽपि कस्यचिद्व्यवहारो दृष्टः । सुषुप्त्यवस्थायां सत्स्वपि बाह्यज्योतिःषु व्यवहारादर्शनात् । तस्मान्नित्येनाऽऽत्मज्योतिषा नित्यं व्यवहरसि बाह्यं तु ज्योतिर्जातं तवेन्द्रियप्रवृत्तौ सहकारिमात्रमिति सर्वमनवद्यमिति ॥ ७७ ॥

सु० टी०—ननु कथमान्तरं चैतन्यं बाह्यव्यवहारोपयोगीति चेत्तत्राऽऽह—

श्रोत्रादिजन्यमतिवृत्तिषु बाह्यशब्दा-
द्यर्थाकृतिर्विशति कर्मवशेन कर्तुः ।
बोधाकृतिस्तु तव संनिधिमात्रहेतु-
र्धीवृत्तिषु प्रविशति स्वरसेन नित्यम् ॥ ७८ ॥

श्रोत्रादीति । कर्तुः कर्मवशेन श्रोत्रादिजन्यमतिवृत्तिषु बाह्यशब्दाद्यर्थाकृतिर्विशतीति संबन्धः । ततः किमिति चेत्तत्राऽऽह—बोधाकृतिरिति । बुद्धिवृत्तिप्रवेशद्वारा बाह्यार्थसंबन्धसंभवादान्तरस्यापि बाह्यार्थप्रकाशकत्वाविरोध इत्यर्थः । ननु कथं तत्प्रवेशोऽपि कूटस्थत्वादिति चेत्त-

त्याऽऽह—स्वरसेनेति । विकारं विनेत्यर्थः । तत्र हेतुमाह—तत्र संनिधिमात्रहेतुरिति । नित्यमिति बाह्यवस्संनिधिकादाचित्कत्वं वारयति ॥ ७८ ॥

अ० टी०—ननु नित्यत्वेऽप्यान्तरज्योतिषस्तत्कृतोपकार आगन्तुकः स्यादतश्च जागरिते तदभावोऽपि स्यादन्यथा यदा बाह्यं ज्योतिरस्ति तदा स्वप्नेऽपि तदुपकारः प्राप्नुयादिति चेन्नैवमित्याह—**श्रोत्रादिजन्येति** । अथ बाह्यस्य ज्योतिषोऽनित्यत्वमान्तरस्य नित्यत्वं चोक्तं स्फुटयति—**श्रोत्रादिजन्येति** । कर्तुः संघातात्मनः कर्मवशेन भोगहेतुकर्मप्रयुक्तया श्रोत्रादिद्वारा जन्या या मतिवृत्तयो बुद्धिपरिणामरूपास्तासु बाह्यशब्दाद्यर्थाकृतिस्तत्तदर्थव्याप्त्या तत्तदर्थाकारो विशति तासां वृत्तीनां स्वसंबद्धाकारता भवतीत्यर्थः । ततो बाह्येन्द्रियग्राह्यज्योतिषस्तत्तदर्थाकारबुद्धिवृत्त्युत्पादकत्वेनैव प्रकाशकत्वाद्वृत्तीनां चानित्यत्वादागन्तुकतेति भावः । तास्वेव धीवृत्तिषु या बोधाकृतिश्चिदाकारः सा तत्र संनिधिमात्रहेतुरधिष्ठानतयाऽनुगममात्रहेतुका नित्यं सर्वदा स्वरसेन व्यापारव्यवधानं विना प्रविशति प्रकाशस्य स्वरूपत्वाद्धीवृत्तीनां तत्राध्यासान्नेन्द्रियव्यापारादिव्यवधानापेक्षाऽत्रास्तीति नित्यमेवाऽऽत्मज्योतिरित्यर्थः । तथा च शब्दादीनां संबन्धाच्छ्रोत्रादिद्वारा कर्तुः कर्मप्रयुक्ततया बुद्धिवृत्तयो जायन्ते । तास्वेव बाह्यशब्दादिज्योतिरुपकारलक्षणा तदाकृतिर्भवति । इन्द्रियोपरमस्थाने कर्मोपरमहेतुके न तत्प्राप्तिरिति न स्वप्नेऽपि बाह्यज्योतिरुपकारशङ्केति भावः ॥ ७८ ॥

सु० टी०—तदेव दृष्टान्तेनाऽऽह—

स्वाभाविकी हि वियदन्वितता घटादेः
क्षीरादिवस्तुघटना पुनरन्यहेतुः ।
एवं धियामपि चिदन्वितताऽनिमित्तं
शब्दादिवस्तुघटना खलु कर्महेतुः ॥ ७९ ॥

स्वाभाविकीति । अन्यहेतुः कर्मादिनिमित्ता । अनिमित्तेति च्छेदः । सुबोधमन्यत् ॥ ७९ ॥

अ० टी०—नन्वान्तरज्योतिरुपकारोऽप्यागन्तुकः स्याज्ज्योतिरुपकारत्वाद्बाह्यज्योतिरुपकारवदित्यनुमानमाशङ्क्य तस्याप्रयोजकतां वदन्नित्यचित्संसर्गस्योक्तं निरुपाधिकत्वं साधयति—**स्वाभाविकीति** । घटादिर्ह्यन्यसंसर्गित्वेन प्रसिद्धस्तस्य घटादेर्वियदन्वितता व्योमव्याप्यत्वात्स्वाभाविक्युत्पत्तित एव सिद्धा न तत्र हेत्वन्तरनिबन्धनतेत्येतत्प्र-

---

१ ख. °मित्ताश° । २ ख. °नास्य तु क° ।

सिद्धमित्यर्थः । तस्यैव क्षीरादिवस्तुघटनासंबन्धः पुनरन्यहेतुः प्रापयितृतन्त्रोऽनित्यः कादाचित्क इत्यर्थः । दार्ष्टान्तिकमाह—**एवमिति** । अनिमित्तमिति पदच्छेदः । निमित्तरहितं यथा स्यात्तथा धियां चिदन्वितत्वोत्पत्तिसिद्धा नित्यैवेत्यर्थः । शब्दादीति स्पष्टार्थम् । तथा च वस्तूनां स्वभाववैचित्र्यादनुमानमप्रयोजकमिति भावः ॥ ७९ ॥

सु० टी०—किं पुनरेवंभूतबोधाकृतिसद्भावे प्रमाणमिति चेत्तत्राऽऽह—

**संवेदनं यदिह मानफलं प्रसिद्धं**
**तच्च प्रमातरि विकारिणि निष्ठितं नः ।**
**तस्य प्रमातुरपि साक्षितयाऽन्तरात्मा**
**सर्वस्य तिष्ठति भवानविकाररूपः[1] ॥ ८० ॥**

संवेदनमिति । सर्ववादिनां व्यवहारहेतुत्वेन यत्संवेदनं प्रमाणफलं प्रसिद्धं तदिह वेदान्ते बुद्धिवृत्तिप्रविष्टमात्मचैतन्यमेवेत्यर्थः । ननु संवेदनं नाम प्राकट्यं तच्चाऽऽत्मव्यापारादुत्पन्नं विषयधर्मो नाऽऽत्मधर्म इति तत्राऽऽह—तच्चेति । प्रमेयनिष्ठत्वे रूपादिवत्प्रमातृव्यापारनाशे व्यवतिष्ठते तत्साधारणं च स्यात्तस्मादात्मचैतन्यमेव बुद्धिवृत्त्यवच्छिन्नं संवेदनं नान्यदित्यर्थः । एवं प्रमातृनिष्ठत्वेऽप्यनात्मत्वं तुल्यमिति चेत्तत्राऽऽह—तस्येति । व्यापारोपहितस्यानित्यत्वादनात्मत्वेऽपि निरुपाधिकस्य नित्यत्वादात्मत्वाविरोध इत्यर्थः ॥ ८० ॥

अ० टी०—ननु बोधाकृतिर्न धीवृत्तिषु प्रसिद्धेति चेन्न प्रमाणफलत्वेन सर्वप्रसिद्धत्वादित्याह—**संवेदनमिति** । इह व्यवहारभूमौ यत्संवेदनं प्रमित्याख्यं मानफलं प्रसिद्धं चक्षुरादिद्वारकबुद्धिवृत्तौ प्रविष्टं सन्मानफलत्वेन प्रसिद्धमित्यर्थः । भवतु प्रसिद्धं तथाऽपि तस्याऽऽत्मनिष्ठत्वं विषयनिष्ठत्वं वा स्यान्न बुद्धिवृत्तिगतत्वमिति चेत्तत्राऽऽह—**तच्चेति** । तच्च संवेदनं नोऽस्माकं मते प्रमातरि निष्ठितम् । किंलक्षणे प्रमातरि विकारिणि । प्रमाणवृत्त्याश्रयो हि प्रमाता वृत्तिश्च परिणामः प्रमातृविकार एवेति सविकार एव प्रमाता भवति विकारित्वं चान्तःकरणस्य नाऽऽत्मनस्तस्य कूटस्थत्वात् । प्रमाणफलं च प्रमात्राश्रयं युक्तं न विषयाश्रयमिदमहं जानामीति प्रमात्राश्रयत्वेनैव तस्यानुभवात् । तथाचाऽऽत्मस्वरूपचैतन्यमेव प्रमातृगतचिदाभासाविविक्तं प्रमातृनिष्ठं तद्गताभासावसानं सन्मानफलताव्यपदेशभाग्भवति । तस्मात्परिणाम्यन्तःकरणगतमेव मानफलं न साक्षाच्चिदात्मगतं नापि विषयगतं चिदात्मविषययोस्तु परिणाम्यन्तःकरणव्याप्तिनिबन्धनं प्रमित्याश्रयत्वभानमित्यभिप्रायः । यदि परिणामिन एव प्रमातृत्वं तत्फलभोक्तृत्वं च तर्हि तत्र किमात्मना कार्यमित्यत आह—**तस्य प्रमातुर-**

---

१ ख. भूरः ।

**पीति** । प्रमातुः सर्वस्यापि साक्षितया तिष्ठतीत्यन्वयः । विकारिणः प्रमातुस्तद्विकारजातस्य तद्ज्ञातविषयादेश्च सर्वस्य साक्षितयेत्यर्थः । साक्षित्वेऽपि विकारप्राप्तिमाशङ्क्याऽऽह—**अविकाररूप इति** । विकाररहित इत्यर्थः । अविकारत्वं साधयति—**अन्तरात्मेति** । परिणामिनः स्वयं विकारापन्नस्य स्वविकारसाक्षिता संभवतीत्यतः साक्षित्वमात्मनः कृत्यं तद्वशात्परिणामिनः प्रमातृत्वादित्यभिप्रायः ॥ ८० ॥

**सु० टी०—कथमविकारित्वमात्मनोऽहं कर्ताऽहं भोक्तेति विकारानुभवादिति चेत्तत्राऽऽह—**

**कर्त्रादिसंनिधिबलेन तवापि कर्तृ-**
**भोक्तृप्रमातृवपुरापतति क्रमेण ।**
**तद्बुद्धिसंश्रयमनात्मगतं प्रतीचि**
**शुद्धेऽपि पश्यसि तमःपटलावृताक्षः ॥ ८१ ॥**

कर्त्रादीति । **कर्तृत्वादिधीरनात्मान्तःकरणविषया न त्वात्मविषया किंत्वविवेकादात्मन्यारोप्यत इत्यर्थः ॥ ८१ ॥**

अ० टी०—यद्येवं प्रमातृत्वादिर्बुद्धिगत एव न प्रत्यगात्मगतः प्रत्यगात्मा तु स्वयंप्रकाशस्तत्साक्षी तर्हि कथमात्मनि प्रमातृत्वादिप्राप्तिर्येन तत्र तत्प्रतीयत इति चेत्तत्राऽऽह—**कर्त्रादिसंनिधीति** । जपाकुसुमादिसंनिहितस्फटिके लौहित्यादिप्रतीतिवत्कर्तृत्वादिधर्मकबुद्ध्यादिषु साक्षितया संनिहिते प्रत्यगात्मनि कर्तृत्वादिप्रतीतिरविवेकनिबन्धनेति तात्पर्यार्थः । अक्षरार्थोऽतिरोहितः । अविवेककृतां भ्रान्तिमेवानुभवानुसारेण विशदयति—**तद्बुद्धिसंश्रयमिति** । तत्कर्तृत्वाद्यज्ञानावृते निजतत्त्वे कर्तृत्वादिधर्मकबुद्ध्याद्यध्यासादाभासगतमप्याभासाविवेकादात्मनि पश्यसीत्यर्थः ॥ ८१ ॥

**सु० टी—अस्तु पारमार्थिकं कर्तृत्वादि नाऽऽरोपितमिति चेत्तत्राऽऽह—**

**कर्तृत्वादि च दृश्यवर्गपतितं द्रष्टुः स्वभावः कथं**
**संभाव्येत तव प्रसन्नविमलस्वच्छप्रकाशात्मनः ।**
**यद्यद्दृश्यतया जगत्यभिमतं सर्वस्य तत्तद्भवे-**
**द्दूरं द्रष्टुरिति प्रसिद्धमखिलं भूभृत्समुद्रादिकम् ॥ ८२ ॥**

कर्तृत्वादीति । **दृश्यस्य द्रष्टृत्वानुपपत्तेरित्यर्थः । काऽनुपपत्तिरिति चेत्तत्राऽऽह—**यद्यदिति ॥ **८२** ॥

---

१ ख. ग. °तिक्रमेण ।

अ० टी०—तदेवं कर्तृत्वादि न द्रष्टृगतं दृश्यत्वाद्रूपादिवदित्युक्तं तत्र दृश्यत्वेऽपि द्रष्टृधर्मता किं न स्यादित्यप्रयोजकतामाशङ्क्य द्रष्टृधर्मत्वे दृश्यत्वासिद्धिश्चैतन्यवदित्यभिप्रेत्याऽऽह—**कर्तृत्वादि चेति** । द्रष्टुस्तवेति संबन्धः । कर्तृत्वादेर्दृश्यवर्गान्तःपातित्वमागमापायित्वादिति द्रष्टव्यम् । तस्य द्रष्टुः स्वभावत्वासंभवसाधनाय विशेषणम्—**प्रसन्नेति** । प्रसन्नत्वमविकृतत्वं विमलत्वमुत्पत्त्यादिमलरहितत्वं स्वच्छत्वमसङ्गत्वमेवंभूतो यः प्रकाशकः स एवाऽऽत्मा स्वरूपं यस्य तस्य तवेत्यर्थः । परिणाम्यागमापायिपराधीनसत्ताकं न तद्विरुद्धस्याऽऽत्मनः स्वभावः संभाव्यत इत्युक्तं भवति । एवमनभ्युपगमे व्याप्तिविरोधः प्रसज्यत इत्याह—**यद्यदिति** । सर्वस्य द्रष्टुरिति संबन्धः । **दूरमिति** । असंसृष्टमित्यर्थः ॥ ८२ ॥

**सु० टी०—अत्रैव हेत्वन्तरमाह—**

**एतस्माच्च न जाग्रतस्तव भवेत्स्वाभाविकी कर्तृता**
**यद्येषा स्वत एव किं न भवति स्वप्नेऽपि ते तिष्ठतः ।**
**यत्स्वप्ने परिपश्यसि त्वमखिलं तन्मायया निर्मितं**
**कर्तृत्वादि न सत्यमत्र घटते कात्स्न्र्यानभिव्यक्तितः ॥८३॥**

एतस्मादिति । **यद्येषा कर्तृता जाग्रतः स्वाभाविकी भवेत्तर्हि स्वप्नेऽपि तिष्ठतः किं न भवेत्तस्मात्स्वप्न इव जागरेऽपि नैषा परमार्थिकीत्यर्थः । दृष्टान्तो विषम इत्याशङ्क्याऽऽह**—यत्स्वप्न इति । **स्वप्नव्यवहारस्य मायिकत्वे सौत्रं हेतुमाह**—कात्स्न्र्येति । **इन्द्रजालवदुचितसामग्रीं विना जायमानत्वादित्यर्थः ॥ ८३ ॥**

अ० टी०—तदेवं ज्योतिर्द्वयान्तारेत एवेत्यारभ्येयता ग्रन्थेन द्रष्टृदृश्यभावं साक्षिसाक्ष्यभावं चान्वयव्यतिरेकाभ्यामुपपादयता 'आत्मनैवायं ज्योतिषाऽऽस्ते' [ बृ० ४ । ३ । ६ ] इत्यादिश्रुत्यनुगतार्थो विशदीकृत इदानीमागमापायितदवध्यन्वयव्यतिरेकपरं स यत्र प्रस्वपितीत्यादिवाक्यमाश्रित्यापि कर्तृत्वादिप्रहाणेन विशुद्धचिद्रूपत्वमात्मनो विशदयति—**एतस्माच्चेति** । 'स यत्र प्रस्वपित्यस्य लोकस्य सर्वावतो मात्रामुपादाय स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा' [ बृ० दा० ४ । ३ । ९ ] इतिश्रुतौ स्वप्ने जाग्रद्गतकर्तृत्वादिप्रहाणेन नूतनकर्तृत्वादिनिर्माणश्रवणादेतस्माच्च हेतोस्तव जाग्रतो जाग्रदवस्थापन्नस्य कर्तृता न स्वाभाविकी भवेत् । कुत इत्यत आह—**यद्येषेति** । एषा कर्तृता यदि स्वत एव स्वाभाविक्येव स्यात्तदा स्वप्नेऽपि तिष्ठतस्ते तव किं न भवति कस्मान्न स्यात् । तथा चावस्थान्तरे त्वयि व्यतिरेकदर्शनात्कर्तृत्वादिर्न तव स्वाभाविक

इति नित्यशुद्ध एव सदा त्वमित्यर्थः । ननु जागरित इव स्वप्नेऽपि व्यवहारो दृश्यतेऽतः कथं जाग्रद्व्यवहारस्य स्वप्ने व्यभिचार इति चेन्मैवं स्वाप्नव्यवहारस्य मायामात्रत्वादित्याह—**यत्स्वप्न इति** । स्वाप्नव्यहारस्य मायामयत्वेनासत्यत्वे 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' [ ब्र० सू० ३ । २ । ३ ] इतिसूत्रोक्तं हेतुं पातयति—**कार्त्स्न्यानभिव्यक्तित इति** ॥ ८३ ॥

**सु० टी०—इदं चाकार्त्स्न्यं यदभावः स्वप्न इत्याह—**

**कार्त्स्न्यं हीष्टमबाधनं न खलु तत्स्वप्नस्य जाग्रद्धिया**
**बाधाद्बाधितमेव सत्यमिति चेन्नैवं विरोधान्मिथः ।**
**सत्यत्वे नहि बाधितत्वघटना बाधे च सत्यं कुतः**
**सत्यं बाधितमित्यतीव पदयोः संबन्धिता दुर्घटा ॥ ८४ ॥**

कार्त्स्न्यं हीति । **आख्यातवादी शङ्कते**—बाधितमेवेति । **बाधस्य भेदग्रहमात्रत्वेन सत्यत्वाविरोधित्वादित्यर्थः । परिहरति**—नैवमिति । **सत्यत्वबाध्यत्वयोरिति शेषः । पूर्वधीभ्रमत्वनिश्चयस्यैव बाधत्वेन प्रसिद्धेरित्यर्थः । परस्पराभावव्याप्यतारूपं विरोधं व्यनक्ति**—सत्यत्व इति । **स्ववचनविरोधमप्याह**—सत्यमिति ॥ ८४ ॥

अ० टी०—हेत्वर्थं विशदयति—**कार्त्स्न्यं हीष्टमिति** । स्वप्ने व्यवह्रियमाणपदार्थोचितदेशकालादिसद्भावः कार्त्स्न्यं तद्यद्यपि स्वप्नदशायामबाधितमुचितमिव प्रतीयते तथाऽपि तस्य जागरिते विसंवादात्तद्बाध्यते प्रतीतमपि वस्तुतस्तत्र नाभूदिति हि जाग्रदवस्थायां तदवगम्यतेऽतो देशतः कालतो वस्तुतश्च यदबाधनं व्यवह्रियमाणार्थानां तत्कार्त्स्न्यमिष्टं हीति यत इति योजना । भवतु स्वप्नेऽपि कार्त्स्न्यं नेत्याह—**न खल्विति** । तदबाधलक्षणं कार्त्स्न्यमित्यर्थः । भवतु जाग्रद्धिया स्वप्नस्य बाधस्तथाऽपि कुतोऽस्यासत्यता सत्यमिथ्याविभागस्यासिद्धेरिति कश्चिच्छङ्कते—**बाधितमेव सत्यमिति चेदिति** । बाधितमपि सत्यमेवेति चेदिति योजना । व्याघातान्नेयं शङ्कावतरतीति परिहरति—**नैवं विरोधान्मिथ इति** । विरोधमेव स्फोरयति—**सत्यत्व इति** । सत्यपदं हि लोके बाधानर्हे वस्तुनि व्युत्पन्नं बाध्यपदं च सत्यपदविषयादन्यस्मिन्विषये प्रसिद्धमतः सत्यं बाध्यमित्यनयोरेकस्मिन्विषये सहप्रयोगो दुर्घटो विरुद्धस्वभावयोरैक्यायोगादतो व्युत्पत्तिविरुद्धं बाधितस्य सत्यत्वमित्यर्थः । व्युत्पत्त्यनुभव एव विभागहेतुरिति भावः ॥ ८४ ॥

**सु० टी०—ननु 'मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्' [ ब्र० सू० ३ । २ । ३ ] इति स्वप्नस्य मिथ्यात्वसिद्ध्यर्थं दृष्टान्तीकृत-**

मणिमन्त्रादिलक्षणमायायाः सत्यत्वेन स्वप्नस्येव मिथ्यात्वं दुर्लभं कुतस्तरां तद्दृष्टान्तेन जागरमिथ्यात्वसिद्धिरिति चेत्तत्राऽऽह—

मायामेनां जागरे लोकसिद्धा-
मुक्त्वा तद्वत्स्वप्नमायां विविच्य ।
शक्तिव्याप्ती तत्र सिद्धे गृहीत्वा
मायासिद्धं जागरं साधयामः ॥ ८५ ॥

मायामिति । मायायाः सत्यत्ववादिनं प्रति जागरे लोकसिद्धां मायां मिथ्यात्वेन प्रसाध्य तद्दृष्टान्तेन स्वप्नमायां मिथ्यात्वेन विविच्य तत्र सिद्धे शक्तिव्याप्ती गृहीत्वा जागरे मायिकत्वं साधयाम इत्यर्थः । इयं च प्रतिज्ञा ॥ ८५ ॥

अ० टी०—ननु स्वप्नस्याविद्यामयत्वं भ्रान्तित्वं वा वक्तुं युक्तं न मायामयत्वं मायाया अभ्रान्तेषु मायाविषु प्रसिद्धेः स्वप्नस्य च भ्रान्तपुरुषनिष्ठत्वादिति मायाविद्ययोर्भेदमङ्गीकुर्वतामिह प्रत्यवस्थानावसरमाशङ्क्य तदनवसरत्वाय मायाविद्ययोरभेदं साधयितुमुपक्रमते—**मायामेनामित्यादिना** । या माया जागरे जाग्रदवस्थायां लोकव्यवहारे सिद्धा तामेनां प्रसिद्धामुक्त्वा भ्रान्त्यविद्याशब्दवाच्यसाधारणतया निरुच्य तद्वत्तत्समानस्वभावतया स्वप्नमायां च भ्रान्त्यविद्यालक्षणां विविच्य निष्कृष्य मायाविद्यादिशब्दानामेकप्रवृत्तिनिमित्ततयैकलक्षणयोगित्वमुपपाद्येति यावत् । तत्रैवंविधेऽनिर्वचनीयेऽर्थे ये शक्तिव्याप्ती सिध्यतस्ते गृहीत्वा मायादिशब्दस्य शक्तिं मायाविद्ययोरेकत्वसाधकलिङ्गस्य व्याप्तिं च गृहीत्वेति यावत् । जागरं मायासिद्धमीश्वरमायया रचितमप्यविद्यामयं साधयाम इति प्रतिज्ञापद्ययोजना ॥८५॥

**सु० टी०—अत्र साधनप्रकारं दर्शयति—**

लोके हि मायाऽधिगता न माया
तमोतिरिक्ताऽस्ति निरूप्यमाणा ।
व्याप्तिश्च शक्तिश्च निरूप्यमाणा
भविष्यतीहैव तु नेतरत्र ॥ ८६ ॥

लोके हीति । **कुतस्तमोतिरिक्ता सा नास्तीति चेत्तत्राऽऽह**—व्याप्तिरिति । **इहैवाविद्यायामेवेत्यर्थः ॥ ८६ ॥**

अ० टी०—का तर्हि लोकसिद्धा माया वा भ्रान्त्यविद्यादिसाधारण्येन निर्विवक्षितेत्यपेक्षायामाह—**लोके हि मायेति** । या लोके प्रसिद्धैन्द्रजालिकैः प्रसार्यमाणाऽधिगता सर्वजनविदिता सा माया निरूप्यमाणा लक्षणप्रमाणाभ्यां प्रतिपाद्यमाना न तमः-

शब्दवाच्याविद्यातिरिक्ताऽस्ति । एवं सति मायाशब्दस्य शक्तिर्मायामयत्वव्याप्तलिङ्गानां व्याप्तिश्च निरूप्यमाणेहैवाविद्यायामेव भविष्यति नेतरत्र न ततोऽर्थान्तर इति योजना ॥८६॥

सु० टी०—**ननु मणिमन्त्रौषधादेरेव मायात्वेन प्रसिद्धत्वान्नाज्ञानं मायेति तत्राऽऽह**—

मायाविनो न मणिमन्त्रमथौषधं वा
मायेति शक्यमिह वर्णयितुं कुतश्चेत् ।
सत्यं हि तत्सकलमिष्टमियं त्वसत्या
माया ततोऽन्यदिह किंचन वर्णनीयम् ॥ ८७ ॥

मायाविन इति । **शङ्कते**—कुत इति । **उत्तरं**—सत्यं हीति । **ननु मायाऽपि सत्यैवास्त्वित्याशङ्कयाऽऽह**—इयं त्विति । **मायाशब्दस्यासत्ये व्युत्पन्नत्वादित्यर्थः ॥ ८७ ॥**

अ० टी०—परिशेषप्रमाणेन मायाशब्दवाच्यमनिर्वचनीयमेवेति साधयितुं प्रसक्तप्रतिषेधमारभते । तत्र मणिमन्त्रादियुक्ते पुरुषे मायावित्वप्रसिद्धेर्मण्यादिरेव माया स च नाविद्या तत्र तत्प्रसिद्ध्यभावादिति मण्यादौ मायात्वप्रसक्तिमुद्भाव्य निराकरोति—**मायाविन इति** । मण्यादेर्मायात्वं वर्णयितुं न शक्यमित्यत्र हेतुं प्रश्नपूर्वकमाह—**कुतश्चेत्सत्यं हीति** । मायाशब्दस्य मिथ्यार्थ एव लोके प्रसिद्धत्वान्मण्यादेश्च सत्यत्वान्मण्यादिभ्योऽन्यदेव मायाशब्दवाच्यं किमपि वर्णनीयं न मण्यादीत्यर्थः । लोके माया मया दृष्टेति मिथ्याभूते दृष्टनष्टस्वरूपे वस्तुनि व्यवहारदर्शनान्मण्यादेरतादृशस्य तादृग्व्यवहारायोग्यत्वान्न मण्यादिर्मायेति भावः ॥ ८७ ॥

सु० टी०—**ननु मणिमन्त्रादिप्रयोगे पुरुषस्य या शक्तिः सैव मायेत्याशङ्कय दूषयति**—

सामर्थ्यमस्य मणिमन्त्रनिमित्तमस्ति
माया भविष्यति जनभ्रमहेतुरेषा ।
इत्युच्यते यदि तदप्यतिफल्गु कस्मात्
सामर्थ्यमप्यवितथं हि तदिष्टमस्य ॥ ८८ ॥

सामर्थ्यमिति । **अस्य मण्यादिप्रयोक्तुरित्यर्थः । तदपीति । शक्तेरपि सत्यत्वान्न मायापदवाच्यत्वमित्यर्थः ॥ ८८ ॥**

---

१ ख. वु. °महौष° । २ ख. ग. सफल ।

अ० टी०—अथ मणिमन्त्रादिजन्यं मायाविनः सामर्थ्यं मायेति मतं तदपि न तत्राप्युक्तदूषणानतिवृत्तेरित्याह—**सामर्थ्यमस्येति** । अस्य मायाविनो मणिमन्त्रनिमित्तकं यत्सामर्थ्यमस्त्येषा जनभ्रमहेतुर्माया भविष्यतीत्युच्यते यदीति शङ्काभागयोजना । दूषयति—**तदप्यतिफल्ग्विति** । सुगममन्यत् ॥ ८८ ॥

**सु० टी०—किं स्वाभाविकी शक्तिर्मणिमन्त्रादिभिरभिव्यज्यते उत केनचिज्जन्यत इति विकल्प्य नोभयथाऽपि घटत इत्याह—**

**न च शक्तिरस्ति सहजा यदि वा**
**जनिताऽस्ति केनचिदिति ब्रुवतः ।**
**परिपुष्कलं स्वमतनिर्वहणं**
**भवितुं क्षमं तदनिरूपणतः ॥ ८९ ॥**

**न चेति ॥ ८९ ॥**

अ० टी०—न मण्यादिर्माया नापि तज्जन्यं मण्यादिमतः सामर्थ्यं किं तु मायाविनः कोऽपि शक्तिविशेषो माया । सा चाविद्यातोऽन्येति यदि कश्चिद्ब्रूयात्तस्य पक्षो न निर्वहति विकल्पासहत्वादित्याह—**न च शक्तिरस्येति** । अस्य सा शक्तिः किं सहजोत्पत्तित एव सिद्धेति यावद्यदि वा केनचिज्जनिताऽस्त्युत्पत्त्यनन्तरं केनापि निमित्तयोगेन प्राप्ता चेत्यर्थः । दूषणमुभयत्र साधारणमाह—**इति ब्रुवत इति** । परिपुष्कलस्वमतनिर्वहणं भवितुं न च क्षममिति संबन्धः । तत्र हेतुः—**तदनिरूपणत इति** । उभयथाऽपि निरूपयितुमशक्यत्वादित्यर्थः ॥ ८९ ॥

**सु० टी०—तदनिरूपणत इत्युक्तमेव साधयति—**

**न च शुक्रशोणितसमागमने**
**न च गर्भशायिन इयं विदिता ।**
**न च मातृयोनिविवरादुदरा-**
**दपसर्पतो बहिरियं घटते ॥ ९० ॥**

न चेति । **सह जायत इति सहजा । सा कदा जायते किं निषेककाल उत गर्भपरिणतिकाले किं वा जन्मकाल इति निरूपयितुमशक्यं तदानीमदर्शनादित्यर्थः ॥ ९० ॥**

अ० टी०—सहजत्वपक्षदुर्निरूपत्वं साधयति—**न च शुक्रशोणितेति** । सहैव जायत इति हि सहजत्वमुच्यते । तत्र पुंसो रेतोनिषेककाले मातुरुदरप्रवेशे सह जायते

किं वा गर्भागारे शरीरपरिणामकालेऽथवा मातुरुदराद्बहिर्निःसरणकाले सा शक्तिरिति विकल्पत्रयं क्रमेण निराकरोति न च शुक्रशोणितसमागमन इत्यादिना। इयं शक्तिरनुभवपराहतत्वात्कल्पनाया इत्यर्थः। यद्येतास्ववस्थासूक्तशक्तिसंभवः पुरुषस्य भवेत्तदा निषेकादिप्रकारस्य सर्वेषामविशेषात्सर्वेष्वेव सा शक्तिः स्वतो वा कार्यतो वोपलभ्येत तस्मादेतदसंगतमिति भावः ॥ ९० ॥

सु० टी०—द्वितीये त्वाह—

मणिमन्त्रमौषधमितीदृशकं
विरहय्य नापरमिहार्पयति ।
पुरुषोऽपि कश्चिदत एवमियं
परतोऽपि नास्य घटना घटते ॥ ९१ ॥

मणीति। मायोपदेशकाले हि मायावी मणिमन्त्राद्येव प्रयच्छति न तु कांचिच्छक्तिमाधत्ते मानाभावादित्यर्थः। परतोऽपि परेणाऽऽहितेत्यपि॥९१॥

अ० टी०—आगन्तुकत्वपक्षोऽप्ययुक्त इति प्रतिपादयति—**मणिमन्त्रमिति**। अस्मिन्पक्षे हि मायाविपुरुषान्तरोपदेशादस्य मायाप्राप्तिर्वक्तव्या। तथा च कश्चिन्मायावी पुरुषोऽपि मणिमन्त्रं चौषधं वेतीत्थमीदृशकमन्यद्वा विरहय्य विनाऽन्यच्छक्तिलक्षणमिहास्मिञ्छिष्ये नार्पयति। मणिमन्त्रमिति द्वंद्वैक्यम्। मायावी पुरुषः पुरुषान्तरे मण्यादिप्रदानव्यतिरेकेण न शक्तिं कांचिदाधत्ते मण्यादिश्च न शक्तिर्नापि मायाशब्दवाच्यस्तस्य सत्यत्वान्मायायाश्चानृतत्वेन प्रसिद्धत्वादित्यभिप्रेत्याऽऽह—**अत एवमिति** ॥ ९१ ॥

सु० टी०—ननु मण्यादिनिरपेक्षा परव्यामोहकरी परस्य शक्तिरेव माया कार्यैकोन्नेयत्वेन शक्तिलक्षणयोगित्वादिति शङ्कते—

अन्यस्य विभ्रमकरी पुरुषस्य शक्ति-
राकारमन्यमनपेक्ष्य मनीषिता चेत् ।
वाच्येह लौकिकजनव्यवहारभूमौ
मायागिरस्तदपि दुर्घटमिष्टहानेः ॥ ९२ ॥

अन्यस्येति। अन्यं सत्यमिथ्यात्वाद्याकारमनपेक्ष्यैव मायागिरो वाच्येति संबन्धः। दूषयति—तदपीति। शुक्रशोणितयोगकाल एव परव्यामोहकत्वं स्याच्छक्तेर्नैरपेक्ष्याभ्युपगमादिति न त्वदिष्टसिद्धिरित्यर्थः ॥ ९२ ॥

---

१ ख. घ. °नामटति ।

अ० टी०—यद्यपि पुरुषगतशक्तेरस्याः सहजत्वादिप्रकारो न नियमेन निरूपयितुं शक्यते तथाऽपि प्रसिद्धत्वादेव काचन मायाऽभ्युपेया । सा च शक्तिरेवास्तु कार्यं प्रत्यन्तरङ्गत्वात्कार्यैकावसेयत्वेन च शक्तिलक्षणयोगित्वात् । तथा च सत्यानृतत्वलक्षणाकारविशेषानादरेण परविभ्रमहेतुः पुंसः शक्तिर्मायेत्यभ्युपगम्यते लोके तादृशे विषये मायाशब्दप्रयोगात् । सा क्वचिदनृताऽपि भवतीति तस्यां मिथ्यात्वव्यवहारोऽपि क्वाचित्को न विरुध्यत इत्यभिप्रेत्य पक्षान्तरं शङ्कते—**अन्यस्य विभ्रमकरीति** । इह लौकिकजनव्यवहारभूमावन्यमाकारं सहजत्वागन्तुकत्वसत्यत्वमिथ्यात्वादिविशेषमनपेक्ष्यान्यस्य विभ्रमकरी पुरुषस्य शक्तिर्मायागिरो वाच्येति मनीषिता चेदिति योजना । दूषयति—**तदपि दुर्घटमिष्टहानेरिति** ॥ ९२ ॥

**सु० टी०—इष्टान्तरहानिमप्याह—**

**मायामयत्ववचनादखिलं मृषेति**
**यद्भाष्यकारवचनं तदसंगतं स्यात् ।**
**प्रत्यक्षमुत्सृजसि कारणमन्यदन्य-**
**यत्किंचिदानयसि कष्टमतः किमन्यत् ॥ ९३ ॥**

मायामयत्वेति । **जगत्तदुपादानयोरनिर्वचनीयत्वान्मायाप्रकृतित्वश्रुतेश्चाखिलं मृषेति भाष्यकृद्वचनपरित्यागस्तव स्यादित्यर्थः । नन्वस्माकमुचित एव त्वदीयभाष्यवचनत्याग इति चेत्तत्राऽऽह**—प्रत्यक्षमिति । **प्रत्यक्षमेव श्रुतिः 'नेति नेति' [ बृह० २ । ३ । ६ ] इतिप्रतिपन्नोपाधौ निषेध्यत्वेनानिर्वचनीयत्वं दर्शयति । तदुत्सृज्य कारणान्तराभ्युपगमोऽयुक्त इत्यज्ञानमेव मायेत्यर्थः ॥ ९३ ॥**

अ० टी०—इष्टहानिमेवाऽऽह—**मायामयत्ववचनादिति** । 'मायैव संध्ये सृष्टिर्न परमार्थगन्धोऽप्यस्ति' इत्यादिवचनादखिलं मृषेति यद्भाष्यकारवचनमेतादृशमन्यदपि मायाविद्ययोरेकत्वसूचकं च भाष्यकारवचनं तत्सत्यमिथ्यासाधारणपुरुषशक्तिर्मायेत्यभ्युपगमेऽकारणमप्रमाणं स्यात्तच्चायुक्तमुपजीव्यविरोधादतो भाष्यरूपमूलशास्त्रविरोधान्नेयमपि कल्पना घटत इत्यर्थः । अपि प्रत्यक्षं सर्वजनानामनुभवरूपं द्रष्टॄणां मायाविविषयमज्ञानं मायाव्यवहारविषय इति प्रसिद्धमुत्सृजसि त्यजस्यन्यदन्यत्किंचित्कारणमप्रसिद्धं मायाशब्दप्रवृत्तावानयस्यतोऽन्यत्किं कष्टमव्यवस्थितवचनत्वान्न तव कल्पना प्रामाणिकीत्यर्थः ॥ ९३ ॥

---

१ ख. घ. °दकारणं स्यात् ।

**सु० टी०—नन्वीश्वरस्य सर्वप्रपञ्चजनन्याः शक्तेः 'पराऽस्य शक्तिः' [ श्वेता० ६ । ८ ] इति परत्वेन विशेषितायाः कथमज्ञानरूपतेति चेत्तत्राऽऽह—**

**अज्ञानमेव च भविष्यति शक्तिरेषा**
**सर्वप्रपञ्चजननी परमेश्वरस्य ।**
**माया श्रुतिस्मृतिवचोभिरुदीर्यमाणा**
**शक्तिग्रहो हि परविभ्रमहेतुशक्तौ ॥ ९४ ॥**

अज्ञानमेवेति । **श्रुतिस्मृतिवचोभिरुदीर्यमाणा परमेश्वरस्यैषा माया शक्तिरज्ञानमेव भविष्यतीति संबन्धः । तत्र हेतुमाह**—शक्तिग्रहो हीति । **मायाशब्दस्येति शेषः । परविभ्रमहेतुशक्तावज्ञाने ॥ ९४ ॥**

अ० टी०—ननु परमेश्वरस्य जगज्जननी शक्तिरपि मायेत्युच्यते श्रुतिस्मृतिपुराणेषु न च तस्या अज्ञानत्वं युक्तं तथा सतीश्वरस्यापि भ्रान्तिप्रसङ्गादतोऽज्ञानादन्यदेव मायाख्यं किमपि वाच्यमिति चेन्मैवं परमेश्वरशक्तेरप्यज्ञानत्वाङ्गीकारे विरोधाभावात्सृष्ट्यादेः परमार्थत्वस्याविवक्षितत्वान्न चेश्वरस्य भ्रान्तत्वापत्तिस्तस्याज्ञानवशित्वस्योपपादितत्वादित्यभिप्रेत्याऽऽह—**अज्ञानमेव चेति** । श्रुतिस्मृतिवचोभिरुदीर्यमाणा या परमेश्वरस्य सर्वप्रपञ्चजननी शक्तिरेषाऽज्ञानमेव भविष्यतीति योजना । चकारः शङ्काव्युदासार्थः । नन्वज्ञाने मायाशब्दो विरुध्यते ज्ञाने मायाशब्दप्रयोगादिति चेत्तत्राऽऽह—**शक्तिग्रहो हीति** । परविभ्रमहेतुभूता या शक्तिस्तस्यां हि मायाशब्दस्य शक्तिग्रहः परविभ्रमहेतुश्चाज्ञानमिति न विरोध इत्यर्थः । एतदुक्तं भवति—मायावी हि लोके मणिमन्त्रादिप्रयोगविशेषेण मायां संक्षोभयति । सा च संक्षुभ्यमाणा द्रष्टॄणां मायाविविषयादज्ञानान्नार्थान्तरभूता । द्रष्टारो हि स्वाज्ञानविलसितमेवान्यथाभूतं वस्तूपलभन्तो भ्रान्ता भवन्ति । यतो माया दृष्टेति त एव मन्यन्ते । अतो दृश्यमानायथार्थज्ञानं विभ्रमस्तमुपजनयन्ती माया सा च द्रष्टृज्ञानं तस्य च मन्त्रादिप्रयोगे स्वतन्त्रं मायाविनं प्रति तदधीनतया परविभ्रमहेतुशक्तित्वेनावस्थानात्तदेव मायाव्यपेक्षया मायेत्युच्यते प्रेक्षकेषु च तदधीनतया स्थितत्वादाविद्येति व्यवह्रियते । अतोऽविद्यामायाशब्दयोर्विभ्रमहेत्वनिर्वचनीयशक्तिरूपैकार्थविषयत्वेऽपि तादृशशक्तिवशित्ववश्यत्वाभ्यां मायावित्वाज्ञत्वाभ्रान्तत्वभ्रान्तत्वादिव्यवहारव्यवस्था न विरुध्यत इति ॥ ९४ ॥

**सु० टी०—ननु वैदिकी मायापदव्युत्पत्तिः सा च यूपादिपदवत्प्रसिद्धपदसमभिव्याहारान्न च सा लौकिकेऽज्ञाने संभवतीति चेत्तत्राऽऽह—**

**न च प्रसिद्धार्थपदान्तराणां**
**प्रयोगसांनिध्यवशेन शक्तिः ।**

ग्रहीष्यतेऽस्येति समञ्जसं स्या-
दलौकिके शब्द इदं हि युक्तम् ॥ ९५ ॥

न चेति । **मायाशब्दस्तु नालौकिक इत्यर्थः ॥ ९५ ॥**

अ० टी०—नन्वेवं लोके मायाया अज्ञानत्वेऽपि वेदे ततोऽन्यत्रैव मायाशब्दव्युत्पत्ति-र्युक्ता समभिव्याहृतैः सर्वज्ञादिशब्दैर्मायायाः सर्वज्ञेश्वरत्वादिघटकत्वावगमादज्ञानस्य तदयोगादित्याशङ्क्याऽऽह—**न च प्रसिद्धेति** । न च समञ्जसं स्यादित्यन्वयः । यद्यपि प्रसिद्धार्थपदसमभिव्याहाराद्वेदे पदव्युत्पत्तिग्रहो वर्तते तथाऽपि मायापदस्यास्य न तथा शक्तिग्रहः समञ्जसोऽस्य तेन विनाऽपि लोके शक्तिग्रहोपपत्तेरित्यर्थः । तत्रास्यात्यन्तालौकिकत्वाभावादिति हेतुमाह—**अलौकिक इति** । यूपाहवनीयादिशब्द इत्यर्थः ॥ ९५ ॥

**सु० टी०—एतदेव व्यनक्ति—**

अयं तु मायेति न शब्द एव-
मलौकिको लौकिक एव तस्मात् ।
यदर्थवाची जगति प्रसिद्ध-
स्तमेव वेदेऽपि स वक्ष्यतीह ॥ ९६ ॥

अयं त्विति । **नायं यूपादिशब्दतुल्यः किं तु लौकिक एवेत्यर्थः । व्युत्पत्त्यन्तरे लोकवेदाधिकरणविरोध इत्याह**—यदर्थेति ॥ ९६ ॥

अ० टी०—उक्तं हेतुं विशदयति—**अयं त्विति** । मायेत्ययं शब्दस्त्वेवं यूपादिशब्दवन्नालौकिकः किं तु लौकिक एव यस्मात्तस्माज्जगति लोके यदर्थवाची यः शब्दः प्रसिद्धस्तमेवार्थं स शब्द इह वेदेऽपि वक्ष्यतीतरथा लोकवेदाधिकरणन्यायविरोधापातादित्यर्थः ॥ ९६ ॥

**सु० टी०—लौकिकत्वेऽप्यलौकिकार्थत्वमविरुद्धं तथा दृष्टत्वादिति शङ्कते—**

ननूद्भिदादेर्यदि नाम लोके
प्रसिद्धमर्थान्तरवाचकत्वम् ।
तथाऽपि भावार्थनिपीडितस्य
विजानते कर्मणि शक्तिमस्य ॥ ९७ ॥

नन्विति । **'उद्भिदा यजेत' इत्यादौ यजतिसमभिव्याहृतत्वादुद्भि-**

**दादिपदस्य लौकिकार्थखनित्रादिवाचित्वासंभवात्कर्मनामत्वमाश्रितमि-त्यर्थः ॥ ९७ ॥**

अ० टी०—ननु 'उद्भिदा यजेत' 'चित्रया यजेत' इत्यादौ योगवृत्त्या वा वर्णविशेषवाचित्वेन वा लौकिकानामप्युद्भिदादिपदानां भावार्थसामानाधिकरण्यबलात्कर्मनामधेयत्वं व्यवस्थापितं तथेहापि लौकिकमपि मायापदमलौकिकार्थं भविष्यतीति चोदयति—**ननूद्भिदादेरिति** । यदि नामेति यद्यपीत्यर्थः । उद्भिनत्तीत्युद्भिदिति खनित्रादिर्लोके उद्भिच्छब्देन योगवृत्त्याऽभिधीयते । चित्ररूपवत्यजा गौर्वा चित्रेति । तथाऽपि यजेतेति भावार्थयजिपदसमभिव्याहारेण लोकप्रसिद्धार्थनिपीडनेनास्योद्भिदादिपदस्य कर्मणि शक्तिं कर्मनामत्वं विजानते निरूपयन्ति परीक्षका इत्यर्थः ॥ ९७ ॥

**सु० टी०—गुणविधौ वैरूप्याद्विशिष्टविधौ मत्वर्थलक्षणापत्तेरगत्या तत्र कर्मपरत्वमिह तु न तथा गत्यन्तराभाव इति परिहरति—**

**सत्यं न गत्यन्तरमस्ति तत्र**
**ततस्तथा निश्चितमत्र नैवम् ।**
**मायागिरोऽज्ञाननिवेदनेऽपि**
**न काचिदत्रानुपपत्तिरस्ति ॥ ९८ ॥**

**सत्यमिति ॥ ९८ ॥**

अ० टी०—परिहरति—**सत्यं न गत्यन्तरमिति** । अयमर्थः—'उद्भिदा यजेत पशुकामः' इत्यत्रोद्भिच्छब्दो यदि गुणविधिपरोऽभ्युपगम्यते तदा गुणापेक्षया फलापेक्षया च यागे विरुद्धत्रिकद्वयापत्त्या वैरूप्यमापद्यते । अतो न गुणविधिरत्र युक्तो नाप्यत्र 'सोमेन यजेत' इतिवद्विशिष्टविधिरुपपद्यते मत्वर्थलक्षणाप्रसङ्गात् । न च सेहोपपद्यते सोमपदस्य द्रव्यविशेषे रूढत्वात्तदनुरोधेन तत्र मत्वर्थलक्षणा घटते । उद्भिदादिशब्दस्य तथा कचिदर्थविशेषे रूढत्वाभावाद्योगवृत्तेश्च यत्र कापि कथंचित्संपादयितुं शक्यत्वाद्व्यवस्थितविध्यर्थाप्रतीतेर्नेह विशिष्टविधिरपि घटतेऽतो गत्यन्तरासंभवादुद्भिदादिपदानां कर्मनामधेयत्वं यजिसामानाधिकरण्यादाश्रितमिति । मायागिरो मायापदस्य त्वज्ञाननिवेदनेऽप्यत्र वेदे न काचिदनुपपत्तिरस्ति लोकव्युत्पत्त्यनुरोधेनाज्ञानाभिधायित्वेऽपि विरोधाभावादेतदेवात्र युक्तमित्यर्थः ॥ ९८ ॥

**सु० टी०—नन्वत्रापीश्वरशक्तेरज्ञानात्मकत्वे तस्य सर्वज्ञत्वानुपपत्तिरस्ति बाधिकेत्याशङ्क्याऽऽह—**

अज्ञानं जडशक्तिमात्रवपुषा सर्वेश्वरस्येष्यते
सर्वज्ञत्वविरोधि तन्न च भवेदुक्तप्रकारेण नः ।
सर्वज्ञेश्वरसंश्रया भवति सैवाज्ञानमाया श्रुतौ
तस्माद्बुद्धिदिवेति वर्णनमिदं वैषम्यदुष्टं तव ॥ ९९ ॥

अज्ञानमिति । सर्वज्ञत्वेति । अज्ञानस्य स्वकार्यान्तःकरणद्वारैव किंचिज्ज्ञतासंपादकत्वं न चेश्वरस्य तदस्तीत्युक्तेन मार्गेणेत्यर्थः । ननु तर्ह्यज्ञानलक्षणाभावादज्ञानभिन्नैव मायेत्याशङ्क्याऽऽह—सर्वज्ञेति । 'माया चाविद्या च स्वयमेव भवति' [ नृसिं० त्तर० ९ ] इत्यादिश्रुतावज्ञानात्मकमायाया एवेश्वराश्रयत्वश्रुतेर्भेदप्रमाणाभावस्य चोक्तत्वाद्बुद्ध्यादिसहकार्यभावादनावरणत्वं न त्वज्ञानलक्षणाभावादित्यर्थः ॥ ९९ ॥

अ० टी०—नन्वस्त्येवाथापि विरोधो मायायाः सर्वज्ञेश्वरत्वादिघटकत्वादज्ञानस्य तदयोगादिति चेन्मैवमज्ञानपक्षेऽपि तद्योगोपपत्तेरित्याह—अज्ञानमिति । जडशक्तिमात्रवपुषेति विक्षेपशक्तिप्राधान्येनेत्यर्थः । उक्तप्रकारेणेति द्वितीयाध्याये व्युत्पादितप्रकारेणेत्यर्थः । तथा च या श्रुतौ सर्वज्ञेश्वरसंश्रया माया श्रूयते साऽज्ञानात्मिका मायैव भवति नाज्ञानादर्थान्तरभूतेति योजना । यस्मादेवं तस्मात्त्वोक्तिदिवेतीदं वर्णनं वैषम्यदुष्टं विषमोऽयमत्र दृष्टान्तस्त्वयोपन्यस्त इत्यर्थः ॥ ९९ ॥

सु० टी०—तथाऽपि नाज्ञानमात्रं साऽज्ञानमात्रे मायात्वाप्रसिद्धेरिति तत्राऽऽह—

मायाऽनिर्वचनीयमेव तु तमो मायाविनो गीयते
द्रष्टॄणां भ्रमकारणं विषयता मायाविता तस्य तु ।
तं हस्त्यादिविकल्पनाघटितवन्मूढाशया जन्तवो
रज्जुं सर्पतयेव तद्विरहितं जानन्त्यबुद्धस्ववत् ॥ १०० ॥

मायेति । नाज्ञानमात्रं मायोच्यते किं तु द्रष्टृभ्रमहेतुमायाविविषयमज्ञानम् । किमत्र मानमिति तत्राऽऽह—तमिति । तं हि मायाविनं हस्त्यादिहीनमपि हस्त्यादिमन्तमिव मूढाः पश्यन्तीत्यर्थः । वाचस्पतिमते तु जीवाश्रया ब्रह्मविषया अनन्ता अविद्याः । तासामाश्रितत्वोपाधिनाऽविद्यात्वम् । तदवच्छिन्ना जीवाः । तासां च मिलितानां विषयित्वोपा-

१ क. °विना त° । २ ख. हिणं जा° ।

धिना मायात्वम् । तद्विषय ईश्वरः । तस्याश्च सत्त्वाद्येकैकगुणप्राधान्ये-नान्तर्यामित्वादिकम् । तया चाऽऽरब्धः साधारणप्रपञ्चः । तस्य च स्वाविद्यारब्धत्वमेव स्वग्राह्यत्वे तन्त्रं न त्वन्याविद्यानारब्धत्वमपि गौर-वात् । अतश्च न सर्वाविद्यारब्धस्यैकैकेनाग्राह्यत्वापत्तिः । एकमुक्तौ च यावदारम्भकनाशस्यैव द्रव्यनाशकत्वाद्वा खण्डपटन्यायाद्वा प्रपञ्चस-त्त्वाविरोधः प्रपञ्चभेदैक्यभ्रमादिकल्पने गौरवादित्यस्मद्गुरवः ॥ १०० ॥

अ० टी०—तथाऽप्यज्ञानमात्रे मायाशब्दप्रयोगादर्शनात्तत्पर्यायत्वमयुक्तमिति चेत्तत्राऽऽह—**मायाऽनिर्वचनीयामिति** । द्रष्टॄणां भ्रमकारणमनिर्वचनीयं तम एव मायाविनो मायेति गीयते न ततोऽर्थान्तरम् । यद्वाऽनिर्वचनीयं तमोऽज्ञानं यत्प्रसिद्धं तदेव द्रष्टॄणां भ्रमकारणं सन्मायेति गीयते नाज्ञानमात्रमिति योजना । तस्य तमसो विषयता तु मायाविता । तथा च मायाविविषयं द्रष्टॄणां भ्रमोत्पादकं यदनिर्वचनीयमज्ञानं तन्मायाशब्दवाच्यमित्यज्ञानस्यावस्था-न्तरे मायाशब्दवाच्यत्वात्तत्पर्यायत्वादर्शनं न दोषावहमित्यभिप्रायः । प्रतिज्ञातमर्थं साधयति—**तं हस्त्यादीति** । आद्यो वतिप्रयोगो वस्तुवृत्तापेक्षः । वस्तुतो हस्त्यादिविकल्पनारू-पेणाघटितमपि तद्रूपेण घटितमिव मूढाशया जन्तवो जानन्ति । वत्यर्थं स्फुटयति—**तद्विरहितमिति** विशेषणेन । वस्तुतो हस्त्यादिविकल्पनाविरहितमित्यर्थः । रज्जुं सर्पत-येवेति दृष्टान्तार्थः स्पष्टः । मूढाशयत्वं स्फुटयति—**अबुद्धत्ववदिति** । स्वार्थे भाव-निर्देशः । अबुद्धमिवापूर्वमिवेत्यर्थः । यद्वोपसंहृते मन्त्रादौ तं मायाविनं तद्विरहितमबुद्धत्वव-दज्ञातमिव जानन्तीत्यर्थः ॥ १०० ॥

सु० टी०—इतश्चाज्ञानरूपत्वमित्याह—

सम्यग्ज्ञानबलेन तं विरहितं हस्त्यादिभिर्यत्क्षणे
जानीयुस्तदनन्तरं न स भवेद्धस्त्यादियुक्तः पुमान् ।
तेनास्मत्तम एव तत्र विषये मायाऽस्तु मायाविनः
सोऽज्ञातो वयमज्ञकोटिपतिता मायी स तेनोच्यते[1] ॥ १०१॥

सम्यग्ज्ञानेति । **अधिष्ठानतत्त्वज्ञानेन सकार्याया निवृत्तिदर्शनादित्यर्थः । अतश्च द्रष्टृज्ञानमेव मायिविषयम् । माया न तत्त्वान्तरमित्याह—** तेनेति ॥ १०१ ॥

अ० टी०—मायाविविषयसम्यग्ज्ञानेन भ्रमनिवृत्तेश्च तद्विषयो भ्रम इत्याह—**सम्यग्ज्ञानेति** । यद्वा तद्विरहितमित्याद्युक्तं विशदयति—**सम्यग्ज्ञानेति** । हस्त्यादि-भिर्विरहितमिति संबन्धः । तस्माद्द्रष्टॄणामज्ञानमेव मायाविविषयं सन्मायाविनो मायेत्युच्यते ।

---

१ ख. माया स ।

विषयविषयित्वसंबन्धादेव लौकिकमायाविनो मायावित्वमिति सिद्धमित्युपसंहरति—तेनेति । स्पष्टाऽक्षरयोजना ॥ १०१ ॥

सु० टी०—एतदतिप्रसक्तमिति शङ्कते—

नन्वेवं सति रज्जुखण्डलकमप्यज्ञातमज्ञानिभि-
र्मायावीति गिरोच्यतां न तु तथा लोके प्रसिद्धिः क्वचित् ।
तेनाज्ञातविलक्षणत्वमुचितं मायाविनो लौकिका
मायावीति पुमांसमेव निपुणं येनाऽऽहुरत्यादरात् ॥१०२॥

नन्विति । रज्जुखण्डावरकत्वेन स्थितमज्ञानं मायागिरा च रज्जुखण्डं च मायावीति गिरोच्यतामित्यर्थः । इष्टापत्तिश्चेत्तत्राऽऽह—न त्विति । तस्मादन्यदेव तल्लोकानुसारादित्याह—तेनेति । मायाविनोऽज्ञातविलक्षण त्वमुचितमिति संबन्धः । निपुणं परवञ्चनकुशलम् ॥ १०२ ॥

अ० टी०—ननु चाज्ञानविषये सर्वत्र मायावित्वप्रसिद्ध्यभावादज्ञानविषयत्वादन्यदेव मायावित्वं वाच्यमिति चोदयति—नन्वेवं सतीति । खण्ड एव खण्डलकम् । मायावि-नोऽज्ञातविलक्षणत्वमुचितमित्यत्र हेतुमाह—लौकिका इति ॥ १०२ ॥

सु० टी०—मायाज्ञानयोरभेदेऽपि वैलक्षण्यमुपपादयन्समाधत्ते—

नैवं भ्रान्तिनिमित्तकारणमयं संगृह्य पूर्वक्षणे
मन्त्रादिप्रचुरं प्रयत्नजनितं तज्जीवने वर्तते ।
तेनात्रैव तु लोकरूढिरभवन्मायाविता गोचरा
यद्वद्ब्राह्मणताप्रसिद्धिरभवन्मुक्त्वा परिव्राजकान् ॥ १०३ ॥

नैवमिति—नाज्ञानविषयत्वमात्रं मायावित्वं किं तु तत्क्षोभकशालित्व-मित्यर्थः । रज्ज्वादेरपि सादृश्याद्यज्ञानक्षोभकमस्तीति चेत्तत्राऽऽह—संगृह्येति । स्वप्रयत्नोपात्ताज्ञानक्षोभकमन्त्राद्युपजीविनि मायाविशब्दस्य प्रसिद्धिर्भिक्षुव्यतिरिक्तेषु ब्राह्मणशब्दस्येवेत्यर्थः ॥ १०३ ॥

अ० टी०—सत्यमज्ञानविषयत्वमात्रान्न भवति मायाविव्यवहारः किंत्वज्ञानक्षोभक-मणिमन्त्रादिमत्त्वमप्यपेक्ष्य मायावित्वव्यवहारस्ततो न विरोध इति परिहरति—नैवं

१ क. ग. स एव । २ क. °ह्य सर्व° ।

**भ्रान्तीति** । पूर्वक्षणे द्रष्टॄणां भ्रमोत्पत्तेः पूर्वमेवायं पुरुषो मन्त्रादिलक्षणं प्रचुरमनेकविधं भ्रान्तिनिमित्तकारणं संगृह्य यस्माद्वर्तते तेन हेतुनाऽत्रैव पुरुष एव मायावितागोचरा लोकरूढिर्लोकप्रसिद्धिरभवदिति योजना । ननु रज्ज्वादेरपि सादृश्यादिद्वारेणाज्ञानक्षोभकत्वमस्तीति तत्रापि कथं मायावित्वप्रयोगो न भवेदित्यत आह—**प्रयत्नजनितमिति** । भ्रान्तिनिमित्तस्य पुरुषे प्रयत्नजनितत्वं पुरुषविशेषणेन स्फुटयति—**तज्जीवन इति** । रज्ज्वादेरज्ञानक्षोभकत्वमनियतं कदाचिद्दैवगत्यैव तद्धेतुत्वादयं तु प्रयत्नेन मण्यादिकमज्ञानक्षोभकं संपाद्य तेनैव जीवंस्तत्परो वर्तत इत्यतोऽत्रैव लोकस्य मायावित्वप्रसिद्धिर्नेतरत्रेत्यर्थः । रज्ज्वादेः पुरुषस्य चाज्ञानक्षोभकत्वाविशेषेऽपि पुरुष एव मायावित्वप्रसिद्धिरित्यत्र दृष्टान्तमाह—**यद्वदिति** । परिव्राजकानामपि ब्राह्मणत्वाविशेषे तान्विहाय यथा गृहस्थादिष्वेव ब्राह्मणताप्रसिद्धिरभवत्तैर्ब्राह्मण्यजात्यभिमानस्य प्रयत्नेन धारणादित्यर्थः ॥ १०३ ॥

**सु० टी०—भवतु लोकेऽज्ञाने मायाशब्दः श्रुतिसूत्रगतस्य तु किमायातमिति चेत्तत्राऽऽह—**

**एवं तावल्लोकसिद्धा न माया**
**मिथ्याज्ञानाद्भिद्यतेऽतश्च तत्र ।**
**शक्तिव्याप्तिप्रत्ययौ वर्णयित्वा**
**वेदाल्लिङ्गाच्चान्यमायात्वसिद्धिः ॥ १०४ ॥**

एवमिति । **तत्साधनफलमाह**—तत्रेति । **लोकतः शक्तिव्याप्तिग्रहाच्छ्रुत्या लिङ्गेन च द्वैतस्य मायात्वं साध्यमित्यर्थः** ॥ १०४ ॥

अ० टी०—एवं तावदज्ञानं प्रति वशित्वादेव पुंसो मायावित्वं न विषयत्वमात्रादेन शुक्त्यादेरपि मायावित्वापादनप्रसङ्गोऽज्ञानस्यापि वश्यत्वादेव मायात्वं न विषयत्वमात्रादतो न द्रष्टॄणामपि मायावित्वप्रसङ्ग इति स्थिते श्रुत्यादिषु श्रूयमाणाऽपि परमेश्वरमाया लोकसिद्धव्युत्पत्त्यनुसारेणेश्वरवश्यतया प्रत्यक्चिदाश्रयविषयमेवाभ्युपेया नार्थान्तरमिति सिद्धमित्यवान्तरप्रकृतमुपसंहरति—**एवं तावदिति** । एवमुक्तयुक्त्या लोकसिद्धा माया मिथ्याज्ञानाद्यतो न भिद्यतेऽतश्चात एव लोकवेदाधिकरणन्यायेन तत्र लौकिकमायायामज्ञानात्मिकायां मायाशब्दस्य शक्तिं मायामयत्वलिङ्गस्य व्याप्तिं च प्रति प्रत्ययौ वर्णयित्वा मायाविषयशक्तिव्याप्तिज्ञाने अज्ञानविषयत्वेन संपाद्येति यावत् । वेदाद्वैदिकवाक्याल्लिङ्गाच्च मानादन्यस्य द्वैतस्य मायामयत्वसिद्धिरज्ञानमयत्वसिद्धिर्वर्णिता भवतीति योजना । विमतं द्वैतमज्ञानमयं मायामयत्वाद्यदेवं तदेवं यथा लौकिकमायामयं हस्त्यश्वादि तथेदं तस्मात्तथेति प्रयोगः ॥ १०४ ॥

अ० टी०—उक्तमेव प्रपञ्चयति—

जाग्रद्भूमौ या प्रसिद्धेह माया
निर्णीता सा तावदज्ञानमेव ।
तस्यां शक्तिव्याप्तिविज्ञानसिद्धे-
र्विज्ञातव्या सैव वेदानुमानात् ॥ १०५ ॥

जाग्रदिति । वेदानुमानादिति समाहारः । अन्यत्सुबोधम् ॥ १०५ ॥

अ टी०—इममेव श्लोकार्थं व्यक्ती करोति—**जाग्रद्भूमाविति** । यद्वा हेतोर्वैय-धिकरण्यशङ्कामपाकरोति—**जाग्रद्भूमाविति** । वेदश्चानुमानं च वेदानुमानं तस्मादिति योज्यम् । सुगममन्यत् ॥ १०५ ॥

सु० टी०—ततश्च स्वप्नेऽपि स्वप्नदृगज्ञानाभिप्रायमेव 'मायामात्रम्' [ ब्र० सू० ३ । २ । ३ ] इति सूत्रकृद्वचनमित्याह—

स्वप्नेऽप्येवं स्वप्नदृङ्मोहमात्रा-
दन्या काचिन्न प्रसिद्धाऽस्ति माया ।
तत्रैवायं सूत्रकारस्य तस्मा-
न्मायाशब्दो वर्तते नापरत्र ॥ १०६ ॥

स्वप्नेऽपीति । तस्यापीश्वरवश्यत्वान्मायाशब्दः ॥ १०६ ॥

अ० टी०—यस्मादज्ञानमेव माया नान्यदिति निश्चितं तस्मात्स्वप्नेऽपि स्वप्नदृगज्ञा-नव्यतिरेकेण मायाशब्दयोग्योऽर्थो नास्तीति सूत्रकृदज्ञानमयेऽपि स्वप्ने मायाशब्दं प्रायु-ङ्क्त मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ' [ ब्र० सू० ३ । २ । ३ ] इति परमप्रकृतमुपसंहरति—**स्वप्नेऽप्येवमिति** । एवमिति जाग्रद्वदित्यर्थः । तत्रैवाज्ञानात्मके मोह एवायं प्रसिद्धो मायाशब्दः सूत्रकारस्याभिमतो वर्तते नापरत्र सत्यार्थे न वर्तत इत्यर्थः ॥ १०६ ॥

सु० टी०—तथाऽप्यज्ञानमात्रं त्विति सूत्रे वक्तुमुचितं कथं माया-मात्रमित्युक्तमिति चेत्सत्यं प्रयोजनवशादित्याह—

शक्तिव्याप्तिप्रत्ययौ कारयिष्य-
न्स्वप्ने स्थित्वा प्रत्यगज्ञानमात्रे ।

---

२ क. ग. 'निर्णीति ।

मायावाचा लोकवत्सूत्रकारो
वेदे लिङ्गं चोपनेतुं प्रवृत्तः ॥ १०७ ॥

शक्तिव्याप्तीति । अज्ञानमात्रे मायाशब्दस्य शक्तिं दृश्यत्वादिलिङ्गस्य चाऽऽविद्यकत्वेन सह व्याप्तिं च ग्राहयिष्यँल्लोकसिद्धस्वप्नवज्जागरितस्याऽऽविद्यकत्वे ' मायां तु ' [श्वे० ४।१०] इति वेदं दृश्यत्वादि लिङ्गं च मानत्वेन दर्शयितुं स्वप्ने मायाशब्देन व्यवहृतवानित्यर्थः ॥ १०७ ॥

अ० टी०—तथा सूत्रकारस्य स्वप्ने मायाशब्दयोगे किं प्रयोजनं लोके तत्र तत्प्रसिद्ध्यभावेऽपीति चेत्तत्राऽऽह—**शक्तिव्याप्तिप्रत्ययाविति** । सूत्रकारः प्रत्यगज्ञानमात्रे मायाशब्दमायामयत्वलिङ्गयोः शक्तिव्याप्तिप्रत्ययौ कारयिष्यन्सन्स्वप्ने स्थित्वा स्वप्नमाश्रित्य लोकवद्वेदे च लिङ्गं चकारान्मायाशब्दशक्तिं चोपनेतुं मायावाचा प्रवृत्तो ' मायामात्रं तु ' [ ब्र० सू० ३ । २ । ३ ] इति सूत्रेण योजना । लौकिकशक्तिव्याप्तिग्रहानुरोधेन वेदेऽपि मायाशब्दं प्रत्यगज्ञानमात्रविषयतया नेतुमित्यर्थः ॥ १०७ ॥

**सु० टी०—आवरकत्वेन मायाज्ञानयोरभेदो भगवताऽपि दर्शित इत्याह—**

अज्ञानमावरणमावरणं च माया
सर्वेश्वरेण हरिणा दृढमप्यधायि ।
चैतन्यवस्तुन इति प्रतिपद्यमाना
तत्त्वं तदेकमिति निश्चयतः प्रतीमः ॥ १०८ ॥

अज्ञानमिति । **चैतन्यवस्तुनोऽज्ञानमेवाऽऽवरणमावरणं च मायाऽभ्यधायीति संबन्धः ॥ १०८ ॥**

अ० टी०—भगवद्गीतावाक्यादप्यज्ञानमायापदयोरेकार्थत्वं गम्यत इत्याह—**अज्ञानमावरणमिति** । सर्वेश्वरेण सर्वसमेन परमाप्तेन हरिणा चैतन्यवस्तुनोऽज्ञानमावरणमभ्यधायि । ' अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' [ भ० गी० ५ । १५ ] इति । तथा माया च चैतन्यवस्तुन आवरणमभ्यधायि । ' न मां दुष्कृतिनो मूढाः प्रपद्यन्ते नराधमाः । माययाऽपहृतज्ञाना आसुरं भावमाश्रिताः ' [ भ० गी० ७ । १५ ] इति । दृढमिति क्रियां विशिंषन्भगवद्वाक्यस्य प्रामाण्यदार्ढ्यं सूचयति । इतीत्थं भगवद्वाक्यं च प्रतिपद्यमानास्तन्मायाविद्ययोस्तत्त्वमेकमिति निश्चयतः प्रतीमो वयमिति योजना ॥ १०८ ॥

---

१ क. वेदे लि॰ ।

सु० टी०—ज्ञाननिवर्त्यत्वादपि तयोरेकत्वं भगवतैव दर्शितमित्याह—

ज्ञानं निवर्तकमपि द्वितयस्य तस्य
गीतागतः करुणया भगवानुवाच ।
तेनापि तत्त्वमिदमेकमिति प्रतीति-
रानीयते कथितलक्षणतुल्यभावात् ॥ १०९ ॥

ज्ञानमिति ॥ १०९ ॥

अ० टी०—तथा ' ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ' । [ भ०गी० ५।१९ ] ' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते । [भ०गी० ७ । १४ ] इति च श्रीभगवत्पादैर्मायाज्ञानयोस्तत्त्वज्ञाननिवर्त्यत्वाभिधानाच्चाज्ञानमाययोः स्वरूपभेदो नास्तीति गम्यत इत्याह—**ज्ञानं निवर्तकमिति** । तस्य द्वितयस्यापीति संबन्धः । **कथितलक्षणेति** । विभ्रमहेत्वनिर्वाच्या शक्तिर्मायाऽज्ञानं चैतदेवेति कथिलक्षणतुल्यभावादित्यर्थः । यद्वा ज्ञानावरकत्वतत्त्वज्ञाननिवर्त्यत्वरूपलक्षणसाम्यादित्यर्थः ॥ १०९ ॥

सु० टी०—भगवद्वाक्यमेव विभज्य दर्शयति—

नाहं प्रकाश इति तावदनेन मायाऽ-
ज्ञानेन चाऽऽवृतमितीतरदप्यभाणि ।
मामेव ये तु परमं पुरुषं प्रपन्ना[1]
ज्ञानेन तु प्रभृतिना च धिया निवृत्तिः ॥११०॥

नाहमिति । **' नाहं प्रकाशः सर्वस्य योगमायासमावृतः ' [भ० गी० ७ २५ ] इत्यनेन मायाऽऽवरणमिति । ' अज्ञानेनाऽऽवृतं ज्ञानं तेन मुह्यन्ति जन्तवः ' [ भ० गी० ५ । १५ ] इत्यनेन चाज्ञानमावरकमभाणि । किं तदितरदिति तत्राऽऽह**—मामेवेति । **' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ' [भ० गी० ७ । १४ ] ' ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ' [भ० गी०५।१६] इत्यादिना ज्ञाननिवर्त्यत्वमभाणीत्यर्थः॥११०॥**

अ० टी०—मायाज्ञानयोरावरकत्वेन तत्त्वज्ञाननिवर्त्यत्वेन च पूर्वश्लोकयोरर्थादुक्तान्येव भगवद्वाक्यान्युदाहरति—**नाहमिति** । ' नाहं प्रकाशः सर्वस्य योगमायासमा-

---

१ क, ग, °प्रयत्नाज्ज्ञा° ।

वृतः ' [भ० गी० ७ । २५] इत्यनेन तावन्मायाऽभाणीति संबन्धः । 'अज्ञानेनाऽऽवृतं ज्ञानम् । ' [भ० गी०५।१५] चकारात् ' अवजानन्ति मां मूढाः ' [भ०गी० ९।११] इति चेतरदज्ञानमप्यभाणीति योजना । आवरकत्वं मायाज्ञानयोरुदाहृत्य ज्ञाननिवर्त्यत्वमपि तयोर्भगवदुक्तमुदाहरति—' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' [भ० गी० ७।१४] ' ज्ञानेन तु तदज्ञानं येषां नाशितमात्मनः ' [भ० गी० ५ । १६ ] इतिप्रभृतिनेत्यादिवाक्येन धिया तत्त्वज्ञानेन मायाज्ञानयोर्निवृत्तिश्चाभाणीत्यर्थः ॥ ११० ॥

**सु० टी०—नन्वावरकत्वज्ञाननिवर्त्यत्वाविशेषेऽपि नानयोरभेदो भावाभावरूपत्वादिति चेत्तत्राऽऽह—**

**ज्ञानस्य प्रागभावादपरमभिहितं प्रत्यगज्ञानमेत-**
**त्संसारव्याधिबीजं कथितनयवशादेव बुध्यस्व बुद्ध्या ।**
**ज्ञानेनाज्ञाननाशं कथयति भगवानेष गीतागतः स-**
**न्न ज्ञानात्प्रागभावक्षय इति घटते तत्क्षये तत्प्रसूतेः ॥ १११ ॥**

ज्ञानस्येति । **नाभावस्याऽऽवरकत्वमित्युक्तत्वाद्भावरूपमेव बुध्यस्वेत्यर्थः । नापि ज्ञाननिवर्त्यत्वमप्यभावस्येत्याह—**न ज्ञानादिति । तत्क्षय इति । **षष्ठ्यर्थे सप्तमी । तत्प्रसूतेरिति भावप्रधानं तत्क्षयस्य तत्प्रसूतित्वादित्यर्थः । स्वप्रागभावनिवृत्तिरूपमेव ज्ञानमिति भावः ॥ १११ ॥**

अ० टी०—एवमज्ञानमाययोरेकत्वाभिधानान्न ज्ञानाभावमात्रमज्ञानमिति च भगवद्वचनप्रामाण्यादेव निश्चीयत इत्याह—**ज्ञानस्य प्रागभावादिति** । कथितनयवशादेवेति भगवद्वाक्योपबृंहितोक्तयुक्तिकदम्बादित्यर्थः । भगवताऽज्ञानस्य ज्ञाननिवर्त्यत्वाभिधानाच्च तस्य ज्ञानाभावान्यत्वसिद्धिरित्याह—**ज्ञानेनेति** । ' मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ' [भ० गी० ७ । १४ ] इति ज्ञानेनाज्ञानहानिं गीतागतः सन्नेष भगवान्कथयतीत्यर्थः । कथमज्ञानस्यैतावता ज्ञानप्रागभावान्यत्वसिद्धिस्तस्य स्वप्रतियोगिनिवर्त्यत्वादिति चेन्नैवं तदसंभवादित्याह—**न ज्ञानादिति** । अयमर्थः—अभावतत्प्रतियोगिनोरेकत्रैकदा विरोधाद्यौगपद्यं तावन्न संभवति । तथा च विद्यमाने प्रागभावे न तत्प्रतियोगिनः संभवः । न चानुत्पन्नोऽलब्धात्मकश्च प्रतियोगी स्वप्रागभावं निवर्तयेत् । [अन्त्ययोस्तु पक्षयोर्न ज्ञाननिवर्त्यत्वं विरोधाभावात् ।] अतो निवृत्ते प्रागभावे तत्प्रतियोगिनः प्रसूतिर्वक्तव्या प्रागभावप्रतियोग्युत्पत्त्योर्यौगपद्यं वा तयोरेकत्वं वा वक्तव्यं सर्वथाऽपि न ज्ञाननिवर्त्यस्तत्प्रागभाव इति ज्ञानप्रागभावादन्यदेवाज्ञानपदवाच्यं लब्धात्मकेन ज्ञानेन निवर्त्यत इति युक्तमभावान्यत्वमज्ञानस्येति ॥ १११ ॥

---

१ क. ग. °ते युक्तितः क्षेपतोऽस्य ।

सु० टी०—प्रासङ्गिकं समाप्य प्रकृतमुपसंहरति—

मायामात्रमतः समस्तमभवत्स्वप्ने प्रसिद्धं दृशः
कर्तृत्वादि तमोमयं वितथमेवाज्ञानमात्रं यतः ।
तस्माज्जागरितेऽपि चैतदभवत्स्वाभाविकं यत्पुन-
स्तादृक्षं तव सर्वदैव तु भवेत्स्वप्नेऽपि चैतन्यवत् ॥ ११२ ॥



मायामात्रमिति । स्वाभाविकत्वे बाधकमाह—यत्पुनरिति । तादृशं स्वाभाविकं कर्तृत्वादेः स्वाभाविकत्वे स्वप्नेऽप्यनुवृत्तिः स्याच्चैतन्यवदित्यर्थः ॥ ११२ ॥

अ० टी०—एवं प्रासङ्गिकं सूत्रकारस्य मायाशब्दप्रयोगकृत्यं प्रदर्श्य प्रकृतमेव कार्त्स्न्येनानभिव्यक्तस्वरूपत्वेन स्वप्नमिथ्यात्वमुक्तमुपसंहरति—मायामात्रमिति । दृश आत्मनः स्वप्ने प्रसिद्धं कर्तृत्वादि समस्तमत उक्तयुक्तेर्मायामात्रं तमोमयं वितथं मिथ्यैवाभवद्यतोऽज्ञानमात्रमिति योजना । यथा स्वाप्नस्य कर्तृत्वादिव्यवहारस्याऽऽगमापायित्वान्मायातमोमात्रत्वं तथा जागरितेऽपि कर्तृत्वप्रमुखस्य व्यवहारस्य मायामयत्वमेव न स्वाभाविकत्वमित्येतत्सिद्धमित्याह—तस्मादिति । एतदभवत्कर्तृत्वादि मायिकमित्येतत्सिद्धमित्यर्थः । स्वाभाविकत्वे दोषं वदन्मायामयत्वं द्रढयति—स्वाभाविकं यत्पुनरिति । यदि पुनरित्यर्थः । तादृक्षं तादृशं कर्तृत्वादिलक्षणं तवाऽऽत्मनो यदि पुनः स्वाभाविकं भवेत्तदा चैतन्यवदेव स्वप्नेऽपि सुषुप्तिप्रलयमुक्तिष्वपि भवेन्न च भवति जाग्रद्व्यवहारस्यावस्थान्तरे व्यभिचारादत आगन्तुकत्वान्मायामयमेव सर्वं व्यवहारजातं न स्वाभाविकमित्यर्थः ॥ ११२ ॥

सु० टी०—कादाचित्कमपि स्वाभाविकमस्तु पक्वामघटगतरक्तत्वश्यामत्ववदिति चेन्न विकारिणि तत्संभवेऽपि कूटस्थात्मन्यसंभवादित्याह—

सत्यप्यलुप्तचिति यत्त्वयि नास्ति कर्तृ-
भोक्तृप्रमातृमुखमन्यदपीह किंचित् ।
जाग्रद्दशावगतमप्यखिलं न तत्ते
स्वाभाविकं भवितुमुत्सहते विरोधात् ॥ ११३ ॥

---

१ क. °प्नेवासि° ।

सत्यपीति । **न ह्यलुप्तचिद्रूपस्याऽऽगन्तुकं कर्तृत्वादि सहजं स्यादित्यर्थः ॥ ११३ ॥**

अ० टी०—ननु किमित्यागन्तुकत्वमात्रेण मायामयत्वमात्मनि कर्तृत्वादेरिष्यते कादाचित्कत्वेऽप्यभ्रश्यामत्वादिवत्परमार्थत्वेऽपि विरोधाभावादिति चेन्मैवमात्मनः कूटस्थत्वेनाऽपरिणामित्वादित्याह—**सत्यपीति** । यत्राऽऽगन्तुकधर्मयोगः पारमार्थिकस्तत्र धर्मिणमविकृत्य न धर्माविर्भावतिरोभावौ पूर्वरूपे स्थिते तत्र रूपान्तरासंभवात्पूर्वरूपस्य चाऽऽश्रये विनाशायोगादिति परिणामिनः सावयवस्य द्रव्यस्य स्यादागन्तुकधर्मयोगित्वं पारमार्थिकं न कूटस्थस्य यतस्त्वय्यलुप्तचिति कूटस्थचित्स्वरूपे सत्यपि यथावस्थितेऽपि यत्कर्तृत्वा(ता)प्रमुखं कार्यकारणभोग्यभोगप्रमेयप्रमितिरूपमन्यदप्याधिदैविकादि जाग्रद्दशावगतमप्यखिल व्यवहारजातं नास्ति । यत्त्वयि स्वरूपेण सत्यपि त्वां व्यभिचरतीति यावत्तत्ते तव स्वाभाविकं भवितुं नोत्सहते विरोधाद्व्यभिचारिणो धर्मस्य धर्मिस्वभावत्वविरोधादिति योजना ॥ ११३ ॥

**सु० टी०—कथमिति चेत्स्वाभाविकस्यानागन्तुकत्वेन व्याप्तेरित्याह—**

**स्वाभाविकी हुतभुजः खलु नोष्णता तं**
**जातु प्रमुञ्चति न तामपि जातवेदाः ।**
**एवं भवन्तमपि जागरितोपलब्धं**
**स्वप्ने भवानपि च जागरितं न मुञ्चेत् ॥ ११४ ॥**

स्वाभाविकीति । **यथोष्णता वह्निं न मुञ्चत्येवं जागरितमपि भवन्तं न व्यभिचरेदित्यर्थः ॥ ११४ ॥**

अ० टी०—यद्यस्य स्वाभाविकं तन्न तस्याऽऽगन्तुकं यथाऽग्नेरौष्ण्यमिति स्वाभाविकस्यानागन्तुकत्वेन व्याप्तिं दर्शयन्नुक्तविरोधं स्फुटयति—**स्वाभाविकी हुतभुज इति** । एवं हुतभुज उष्णतावद्यदि तव जागरितं कर्तृताप्रमुखं स्वाभाविकं स्यात्तर्हि जागरितोपलब्धं स्वप्नेऽपि भवन्तं न मुञ्चेत् । भवानपि च जागरितं न मुञ्चेन्मुञ्चति च भवान्स्वप्ने जागरितं जागरितं च भवन्तमित्यतो न तव स्वाभाविकं कर्तृत्वादीत्यर्थः॥११४॥

**सु० टी०—ननु न मुञ्चत्येवाऽऽत्मा जागरितं 'यानि ह्येव जाग्रत्पश्यति तानि सुप्तः' [ बृह० ४ । ३ । १४ ] इति श्रुतेर्जागरोपलब्धानामेव स्वप्ने दृश्यमानत्वादिति चेत्तत्राऽऽह—**

**स्वप्ने न जागरितमस्ति मृषात्वहेतोः**
**स्वप्नस्य सत्यमिति जागरितं वदन्ति ।**

१ क. ग. °षा चहे° ।

स्वप्नस्य बाधनबलादनृतत्वमुक्तं
तस्माच्चिदेव तव रूपमतोऽन्यदार्तम् ॥ ११५ ॥

स्वप्न इति । अनृतत्वेति । स्वप्ने जागरितवद्व्यवहारस्य मायामात्रत्वेनोक्तत्वादित्यर्थः । ननु जागरस्यापि मिथ्यात्वं तुल्यमिति तत्राऽऽह––सत्यमिति । ब्रह्मज्ञानात्पूर्वं बाधाभावाद्व्यावहारिकं सत्यत्वमस्तीत्यर्थः । स्वप्नस्तु न तथा बाध्यत्वादित्याह––स्वप्नस्येति ॥ ११५ ॥

अ० टी०––ननु सति व्यभिचारे कर्तृत्वादेरस्वाभाविकता स्यात्स एव नास्त्यत एवं भवन्तमित्याद्युक्तमसंगतमित्याशङ्क्योक्तं व्यभिचारमुपपादयति––स्वप्ने न जागरितमस्तीति । कुतो नास्ति तत्रापि जागरितवदेव व्यवहारदर्शनादित्यत आह––मृषात्वहेतोः स्वप्नस्येति । अनृतत्वहेतोरिति वा पाठः । स्वप्नस्य मृषात्वं लोकप्रसिद्धं प्रागुपपादितं स्मर्तव्यमित्यर्थः । ननु जागरितस्याप्यनृतत्वं तव तुल्यमिति चेत्सत्यं तथाऽपि व्यवहर्तृलोकदृष्ट्या तत्रानृतत्वप्रसिद्ध्यभावात्सत्यत्वस्यैव प्रसिद्धेः सत्यं जागरितमित्याह––सत्यमिति । जागरितं वदन्तीति स्वप्नेऽनृतत्वहेत्वसिद्धिमाशङ्क्याऽऽह––स्वप्नस्येति । बाधनबलाद्व्यवहर्तृणामेव व्यवहारकाले बाधितत्वप्रतीतिबलात्स्वप्नस्यानृतत्वमुक्तं जागरिते तददर्शनात्सत्यं जागरितं वदन्तीति चोक्तमिति योज्यम् । यस्मादेवं त्वयि कर्तृत्वादिसंसारधर्म आगन्तुकत्वान्न स्वाभाविकस्तस्मात्सदैव कूटस्थशुद्धचित्सदानन्दरूप एव त्वमित्युपसंहरति––तस्मादिति । अतश्चिद्रूपादन्यत्त्वयि प्रतीयमानमार्तं विनाशि न स्वाभाविकमित्यर्थः ॥ ११५ ॥

सु० टी०––ननु प्रमात्रादिप्रपञ्चस्य मिथ्यात्वे तस्य ब्रह्मज्ञानसाधनत्वं न स्यादित्याशङ्क्य ‘ सूचकश्च हि ’ ( ब्रह्म० सू० ३ । २ । ४ ) इत्यादिन्यायमेव स्मारयति––

स्वप्नोपलब्धमखिलं वितथं तथाऽपि
तत्सूचयत्यवितथं परमार्थवस्तु ।
जाग्रद्दशावगतमप्यनृतं तथाऽपि
तद्वत्तदप्यवगतिक्षममेव भूम्नः ॥ ११६ ॥

स्वप्नोपलब्धमिति । अवितथं स्वप्नदृष्टबाधितविलक्षणम् । परमार्थवस्तु व्यवहारसमर्थेष्टादिरूपम् । स्वप्नस्यासत्यस्यापि सत्यबोधकत्ववज्जागरस्यापि ब्रह्मधीहेतुत्वमित्यर्थः ॥ ११६ ॥

अ० टी०—यदि जागरितमपि वस्तुतोऽसत्यं तर्हि तस्य तत्त्वज्ञानहेतुत्वमपि न स्यादित्याशङ्क्य 'सूचकश्च हि श्रुतेराचक्षते च तद्विदः' [ ब्र० सू० ३ । २ । ४ ] इति सूत्रोक्तन्यायमाश्रित्य स्वरूपतो मिथ्याभूतस्यापि सत्यार्थबोधकत्वं न विरुद्धमित्युत्तरमाह—स्वप्नोपलब्धमखिलमिति । निगदव्याख्यातं पद्यम् ॥ ११६ ॥

सु० टी०—ननु जागरस्य मिथ्यात्वे बाधः स्याद्बाधे वा स्वप्नस्यापि न स्यादित्याशङ्क्य सत्यमात्यन्तिकबाधो न द्वयोरप्यस्ति भवति तु क्षिप्रोपरमात्स्वप्ने बाधबुद्धिरिति प्रौढिमात्रेणाऽऽह—

स्वप्नभ्रमोऽपि सुकृतादिनिबन्धनत्वा-
त्तावत्परिस्फुरति यावददृष्टमस्ति ।
क्षीणे तु तत्र लयमेति जगन्निदाने
गाढे तमस्यनुभवावगते प्रतीचः ॥ ११७ ॥

स्वप्नभ्रम इति । 'कर्मणामल्पमहताम्' इति न्यायेनाल्पसुकृतादिनिमित्तत्वादल्पकालं स्फुरतीत्यर्थः । नन्वेवमनन्तादृष्टारब्धयोर्जाग्रत्स्वप्नयोर्नित्यानुवृत्तौ सुषुप्त्यभावः स्यादित्याशङ्क्याऽऽह—क्षीणे त्विति । तत्रादृष्टे क्षीण इति संबन्धः । अदृष्टप्रवाहानन्त्येऽपि व्यक्तिरूपेणानित्यत्वात्स्वप्नजागरप्रदकर्मव्यक्तिनाशे तयोर्नाशादुत्तरभोगप्रदकर्मानुद्बोधे मध्ये सुषुप्त्युपपत्तिरित्यर्थः ॥ ११७ ॥

अ० टी०—ननु स्वप्नजागरितयोर्यद्यनृतत्वं स्वरूपतस्तुल्यं तर्हि कं विशेषमाश्रित्य व्यवहारे तयोर्मृषात्वसत्यत्वाभ्यां वैषम्यमुक्तमिति चेत्तत्राऽऽह—स्वप्नभ्रमोऽपीति । अपिशब्दो जाग्रद्दृष्टान्तार्थः । अयमर्थः—यथा जागरितं पुण्यापुण्यकर्मनिबन्धनं तथा स्वप्नोऽपि तन्निबन्धन एवेति समानं यद्यपि तथाऽपि जाग्रद्भोगो यथा जावज्जीवमेकेनैव शरीरेण निर्वर्तनीय इति जन्मादिमरणान्तं तदारम्भककर्मणामनुपरमो नैवं स्वप्नभोगहेतुकर्मणां तेषां प्रतिस्वप्नं भिन्नजातीयशरीरादिहेतुतायाः कार्यदर्शनोन्नेयत्वात् । तथा च स्वप्नारम्भकयोः सुकृतदुष्कृतयोः क्षुद्रत्वात्प्रियमेव स्वकार्यं कृत्वोपरमात्तन्निबन्धनस्वप्नस्यापि क्षिप्रमेवोपरमो भवतीति सर्वेषां स्वप्नानां परस्परासंगतार्थत्वाद्व्यवहारकाल एव तद्बाधप्रतीतेस्तत्र मृषात्वं व्यवह्रियते । जागरितहेतुकर्मणां यावज्जीवभावित्वेनाक्षुद्रत्वात्स्वकार्यं भोगमसमाप्यानुपरमात्प्रतिजागरणं च संगतार्थत्वप्रतीतेस्तस्य बाधितत्वाननुभवाद्व्यवहारे तस्य

---

१ क. ख. °गतम°।

सत्यत्वमिष्यते । सुषुप्तौ स्वप्नवज्जागरितस्योपरमेऽपि पुनर्जागरितान्तरस्य पूर्वप्रारब्धकर्मशेषफलत्वात्परस्परसंवाद इति विशेषोपपत्तेरिति । एषाऽक्षरयोजना यावत्सुकृतादिरूपमदृष्टमस्ति तावत्स्वप्नभ्रमोऽपि परिस्फुरति जाग्रद्वत्सुकृतादिनिबन्धत्वात् । यथा जाग्रद्भ्रमो यावत्कर्मक्षयमनुवर्तते तथा स्वप्नभ्रमोऽपीत्यविशिष्टं कर्मणश्चिराचिरोपरमनिबन्धनं तु वैषम्यमित्यर्थः । कर्मक्षयादुपरमगं स्वप्नजागरितयोः स्वकारणे लयमात्रं न बाध इत्याह—**क्षीणे त्विति** । तत्र तस्मिन्स्वहेतुकर्मणि क्षीणे तु जगन्निदाने गाढे तमसि जागरितवत्स्वप्नोऽपि लयमेति । किंलक्षणे तमसि प्रतीचः प्रत्यगात्मनोऽनुभवावगते साक्षिमात्रसिद्धे साभास इत्यर्थः । स्वप्नजागरितयोः साक्षाद्बाधः प्रत्यक्तत्त्वब्रह्मावगमादेव । ततः प्राक् कारणे लयमात्रं तत्रापि मिथः स्वप्नानामसङ्गानां क्षुद्रत्वाच्च बाधितत्वव्यवहारस्तद्वैपरीत्याज्जागरिते तदभाव इति भावः । अस्यापरा व्याख्या स्वप्नवत्स्वरूपतो मिथ्यात्वेऽपि जागरितस्य भूमावगतिक्षमत्वं संभवति स्वप्नस्य सत्यार्थसूचकत्ववदित्युक्तम् । तत्र स्वरूपतोऽसतः स्वप्नस्यैव तावत्कथं सत्यार्थसूचकत्वसंभव इत्याशङ्क्य तस्यापि जागरितवत्पुण्यापुण्यनिबन्धनत्वान्नात्यन्तासत्त्वं परमार्थसद्विलक्षणत्वाभिप्रायेणैव मिथ्यात्वं विवक्षितं सदसद्विलक्षणत्वस्यैव मिथ्याशब्दार्थत्वादित्यभिप्रेत्याऽऽह—**स्वप्नभ्रमोऽपीति** । अक्षरार्थः पूर्ववत् ॥ ११७ ॥

**सु० टी०—तथाऽपि क्षणिकायाः क्रियायाः कथं स्थायिस्वप्नजागरकारणत्वमिति चेत्तत्राऽऽह—**

**निष्पादिता सकलकारकवर्गसाध्या**
**सर्वेण कारकगणेन सहैव तावत् ।**
**तिष्ठेत्क्रिया परमसूक्ष्मतयेक्ष्यमाणा**
**सर्वेश्वरेण पुरुषः फलमत्ति यावत् ॥ ११८ ॥**

निष्पादितेति । **स्थूलरूपेण हि क्षणिका क्रिया सूक्ष्मात्मनाऽनुस्थायिनी ततश्च सूक्ष्मात्मना सर्वकारकैः सहैव तावत्तिष्ठेद्यावत्पुरुषः फलमत्तीति संबन्धः । तत्र हेतुः**—निष्पादितेति । **फलार्थं निष्पादितत्वादित्यर्थः । कारकैः सहावस्थाने हेतुः**—सकलेति । **कथमचेतनायाः क्रियायाः फलदातृत्वं तत्राऽऽह**—ईक्ष्यमाणेति । **ईक्षितेश्वर एवानुरूपं फलं ददातीत्यर्थः ॥ ११८ ॥**

---

१ ख. घ. °रणग° ।

अ० टी०—ननु यावददृष्टमस्ति तावत्परिस्फुरतीत्ययुक्तं कर्मणः क्षणमात्रापवर्गिणः फलोपभोगपर्यन्तमवस्थानासंभवादिति चेन्नैष दोषस्तस्यापूर्वात्मनाऽवस्थानसंभवादित्याह—**निष्पादितेति** । पुरुषेणाधिकारिणा निष्पादिता यागादिक्रिया परमसूक्ष्मतयाऽतिसूक्ष्मरूपेण तावत्तिष्ठेदिति क्रियाकारकयोजना । यत इयं सकलकारकवर्गेण चरुपुरोडाशमांसाज्यादिना साध्याऽतः सर्वेण तेन कारकगणेन सहैव यदाश्रिता क्रिया निष्पन्ना तैराश्रयैः सहैव सूक्ष्मतयाऽपूर्वात्मना तिष्ठेदित्यर्थः । एतेन क्रियायाः परिणामासंभवादवस्थान्तरापेक्षावस्थानानुपपत्तिरिति शङ्का निरस्ता वेदितव्या । कियत्पर्यन्तं तिष्ठेदिति तदाह—यावत् पुरुषो यजमानः फलमत्ति भुङ्क्ते तावत्तिष्ठतीत्यर्थः । ननु कथं स्वाश्रयैः सह नष्टस्य कर्मणस्तावदवस्थानं न स्वभावविरोधादिति चेत्तत्राऽऽह—**ईक्ष्यमाणा सर्वेश्वरेणेति** । एतदुक्तं भवति—यद्यपि कर्मोत्पन्नमात्रविनाशस्वभावादपवृज्यत एव तथाऽपि तत्राक्षिणा कर्माध्यक्षेणेश्वरेण तदनुरूपस्य फलस्य कालान्तरे समर्पणात्तदीक्षाविषयत्वेन विपरिवर्तमानं सत्कर्म स्वफलभोगपर्यन्तं तिष्ठतीति कल्प्यते । संस्काररूपेण च परमेश्वरसाक्षिकं सत्तिष्ठतीति सर्वथा कर्मणः फलहेतुताया वेदेन बोधितत्वाद्यथा तस्य फलानुकूलता भवति तथाऽवस्थानमङ्गी क्रियत इति ॥ ११८ ॥

**सु० टी०—जाग्रत्स्वप्नयोरज्ञानकार्यत्वात्कथं कर्मफलत्वमिति चेत्तत्राऽऽह—**

**स्वप्नश्च जागरितमप्युभयं तवैव**
**मोहप्रसूतमपि कर्मफलं विभाति ।**
**कर्मक्षये तदखिलं परमात्ममाया-**
**माश्रित्य सूक्ष्ममवतिष्ठत एव लीनम् ॥ ११९ ॥**

स्वप्नश्चेति । '**पुण्यः पुण्येन**' [ **बृह० ४ । ४ । ५** ] **इत्यादिश्रुतेर्वैचित्र्याच्च कर्मफलत्वमपीत्यर्थः । तर्हि कर्मैव कारणमस्तु किमज्ञानेनेति तत्राऽऽह**—कर्मक्षय इति । **कर्मनिमित्तकारणमुपादानापेक्षायामात्मनः कूटस्थस्योपादानत्वासंभवात्तन्निर्वाहकमज्ञानमपि कल्प्यत इत्यर्थः॥ ११९ ॥**

अ० टी०—नन्वेवंसति स्वप्नस्यापि न भ्रान्तित्वं कर्मानुरोधित्वाज्जाग्रद्वदिति चेन्नैवं जागरितस्यापि भ्रान्तित्वाद्भ्रान्तित्वेऽपि कर्मफलत्वाविरोधादित्याह—**स्वप्नश्चेति** । कर्मफलं विभाति व्यावहारिक्या दृष्ट्येति शेषः । एवं तर्हि कर्मफलत्वात्संसारस्य कर्मक्षयात्क्षय इति ज्ञानवैयर्थ्यं स्यादिति चेन्नेत्याह—**कर्मक्षय इति** । तदखिलं जाग्रत्स्वप्नव्यवहारगोचरतामापन्नं संसारजातं कर्मक्षये फलभोगेन कर्मविनाशे सति परमात्ममायां स्वमूलका-

रणमाश्रित्य तत्र लीनं संस्काररूपतामापन्नं सत्सूक्ष्मं यथा स्यात्तथाऽवतिष्ठत एव नात्यन्तमुच्छिद्यतेऽतो न तत्त्वज्ञानवैयर्थ्यमित्यर्थः । एतेनार्थान्मोहप्रसूतत्वमपि जाग्रत्स्वप्नयोः समर्थितं वेदितव्यमतत्प्रसूतस्य तस्मिँल्लयायोगादिति ॥ ११९ ॥

सु० टी०—ननु जाग्रत्स्वप्नयोरज्ञातात्मलीनत्वे प्रमाणाभावात्किमज्ञानकल्पनयेति तत्राऽऽह—

> उत्थानलिङ्गकृतकल्पनयैतदेवं
> विज्ञायते न तु तथाऽवगतं तदानीम् ।
> अज्ञानलीनमखिलं जगदस्ति सूक्ष्मं
> तत्रैव नानुभवनादवगम्यते हि ॥ १२० ॥

उत्थानेति । निरन्वयनाशे पुनरुत्थानानुपपत्तेरज्ञानलीनत्वेनावस्थितिः कल्प्यत इत्यर्थः । ननु सौषुप्तानुभवादेव तत्सिद्धेः किमनुमानेनेति तत्राऽऽह—नन्विति । अननुभवमेव दर्शयति—अज्ञानेति ॥ १२० ॥

अ० टी०—यद्येवं सुषुप्तेऽपि संसारस्य प्रत्यगज्ञानशेषतयाऽवस्थानमस्ति तर्हि तदाऽज्ञानस्य संसारसंस्कारस्य च विद्यमानत्वात् ‘ तदभावो नाडीषु तच्छ्रुतेरात्मनि च ’ [ ब्र० सू० ३ । २ । ७ ] इति न्यायेन समर्थ्यमाना प्रत्यगात्मनो विशुद्धिरनुपपन्ना स्यादिति चेत्तत्राऽऽह—उत्थानेति । सुषुप्तस्य पुनरुत्थानरूपं यल्लिङ्गं तत्कृता या कल्पनाऽनुमानरूपा तयैवैतदेवं विज्ञायते सम्यगव्यवधानेन ब्रह्मसंपन्नत्वे ततः पुनरुत्थानासंभवादस्ति तत्र व्यवधानमिति पुनरुत्थानात्संसारबीजस्य सुषुप्तावप्यवस्थानं कल्प्यत इत्यर्थः । तदानीं सुषुप्तौ तथा नावगतमज्ञानतत्कार्यसद्भावः सौषुप्तानुभवेन न प्रतीत इत्यर्थः । तथेत्युक्तमेव प्रपञ्चयति—अज्ञानलीनमिति । सूक्ष्ममित्यतः परस्तादितिशब्दोऽध्याहर्तव्यः । इति तत्र सुषुप्तावनुभवनान्नैवावगम्यते हीत्यन्वयः ॥ १२० ॥

सु० टी०—तथाऽप्यज्ञाने लीनमिति कुतोऽन्यत्रैव लीनं किं न स्यादिति चेत्तत्राऽऽह—

> अज्ञानमेव तु तदाऽवगतं त्वदीयं
> येनोत्थितो[१] वदसि नावगतं मयाऽद्य ।
> सुप्तेन किंचिदपि गाढतमस्यभूवं
> क्षिप्तः समस्तविषयावगमासमर्थः ॥ १२१ ॥

---

१ क. येनान्वितो° ।

अज्ञानमेवेति। अज्ञानस्यानुभवात्तत्परित्यज्यानुभूयमानस्यान्यस्य कल्पनानुपपत्तिरित्यर्थः । किमज्ञानानुभवे प्रमाणमिति तत्राऽऽह––येनेति ॥ १२१ ॥

अ० टी०––ननु सौषुप्तानुभवोऽप्युत्थितस्य परामर्शबलात्तादृशः कल्प्यत इति चेत्सत्यं सोऽप्यज्ञानमात्रविषय एव न ततोऽधिकविषय इत्याह–अज्ञानमेव त्विति । तदा सुषुप्तौ त्वदीयमज्ञानमेवावगतं न तत्र लीनं जगदपीति गम्यत इति शेषः । कुतो येन कारणेन त्वमुत्थितः सन्नद्य सुप्तेन सुषुप्तेन मया किंचिदपि नावगतमिति वदसि । गाढे तमसि क्षिप्तो मग्नः सन्समस्तविषयावगमासमर्थोऽभूवमिति च वदस्यतो नाज्ञानातिरिक्तं सुषुप्तेऽनुभूतमस्तीति गम्यत इत्यर्थः ॥ १२१ ॥

सु० टी०––ज्ञानाभावविषयोऽयं परामर्श इति चेत्तत्राऽऽह––

अज्ञानमत्र यदि नानुभवात्प्रसिद्धं
नाज्ञासिषं त्विति कुतस्तव निश्चयोऽभूत् ।
अज्ञानमस्त्यवगतं च सुषुप्तिकाले
तेनेति निश्चिनु तवानुभवप्रमाणात् ॥ १२२ ॥

अज्ञानमिति। तस्य धर्मिप्रतियोगिज्ञानसापेक्षस्य सुषुप्तावसंभवादज्ञानानुभवं विना परामर्शः कुतः स्यादित्यर्थः । फलितमाह––अज्ञानमिति ॥ १२२ ॥

अ० टी०––ननु सुषुप्तावज्ञानानुभवोऽपि नाभूत्परामर्शस्य विकल्पमात्रत्वात्तस्य चाप्रमाणत्वात्सौषुप्तानुभवकल्पकत्वायोगादिति चेन्नैवं विकल्पस्यापि निर्मूलत्वायोगात्तेन स्वमूलकल्पनं घटत इत्याभिप्रेत्य पूर्वपद्योक्तमेवार्थं व्यतिरेकमुखेणोपपादयति––अज्ञानमत्रेति । तेन नाज्ञासिषमिति परामर्शेन कल्प्यमानात्तन्मूलात्तवानुभवप्रमाणान्निर्विकल्पानुभवात्सुषुप्तिकालेऽज्ञानमस्ति तच्चावगतमिति निश्चिनु विश्वसिहीति योजना ॥ १२२ ॥

सु०टी०–ननु सुषुप्तावज्ञानानुभवसत्त्वे सुषुप्तित्वं भज्येतेति तत्राऽऽह–

स्पष्टानुभूतिविषयो न तमस्तदानी-
मासीदहंकरणहीनतयाऽधुना तु ।
निष्पाद्य कार्यमिदमंशमहं न जाने
मूढोऽस्मि चेत्यवगतेर्विषयत्वमागात् ॥ १२३ ॥

स्पष्टेति। तर्हि जागरेऽपि न स्पष्टमनुभूयेतेति चेत्तत्राऽऽह––अधुना त्विति। कार्यमहंकारं व्यञ्जकं निष्पाद्येत्यर्थः ॥ १२३ ॥

अ० टी०—नन्वेवं तर्हि तत्र तत्र भाष्यकारादीनां सुषुप्तावज्ञानाभाववचनमसंगतं स्यात् ' स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ' [ छा० ६ । ८ । १ ] इत्यादिश्रुतिवचनं चेतिचेन्नैवमहंकारोपरागाभावेन सुप्तावज्ञानानुभवस्यास्फुटत्वाभिप्रायत्वात्तत्राज्ञानाभाववचनानामित्याह—**स्पष्टानुभूतीति** । अहंकारे सति सुषुप्तिव्याघातात्तदभावे चाहमज्ञ इति विशेषाकारेणाज्ञानाभिव्यक्त्यभावात्सुषुप्तौ विद्यमानमप्यज्ञानमविद्यमानसमं विक्षेपाभावादिति तत्राज्ञानाभाववचनमप्युपपन्नमेवेत्यभिप्रायः । अहंकाराभावादेव सुपुप्तावज्ञानानुभवस्य स्पष्टताभावो नाज्ञानानुभवाभावमात्रादित्यत्र लिङ्गमाह—**अधुना त्विति** । जागरण इति यावत् । अहमित्यत्र योऽयं दृश्यांशः स इदमंशस्तमिदमंशं स्वकार्यं निष्पाद्याहं न जाने मूढोऽस्मि चेति स्पष्टावगतेर्विषयत्वमागादज्ञानमिति शेषः । तथा च सत्यहंकारे स्पष्टानुभवस्यावश्यंभावात्तदभावे चाभावादहंकाराभावकृतस्तत्र स्पष्टानुभवाभावोऽज्ञानस्येत्यर्थः ॥ १२३ ॥

**सु० टी०–यद्यज्ञानमनुभूतं सुषुप्तौ कुतो मम तदानीं तमो नाऽऽसीदिति धीरिति चेत्तत्राऽऽह—**

**एतावता तव तमोऽपि सुषुप्तिकाले**
**नास्तीति बुद्धिरुदितं गुरुभिश्च कैश्चित् ।**
**स्थाने क्वचित्क्वचिदतो द्वयमुच्यमानं**
**ग्राह्यं विविच्य भवता विषयं विभज्य ॥ १२४ ॥**

एतावतेति । **स्पष्टानुभवाभावादित्यर्थः । नन्वाचार्यैरप्यात्मशुद्धिप्रकरणे नास्त्यज्ञानं सुषुप्त इत्युक्तमिति चेत्तत्राऽऽह**—उदितमिति । **तदप्येतावतैव न त्वभावाभिप्रायेणेत्यर्थः । ततश्चाज्ञानसत्त्वासत्त्ववचनं स्पष्टत्वास्पष्टत्वाभ्यां विविच्य ग्राह्यमित्याह**—अत इति ॥ १२४ ॥

तथा च प्राक्तदृष्ट्यनुरोधेन सुषुप्तौ तमःस्वरूपमपि नानुभूतं मयेति या तव दृष्टिः सा तदनुभवस्यास्फुटत्वादेवेति सिद्धमित्याह—**एतावतेति** । अहंकरणाभावेन स्पष्टानुभवाभावमात्रेणेत्यर्थः । कैश्चिद्गुरुभिर्भाष्यकारादिभिराचार्यैश्चैतावतैव क्वचित्क्वचित्प्रत्यगात्मनो विशुद्धिप्रतिपादनप्रकरणे सुषुप्तावज्ञानं नास्तीत्युदितम् । यत एवमतो द्वयमज्ञानसद्भावस्तदभावश्चेत्युभयमुच्यमानं विषयं विभज्य सद्भाववचनमस्पष्टतया स्वरूपानुभवपरमभाववचनं त्वनुभवस्य स्पष्टत्वाभावपरमिति विषयं विभज्य विविच्योभयमपि वचनं सालम्बनमेव नान्यतरेणान्यतरस्य बाध इति त्वया ग्राह्यमित्यर्थः ॥ १२४ ॥

---

१ क. °ता नच त° ।

सु० टी०—किं तद्वचनद्वयमिति तदाह—

नाज्ञानमस्ति च सुषुप्तिगतस्य पुंसो
गाढे तमस्ययमभूत्पुरुषः सुषुप्तः ।
इत्युच्यमानमविरुद्धतया विचिन्त्य
ग्राह्यं त्वयाऽनुभवयुक्तिनिरूपणेन ॥ १२५ ॥

नाज्ञानमिति । अनुभवयुक्तिनिरूपणेनोक्तेनेत्यर्थः ॥ १२५ ॥

अ० टी०—किं तद्द्वयमुच्यमानमिति तदेव स्फुटयति—नाज्ञानमस्तीति । स्पष्टार्थं पद्यम् । अनुभवयुक्त्यनुरोधेनोभयमविरुद्धतया ग्राह्यमित्यर्थः ॥ १२५ ॥

सु० टी०—कथमेवं व्यवस्थावगम इति चेत्तत्राऽऽह—

एवं तमोऽपि न बभूव सुषुप्तिकाले
भाषान्तरेण पुरुषः पर एव जीवः ।
निर्बीजतामुपगतः स निरन्वयेन
न स्पष्टमत्र तमसोऽनुभवोऽस्ति यस्मात् ॥ १२६ ॥

एवमिति । तैरेव व्यवस्था स्पष्टीकृतेत्यर्थः । भाषान्तरेण वचोभङ्ग्यन्तरेण सुषुप्ते जीवः पर एव संवृत्त इत्यादिना । स जीवो निरन्वयेनोपाधिसंबन्धाभावेन निर्बीजतां संसारबीजशून्यतामुपगत इत्यपि वाक्यान्तरं तदभिप्रायम् । तदेवाऽऽह—न स्पष्टमिति ॥ १२६ ॥

अ० टी०—अन्यदप्यर्थसिद्धं सुषुप्तावज्ञानाभाववचनमाचार्याणामेवमेव योज्यमित्याह—एवमिति । जीवः परः पुरुष एव संवृत्त इति भाषान्तरेण शब्दान्तरेण सुषुप्तिकाले तमोऽपि न बभूवेति यदाचार्याणामर्थसिद्धं वचनं तदप्येवमेवोक्तप्रकारमेवेति योजना । तत्रैव वचनान्तरमाह—निर्बीजतामिति । स जीवो निरन्वयेनोपाधिसंबन्धविलयेन निर्बीजतां संसारबीजराहित्यमुपगत इति वचनं विद्यमानमपि सुषुप्तावज्ञानं विक्षेपाभावादविद्यमानसममकिंचित्करत्वादित्यभिप्रायं ज्ञेयमित्यर्थः । सर्वत्रोपपत्तिं पूर्वोक्तां स्मारयति—न स्पष्टमिति । अत्र स्पष्टं तमसोऽनुभवो नास्ति यतस्तस्मादिति योजना ॥ १२६ ॥

सु० टी०—एवमेव वृद्धवचनान्तरं नेयमित्याह—

अज्ञानतज्जमतिहीनतया सुषुप्ते
शुद्धः परोऽसि भगवानसि नित्यमुक्तः ।

कामश्च कर्म सकलं च तदा कुतस्त्यं
चित्सागरेऽनवकरे त्वयि तायमाने ॥ १२७ ॥

अज्ञानेति । सुषुप्तावुपाधिहानाद्विशुद्धपूर्णचिदात्मनि त्वयि कुतः काम-कर्मादि स्यादित्याद्यर्थकमित्यर्थः । अनवकरेऽवच्छेदरहिते । अत एव तायमाने पूर्णे ॥ १२७ ॥

अ० टी०—तथाऽन्यदपि केषांचिदाचार्याणां वाक्यमुदाहरति—अज्ञानतज्जेति । अनवकरेऽनात्मसंकररहिते त्वयि तायमाने परिपूर्णतयाऽभिव्यज्यमान इत्यर्थः ॥ १२७ ॥

सु० टी०—एवं तर्हि मुक्तिप्रसङ्ग इति चेत्तत्राऽऽह—

आसीदहंकरणमात्मतमोनिमित्तं
तज्जाग्रतश्च भवतः स्वपतः सुदुःखम् ।
आनीय दर्शयति तन्न सुषुप्तिकाले
बीजक्षयादिति भवानतिनिर्मलोऽभूत् ॥ १२८ ॥

आसीदिति । अहंरूपपरिणताज्ञानं जाग्रत्स्वप्नयोर्दुःखबीजं न तत्सुषुप्ता-वस्तीति निर्बीजत्वाद्युक्तिरमुक्तिश्चोपपद्यत इत्यर्थः । इति भवानिति । न तु सर्वथा निर्मल इत्यर्थः ॥ १२८ ॥

अ० टी०—यद्येवमस्पष्टतयाऽपि सुषुप्तेऽज्ञानं तिष्ठति तस्मिंश्च लीनतया सकलं जगदप्यस्ति तर्हि तत्राऽऽत्मनो विशुद्धिः कथमुच्यत इति चेत्तत्राऽऽह—आसीदिति । आत्मतमोनिमित्तमज्ञानकार्यं यदहंकरणमासीत्तत्स्वरूपतः स्वप्नं गतस्य जाग्रतश्च तव सुदुः-खं सुखं च दुःखं चाऽऽनीयोद्भाव्य दर्शयति । अतोऽहंकारकञ्चुकेनाऽऽविष्टत्वादेवाशु-द्धिरित्यशुद्धिबीजमहंकारो नाज्ञानस्वरूपमात्रमित्यभिप्रायः । सुषुप्तिकाले तदहंकरणं नाऽऽसी-दित्यहंकाररूपसंसारबीजक्षयाद्भवान्सुषुप्तावतिनिर्मलोऽभूदिति योजना । अतः सबीजस्य दुःखस्य तदानीमभावात्सत्यप्यज्ञाने प्रत्यगात्माऽतिनिर्मल एवावगम्यत इत्यर्थः ॥ १२८ ॥

सु० टी०—नन्वभावरूपमेवाज्ञानं वृद्धाभिप्रेतमिति तत्कथमहंकारो-पादानमिति तत्राऽऽह—

सद्रूपमावरणतानुभवाद्भीष्ट-
मज्ञानमात्मचिति नैशतमोवदेतत् ।
ज्ञानं दिवाकरवदस्य जडप्रकाश-
रूपं निवर्तकमिति प्रवदन्ति धीराः॥ १२९ ॥

सद्रूपमिति । **आवरकत्वं ज्ञाननिवर्त्यत्वं चाङ्गीकुर्वद्भिरभावविलक्षणत्वमज्ञानस्याभ्युपेतमिति गम्यत इत्यर्थः । कथं तर्हि चैतन्यस्याविरुद्धस्याज्ञाननिवृत्तिस्तत्राऽऽह**—ज्ञानमिति । **वृत्त्यभिव्यक्तं ज्ञानं प्रमाणत्वेन विरोधित्वान्निवर्तकमित्यर्थः ॥ १२९ ॥**

अ० टी०—अहंकारं प्रत्युपादानत्वमज्ञानस्य यदुक्तमात्मतमोनिमित्तमित्यत्र तत्सिद्धये तस्य भावरूपत्वमुक्तं स्मारयति—**सद्रूपमिति** । आत्मचिति स्वप्रकाशतया नित्यप्राप्तप्रकाशस्वभाव आत्मनीति यावत् । अज्ञानमात्मचित्यावरणतानुभवाद्यथावत्स्फुरणाच्छादकतयाऽनुभूयमानत्वादितत्सद्रूपमभीष्टं नैशतमोवदन्धकारवदिति योजना । विमतं सद्रूपमावरकत्वात्तमोवदित्युक्तं भवति । न ह्यभावस्य प्रकाशाच्छादकत्वं संभवतीत्यत आवरकत्वादेव तमश्च स्वभावरूपमेष्टव्यं तार्किकैरपीति भावः । नन्वेवंसत्यज्ञानस्य चित्प्रकाशेन विरोधाभावाच्चित्प्रकाशस्य चाऽऽत्मस्वरूपतया नित्यत्वेनाऽऽगन्तुकत्वाभावादागन्तुकज्ञानाभावे सति कथमज्ञाननिवृत्तिः संभवेदिति चेत्तत्राऽऽह—**ज्ञानं दिवाकरवदिति** । दिवाकर इव तमसोऽस्याज्ञानस्य जडप्रकाशरूपं महावाक्यप्रमाणजनितसाभासान्तःकरणवृत्तिलक्षणं निवर्तकमिति धीरा धीमन्तः प्रवदन्तीति योजना ॥ १२९ ॥

**सु० टी०—अन्यैरपि भावरूपमेव तदङ्गीकार्यमित्याह—**

**प्रावादुकैरपि तथैव तदेषितव्यं**
**संवेदनेऽस्फुरणमभ्युपयद्भिरग्रे ।**
**संवेदने न खलु संविदभावरूपमज्ञान-**
**मभ्युपगतं न च बुद्ध्यभावः ॥ १३० ॥**

प्रावादुकैरिति । **अग्रे संविद्व्युत्पादकवाक्योत्थविज्ञानात्प्रागित्यर्थः । तथा हि संवेदनरूप आत्मनि किं संवेदनाभावरूपमज्ञानं किं वा बुद्ध्यभावरूपं नाऽऽद्य इत्याह**—संवेदन इति । **असंभवादित्यर्थः । द्वितीये त्वाह**—न चेति । **संवेदनगतबुद्ध्यभावस्यात्यन्ताभावत्वान्न संवेदनं कदाऽपि प्रकाशेतेत्यर्थः ॥ १३० ॥**

अ० टी०—अज्ञानस्य भावरूपत्वे वादिभिरपि न विवदितुं शक्यमित्याह—**प्रावादुकैरपीति** । अस्फुरणमितिच्छेदः । अग्र उत्तरकालमित्यर्थः । संविदभावो वा बुद्ध्यभावो वा संवेदनेऽज्ञानं भविष्यति कुतोऽस्य भावरूपत्वसिद्धिरिति चेत्तत्राऽऽह—**संवेदन इति** । संवेदनस्य वेदनान्तरवेद्यत्वानङ्गीकारान्न संविदभावो बुद्ध्यभावो वा संविदस्फुरणमिति परिशेषाद्भावरूपाज्ञानादेव स्फुरणमङ्गीकार्यमित्यर्थः ॥ १३० ॥

सु० टी०—अतश्चाभावविलक्षणाज्ञानाभिधानमेव युक्तमित्याह—

तस्मादशेषजगदेकनिदानभूत-
मज्ञानमात्मविषयं न विरुद्धमूचुः ।
वेदावसानवचनानि मुनीश्वराश्च
स्थानेषु भूरिषु ततोऽवकरो न कश्चित् ॥ १३१ ॥

तस्मादिति । अवकरोऽनुपपत्तिः ॥ १३१ ॥

अ० टी०—तदेवमज्ञानकार्यस्याहंकारस्य तत्कृतदुःखस्य चाभावात्सुषुप्ते संसाराभाव उच्यते न त्वज्ञानस्याप्यभावादतश्च तद्विषयाणि श्रुत्यादिवाक्यानि न विरुद्धानीत्युपसंहरति—तस्मादिति । अवकरः संकरो विरोध इति यावत् । स्पष्टमन्यत् ॥ १३१ ॥

सु० टी०—एवं कर्तृत्वभोक्तृत्वादेरात्मस्वभावत्वं निराकृत्य साक्षित्वप्रमातृत्वयोरपि तन्निरस्यति—

साक्षित्वमात्मतमसा मतिकञ्चुकेन
मातृत्वमेतदपि नेह सुषुप्तिकाले ।
यद्धेतुकं भवति यन्न हि तद्विना त-
त्संभाव्यते न च तदत्र सुषुप्तिकाले ॥ १३२ ॥

साक्षित्वमिति । अविद्योपाधिकं साक्षित्वं बुद्ध्युपाधिकं च प्रमातृत्वमतो द्वयमपि कल्पितमित्यर्थः । नन्वौपाधिकत्वेऽपि पटनैल्यवत्स्वाभाविकमास्तामिति नेत्याह—एतदपीति । नैल्यस्य यावत्पटमनुवृत्तेः स्वाभाविकता न तु सुषुप्तौ व्यभिचारिणः साक्षित्वादेरित्यर्थः । ननु सुषुप्तावविद्यायाः सत्त्वात्कथं तदुपाधिकसाक्षित्वाभाव इति तत्राऽऽह—यद्धेतुकमिति । न तदविद्यामात्रापेक्षमपि तु साक्ष्यमप्यपेक्षत इत्यर्थः । अस्तु तदपीति चेत्तत्राऽऽह—न चेति । 'न तु तद्द्वितीयमस्ति । [ बृह० ४ । ३ । २३ ]' इति श्रुतेः । ततश्च कार्यसाक्षित्वं नास्तीत्यर्थः । अज्ञानादिसाक्षित्वोपगमात् । अत्राऽऽहुः—अविद्याप्रतिबिम्बस्य साक्षित्वे पुरुषान्तरबुद्धिसुखादेरपि प्रत्यक्षतापत्तिः । तस्यापि स्वबुद्ध्यादिवत्तत्रानावृतसाक्षिण्यध्यस्तत्वेन चिदुपरक्तत्वादनावृतत्वाच्च । अत एव नवृत्त्यपेक्षा । न च तत्परं प्रत्यावृतं साक्ष्यभेदे स्वपरविभागाभावात्केवलसाक्षिभास्यस्य च प्रमातृभेदेऽप्यावृतत्वायोगात् । तस्मादन्तःकरणोपहि-

तस्य साक्षित्वं तद्विशिष्टस्य च प्रमातृत्वमित्यभ्युपेयमिति। अत्र ब्रूमः—भवत्वविद्याप्रतिविम्बित एकः साक्षी तथाऽपि न चैत्रसुखादेर्मैत्रं प्रति प्रत्यक्षत्वं साक्षिसंबन्धेऽपि प्रमात्रसंबन्धात्प्रमात्रभेदस्यैवापारोक्ष्यत्वात्साक्षाद्वा वृत्तिद्वारा तद्बुद्ध्यवच्छिन्नस्यैव साक्षिणा ज्ञाततया तं प्रत्यपरोक्षत्वेन बोधनादन्यं प्रत्यन्यसुखाद्यवच्छिन्नचितोऽताद्दृशत्वादेतदर्थमेव च नानान्तःकरणकल्पनादात्मैक्य इव साक्ष्यैक्येऽपि स्वपरविभागाविरोधादनावृतसाक्षिण्यध्यस्तत्वस्य च प्रतिभासाप्रयोजकत्वेनाविद्यावृत्तिस्थले साधितत्वात्स्वप्नसाक्षिणोऽपि वासनामयबुद्ध्यवच्छिन्नविषयत्वात्सुषुप्तावपि सूक्ष्मबुद्ध्यवच्छेदेनैवाज्ञानसुखाद्याकारवृत्तितत्संस्कारौ न सर्वसाक्ष्यवच्छेदेनेति न पुरुषान्तरे तत्परामर्शातिप्रसङ्ग इति दिक् ॥ १३२ ॥

अ० टी०—ननु सुषुप्तेऽज्ञानानुभव इष्यते चेत्तदनुभवितृत्वलक्षणं प्रमातृत्वमपि स्यात्तथा चाहंकारोऽपि तत्र स्यादिति चेन्मैवं साक्षित्वमात्रेणाज्ञानस्य तदाऽनुभवादिति परिहरति—**साक्षित्वमिति**। चिदात्मन आत्मतमसा स्वसंबद्धाज्ञानमात्रेण साक्षित्वमज्ञानसंबन्धमात्रेणाऽऽत्मनः साक्षित्वं भवति। नाहंकारापेक्षं तत्सुषुप्तौ च साक्षिमात्राकारेणैवाज्ञानानुभवनमित्यर्थः। मातृत्वं पुनर्मतिकञ्चुकेनान्तःकरणोपाधिप्रवेशेन भवति नाज्ञानसंबन्धमात्रात्। एतदपि मतिकञ्चुकमिह सुषुप्तिकाले नास्ति। तदभावे च तत्र प्रमातृत्वमपि नास्ति हेत्वभावे फलाभावादित्याह—**यद्धेतुकमिति**। व्याप्तिमुक्त्वा पक्षधर्मतामाह—**न च तदत्रेति**। सुषुप्तावात्मनो न प्रमातृत्वमस्ति तत्र तद्धेत्वभावाद्यत्र यस्य हेत्वभावस्तत्र तन्न भवति यथा महाह्रदे वह्न्यभावे धूमस्याप्यभावस्तथाचायं तस्मात्तथेति प्रयोगः ॥ १३२ ॥

सु० टी०—नन्वेवमनुभवाभावादेव सविलासाज्ञानक्षयः सुषुप्तावभ्युपेय इति चेत्तर्हि पुनरुत्थानाभावेन मुक्त्यापत्तेरित्याह—

अज्ञानमस्ति सकलं हि सुषुप्तिकाले
तत्र प्रलीनमिति यद्यपि नास्ति पुंसः।
स्पष्टानुभूतिरपवर्गविलक्षणत्वा-
देष्टव्यमेव तु सुषुप्तिभुवस्तथात्वम् ॥ १३३ ॥

अज्ञानमिति। सुषुप्तस्य स्पष्टाननुभवेऽपि निर्विकल्पकानुभवात्कथमन्यथा सुखाज्ञानाद्यनुसंधानमित्यर्थः ॥ १३३ ॥

अ० टी०—ननु यदि सुषुप्तावज्ञानानुभवः स्पष्टो नास्ति तदाऽज्ञानमेव तत्र नास्तीति कस्मान्न निश्चीयते तदभावे तत्र लीनं जगदपि नास्तीत्येव कल्पनीयमेवं चाऽऽत्मविशुद्धिश्रुतिरसंकुचितार्था भविष्यतीति चेन्मैवं सुषुप्तेर्मोक्षवैलक्षण्याभ्युपेयत्वादन्यथा पुनरुत्थानाभावप्रसङ्गादत उत्थानलिङ्गादेवाज्ञानं प्रविलीनस्वकार्यं सुषुप्तावस्तीत्यङ्गीकार्यमित्याह—**अज्ञानमस्तीति** । सुषुप्तिभुवः सुषुप्तिस्थानस्य तथात्वं प्रविलीनसमस्तस्वकार्याज्ञानवत्त्वमित्यर्थः ॥ १३३ ॥

**सु० टी०—ननु सुषुप्ते चैतन्याज्ञानयोरविविक्तत्वात्कथं भेदावगम इति शङ्कते—**

**एवं सतीह तमसो न विविच्य वस्तु**
**साक्षान्निवेदयितुमस्ति निदर्शनं चेत् ।**
**नैतत्परागवगतेर्विषयो विभाति**
**गाढं तमो न तु तथाऽवगतिः प्रतीचि ॥ १३४ ॥**

**सु० टी०**—एवमिति । **भास्यभासकभावेन तत्राप्यस्ति विवेक इति परिहरति**—नैतदिति । **ननु चैतन्यस्याप्यनुभूयमानत्वादन्योऽनुभविता स्यादिति नेत्याह**—न तु तथेति । **स्वातिरिक्तप्रकाशनैरपेक्ष्येण स्फुरतो न स्वभिन्नभासकापेक्षेत्यर्थः ॥ १३४ ॥**

अ० टी०—यद्यात्मनि सुषुप्तावप्यज्ञानं यथोक्तरूपमस्ति तर्हि तस्यानागन्तुकत्वाच्चैतन्यवत्स्वाभाविकमतस्यादिति शङ्कते—**एवं सतीति** । सुषुप्तावप्यज्ञानसद्भावे सतीत्यर्थः । इह सुषुप्तौ वस्त्वात्मस्वरूपं तमसः सकाशात्साक्षाद्विविच्य निवेदयितुं निदर्शनं प्रमाणं नास्तीति चेदिति योजना । उक्तस्य तमसो दृश्यत्वादेवाऽऽत्मस्वभावत्वाभावसिद्धिरिति परिहरति—**नैतदिति** । गाढं तमः सुषुप्तौ परागवगतेः पराक्त्वेन दृश्यतयाऽवगतिरनुभवस्तस्या विषयो विभाति विषयत्वेनैव तत्राज्ञानानुभव इत्यर्थः । प्रतीचि प्रत्यगात्मनि तथा विषयत्वेनावगतिर्न त्वस्त्यतोऽनुभवानुसारेण प्रत्यक्परागभावेनाऽऽत्माज्ञानयोर्विवेकः सुसंपाद इत्यर्थः ॥ १३४ ॥

**सु० टी०—किं तत इति चेत्तत्राऽऽह—**

**प्रत्यक्पराग्विषयवस्तुविवेचनाय**
**क्लेशो न संभवति कस्यचिदत्र जन्तोः ।**
**दृश्यं तमो घटपटादिवदेष तस्य**
**द्रष्टा सुषुप्तिभुवि चिद्घनविग्रहोऽभूत् ॥ १३५ ॥**

प्रत्यगिति । ननु सुषुप्तावज्ञानस्य दृश्यत्वादनात्मत्वं परामर्शावष्टम्भेन वाच्यं न चासौ संभवति तत्राज्ञानानुभवस्य साक्षिरूपस्याविनाशिनः संस्काराजनकत्वादित्याशङ्क्याऽऽह—दृश्यमिति । तत्राज्ञानं न केवलचैतन्यदृश्यं किं त्वविद्यावृत्त्युपाधिकचैतन्यदृश्यमित्यविद्यावृत्तिनाशजसंस्कारात्परामर्शः स्यादित्यर्थः । कुतो वृत्तिकल्पनेत्यत्राऽऽह—एष इति । चिद्घनविग्रहस्यासङ्गस्य द्रष्टृत्वानुपपत्तेरित्यर्थः ॥ १३५ ॥

अ० टी०—उक्तमेवार्थं विविच्य दर्शयति—प्रत्यक्परागिति । अनुभवानुसारित्वाद्विवेकस्य न क्लेशोऽत्र संभवतीत्यर्थः । नन्वेवंविधो विवेकः स्पष्टत्वाज्जागरिते तु स्यान्न सुषुप्ताविति चेन्नोत्थितस्य परामर्शस्वभावानुरोधेन कल्प्यमानाज्ञानानुभवस्य तथैव कल्पनादित्याह—दृश्यं तम इति । सुषुप्तिभुवि तमो घटपटादिवद्दृश्यमभूत् । एष चिद्घनविग्रह आत्मा तस्य द्रष्टाऽभूदिति विवेकोपपत्तेरित्यर्थः । उत्थितो हि सौषुप्तानुभवं परामृशन्नहमेतावन्तं कालं न किंचिदवेदिषमिति परामृशति । तत्राहमिति द्रष्टोल्लिख्यते नावेदिषमिति चावेदनं ज्ञानपर्युदासेनाज्ञानं द्रष्टृदृश्यत्वेनोल्लिख्यते । अतस्तदनुसारेण स्वापावस्थायामप्यज्ञानं विषयत्वेनाऽऽत्मा च तद्द्रष्टा प्रत्यक्त्वेनाविषयतयाऽऽसीदिति कल्प्यत इत्यभिप्रायः ॥ १३५ ॥

सु० टी०—एवं दुर्विवेकादज्ञानाद्विवेकसिद्धाववस्थाभ्यो विवेक ईषत्कर इत्याह—

तिस्रोऽपि चिद्घनतनोस्तव दृश्यभूता
दूरे चकासति मतेर्बहिरेव तावत् ।
आविस्तिरोभवनधर्मतया ह्यवस्थाः
कः संकरो विमलचिद्वपुषश्च ताभिः[1] ॥ १३६ ॥

तिस्रोऽपीति । अवस्थास्तिस्रोऽप्याविर्भावतिरोभावधर्मतया तव चिद्घनतनोर्दृश्यतया दूरेऽत्यन्तं बहिरेव चकासतीति संबन्धः । कस्य तर्हि धर्मा इति तत्राऽऽह—मतेरिति । अहं जागर्मीत्यनुभवादात्मधर्मत्वमवस्थानामिति चेत्तत्राऽऽह—कः संकर इति । दृश्यस्य द्रष्टृधर्मत्वादित्यर्थः ॥ १३६ ॥

अ० टी०—तथाऽप्यवस्थावत्त्वं मम स्यादिति चेन्नावस्थानामपि तव दृश्यत्वादित्याह—तिस्र इति । मतेस्तिस्रोऽप्यवस्था इति संबन्धः । चिद्घनतनोः स्वप्रकाशज्ञानरूपस्य तव

१ ख. घ. °षस्तवाऽऽभिः ।

बहिरेव विषयत्वेनैव तावद्दृश्यभूता नाऽऽत्मधर्मत्वेनेति यावत् । हि यस्मादाविस्तिरोभवनधर्मतयाऽऽगमापायवत्तया दूरे चकासति पृथगवभासन्ते । तस्माद्विमलचिद्वपुषस्तव ताभिरवस्थाभिः कः संकरः कुतो वैशिष्ट्यमिति योजना ॥ १३६ ॥

**सु० टी०—कथं तर्ह्यहं जागर्मीत्यनुभवस्तत्राऽऽह—**

**त्वय्येव कल्पितमहंकरणं बिभर्ति**
**तिस्रोऽपि ताः सहितमेव तु तच्च ताभिः ।**
**त्वच्चित्प्रकाशविषयत्वमुपेत्य भाति**
**स्वाज्ञानवत्तव न रूपमतश्चतुष्कम् ॥ १३७ ॥**

त्वय्येवेति—**अवस्थावतोऽहंकारस्याऽऽत्मनि कल्पितत्वादात्मधर्मत्वेनानुभव इत्यर्थः । नन्वहंकार एवाऽऽत्मेत्यात्मधर्मत्वमवस्थानामिति नेत्याह**—सहितमेवेति । **अवस्थाभिः सह दृश्यत्वान्नाहंकार आत्मेत्यर्थः । फलितमाह**—तवेति ॥ १३७ ॥

अ० टी०—नन्ववस्थानां मतिधर्मत्वेऽपि नाऽऽत्मनः शुद्धिः सिध्यति सावस्थाया मतेरात्माश्रितत्वान्नान्याश्रयत्वं स्वातन्त्र्यं वा मतेर्युक्तमद्वैतमतविरोधादिति चेत्तत्राऽऽह—**त्वय्येवेति** । तिस्रोऽपि ता अवस्थास्त्वयि कल्पितमेवाहंकरणमन्तःकरणं बिभर्ति । अवस्थाश्रयभूताऽपि मतिस्त्वय्यज्ञानकल्पिताऽध्यस्तैवेति नाद्वैतमतविरोध इत्यर्थः । तथाऽप्यवस्थाभ्यस्तद्धर्मकाहंकरणाच्चाऽऽत्मा कथं विविच्य प्रत्येतव्य इति चेत्साक्ष्यसाक्षिभावेनेत्याह—**सहितमेव त्विति** । तच्चाहंकरणं ताभिरवस्थाभिः सहितमेव त्वच्चित्प्रकाशविषयत्वमुपेत्य प्राप्य भाति न स्वतो नापि परस्परमित्यर्थः । अतो दृश्यत्वात्स्वाज्ञानवदिदमपि चतुष्कमवस्थात्रयमहंकरणं च तव तत्साक्षिणो द्रष्टुर्न रूपं न स्वभाव इत्यर्थः । अतो वस्तुतो मतेरवस्थानां चाभावान्नावस्थातदाश्रयकृताशुद्धिशङ्काऽप्यात्मनोऽस्तीति भावः ॥ १३७ ॥

**सु० टी०—ननु किं सावस्थस्याहंकारस्य कल्पितत्वे मानमिति चेद्दुर्निरूपत्वमेवेत्याह—**

**नान्वेति तत्तव चिता व्यतिरेकिता तु**
**दूरेण न संभवति तस्य चतुष्टयस्य ।**

---

१ क. ग. °ति स्वज्ञाने° ।

नाभावरूपभजनाय समर्थमेत-
देवं चिदेव तु चतुष्टयमेतदासीत् ॥ १३८ ॥

नान्वेतीति । तथा हि किमहंकारादेः पारमार्थिकत्वमात्मसंबन्धित्वेन किं वा तदतिरेकित्वेन नाऽऽद्य इत्याह—नान्वेतीति । तद्बुद्ध्यादि । जडाजडयोर्वास्तवसंबन्धानुपपत्तेरित्यर्थः । न द्वितीय इत्याह—व्यतिरेकितेति । चिदभेदेन स्फुरतो भेदे मानाभावादित्यर्थः । तर्ह्यसदेव तन्नेत्याह--नाभावेति । असद्वैलक्षण्येनानुभवादित्यर्थः । किं तर्हीत्यत आह—एवमिति । अविद्ययाऽऽत्मैव तथा तथाऽवभासत इत्यर्थः ॥ १३८ ॥

अ० टी०—तथाऽपि मतेस्तदवस्थानां च पृथक् सत्त्वान्नाद्वैतता प्रतीचः प्रतीयेतेति चेन्नेत्याह—नान्वेति तदिति । तत्पूर्वोक्तं तत्र चिता चिदात्मकेन तत्र स्वरूपेण नान्वेति स्वरूपतया वा धर्मतया वा न संबध्यते स्वभावविरोधादित्यर्थः । तथा तस्य चतुष्टयस्य व्यतिरेकिता तु त्वत्स्वरूपानाश्रयणेन स्वतन्त्रता तु दूरे न संभवति नैव संभवतीति यावत् । जडस्य विशेषतोऽज्ञानकल्पितस्य सत्तास्फुरणयोः स्वातन्त्र्याभावादित्यर्थः । तर्ह्यत्यन्तासदेवैतत्स्यादिति नेत्याह--नाभावेति । शून्यरूपत्वभजनायाप्येतन्न समर्थमपरोक्षत्वादित्यर्थः । परिशेषसिद्धमर्थमाह—एवं चिदेव त्विति । एतच्चतुष्टयं वस्तुतो विचार्यमाणमेवं सति चिदेव विशुद्धत्वद्रूपमेवाऽऽसीत्त्वत्स्वरूपातिरिक्तमिदं नाभूदस्ति भविष्यतीति निश्चयोपपत्तेः प्रतीचोऽद्वैतता प्रतीयेतैवेति भावः ॥ १३८ ॥

सु० टी०--नन्वात्मैव कल्पितः किं न भवतीति नेत्याह—

जाग्रत्स्वप्नसुषुप्तिमूर्छिततनूनिष्क्रान्त्यवस्थासु य-
च्चैतन्यं व्यभिचारिणीष्वनुगतं तत्सत्यमेवाऽऽत्मनः ।
यत्किंचिद्व्यभिचारि तन्ननु मृषा स्रक्सर्पदण्डादिव-
न्नानुस्यूतचिदात्मवस्तु वदितुं शक्यं मृषा[१] वस्तुवत् ॥ १३९ ॥

जाग्रदिति । यद्धि व्यभिचरति स्रक्सर्पादि तदेव कल्पितं दृष्टं न चाऽऽत्मा तथेत्यर्थः ॥ १३९ ॥

अ० टी०—ननु यदि दृश्यं सर्वं कल्पितं तर्हि दृगपि कल्पितैवास्तु वस्तुत्वादिति चेन्मैवं व्यभिचारित्वोपाधिहतत्वादनुमानस्येत्याह—जाग्रत्स्वप्नेति । तनूनिष्क्रान्तिर्मरणम् । अवस्थानां व्यभिचारित्वं सत्यात्मन्यन्योन्यत्राननुगमात्प्रसिद्धम् । व्यभिचारिणीष्ववस्थासु यदात्मनश्चैतन्यमनुगतं तत्सत्यमेव । न हि चैतन्यमुक्तावस्था व्यभिचरति । तथा सति अवस्थानां

[१] ख. घ. °षा रज्जुवत् ।

सर्वस्यापि दृश्यस्यासिद्धिप्रसङ्गादतो न साधनव्यापकतोपाधेरित्यर्थः । व्यभिचारित्वमेव कल्पितत्वे प्रयोजकं न वस्तुत्वमपीत्यत्रोभयत्र व्याप्तिमाह—**यत्किंचिदिति** । तन्ननु मृषा तदेव मृषेत्यर्थः । सुगममन्यत् । अस्य पद्यस्यापरा योजना । एवमुक्तचतुष्कस्य चिदात्मव्यतिरेकेण सत्त्वं न संभाव्यत इत्यतस्तस्याऽऽत्मनि कल्पितत्वमेवेत्युक्तं तदेवेदानीं कल्पितत्वं साधयति——**जाग्रत्स्वप्नेति** । विमतं सर्वं चिदात्मनि कल्पितं चिदात्मन्यनुवर्तमानेऽपि तद्व्यभिचारित्वाद्व्यभिचारित्वं त्ववस्थानां व्याख्यातं चिदात्मन्यागमापायित्वं वा तद्व्यभिचारित्वं तच्चानुभवसिद्धमिति न हेत्वसिद्धिः । अवस्थानामात्मव्यभिचारित्वे त्वात्मनोऽपि तद्व्यभिचारः स्यादतो हेतोरात्मनि व्यभिचार इत्याशङ्क्याऽऽह–**अनुगतमिति** । आत्मनोऽवस्थाव्यभिचारित्वे तदसिद्धिप्रसङ्गान्न तत्र हेतुरस्तीति न व्यभिचार इत्यर्थः । इदानीं व्यभिचारिणः कल्पितत्वेऽव्यभिचारिणः परमार्थत्वे च क्रमेण व्याप्तिमाह——**यत्किंचिदिति** । ननु निश्चितमित्यर्थः । चिदात्मवस्तु मृषा वदितुं न शक्यमिति संबन्धः । अनुस्यूतेति विशेषणं तत्र हेतुः । अस्याऽऽपरस्य योजना । चिदेव तु चतुष्टयमेतदासीदिति चतुष्टयस्य चित्तादात्म्यमङ्गीकृतं चेच्चिदात्मभूतस्य व्यभिचारित्वाच्चिदात्मनोऽपि स्याद्व्यभिचारिता । ततः–' तदेतत्सत्यं ' ' स आत्मा ' [ कौषी० ३ । ८ ] इत्यादिश्रुतिबाधप्रसङ्ग इति चेन्मैवं व्यभिचारिषु साक्षित्वेनानुगतस्य व्यभिचारासंभवादित्याह——**जाग्रत्स्वप्नेति** । व्यभिचारिणीष्ववस्थास्वनुस्यूतत्वेन चिदात्मनः सत्यत्वोक्तावर्थादवस्थानां तासां मृषात्वमपि प्रतिज्ञातमिति सिध्यति । अतस्तदुभयं व्याप्तिमुक्त्वा साधयति——**यत्किंचिदिति** । तस्मान्मृषार्थतादात्म्यस्यापि मृषात्वान्नाऽऽत्मन्युक्तदोषशङ्कावकाश इति भावः ॥ १३९ ॥

**सु० टी०——एवमज्ञानतत्कार्याच्चैतन्यं निष्कृष्य निरूपितं त्वंपदलक्ष्यं निगमयति—**

> **जाग्रत्स्वप्नसुषुप्तिधर्मकमिदं चित्तं त्वदज्ञानतः**
> **प्रादुर्भूतमतस्त्वमेव सततं त्वत्तो न तद्भिद्यते ।**
> **स्वाज्ञानं च तवानुभूतिबलतः सिद्धं मृषा तत्त्वतो**
> **नाऽऽसीदस्ति भविष्यतीति भवतः पूर्णा चितिः शिष्यते॥१४०॥**

जाग्रदिति । **अज्ञानजचित्तधर्माः कर्तृत्वादयोऽज्ञानं च मृषेति पूर्णचिन्मात्रमेव स्वरूपमित्यर्थः** ॥ १४० ॥

अ० टी०—नन्वेवमज्ञानकल्पितत्वाच्चतुष्कस्य मृषात्वादात्मनस्तत्कृताशुद्ध्यभावेऽप्यज्ञानसंबन्धकृताऽशुद्धिः स्यादित्याशङ्क्योक्तानुवादपूर्वकमज्ञानस्याप्यात्मनि कल्पितत्वमाह——**जाग्रत्स्वप्नसुषुप्तिधर्मकमिति** । उक्तानुवादात्मकेन पूर्वार्धेन पूर्वश्लोकोक्तानुवादपूर्व-

क्रमज्ञानस्योपनयनिगमने दर्शिते उत्तरार्धे शङ्कितदोषपरिहार इति विभागः । स्वाज्ञानं चेति चकारोऽप्यर्थे । स च जाग्रदादिदृष्टान्तार्थः । स्वाज्ञानं च तवानुभूतिबलतः सिद्धं तत्सत्ता-स्फूर्त्यधीनसत्तास्फूर्तिकमतो दृश्यत्वादवस्थावदज्ञानमपि मृषा कल्पितं न परमार्थमित्यर्थः । अतः कालत्रयेऽप्यज्ञानतत्कार्यरूपस्य दृश्यस्य चिदात्मनि तत्त्वतोऽसंभवान्नित्यशुद्धबुद्धस्वभाव एवाऽऽत्मेति फलितमर्थमाह—**अतो नाऽऽसीदिति** ॥ १४० ॥

**सु० टी०—ननु तर्कोऽप्रतिष्ठः कथं तद्बलेनार्थनिर्णय इति नेत्याह—**

**ज्योतिर्ब्राह्मणवाक्यमानबलतः संपूर्णरूपा चिति-**
**र्जाग्रत्स्वप्नसुषुप्तिधर्मरहिता मोक्षाय निश्चीयते ।**
**तस्मादस्मदुदीरितं स्वकवपुः श्रद्धत्स्व मानं विना**
**नास्माभिः प्रतिपादिता चितिरियं वाक्यार्थसंबन्धिनी ॥ १४१ ॥**

ज्योतिर्ब्राह्मणवाक्येति । **किंज्योतिरेवायमित्यारभ्यात्रायं पुरुष इत्यन्तेन मावस्थस्य बुद्ध्याद्यैश्चित्तावन्मात्रत्वं निर्णीतमित्युक्तरूपमेवाऽऽत्मानं श्रद्धत्स्वेत्यर्थः । इयं चितिर्नास्माभिर्मानं विना प्रतिपादितेति संबन्धः ॥ १४१ ॥**

अ० टी०—एवमात्मनो नित्यशुद्धत्व उक्तयुक्तीनामनुग्राह्यं प्रमाणं वदन्नर्थादस्माकं मतं न वैशेषिकादिमतवत्स्वबुद्ध्यभ्यूहमात्रसिद्धं किं तु श्रुतिमौलिप्रमाणसिद्धमिति दर्शयति—**ज्योतिर्ब्राह्मणेति** । तत्र हि किंज्योतिरेवायं पुरुष इत्यादिनाऽत्रायं पुरुषः स्वयंज्योति-रित्यन्तेनाऽऽत्मनः सर्वव्यवहारसाक्षितया विशुद्धचैतन्यज्योतिःस्वरूपत्वमुपपाद्य ततः परेण ग्रन्थेनावस्थात्रयस्याऽऽगमापायित्वोक्तिपूर्वकं महामत्स्यनिदर्शनेनासङ्गत्वं चोपपाद्याऽऽत्मने नित्यशुद्धचिद्रूपत्वं प्रतिपादितं दृश्यते । अतो नात्र शङ्का कार्येत्यर्थः । मोक्षायेति ब्रह्मभावा-येत्यर्थः । यस्मात्प्रमाणसिद्धोऽयमर्थस्तस्माद्युक्त्याऽस्मदुदीरितं स्वकवपुः स्वस्वरूपं श्रद्धत्स्व तथैवेति विश्वसिहि । इयं वाक्यार्थसंबन्धिनी चितिरस्माभिर्मानं विना न प्रतिपादिता किं तु मानसिद्धायामेवास्यामसंभावनापोहाय युक्तयोऽभिहिता इत्यर्थः ॥ १४१ ॥

**सु० टी०—उक्तानुवादपूर्वकं शिष्यजिज्ञासामुखेन तत्पदलक्ष्यवि-चारमवतारयति—**

**एवं[1] त्वंपदलक्ष्यवस्तु भवता यत्पृष्टमासीत्पुरा**
**तन्निर्णीतमतोऽन्यदस्ति यदि ते चित्तस्थितं पृच्छ तत् ।**

---

१ क. एतत्त्वं° ।

बुद्धिस्थं कुरु पूर्वमुक्तमखिलं यद्वक्ष्यमाणं च त-
द्बोद्धुं धारय ते मनः स्थिरतरं श्रद्धाधनाद्याश्रयः ॥ १४२ ॥

एतदिति। श्रद्धैव धनमादिपदेन शान्त्यादि तदाश्रयः सन्नित्यर्थः॥१४२॥

अ० टी०—त्वंपदार्थतत्त्वशोधनप्रकरणमुपसंहृत्य तत्पदार्थतत्त्वशोधनप्रकरणमारभमाणस्तत्र शिष्यप्रश्नमुत्थापयति—**एवं त्वंपदेति** । शिष्यजिज्ञासानुसारेण बोध्यमानो ह्यर्थः सम्यक्तद्बुद्धिमारोहतीत्यभिप्रेत्याऽऽह—**अतोऽन्यदस्तीति** । अर्थान्तरप्रश्नव्यग्रतया पूर्वगृहीतस्य विस्मृतिर्मा भूदित्याह—**बुद्धिस्थमिति** । तत्रैव लग्नचित्तश्च मा भूस्तदा हि प्रतिवचनार्थग्रहणं न भवेदित्यभिप्रेत्याऽऽह—**यद्वक्ष्यमाणमिति** । श्रद्धाधनाद्याश्रय इति सूक्ष्मार्थावधारणे श्रद्धाया अन्तरङ्गत्वं सूचितम् । एवमुक्तवक्ष्यमाणयोरर्थयोः शिष्यबुद्धिसंग्रहकथनं पदार्थज्ञानमात्रान्न ते कृतकृत्यता किं तु वाक्यार्थज्ञानादेवेति दर्शयितुमिति द्रष्टव्यम् ॥ १४२ ॥

सु० टी०—शिष्यस्य प्रश्नमुत्थापयति—

इत्युक्ते गुरुणा स पृच्छति पुनस्त्वंशब्दलक्ष्यं मम
ज्ञातं न्यायबलेन पूर्वमुदितावस्थात्रयापोहनात् ।
तच्छब्देन तु लक्ष्यमर्थमधुना बोद्धुं मनो मामकं
धावत्याशु तमप्यपोह्य सकलद्वैतप्रपञ्चं वद ॥ १४३ ॥

इत्युक्त इति । प्रपञ्चापोहेन तत्पदलक्ष्यं मम बुभुत्सितं तद्वदेत्यर्थः ॥ १४३ ॥

अ० टी०—एवं गुरुणाऽभ्यनुज्ञातः शिष्य उक्तार्थानुवादपूर्वकं तत्पदलक्ष्यार्थबुभुत्सामाविष्करोतीत्याह—**इत्युक्ते गुरुणेति** । मम ज्ञानं जातं मया सम्यगवधारितमित्यर्थः । सकलद्वैतप्रपञ्चमपोह्य युक्तिभिर्निरस्य तमपि तत्पदलक्ष्यार्थमपि वदेति योजना ॥ १४३ ॥

सु० टी०—ननु प्रसिद्धत्वेनासंदिग्धत्वान्न तत्पदलक्ष्यं जिज्ञास्यमित्याशङ्क्याऽऽह—

किं सप्रपञ्चमिदमस्त्वथ वा समस्त-
द्वैतप्रपञ्चरहितं परिपूर्णरूपम् ।

---

१ घ. °नाढ्याश्र° ।

यद्वोभयात्मकमिदं परमार्थतोऽस्तु
विष्णोः परं पदमितीह विचारणीयम् ॥ १४४ ॥

किं सप्रपञ्चमिति । सामान्यतः प्रसिद्धमपि विशेषतः संदिग्धत्वाज्जिज्ञास्यम् इत्यर्थः ॥ १४४ ॥

अ० टी०—प्रश्नप्रकारमाह—किं सप्रपञ्चमिति । परमार्थत इति पदं पूर्वयोरपि पक्षयोः संबध्यते । इदं ब्रह्म । सुगममन्यत् ॥ १४४ ॥

सु० टी०—किं पुनरत्र संशयबीजमिति तत्राऽऽह—

वेदान्तवाक्यगतिरत्र बहुप्रकारा
काचित्कथंचिदिति संशय उत्थितो मे ।
तत्त्वं प्रकाशय निवर्तय मोहमूलं
मत्संशयं मम हिताय भव प्रसीद ॥ १४५ ॥

वेदान्तेति । यद्यपि 'वाचारम्भणं' [ छा० ६ । १ । ४ ] 'नेति नेति' [ बृ० २ । ३ । ६ ] इत्यादिभिर्निष्प्रपञ्चब्रह्मोच्यते तथाऽपि 'सर्वगन्धः सर्वरसः' [ छा० ३ । १४ । २ ] इत्यादेरपि ब्रह्मपरत्वोक्तेः संशय इत्यर्थः । ततश्च किमुभयमपि श्रुत्येकमानत्वादविरुद्धमुत स्वतो निष्प्रपञ्चमुपाधितः सप्रपञ्चमिति निष्टङ्कितं वदेत्याह—तत्त्वमिति ॥ १४५ ॥

अ० टी०—विचारणीयमित्यनेन संदेहः सूचितस्तमेव संदेहं तद्बीजप्रदर्शनपूर्वकमाविष्करोति—वेदान्तवाक्यगतिरिति । काचित्कथंचिदित्यस्यायमर्थः—यद्यपि जन्मादिसूत्रे निष्प्रपञ्चमेव ब्रह्म लक्षितमारम्भणाधिकरणे च तथैवोपपादितं तथाऽपि 'सत्यकामः सत्यसंकल्पः' [ छा० ८ । १ । ५ ] 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' [ छा० ३ । १४ । २ ] 'वामनीर्भामनीः' [ छा० ४ । १५ । ३–४ ] इत्येवं सविशेषवाक्याणामपि ब्रह्मपराणां श्रूयमाणत्वाद्वेदान्तवाक्यगतेरत्र व्याकुलतादर्शनात्तस्या विषयव्यवस्थया निर्णयस्य च ममानुदयात्पूर्वश्लोकोपन्यस्तस्त्रिकोटिकः संशयो मम जात इति । किं तत्रोभयविधश्रुतिदर्शनाच्छ्रुत्येकगम्येऽर्थे विरोधस्यानवगाहनादुभयात्मकमेव ब्रह्म मया प्रत्येतव्यमुपाधिवशाद्ब्रह्म सप्रपञ्चं स्वतस्तु निष्प्रपञ्चमिति व्यवस्थया वोभयरूपं ब्रह्माभ्युपेयमथवा निष्प्रपञ्चवाक्यस्यान्यपरत्वकल्पनया सप्रपञ्चमेव ब्रह्मतत्त्वं ज्ञेयं सप्रपञ्चवाक्यस्यान्यपरत्वकल्पनया वा निष्प्रपञ्चमेव ब्रह्म विज्ञेयमिति संशयानं मां प्रति तत्त्वं याथात्म्यं ब्रह्मणः प्रकाशय मम मोहमूलं मत्संशयं निवर्तय मम हिताय भव प्रसीद मम प्रसन्नो भवेति ॥ १४५ ॥

सु० टी०—परमार्थतो निष्प्रपञ्चमेव ब्रह्मेति पक्षमङ्गीकृत्य गुरुराह—

**न स्थानतोऽप्यस्ति परस्य कश्चि-**
**द्विशेषयोगः परमार्थरूपः ।**
**स्वतः पुनर्दूरनिरस्त एव**
**परस्य तत्त्वस्य विशेषयोगः ॥ १४६ ॥**

न स्थानत इति । **स्थानत उपाधितोऽपि न विशेषयोगः पारमार्थिकोऽस्ति किं तु मृषेत्यर्थः ॥ १४६ ॥**

अ० टी०—एवमुपसन्ने जिज्ञासौ शिष्य उभयविधं ब्रह्मेति यत्प्रकारद्वयेनोत्प्रेक्षितं तन्न युक्तमिति तावद्गुरुराह—**न स्थानतोऽपीति** । परस्य ब्रह्मणः कश्चित्परमार्थरूपो विशेषयोगः सप्रपञ्चत्वलक्षणः स्थानत उपाधितोऽपि नास्ति पृथिवीमय आपोमय इत्यादौ पृथिव्याद्युपाधियोगाच्छ्रूयमाणोऽपि विशेषो ब्रह्मणः परमार्थतो नास्तीत्यर्थः । स्थानतोऽपीत्यपिशब्दसूचितमर्थमाह—**स्वतः पुनरिति** । स्वतस्तु सुतरां विशेषयोगो दूरनिरस्त एवेत्येतत्साधयति—**परस्य तत्त्वस्येति** । परस्य कार्यकरणप्रपञ्चातीतस्य नेति-नेत्यादिलक्षणस्य यत्तत्त्वं याथात्म्यं स्वाभाविकं स्वरूपं तस्येत्यर्थः ॥ १४६ ॥

सु० टी०—कथं तर्हि सविशेषत्वं ब्रह्मणः श्रूयत इति चेत्तत्राऽऽह—

**स्वभावतश्चिद्घनविग्रहस्य**
**मृषा ह्युपाधिप्रभवा विशेषाः ।**
**यथा जपापुष्पनिबन्धनः स्या-**
**न्मृषा मणेर्लोहितिमा तथैव ॥ १४७ ॥**

स्वभावत इति । **न हि चिदेकरसस्य परतोऽपि रूपान्तरं संभवतीत्यतो वैदिकत्वेऽपि बाध्यत्वान्मृषैव तदित्यर्थः । दृष्टान्तमाह**—यथेति ॥ १४७ ॥

अ० टी०—यद्यपि जन्मादिसूत्रे सत्यज्ञानादिरूपं ब्रह्म लक्षितं नेतिनेत्यादिभिः श्रुतिवाक्यैर्निर्विशेषं तदित्यवगतं तथाऽपि तस्योपाधियोगात्सविशेषत्वमपि परमार्थमभ्युपेयं तस्यापि श्रुतिसिद्धत्वादिति चेन्नैवमुपाधियोगात्प्रतीयमानस्य विशेषस्य मृषात्वादिति सदृष्टान्तमाह—**स्वभावत इति** । सैन्धवघनवद्विज्ञानघन एवेत्यवधारणात्स्वभावतश्चिदेकरसस्योपाधिप्रभवा विशेषाः मृषा स्युरिति योजना । यथेति दृष्टान्तार्थः स्पष्टः। तथैवोपाधिप्रभवा विशेषा इति पूर्वेणान्वयः । उपाधिसंबन्धस्यापि ब्रह्मणि परमार्थत्वासंभवान्न तद्योगकृतो विशेषः परमार्थोऽतः सविशेषब्रह्मवाक्याणां न स्वार्थपरतेत्यन्यार्थताकल्पनस्यावश्यंभावान्नि-

विशेषवाक्यानां च गत्यन्तरासंभवेन स्वार्थपरत्वनिश्चयान्निर्विशेषमेकरूपमेव ब्रह्मतत्त्वमवधेयमिति पक्षान्तरकल्पनाशङ्काऽपि सर्वा निरस्तैवेति भावः ॥ १४७ ॥

**सु० टी०—ननु 'एष सर्वेश्वरः' [ मा०डू० ६ ] इत्यादिषु नोपाधिः श्रूयत इति चेत्तत्राऽऽह—**

**मायोपाधेरद्वयस्येश्वरत्वं**
**कार्योपाधेर्जीवता च प्रतीचः ।**
**मिथ्यैव स्याद्बन्धुजीवप्रसून-**[1]
**संपर्कोत्था रक्ततेवाभ्रकादेः १४८ ॥**

मायोपाधेरिति । **'मायिनं तु महेश्वरम्' [ श्वे० ४ । १० ] 'स समानः' [ छा० ३ । १३ । ४ ] इत्यादिश्रुतेरीश्वरजीवयोरुपाधिः सिध्यतीत्यर्थः । तर्हि कथं मिथ्यात्वं सविशेषत्वस्येति चेत्तत्राऽऽह—** मिथ्यैवेति । **निर्विशेषश्रुतिबाधितत्वेन सविशेषश्रुतीनां विशेषांशेऽप्रामाण्यादित्यर्थः ॥ १४८ ॥**

अ० टी०—नन्वीश्वरत्वलक्षणो विशेषो ब्रह्मणि वास्तवोऽभ्युपेयोऽन्यथा तस्यानीश्वरत्वप्रसङ्गात्तथा प्रतीचो जीवत्वरूपो विशेषः स्वीकरणीय इतरथा तस्यापीश्वरत्वं जडत्वं वा प्रसज्येतेति चेन्नैवमुभयत्राप्युक्तविशेषयोरौपाधिकत्वादित्याह—**मायोपाधेरिति** । अद्वयस्य ब्रह्मण ईश्वरत्वस्येशितव्यापेक्षत्वाद्विना मायायोगमद्वयस्येशितव्यासंबन्धान्मायाकल्पितमेवेश्वरत्वमित्यर्थः । तथा प्रतीचोऽहंकारादिसाक्षिणः स्वस्मिन्स्वाज्ञानाध्यस्तकार्योपाधिप्रयुक्तमेव जीवत्वं कर्तृत्वप्रमातृत्वादिसंसारधर्मयोगित्वं हि जीवत्वं कर्तृत्वादि च न तस्मिन्नहंकाराद्युपाधिसंबन्धमन्तरेण निरूपणपथमवतरतीति जीवत्वमप्यौपाधिकमेवेत्यर्थः । उपाधिसंबन्धकृतोऽपि धर्मः पारमार्थिकः स्यादिति न शङ्कास्पदमित्यौपाधिकस्य मिथ्यात्वमनुमानेन साधयति—**मिथ्यैव स्यादिति** । बन्धुजीवप्रसूनं नाम मध्याह्नविकासिरक्तवर्णपुष्पविशेषः । अभ्रकं तु सूर्यतप्तजलस्थलनिष्पन्नः शुभ्रवर्णो धात्वाभासविशेषः ॥ १४८ ॥

**सु० टी०—ननु मल्लातकादिकलङ्कस्यौपाधिकस्यापि यावद्द्रव्यभावित्वेन सत्यत्ववदिहापि सत्यत्वं किं न स्यादिति चेन्न तस्यापि पक्षतुल्यत्वादित्याह—**

**भल्लातकादिरसयोगनिबन्धनं च**
**वस्त्रे कलङ्कितमनेन पथा निरस्तम् ।**

---

१ क. ग. न्धुवंधप्र° ।

**तस्यापि पक्षपतितत्वमभीष्टमेव**
**तस्मादसौ न भवति व्यभिचारभूमिः ॥ १४९ ॥**

भल्लातकादीति । **तस्य तु दुस्त्यजत्वेन सत्यत्वाभिमान इति भावः ॥ ॥ १४९ ॥**

अ० टी०—यदौपाधिकं तन्मृषेति न व्याप्तिर्भल्लातकोपाधिकलङ्किते वस्त्रे व्यभिचारान्न च तदपि मृषा तस्य सति वस्त्रे वियोगादर्शनात्तथा च व्याप्त्यभावान्नेश्वरत्वादिकमुपाधिप्रयुक्तमपि मृषेति चेत्तत्राऽऽह—**भल्लातकेति** । अनेन पथेति सर्वेषामौपाधिकधर्माणां स्फटिकलौहित्यादिवन्मिथ्यात्वसमर्थनन्यायमार्गेणेत्यर्थः । अत उक्तोदाहरणस्यापि पक्षतुल्यत्वान्न तत्र व्यभिचारः शङ्कनीय इत्यर्थः । वस्त्रे भल्लातकरसकलङ्कवियोगादर्शनं तु तद्वियोजनस्य दुःशकत्वादेव न परमार्थत्वात्तदानीमपि तन्तुगतशौक्ल्यस्य वास्तवस्यानपायात्कालिम्नस्तु भल्लातकरससंगतस्यैव प्रतीतिरतो वस्त्रं कलङ्कितमित्यविवेकनिबन्धनो भ्रम इति भावः ॥ १४९ ॥

**सु० टी०—सविशेषत्वस्यौपाधिकत्वं सदृष्टान्तं श्रुतिसंवादेनोपसंहरति—**

**यथा ह्ययं ज्योतिरात्मा विवस्वा-**
**नपो भिन्ना बहुधैकोऽनुगच्छन् ।**
**उपाधिना क्रियते भेदरूपो**
**देवः क्षेत्रेष्वेवमजोऽयमात्मा ॥ १५० ॥**

यथा हीति । **यथा ज्योतिरात्मा ज्योतिःस्वरूपः सूर्य एकोऽपि बहुधा भिन्ना अपोऽनुगच्छंस्तासु प्रतिफलन्भेदरूपो भेदेन रूप्यत एवमेकोऽप्यात्मा क्षेत्रेषु पुरेष्वनुगच्छन्नित्यर्थः ॥ १५० ॥**

अ० टी०—अस्त्वेवमौपाधिकस्यानृतत्वं चिदात्मनि विशेषवत्त्वमौपाधिकमेवेति कुतो निश्चीयत इति चेच्छ्रुतिप्रामाण्यादिति मन्वानः श्रुतिमेव पठति—**यथा ह्ययमिति ।** अयं हि प्रसिद्धो ज्योतिरात्मा प्रकाशस्वरूपो विवस्वानादित्य एक एव सन्भिन्ना अपो भिन्नस्थानगततया भिन्नानि जलानि बहुधाऽनुगच्छन्प्रतिबिम्बरूपेण प्रविशन्नुपाधिना भिन्नभिन्नजललक्षणेन भेदरूपः क्रियते विशेषयोगः संपाद्यते जलभेदेन भेदो जलकम्पादिना च कम्पादिमत्त्वमित्यादिविशेषवत्ताप्रतीतिविषयः क्रियते यथेति दृष्टान्तभागार्थः । एवं यथाऽयं दृष्टान्तस्तथाऽयमात्मा देवः स्वप्रकाशज्ञानमात्रस्वरूपोऽजो जन्मादिविकारशून्योऽपि क्षेत्रेषु

स्थूलसूक्ष्मशरीरेषु भेदरूपो भेदविशेषविकारवत्तया रूप्यमाणः क्रियते न स्वतोऽस्य भेदो विशेषो विकारोऽस्तीत्यर्थः ॥ १५० ॥

**सु० टी०—मायोपाधिकमैश्वर्यमित्येतद्दृढीकर्तुं मतान्तराणि निरसितुमुपन्यस्यति—**

> **ऐश्वर्यमस्य परमात्मन उक्तमन्यैः**
> **साक्षात्स्वरूपमवबोधसुखादितुल्यम् ।**
> **तेनेशते किल यथायथमीशितव्या-**
> **न्भृत्यान्प्रतीश्वरतया जगतीभृतोऽपि ॥ १५१ ॥**

ऐश्वर्यमिति । **ब्रह्मादिस्तम्बपर्यन्तेष्वनुवर्तमानमैश्वर्यं बोधादिवदात्मनः स्वरूपमेव सत्तत्र तत्र सत्त्वाद्युपाधितारतम्यादीशितव्यतारतम्याद्वा तारतम्येनाभिव्यज्यते कथमन्यथा परतन्त्राणामपीन्द्रभूपादीनां स्वभृत्यान्प्रत्यैश्वर्यमुपपद्येतेत्यन्यैरुक्तमित्यर्थः ॥ १५१ ॥**

अ० टी०—परमात्मन ऐश्वर्यं मायोपाधिकमनृतमेवेत्युक्तं स्वमतं स्थिरीकर्तुं मतान्तरमुत्थापयति—**ऐश्वर्यमस्येति** । अस्य परमात्मनो यदैश्वर्यं तदप्यवबोधसुखादिवत्सत्यज्ञानानन्दादिवत्साक्षात्स्वरूपमेवेत्युक्तेऽर्थे युक्तिमाह—**तेनेशत इति** । किलेत्यस्य पक्षस्यानभिमतत्वं द्योतयति । जगतीभृतो राजानो लौकिकेश्वरास्तेऽपि यथायथं तारतम्येनेशितव्यान्भृत्यान्प्रतीश्वरतया तेन लोके तारतम्येन प्रतीयमानेनैश्वर्येणेशते नियन्तारो भवन्ति । तच्चैश्वर्यं तेषां स्वरूपमेव सत्तत्रोपाधिवशात्तारतम्येनाभिव्यज्यते । अन्यथा जडस्य परतन्त्रतयैश्वर्यायोगात्तेष्वीश्वरत्वव्यवहारो निर्विषयः स्यादित्यर्थः ॥ १५१ ॥

**सु० टी०—ननु सापेक्षमुत्पत्तिमदुत्कर्षापकर्षवच्चैश्वर्यं कथमात्मनः स्वाभाविकं स्यादिति चेत्सुखादिवदित्याह—**

> **नित्यं प्रियादिषु सुखं प्रतिबिम्बितं स-**
> **ल्लोके वदन्ति विषयेन्द्रियसंप्रयोगात् ।**
> **उत्पन्नमन्यदिति तद्वदिहेश्वरत्वं**
> **मायातदुत्थमतिषु प्रतिबिम्बितं सत् ॥ १५२ ॥**

नित्यमिति । **यथा प्रियमोदप्रमोदादिवृत्तिविशेषेषु प्रतिबिम्बितं सुखमात्मस्वरूपमप्युपाधितन्त्रत्वात्सातिशयत्वाद्याकारेणोत्पन्नमिव प्रथते तथैश्वर्यमपि मायातदुत्थोपाधिप्रतिबिम्बितं सदित्यर्थः ॥ १५२ ॥**

अ० टी०—नन्वीश्वरत्वस्येशितव्यसापेक्षत्वादुत्पत्त्यादिमत्त्वात्तारतम्याच्च नाऽऽत्मस्वरूपता युक्ता निरपेक्षनित्यैकरूपत्वादात्मन इति चेत्तत्राऽऽह—**नित्यं प्रियादिष्विति ।** यथा नित्यं कूटस्थं निरतिशयमेकरूपमेव सुखं प्रियादिषु प्रीत्यास्पदविषयाकारबुद्धिवृत्तिष्वा-दिपदं प्रीतिष्वेवापकर्षत्वमहत्त्वादिभेदविषयं तेषु प्रतिबिम्बितं सत्प्रतीयमानं लोकविषयेन्द्रिय-संप्रयोगादुत्पन्नमन्यदन्यदिति वदन्ति तद्वदिह परमात्मनीश्वरत्वं मायातदुत्थमतिषु प्रतिबि-म्बितं सत्सापेक्षत्वादिरूपेण प्रतीयते । तत्रापि मायायां प्रतिबिम्बस्य सापेक्षत्वमात्रमन्तः-करणादिमायाकार्यप्रतिबिम्बे तूत्पत्त्याद्यपि प्रथत इति भेदः ॥ १५२ ॥

**सु० टी०—तर्हि मायातत्कार्यप्रतिबिम्बैश्वर्याणां बहुत्वाद्बहवः सर्वे-श्वराः स्युरिति नेत्याह—**

**मायानिविष्टवपुरीश्वरबोध एष**
**सर्वेश्वरो भवति सर्वमपेक्षमाणः ।**
**बुद्धिप्रविष्टवपुरेष तथेश्वरः स्या-**
**दात्मीयभृत्यजनवर्गमपेक्षमाणः ॥ १५३ ॥**

मायेति । **ब्रह्मण उपाधितारतम्यनियम्यतारतम्ययोरभावात्सर्वेश्वरत्व-मिन्द्रभूपादीनां तु स्थूलसूक्ष्मोपाधितारतम्याद्भृत्यादिनियम्यतारतम्या-च्चेश्वरत्वमात्रमित्यर्थः ॥ १५३ ॥**

अ० टी०—अत्र मायायां प्रतिबिम्बितमीश्वरत्वं नित्यं सर्वापेक्षं च सन्निरतिशयं परमेश्वरत्वं भवति बुद्धिषु प्रतिबिम्बितमीश्वरत्वं तु तारतम्येन हिरण्यगर्भादिषु कर्मनिमि-त्तबुद्धितारतम्यानुरोधात्सातिशयमीश्वरत्वं भवतीत्याह—**मायानिविष्टेति ।** आत्मीयभृत्येति । यस्य यावदीशितव्यत्वेनोपस्थितं भवति तावदपेक्षमाण इत्यर्थः । उक्तार्थमन्यत् ॥ १५३ ॥

**सु० टी०—मुक्तस्य तु विद्यया सर्वोपाधिविलयात्स्वाभाविकैश्वर्येऽ-वस्थितिः ‘ स स्वराड्भवति ’ [छा० ७ । २५ । २] इति श्रुतेरित्याह—**

**सम्यग्ज्ञानध्वस्तसर्वप्रपञ्चः**
**स्वीये रूपे निर्गुणे निर्विशेषे ।**
**पूर्णैश्वर्ये स्वप्रकाशस्वभावे**
**स्वाराज्येऽस्मिन्स स्वराडेव तिष्ठेत्[1] ॥ १५४ ॥**

सम्यग्ज्ञानेति । **स मुक्तः स्वराट् सम्पूर्णैश्वर्यात्मकं स्वमेव रूपं लभत इत्यर्थः ॥ १५४ ॥**

---

१ क. ग. तिष्ठन् ।

अ० टी०—विदुषस्तु मुक्तावस्थायां परमैश्वर्यप्राप्तिदर्शनाच्चाऽऽत्मन ऐश्वर्यं स्वयमेवेति गम्यत इत्याह—**सम्यग्ज्ञानेति** । निगदव्याख्यातं पद्यम् ॥ १५४ ॥

**सु० टी०—निर्गुणस्यैश्वर्ये किं प्रमाणमिति चेत्तत्राऽऽह—**

**ज्ञात्वा देवं सर्वपाशापहानिः**
**क्षीणैः क्लेशैर्जन्ममृत्युप्रहाणिः ।**
**तस्याभिध्यानात्तृतीयं देहभेदे**
**विश्वैश्वर्यं केवल आप्तकामः ॥ १५५ ॥**

ज्ञात्वा देवमिति । **देवमीश्वरं ज्ञात्वा साक्षात्कृत्य सर्वपाशानामविद्यादिक्लेशानामपक्षयः । ततश्च न जन्ममृत्यू हेत्वभावादिति । निर्गुणविद्याफलमुक्त्वा सगुणविद्याफलमाह**—तस्याभिध्यानात्तृतीयमिति । **बन्धमोक्षापेक्षया विश्वैश्वर्यं तद्धि न बन्धो दुःखाभावान्न मुक्तिर्भेदसत्त्वादिति क्रममुक्तिरुक्ता तां प्राप्य तत्र विद्योत्पत्तौ केवलः शुद्ध आप्तकामः पूर्णानन्दो भवतीत्यर्थः । तात्त्विकैश्वर्यवादिनस्तु योजयन्ति ज्ञानोदयाद्देहद्वयभेदे तृतीयमनौपाधिकं विश्वैश्वर्यं प्राप्त आप्तकामो भवतीति ॥ १५५ ॥**

अ० टी०—सम्यग्ज्ञानध्वस्तमोहप्रपञ्चः स्वीये पूर्णैश्वर्ये तिष्ठेदित्यत्र प्रमाणं श्रुतिमुदाहरति—**ज्ञात्वा देवमिति** । तस्य देवस्येश्वरस्याभिध्यानादाभिमुख्येन प्रत्यगभेदेन ध्यानात्तत्प्रसादेन तमेव देवं ज्ञात्वा विश्वैश्वर्यमाप्नोतीति योजना। केन क्रमेणेत्यपेक्षायामाह—**सर्वपाशापहानिरिति** । पाशाः क्लेशा अविद्यास्मितादयस्तेषां सर्वेषां हानिर्विच्छेद आत्यन्तिकः प्रथममस्य भवतीति । ततः क्षीणैः क्लेशैः क्लेशेषु क्षीणेष्विति यावत् । क्लेशक्षये तत्प्रयुक्तकर्माभावाज्जन्ममृत्युप्रहाणिर्जन्मादिविकारहानिरस्य सिध्यतीत्यर्थः । ततो देहभेदे वर्तमानदेहस्य भेदने प्रारब्धक्षयान्नाशे सतीति यावत् । उक्तपाशक्लेशहानिजन्ममृत्युप्रहाणिरूपद्वयापेक्षया तृतीयं विश्वैश्वर्यमाप्नोतीश्वर एव भवतीत्यर्थः । तदा च केवलो निरतिशय आप्तकामः कृतकृत्य एव तदा भवतीति श्वेताश्वतरीयोपनिषन्मन्त्रार्थः ॥ १५५ ॥

**सु० टी०—एवं श्वेताश्वतरवाक्यमुदाहृत्य छान्दोग्यश्रुतिमुदाहरति—**

**स स्वराडिति च विद्यते श्रुति-**
**र्वर्णितेश्वरवपुःप्रकाशिनी ।**

तेन सत्यसुखबोधवद्भवे-
दीश्वरत्वमिति केचिदूचिरे ॥ १५६ ॥

स स्वराडिति । स्वाभाविकैश्वर्यवादमुपसंहरति––तेनेति ॥ १५६ ॥

अ० टी०––स्वाराज्येऽस्मिन्नित्यत्रापि श्रुतिरस्तीत्याह––स स्वराडिति चेति । 'आत्मक्रीड आत्मरतिरात्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति' [ छा० ७ । २५ । २ ] इति श्रुतिर्वर्णितेश्वरवपुःप्रकाशिनी विद्यत इत्यर्थः । उत्थापितं परमतमुपसंहरति–तेन सत्येति ॥ १५६ ॥

सु० टी०––दूषयति––

तन्न भाति चतुरस्रमुच्चकै-
स्तत्प्रमाणविरहादिह श्रुतौ ।
सत्यबोधसुखवन्न तत्परा
सत्युवाच यत ईश्वरश्रुतिः ॥ १५७ ॥

तन्नेति । तत्र हेतुमाह––तत्प्रमाणेति । ननूक्ता श्रुतिरिति तत्राऽऽह–– न तत्परेति । यथा बोधसुखात्मपरा 'विज्ञानमानन्दम्' [ बृह० ३ । ९ । २८ ] इति श्रुतिर्नैवमैश्वर्यपरा काचिदस्तीत्यर्थः ॥ १५७ ॥

अ० टी०––इदानीमेतद्दूषयितुमुपक्रमते––तन्न भाति चतुरस्रमिति । निषेधप्रतिज्ञायां हेतुमाह––उच्चकैस्तत्प्रमाणेति । इहाऽऽत्मन ऐश्वर्यस्य स्वाभाविकत्वे श्रुतावुपनिषद्ग्रन्थेषूच्चैस्तत्परतया तत्प्रतिपादकप्रमाणविरहादिति योजना । 'एष सर्वेश्वरः' इत्यादिश्रुतिदर्शनात्कथं तत्प्रमाणविरह इति चेन्मैवमेवंविधश्रुतीनां स्वार्थपरत्वासंभवादित्याह––सत्यबोधेति ॥ १५७ ॥

सु० टी०––एतदेव प्रपञ्चयति––

तत्परश्रुतिवचःप्रमाणकं
सत्यबोधसुखविग्रहं परम् ।
ब्रह्म तद्वदिह नेश्वरत्वभाक्-
तत्परश्रुतिवचःप्रमाणकम् ॥ १५८ ॥

तत्परेति । यथा सत्यबोधादिविग्रहं ब्रह्मेत्येतत्परश्रुतिप्रमाणकं नैवमीश्वरत्वभाग्ब्रह्मेतीत्यर्थः ॥ १५८ ॥

अ० टी०—सत्यबोधादिरूपत्वप्रतिपादकश्रुतिवदीश्वरत्वावेदकश्रुतेस्तत्परत्वाभावमुक्तं विशदयति—**तत्परश्रुतिवच इति**। सत्यबोधसुखविग्रहं परं ब्रह्म यथा तत्परश्रुतिवचःप्रमाणकं तद्वदीश्वरत्वभाग्ब्रह्मेह श्रुतिशास्त्रे तत्परश्रुतिवचःप्रमाणकं न भवतीति योजना ॥ १५८ ॥

**सु० टी०—ननु वर्णिता फलश्रुतिरेव तत्र प्रमाणमिति चेन्नेत्याह—**

**या फलश्रुतिरिहोपवर्णिता**
**सा न तत्परतयाऽवगम्यते ।**
**तत्त्वमादिवचनं हि तत्परं**
**तत्परा न तु फलश्रुतिः क्वचित् ॥ १५९ ॥**

या फलेति । **तस्या अतत्परत्वादित्यर्थः । किं तर्हि तत्परं तत्राऽऽह**—तत्त्वमिति । **अस्तु फलश्रुतिरप्यैश्वर्यपरेति चेन्नेत्याह**—तत्परेति । **यथा हि स्वर्गादिफलश्रुतिर्न तत्परा किं तु विधिपरैवमियमपि तत्त्वमादिवाक्यार्थपरा न स्वार्थपरेत्यर्थः ॥ १५९ ॥**

अ० टी०—ननूक्ता श्रुतिरैश्वर्यविषया कथं न तत्परेत्यत आह—**या फलश्रुतिरिति ।** कुतो नावगम्यत इत्यत आह—**तत्त्वमादीति ।** स्वार्थबोधे दृष्टफलत्वात्तत्त्वमादिवचनस्य स्वार्थपरत्वमित्यर्थः । फलश्रुतिरपि स्वार्थपराऽस्त्विति चेन्मैवमित्याह—**तत्परा नत्विति ।** क्वचिदपि फलश्रुतिस्तत्परा न भवति । तस्याः सर्वत्रान्यतःसिद्धफलप्रकाशनेन साधकप्रवर्तनपरत्वादित्यर्थः ॥ १५९ ॥

**सु० टी०—फलश्रुतिगतैश्वर्यस्य ब्रह्मस्वरूपत्वेऽतिप्रसङ्गोऽपीत्याह—**

**सामगानमपि तत्स्वरूपतां**
**जक्षणं च जगतश्च सर्जनम् ।**
**अश्नुवीत फलवाक्यतः श्रुतं**
**तत्स्वरूपमिति यद्युपेयते ॥ १६० ॥**

सामगानमिति । **तदा हि ‘ साम गायन्नास्ते ’ [ तैत्ति० ३ । १० । ५ ] ‘ जक्षत्क्रीडन् ’ [ छा० ८ । १२ । ३ ] इति ‘ सोऽस्य संकल्पादेव समुत्तिष्ठति ’ [ छा० ८ । २ । १० ] इत्यादिकमपि फलवाक्यतः श्रुतत्वाविशेषाद्ब्रह्मस्वरूपतामश्नुवीतेत्यर्थः ॥ १६० ॥**

अ० टी०—फलवाक्यावगतस्याप्यर्थस्य स्वरूपत्वाभ्युपगमेऽतिप्रसङ्गश्च स्यादित्याह—**सामगानमपीति** । एतत्साम गायन्नास्त इति क्वचित्सामगानमपि फलं विदुषः श्रुतम् । तथा जक्षत्क्रीडन्रममाण इत्यत्र जक्षणपदवाच्यं हासभक्षणादि श्रुतम् । तथा ‘ स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति ’ इत्यादौ जगतः सर्जनं च फलमवगतम् । तथा च फलवाक्यतः श्रुतं तत्स्वरूपमिति यद्यभ्युपेयते तदा सामगानाद्यपि तत्स्वरूपतां ब्रह्मस्वरूपतामश्नुवीतेत्यर्थः ॥ १६० ॥

**सु० टी०—नन्वर्थवादप्रतीतमपि शोकतरणादिवदस्तु ब्रह्मस्वरूपमिति चेत्तत्राऽऽह—**

**अर्थवादगतमभ्युपेयते**
**न प्रमान्तरविरोधि यन्मतम् ।**
**सामगानमथ जक्षणादि वा**
**तत्परश्रुतिविरुद्धमुच्यते ॥ १६१ ॥**

अर्थवादेति । **शोकतरणादेः प्रमाणान्तराविरोधस्य परिहृतत्वादभ्युपगमो न तु तथा सामगानादावशरीरत्वादिश्रुतिविरोधादित्यर्थः ॥ १६१ ॥**

अ० टी०—तत्किमिदानीमर्थवादानां क्वापि स्वार्थपरत्वं नास्त्येव हन्त तर्हि बादरायणदेवताधिकरणन्यायविरोध इति चेत्सत्यं यद्यत्र देवताधिकरणन्यायो लभ्यते नात्र सोऽस्तीत्याह—**अर्थवादगतमिति** । संवादिविसंवादिप्रमाणान्तराभावे हि देवताधिकरणन्यायावतार इह सामगानादेस्तत्परनिर्विशेषत्वप्रतिपादकश्रुतिविरोधान्नात्र देवताधिकरणन्यायावतार इत्यर्थः ॥ १६१ ॥

**सु० टी०—नन्वैश्वर्यस्य वस्तुपरश्रुतिविरोधाभावादस्तु स्वरूपत्वमिति नेत्याह—**

**ईश्वरत्वमपि तत्परश्रुति-**
**र्नेति नेति परिदुःखिता सती ।**
**वारयत्यवशिनष्टि केवलं**
**चित्स्वरूपमनवद्यविग्रहम् ॥ १६२ ॥**

ईश्वरत्वमपीति । **सापेक्षस्याप्यैश्वर्यस्य स्वरूपत्वेऽतिप्रसङ्गादेकरसत्वश्रु-**

**तिपीडेति परितो दुःखितेत्यर्थः । एवं सर्वनिषेधे शून्यत्वमिति नेत्याह—** अवशिनष्टीति ॥ १६२ ॥

अ० टी०—तर्हि निर्विशेषश्रुतिविरोधात्सामगानादेर्ब्रह्मरूपता मा भूदीश्वरत्वं तु स्वरूपं सुखादिवद्भविष्यति तस्य प्रमाणान्तरविरोधादर्शनादिति चेन्न तस्यापि श्रुत्या निषिध्यमानत्वादित्याह—**ईश्वरत्वमपीति** । मूर्तामूर्तब्राह्मणे हि ब्रह्मण ऐश्वर्यमध्यात्ममधिदैवं चोपवर्ण्य ' अथात आदेशो नेतिनेति ' [ बृह० २ । ३ । ६ ] इति तत्परा श्रुतिः परिदुःखिता सती कथमयं जन ईश्वरात्मतत्त्वं जानीयादिति मातेव पुत्रहितैषिणी दुःखं प्राप्तेवेश्वरत्वमपि वारयति प्रतिषेधति । तत्प्रतिषेधे किमवशिष्यत इति तदाह—**अवशिनष्टि केवलमिति** । केवलं निर्विशेषं चित्स्वरूपं चिन्मात्रमनवद्यविग्रहं निरपेक्षस्वरूपं ' सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम् ' इत्यवशिनष्टि तन्मात्रमेवेश्वरतत्त्वमवधारयतीत्यर्थः ॥ १६२ ॥

**सु० टी०—ननु द्विविधमैश्वर्यं सोपाधिकं निरुपाधिकं चेति तत्राऽऽद्यस्य निषेधेऽप्यन्त्यस्यावशिष्यमाणत्वाद्ब्रह्मस्वरूपत्वं घटत इति शङ्कते—**

**सोपाधीश्वरतानिषेधनपरा सा नेति नेतिश्रुतिः**
**साक्षाद्भागवतं निरस्तनिखिलोपाधिस्वरूपं पुनः ।**
**विश्वैश्वर्यमिहोच्यमानमधुना मोक्षे ततस्तत्परै-**
**र्वाक्यैरस्य विरुद्धतानवसरो मुख्यं ततो गृह्यताम् ॥१६३॥**

सोपाधीति । **वाक्यैरुच्यमानमिति संबन्धः । तत्परैर्विश्वैश्वर्यं केवल इत्यादिभिः ॥ १६३ ॥**

अ० टी०—अत्रेश्वरत्वस्य सोपाधिकत्वनिरुपाधिकत्वाभ्यां द्वैविध्यं मन्यमानो वादी निषेधस्य सोपाधिकेश्वरविषयत्वमवशेषस्तु निरुपाधिकेश्वरत्वस्येति प्रत्यवतिष्ठते—**सोपाधीति** । ' नेतिनेति ' [ बृ० २ । ३ । ६ ] इति या श्रुतिः सा सोपाधीश्वरताया अमुख्येश्वरत्वस्य निषेधपरा यत्पुनरधुनेह मोक्षे विश्वैश्वर्यं केवल आप्तकाम इत्यादिवचनैरुच्यमानं विश्वैश्वर्यं साक्षाद्भागवतमित्यादिविशेषणद्वयोपेतं तत्पुनरवशिनष्टीत्यनुषङ्गेण योजना । तत एवं सति तत्परैर्वाक्यैर्निर्विशेषत्वप्रतिपादकैरस्यैश्वर्यवचनस्य विरुद्धतायाः शङ्कावसरो नास्तीत्यर्थः । सिद्धमर्थमुपसंहरति—**मुख्यमिति** । यतः श्रुतिविरोधाभावस्ततस्तस्मान्मुख्यं स्वाभाविकमेवेदमैश्वर्यमिति गृह्यतामङ्गी क्रियतामित्यर्थः ॥ १६३ ॥

सु० टी०—तर्हि सामगानादावपि सोपाधिकस्यैव निषेधो निरुपाधिकं तु ग्राह्यं स्यादित्यतिप्रसङ्गेन दूषयति—

सामगानमथ जक्षणं जग-
त्सर्जनं च निरुपाधि[1] गृह्यताम् ।
नेति नेतिवचसा निषिध्यते
जक्षणादिकमुपाधिसंश्रयम् ॥ १६४ ॥

सामेति ॥ १६४ ॥

अ० टी०—एवं तर्हि सामगानादिकमपि तथा विभज्य निरपेक्षस्वरूपतया मुख्यमिष्यतामिति सिद्धान्ती प्रतिबन्दीं गृह्णाति—**सामगानमिति** । सामगानादिकमपि द्विधा विभज्य निरुपाधीश्वरस्वरूपमिति गृह्यतामुपाधिसंश्रयं सोपाधिकं जक्षणादि नेत्यादिवचसा **निषिध्यत** इति च गृह्यतामिति योजना ॥ १६४ ॥

सु० टी०—स्यादेवं यदि द्विविधं सामगानादि स्यान्न च तदस्ति मानाभावादिति चेदैश्वर्येऽपि तुल्यमित्याह—

सामगानमथ जक्षणं जग-
त्सर्जनं न च खलु द्विधेष्यते[2] ।
तत्प्रमाणविरहादिहेति चे-
दीश्वरत्वमपि न द्विधा भवेत् ॥ १६५ ॥

सामेति ॥ १६५ ॥

अ टी०—सामगानादेर्निरुपाधिकरूपसद्भावे प्रमाणाभावान्नात्र द्वैविध्यसंभव इति प्रतिबन्दीं पूर्ववाद्युद्धरति—**सामगानमिति** । स्पष्टार्थः । तर्हीश्वरत्वस्यापि द्वैविध्ये मानाभावस्तुल्य इति सिद्धान्ती परिहारसाम्यमाह—**ईश्वरत्वमपि । न द्विधा भवेदिति** । ईशितव्यापेक्षानियमादीश्वरत्वस्य निरपेक्षं तत्प्रामाणिकं न संभवतीत्यर्थः ॥ १६५ ॥

सु० टी०—तर्हि ज्ञानसुखयोरपि द्वैविध्ये मानाभावाद्ब्रह्मस्वरूपानुपपत्तौ जडमसुखं च ब्रह्म स्यादिति नेत्याह—

ज्ञानमस्ति खलु बाह्यगोचरं
निर्विशेषमविनाशि च द्विधा ।

---

१ क. °धि गम्यताम् । २ क. ग. धेप्सिते° ।

**बाह्यगोचरमपोह्य केवला**
**स्वापमोक्षसमये चितिः स्थिता ॥ १६६ ॥**

ज्ञानमिति । **बाह्यगोचरं सविशेषम् । केवला निर्विशेषा ॥ १६६ ॥**

अ० टी०—तर्हि ज्ञानादिकमपि ज्ञेयादिसापेक्षं कथं स्वरूपं ब्रह्मणः स्यादिति प्रतिबन्दीग्रहमनवकाशयञ्ज्ञानादेर्वस्तुरूपत्वमुपपादयति—**ज्ञानमस्तीति** । ज्ञानं द्विधाऽस्तीति संबन्धः । खलुशब्दः प्रसिद्ध्यर्थः । ज्ञानस्य द्वैविध्यं न शङ्कास्पदमित्यर्थः । द्वैविध्यमेवाऽऽह—**बाह्येति** । बाह्यार्थविषयं ज्ञानं विनाशिज्ञानं निर्विशेषं ज्ञानमविनाशि तदात्मरूपमित्यर्थः । निर्विशेषं ज्ञानं क्वास्तीति वीक्षायामाह—**बाह्यगोचरमपोह्येति** ॥ १६६ ॥

**सु० टी०—श्रुतिरपि तद्द्वैविध्यं कथयतीत्याह—**

**पश्यन्न पश्यतिगिरा कथयांबभूव**
**साक्षादनश्वरविनश्वरचिद्विभागम् ।**
**तात्पर्यतः श्रुतिवचः स्फुटमेव नैव-**
**मैश्वर्यवस्तुनि विभागवचःश्रुतिर्नः ॥ १६७ ॥**

पश्यन्निति । **यथा 'पश्यन्वै तन्न पश्यति' [ बृह० ४ । ३ । २३ ] इति श्रुत्या साक्षादेव सत्यामपि कूटस्थदृष्टौ बुद्धिवृत्त्यभावकथनान्नित्यानित्यज्ञानविभागस्तात्पर्येणोक्तो नैवमैश्वर्यद्वयविषया श्रुतिरस्तीत्यर्थः ॥१६७॥**

अ० टी०—बाह्यविषयज्ञानव्युदासेन निरुपाधिकं चितिस्वरूपं स्वापादावस्तीत्यत्र किं प्रमाणमिति चेत्तत्राऽऽह—**पश्यन्न पश्यतीति** । 'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यतेऽविनाशित्वात् । न तु तद्द्वितीयमस्ति ततोऽन्यद्विभक्तं यत्पश्येत्' [ बृह० ४ । ३ । २३ ] इति श्रुतिवचः साक्षादनश्वरविनश्वरचिद्विभागं पश्यन्न पश्यतिगिरा तात्पर्यतः स्फुटमेव कथयांबभूवेति योजना । उदाहृतश्रुतिपदानामेषोऽर्थः—यद्वै तदिति पदानि तत्तत्र सुषुप्त्यादावात्मा न पश्यतीति यद्वै प्रसिद्धं तन्न तथा मन्तव्यमिति शेषः । कुतः पश्यन्वै पश्यन्नेवाऽऽत्मा तत्तत्र न पश्यतीति प्रसिद्धः । ननु विरुद्धमेतत्पश्यन्वै तन्न पश्यतीति न विरुद्धमित्याह—**न हीति** । द्रष्टुरात्मनो या दृष्टिर्दर्शनं रूपाद्यवभाससमर्थं ज्ञप्तिस्वरूपं तस्या दृष्टेर्विपरिलोपो विनाशो न हि विद्यते । कुत इत्यत आह—**अविनाशित्वादिति** । विनाशशीलं हि विनाशीत्युच्यते । नेयं दृष्टिस्तथा सर्वविनाशादिसाक्षित्वान्नित्यस्याऽऽत्मनः सर्वदा सर्वानात्मव्यावर्तकतयाऽवस्थानाच्च । अतोऽविनाशित्वादस्या विपरिलोपो न विद्यते स्वापे चक्षुष उपसंहाराचाक्षुष्या

मनोवृत्तेर्विलोपेऽपि तद्द्वारा रूपावभासिनी दृष्टिः स्वरूपतो न नश्यतीति पश्यन्नेव तदात्मेत्यर्थः । तर्हि न पश्यतीति कथमुक्तं तत्र हेतुमाह—**न तु तद्द्वितीयमिति** शेषेण । तत्तत्र सुषुप्तौ ततः आत्मस्वरूपाद्विभक्तं पृथग्भूतमन्यद्विलक्षणं दृश्यं विषयकरणादिकं न त्वस्ति यत्तदा पश्येत् । अतो दृश्याभावान्न पश्यतीत्युच्यते स्वरूपज्ञानाविलोपात्पश्यन्निति चेति नात्र कोऽपि विरोध इति । यथैव निरुपाधिकज्ञानसद्भावः सोपाधिकाद्विविच्य श्रुत्योच्यते नैवमैश्वर्यवस्तुनि नोऽस्माकमौपनिषदानां विभागवचनपरा श्रुतिरुपलब्धाऽस्तीत्यर्थः ॥ १६७ ॥

**सु० टी०—एवं सुखद्वैविध्यमपि श्रुतिरेव दर्शयतीत्याह—**

**एवं न वा अर इति श्रुतमेवताव-**
**त्पुत्राद्युपाधिपुरुषस्य सुखं विनाशि ।**
**नित्यं निरन्तरमनन्तमपारमुक्तं**
**ब्राह्मं सुखं वचनकोटिशतैश्च यत्नात् ॥ १६८ ॥**

एवमिति । '**न वा अरे पुत्राणां कामाय**' [ **बृह० २ । ४ । ५** ] **इति प्रियादिरूपपुत्राद्युपाधिकमनित्यसुखं श्रूयते । 'एष एव परम आनन्दः'** [ **बृह० ४ । ३ । ३३** ] **इत्यादिषु तु नित्यनिरतिशयं ब्रह्मसुखमित्यर्थः ॥ १६८ ॥**

अ० टी०—ज्ञानवत्सुखमपि द्विविधं प्रसिद्धमिति मन्वानस्तत्र प्रमाणमाह—**एवं न वेति** । 'न वा अरे पुत्राणां कामाय पुत्राः प्रिया भवन्त्यात्मनस्तु कामाय पुत्राः प्रिया भवन्ति' [ बृह० २ । ४ । ५ ] इत्यादौ पुरुषस्य पुत्राद्युपाधिकं सुखं विनाशीति तावच्छ्रुतमेव । तथा नित्यं च ब्रह्मसुखं 'विज्ञानमानन्दं ब्रह्म' [ बृह० ३ । ९ । २८ ] एषोऽस्य परम आनन्दः [ बृ० ४ । ३ । ३२ ] 'आनन्दो ब्रह्मेति व्यजानात्' [ बृ० ३ । ६ । १ ] 'आनन्दरूपममृतं यद्विभाति' [ मुण्ड० २ । २ । ७ ] इत्यादिश्रुतिवचनकोटिशतैर्यत्नात्तात्पर्येणोक्तम् । कीदृशं तत्सुखं निरन्तरं दुःखाद्यननुविद्धम् । अनन्तं कालतोऽन्तरहितम् । अपारं देशतोऽप्यन्तरहितमित्यर्थः ॥ १६८ ॥

**सु० टी०—नत्वेवं द्विविधमैश्वर्यं वेदे क्वचिद्वर्णितमित्युपसंहरति—**

**ऐश्वर्यवर्णनमिह द्विविधं न वेदे**
**नित्यं क्वचित्क्वचिदनित्यमिति प्रतीमः ।**

**ऐश्वर्यमात्रकथनं पुनरस्ति मोक्षा-**
**दर्वाङ् न मोक्षसमये च न तत्परं तत् ॥ १६९ ॥**

ऐश्वर्येति । **तर्हि किमैश्वर्यं नाभ्युपेयत एव नेत्याह**—ऐश्वर्यमात्रेति । **अस्यैश्वर्यमेष सर्वेश्वर इत्यादिमोक्षादर्वाक्षु भूमिषु व्यवहारदशायामित्यर्थः । नन्वस्ति मोक्षेऽपि तृतीयं देहभेद इत्यादीति तत्राऽऽह**—मोक्षसमय इति । **किं तु स्तुतिपरमेवेति शेषः ॥ १६९ ॥**

अ० टी०—तदेवं ज्ञानसुखयोर्द्वैविध्यस्य साक्षाच्छ्रुतिसिद्धत्वात्तत्र सोपाधिकयोर्न प्रेत्य संज्ञाऽस्ति ' न प्रियाप्रिये स्पृशतः ' [ छा० ८ । १२ । १ ] इति चाऽऽत्मनि प्रतिषेधो निरुपाधिकयोस्तु श्रुतितात्पर्यगोचरत्वादात्मस्वरूपतेति प्रतिबन्दीशङ्कामपोद्य नैवमैश्वर्यवस्तुनि विभागवचःश्रुतिर्नेत्यत्रोक्तं विवृणोति—**ऐश्वर्यवर्णनमिति** । ऐश्वर्यमात्रकथनमिति । ' एष सर्वेश्वरः ' ' सर्वस्येशानः सर्वस्याधिपतिः ' [ बृ० ४ । ४ । २२ ] इत्यादौ नित्यत्वानित्यत्वविशेषानवमर्शेनैश्वर्यमात्रकथनं पुनर्वेदेऽस्तीत्यर्थः । तच्च श्रूयमाणमैश्वर्यं मोक्षादर्वाग्व्यावहारिकमेव तन्न पारमार्थिकमित्यर्थः । यच्च ' विश्वैश्वर्यं केवल आप्तकामः ' [ श्वे० १ । ११ ] इति मोक्षसमये च श्रवणं तन्न तत्परं किं तु स्तुतिपरमेवेशितव्याभावात्तत्रेत्यर्थः ॥ १६९ ॥

सु० टी०—**नन्वैश्वर्यस्यास्वरूपत्वे तत्कीर्तनं व्यर्थमिति चेत्तत्राऽऽह—**

**प्रियशिरस्त्वकथा खलु यादृशी**
**भवति तादृशमेव तदीरणम् ।**
**तदनु नेति च नेति वचः श्रुते-**
**र्यदपि मोक्षगतं स्तुतये हि तत् ॥ १७० ॥**

प्रियेति । **यथाऽऽनन्दमयब्रह्मणः प्रियशिरस्त्वाद्यस्वरूपमप्युपासनार्थत्वान्निर्गुणब्रह्मप्रतिपादनोपायत्वेन संकीर्त्यते तथैश्वर्यमपीत्यर्थः । कुत इति चेत्तत्राऽऽह**—तदन्विति । **तर्हि मोक्षसमये कथनस्य कोपयोगस्तत्राऽऽह**—यदपीति ॥ **१७० ॥**

अ० टी०—उक्तमेवार्थमुपपादयति—**प्रियशिरस्त्वेति** । आनन्दमयस्य ब्रह्मत्वमिति मते ' तस्य प्रियमेव शिरः मोदो दक्षिणः पक्षः ' [ तै० २ । ५ । १ ] इत्यादौ ब्रह्मणः प्रियमोदाद्यवयवत्वकथा कथनं यादृश्यौपाधिकविषयत्वान्न खलु स्वरूप परा भवतीत्यर्थः । तदीरणमैश्वर्यकथनमपि तादृशमेवौपाधिकविषयं व्यावहारिकमेवाऽऽरोपितरूपत्वादित्यर्थः । कथमिदमवगम्यत इति तत्राऽऽह—**तदन्विति** । ऐश्वर्यकथना-

१ ख. र्वाक्षु मो° ।

नन्तरं 'स एष नेति नेत्यात्मा' [ बृ० ३ । ९ । २६ ] इति निषेधवचनश्रवणान्निषिध्यमानस्य चापरमार्थत्वादित्यर्थः । ऐश्वर्यद्वैविध्ये प्रमाणाभावे सति निषेधस्यौपाधिकैश्वर्यपरत्वकल्पनानवकाश इति भावः । मोक्षसमये च न तत्परं तदित्युक्तं विवृण्वंस्तस्य विषयमाह—**यदपि मोक्षगतं स्तुतये हि तदिति** । हिशब्दः फलश्रुतेः सर्वत्र स्तुतिपरत्वप्रसिद्धिद्योतनार्थः । 'सोऽश्नुते सर्वान्कामान्सह' [ तै० २ । १ । १ ] इत्यादिवद् 'विश्वैश्वर्यं केवलः' [ श्वे० १ । ११ ] इत्याद्यपि विद्यास्तुतिपरमेवेत्यर्थः ॥ १७० ॥

**सु० टी०—एवं स्वमतेनैश्वर्यस्यास्वाभाविकत्वमुक्त्वा मतान्तरानुसारेणापि वर्णयति—**

**स्वातन्त्र्यमीश्वरगिरा गुणमार्गवृत्ति-**
**माश्रित्य पूर्वगुरवः प्रतिपादयन्ति ।**
**सिंहस्य शौर्यगुणवत्परमेश्वरस्य**
**स्वातन्त्र्यलक्षणगुणोऽव्यभिचाररूपः ॥ १७१ ॥**

स्वातन्त्र्यमिति । **गुणमार्गावृत्तिं गौणीमित्यर्थः । यथा शौर्यगुणः सिंहं न व्यभिचरत्येवं स्वातन्त्र्यगुणोऽपीश्वरमिति । यथा शौर्ययोगिनि सिंहशब्दस्तथा स्वातन्त्र्ययोगान्निर्गुणेऽपीश्वरशब्दः प्रवर्तत इति वदन्तीत्यर्थः ॥ १७१ ॥**

अ०टी०—तदेवमीश्वरत्वं न निरुपाधिकमस्त्यतो न तद्ब्रह्मस्वरूपमिति प्रतिपादितमिदानीमीश्वरश्रुतेर्निरुपाधिके ब्रह्मण्यविरुद्धमर्थं कथयन्तः किं वदन्तीत्याह-**स्वातन्त्र्यमिति ।** पूर्वे ये वृद्धास्ते च ते गुरवश्चेति पूर्वगुरवस्ते गुणमार्गवृत्तिमाश्रित्य शब्दस्य गौणीं वृत्तिमङ्गीकृत्येश्वरगिरा स्वातन्त्र्यं प्रतिपादयन्ति । एतदेव दृष्टान्तेन स्पष्टयति—**सिंहस्येति ।** यथा सिंहस्य शौर्याख्यो धर्मः सिंहाव्यभिचारी तथा परमेश्वरस्य स्वातन्त्र्यलक्षणगुणोऽव्यभिचाररूपः स्वातन्त्र्यमीश्वरं न व्यभिचरतीत्यक्षरार्थः । एतदुक्तं भवति—यथा सिंहो देवदत्त इति सिंहगतशौर्यगुणयोगिनि मनुष्ये सिंहशब्दः प्रयुज्यते सिंहाव्यभिचारिशौर्यगुणयोगादेवं सिंहशौर्यवदीश्वरस्य स्वातन्त्र्यमव्यभिचारीति निरुपाधिके ब्रह्मण्यपीश्वरपदं स्वातन्त्र्यलक्षणार्थं प्रयुज्यते । यथा सिंह इत्युक्ते शौर्यं लक्ष्यते तथेश्वर इत्युक्ते स्वातन्त्र्यं लक्ष्यते । तच्च सिंहे शौर्यवद्ब्रह्मण्यव्यभिचारीति तद्द्वारकस्तत्रेश्वरपदप्रयोग इति ॥ १७१ ॥

**सु० टी०—कथं निर्गुणब्रह्मणि स्वातन्त्र्यगुणयोगः संभवी तत्परत्वेनेश्वरपदाप्रयोगादिति चेत्तत्राऽऽह—**

**ऐश्वर्यवस्तु परिगृह्य तदत्यजन्तः**
**सामर्थ्यसिद्धिमुपपादयितुं क्वचिच्च ।**

सर्वेश्वरश्रुतिवचः समुदाहरन्ति
स्वातन्त्र्यलक्षणगुणस्य तमस्वितायाम् ॥ १७२ ॥

ऐश्वर्यवस्त्विति । **क्वचिद्ग्रन्थ ऐश्वर्यवस्तु परिगृह्य तमस्वितायामज्ञानावस्थायां तद्वत्यजन्तौ निरुपाधिकेऽपि स्वातन्त्र्यगुणसिद्धिमुपपादयितुं सर्वेश्वरश्रुतिमुदाहरन्ति कारणत्वेनाऽऽकाशादिष्वित्यत्रापरप्रयोज्यत्वेनेश्वरमब्रवीदित्यादिभाष्य इति नोक्तदोष इत्यर्थः ॥ १७२ ॥**

अ० टी०——ननु निरुपाधिकब्रह्मस्वरूपपरतयेश्वरपदश्रवणमेव नास्तीत्युक्तं तत्कथमीश्वरपदेन स्वातन्त्र्यलक्षणाऽपीति चेद्व्यावहारिकेश्वरत्वाभिधायिसर्वेश्वरश्रुतेर्निर्गुणेऽप्युदाहृतत्वादित्याह——**ऐश्वर्यवस्त्विति ।** क्वचिद्ग्रन्थ ऐश्वर्यवस्तु परिगृह्यैश्वर्याभिधायकत्वेन सर्वेश्वरश्रुतिवचः समुदाहरन्ति भाष्यकारप्रभृतयः । कारणत्वेन चाऽऽकाशादिषु यथाव्यपदिष्टोक्तेरित्यत्रापरप्रयोज्यत्वं नेश्वरमब्रवीदिति भाष्यदर्शनात् । एवमन्यत्राप्येतादृशं वचनमन्वेषणीयम् । तमस्वितायां तमोव्यवस्थायां तदैश्वर्यमल्पजन्तः सन्तो निरुपाधिके ब्रह्मरूपे स्वातन्त्र्यलक्षणगुणस्य सामर्थ्यसिद्धिमुपपादयितुमेवोदाहरन्ति । अतो युक्तमेवोच्यते पूर्वगुरुभिरित्यर्थः ॥ १७२ ॥

**सु० टी०——ननु कथं तमस्वितायामैश्वर्याभिधाने निर्गुणेऽपि स्वातन्त्र्यगुणस्य सामर्थ्यसिद्धिरित्याशङ्क्यान्यथानुपपत्त्येति दृष्टान्तेनोपपादयति—**

सिंहश्रुतिर्न घटते यदि शूरताऽस्य
न स्यात्तथैव परमेश्वरताश्रुतिश्च ।
नैश्वर्यलक्षणगुणः परमात्मनश्चे-
दित्यर्थलब्धिमभिसंदधते महान्तः ॥ १७३ ॥

सिंहेति । **यथा देवदत्ते सिंहश्रुत्यन्यथानुपपत्त्या शौर्यकल्पनमेवमैश्वर्यलक्षणं ज्ञापकं यस्य स्वातन्त्र्यगुणस्य स तथा स चेन्न परमात्मनः स्यात्परमेश्वरताश्रुतिरपि न स्यादिति तत्सिद्धिरित्यर्थः ॥ १७३ ॥**

अ० टी०——कथं तमस्व्यवस्थावत्यैश्वर्याभिधानेन निरुपाधिरूपे स्वातन्त्र्यगुणस्य सामर्थ्यसिद्धिरिति चेदन्यथानुपपत्त्यैवेत्याह——**सिंहश्रुतिरिति ।** यद्यस्य देवदत्तस्य सिंहस्य च शूरता न स्यात्तर्हि सिंहश्रुतिर्न घटते सिंहाव्यभिचारिशौर्यनिबन्धनत्वात्सिंहशब्दस्य । यथाऽयं दृष्टान्तस्तथैव परमात्मन ऐश्वर्यलक्षणगुण ऐश्वर्यलक्षणं ज्ञापकं यस्येति व्युत्पत्तेः स्वातन्त्र्यरूपो धर्मश्चेन्न स्यात्तदा तस्मिन्परमेश्वरताश्रुतिः परमेश्वरशब्दो न स्यादित्येवमर्थलब्धिं

सामर्थ्यप्राप्तिं महान्त आचार्या अभिदधते तत्र तत्र कथयन्तीत्यर्थः । ब्रह्मणि व्यवहार-संबन्धापेक्षयाऽपि युज्यमाना सर्वेश्वरश्रुतिः स्वाभाविकं स्वातन्त्र्यं विना नोपपद्यते । अतः सर्वेश्वरश्रुतिबलादवार्थात्स्वातन्त्र्यसिद्धिरित्यभिसंधानेन सर्वेश्वरश्रुतिं निर्गुणेऽप्युदाहरन्तीत्युक्तं भवति ॥ १७३ ॥

**सु० टी०—तर्ह्यर्थलभ्यत्वादश्रौतत्वं तस्य स्यादिति तत्राऽऽह—**

**श्रौतार्थवृत्तिबललभ्यमपीह वस्तु**
**श्रौतं वदन्ति निकटत्वमनुस्मरन्तः ।**
**आसन्नवृष्टिमपि देवमुदीरयन्ति**
**[1]वर्षन्तमेव हि जना भुवि तादृगेतत् ॥ १७४ ॥**

श्रौतार्थेति । **यथा यागादेः स्वर्गहेतुत्वोक्त्याऽर्थलभ्यस्यापूर्वस्य श्रौतत्वमभ्युपेत्य तत्प्राधान्येनेत्थं भावान्वयमिच्छन्ति । एवमिहाऽऽर्थिकस्यापि स्वातन्त्र्यस्य श्रौतत्वम् । दृष्टान्तमाह**—आसन्नेति । **वर्तमानसामीप्ये वर्तमानवच्छ्रौतसामीप्याच्छ्रौतत्वव्यवहार इत्यर्थः ॥ १७४ ॥**

अ० टी०—तथाऽपि श्रुतार्थबललभ्यत्वादश्रौतं स्वातन्त्र्यं स्यादिति चेन्नायमपि दोष इत्याह—**श्रौतार्थेति** । श्रौतार्थे वृत्तिः श्रौतार्थबोधनं [2]तद्बललभ्यं तत्सामर्थ्यात्प्राप्यमपि वस्तु श्रौतमितीह प्रमाणवृत्तिनिरूपणे वदन्ति पण्डिता इति योजना । तथा कथने निमित्तं सूचयन्वक्तॄन्विशिनष्टि—**निकटत्वमनुस्मरन्त इति** । सामर्थ्यसिद्धस्यापि श्रौतार्थनिकटत्वं जानन्त इत्यर्थः । यथा यागादेः स्वर्गसाधनत्वात्साक्षाच्छ्रौताल्लभ्यस्यार्थस्य श्रौतत्वमङ्गीकृत्य तत्प्राधान्येनेतिकर्तव्यत्वान्वयमाचक्षते केचित्तथाऽत्रापि स्वातन्त्र्यस्याऽऽर्थिकत्वेऽपि न श्रौताद्विशेष इति भावः । श्रौतारात्तिमात्रेण श्रौतत्वव्यवहारे दृष्टान्तमाह—**आसन्नवृष्टिमपीति** । आसन्नवृष्टिमपि वर्षन्तं देवमुदीरयन्तीत्यन्वयः । तादृगेतदिति श्रौतार्थसामीप्याच्छ्रौतत्वव्यवहारः स्वातन्त्र्यस्येत्यर्थः ॥ १७४ ॥

**अ० टी०—कथं पुनः 'पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ' [ ब्रह्मसू० ३ । २ । ५ ] इति सूत्रे तिरोहितत्वेनैश्वर्यस्य स्वाभाविकत्वोक्तिस्तत्राऽऽह—**

**ऐश्वर्यमज्ञानतिरोहितं स-**
**द्ध्यानादभिव्यज्यत इत्यवोचत् ।**

१ क. वर्धन्त°। २ क. °तं तद्बया° ।

शरीरिणः सूत्रकृदस्य यत्तु
तदभ्युपेत्योदितमुक्तहेतोः ॥ १७५ ॥

ऐश्वर्यमिति । कुतोऽभ्युपेत्यवादस्तत्राऽऽह—उक्तेति । **निषिध्यमानत्वादित्यर्थः ॥ १७५ ॥**

अ० टी०—तदेवं स्वातन्त्र्यविवक्षायां निर्विशेषेऽपि ब्रह्मणि सर्वेश्वरश्रुतिर्न विरुध्यत ऐश्वर्यं तु तत्परश्रुत्यभावादर्थविरोधाच्च न ब्रह्मरूपमिति निरूपितं तत्रैश्वर्यस्यास्वरूपत्ववर्णनं सूत्रकृद्वचनविरुद्धमित्याशङ्क्याऽऽह—**ऐश्वर्यमज्ञानेति** । यत्तु सूत्रकृदस्य शरीरिणो जीवस्यैश्वर्यं ब्राह्मैश्वर्यमज्ञानतिरोहितं सद्ध्यानादीश्वरस्वरूपाभिध्यानान्मोक्षदशायामभिव्यज्यत इति ‘ पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ’ [ ब्र० सू० ३ । २ । ५ ] इति सूत्रेणावोचत्तदभ्युपगमवादेन तेनोदितमिति मन्तव्यमुक्तहेतोरैश्वर्ये प्रमाणाभावस्योक्तत्वादित्यक्षरयोजना । अत एव ‘ विश्वैश्वर्यं केवलः ’ [ श्वेता० १ । ११ ] इत्याद्या तत्रार्थवादश्रुतिरुदाहृता सा न तत्परेत्यभिप्रायः ॥ १७५ ॥

**सु० टी०—किं च वास्तवैश्वर्यं विनाऽनुपपत्त्यभावादपि न तद्वास्तवत्वं स्वभ्युपेयमित्याह—**

अथ वा चितिवत्प्रतीयतां
पुरुषस्येश्वरताऽपि वास्तवी ।
यदि किंचन कारणं भवे-
न्न विना सा तदिहाभ्युपेयते ॥ १७६ ॥

अथवेति । **तत्कारणं विना सेश्वरता वास्तवी नेहेति योज्यम् ॥ १७६ ॥**

अ० टी०—ननु सूत्रकारोक्तं तथैवेत्यभ्युपगन्तुं युक्तमिति चेत्सत्यं प्रमाणवत्त्वे तथैव न हि सूत्राणामागमतया प्रामाण्यं किं तु युक्तिसमर्पकतया नचात्रार्थवादवाक्यव्यतिरेकेण प्रमाणं किंचिदुपन्यस्तमस्त्यतोऽयमभ्युपगमवाद एवेति निश्चीयत इत्याह—**अथ वेति** । अथशब्दस्तदेत्यर्थे । वाशब्दोऽवधारणे । अथ तदा पुरुषस्य जीवस्येश्वरताऽपि चितिवद्वास्तवी प्रतीयतां प्रतीयेत वाऽङ्गी क्रियेतैवेति योजना । यदि किंचन कारणं प्रमाणं भवेत्तदेति संबन्धः । तत्प्रमाणं विनेह पुरुषे सा वास्तवीश्वरता नाभ्युपेयतेऽतिप्रसङ्गादित्यर्थः ॥ १७६ ॥

**सु० टी०—अभ्युपेत्यवादत्वेऽपि किं मानमिति चेत्तत्राऽऽह—**

कामादि तत्र च भवेदितरत्र चेति
यत्सूत्रकारवचनं तदुदीक्षमाणाः ।

**कामादिकेन दहरस्थगुणेन तुल्यं**
**सर्वेश्वरादिगुणजातमिति प्रतीमः ॥ १७७ ॥**

कामादीति । '**कामादीतरत्र तत्र चाऽऽयतनादिभ्यः**' [ **ब्र० सू० ३ । ३ । ३९** ] **इति सूत्रे छान्दोग्यवाजसनेयविद्ययोरेकत्राऽऽत्मवत्कामानामपि श्रुतेः '[य इहाऽऽत्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्]' [ छा० ८ । १ । ६ ] इति अन्यत्र च 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' [ बृह० ४ । ३ । १४ ] इतिलिङ्गात्सगुणनिर्गुणत्वाभ्यां भेदे स्थितेऽपि निर्गुणवाजसनेयिविद्यायां सगुणविद्यागतसत्यकामत्वादिगुणोपसंहारो गुणवत एकत्वाद्धृदयायतनत्वसेतुत्वादिसाम्याच्च सूत्रितो विभूतिप्रदर्शनाय नोपासनायेत्यतः कामादिगुणेन तुल्यमवास्तवत्वं सर्वेश्वरत्वादिगुणस्य जानीम इत्यर्थः ॥ १७७ ॥**

अ० टी०—सूत्रकृदुक्तेरभ्युपगमवादत्वनिश्चये स्पष्टं हेतुमाह—**कामादीति** । 'कामादीतरत्र तत्र चाऽऽयतनादिभ्यः' [ ब्र० सू० ३ । ३ । ३९ ] इतिसूत्रेण दहरविद्यागतानां सत्यकामत्वादिगुणानां बृहदारण्यकगतनिर्गुणविद्यावर्तिनां सर्ववशित्वसर्वेश्वरत्वादिगुणानां च परस्परत्रोपसंहारः सूत्रकारेणोक्तस्तदेतदाह कामादि सत्यकामत्वादि तत्र च निर्गुणविद्यायामपि भवेदितरत्र च सगुणविद्यायामपि निर्गुणविद्यागतं सर्वेश्वरत्वादि भवेदिति योज्यमित्येवं यत्सूत्रकारवचनं तदुदीक्षमाणाः पश्यन्तः कामादिकेनेति सुगमम् । तत्र दहरविद्याप्रकरणादुपसंहृतानां सत्यकामत्वादीनां निर्गुणविद्यायामुपकारः स्तुतिलक्षणः । स एव वशित्वेश्वरत्वादीनामपि तत्र श्रूयमाणानां तुल्यार्थत्वप्रयुक्तत्वादुपसंहारस्य । अत ऐश्वर्यं न चितिवत्स्वरूपत्वेनाभिमतं सूत्रकारस्येति प्रतीमो वयमित्यर्थः ॥ १७७ ॥

**सु० टी०—उक्तमर्थं प्रपञ्चयति—**

**दहरस्थगुणोपसंहृतेः**
**स्तुतिमात्रं विरहय्य नापरम् ।**
**फलमस्ति परात्मनिष्ठिते**
**वचने वाजिभिराहृते महत् ॥ १७८ ॥**

दहरस्थेति । **छान्दोग्यस्थदहरविद्यागतसत्यकामत्वादिगुणोपसंहृतेरित्यर्थः । वाजिभिर्वाजसनेयिभिराहृते 'स वा एष महानज आत्मा' [ बृह० ४ । ४ । २२ ] इत्यादिवचने ॥ १७८ ॥**

अ० टी०—दहरस्थगुणोपसंहारस्य निर्गुणविद्यायां न स्तुतिव्यतिरिक्त उपकारोऽस्तीत्याह—**दहरस्थेति** । परमात्मनिष्ठिते वचने वाजिभिरादृत दहरस्थगुणोपसंहृतेः स्तुतिमात्रं विरहय्यापरं महत्फलं नास्तीत्यन्वयः । यद्यपि सत्यकामत्वादिभिरपि स्वातन्त्र्यमुपलक्षयितुं शक्येत तथाऽपि न तदर्थमेत उपसंहर्तव्याः श्रुतेर्वशित्वादिभिरपि तत्सिद्धेरित्यभिप्रेत्य महदिति फलं विशेषितम् ॥ १७८ ॥

**सु० टी०—आस्तां तस्य स्तुतिमात्रं फलं प्रकृते तु किमायातमिति तत्राऽऽह—**

**दहरादुपसंहृतैर्गुणैः**
**सदृशाश्चेद्वशितादिलक्षणाः ।**
**न तदा परमात्मरूपतां**
**प्रतिपत्तुं कलयाऽपि शक्नुयुः ॥ १७९ ॥**

दहरादिति । **शक्नुयुरिति पारमार्थिकैश्वर्यवादिन इति शेषः ॥ १७९ ॥**

अ० टी०—सत्यकामत्वादीनां तत्र स्तुतिमात्रफलत्वेऽपि वशित्वादीनामन्यदेव फलमस्तु को विरोध इति चेन्नेत्याह—**दहरादिति** । सदृशाः सदृशोपकारकाः । सुगमाऽक्षरयोजना । परस्परसादृश्याद्ध्युपसंहारः । सादृश्यं चात्रोपकारसाम्यमेव । अन्यथा सादृश्यमेव न लभेतेत्युपसंहार एव न सिध्येदित्यर्थः ॥ १७९ ॥

**सु० टी०—उक्तमर्थं निगमयति—**

**परमेश्वरतागुणोऽप्यतः**
**स्तुतये तस्य परस्य वस्तुनः ।**
**परिकीर्तित इत्युपेयता-**
**मविशेषाद्वशितादिलक्षणैः ॥ १८० ॥**

परमेश्वरतेति । **उपेयतामित्यकामेनापीति शेषः ॥ १८० ॥**

अ० टी०—तथा च परमेश्वरत्वगुणोऽपि वशित्वसत्यकामादिगुणतुल्यत्वात्स्तुत्यर्थ एवेत्याह—**परमेश्वरतेति ॥ १८० ॥**

**सु० टी०—विपक्षे बाधकमुपन्यस्यति—**

**कारणत्वमपि चित्सुखादिव-**
**त्तत्स्वरूपमिति किं न गृह्यते ।**

---

१ घ. °शक्नुमः ।

ईश्वरत्वविषये विभोर्विना
पक्षपातकरणे न कारणम् ॥ १८१ ॥

[illegible]करणमपीति । ईश्वरत्वेऽपि कारणत्वादिकं तुल्यमेवेति शेषः ॥ १८१ ॥

अ० टी०—यदि चेश्वरत्वं चेद्ब्रह्मणः स्वरूपं स्यात्कारणत्वमपि स्वरूपं स्यात् [illegible] तुल्ययोगक्षेमत्वादित्याह—कारणत्वमपीति । न [illegible] पक्षपातो लभ्यत इत्यर्थः ॥ १८१ ॥

सु० टी०—बाधकान्तरमाह—

साक्षिताऽपि परमात्मनो भवे-
दीश्वरत्ववदियं न संशयः ।
नित्यसिद्धनिजबोधरूपव-
द्रूपमेव निरुपाधिकं विभोः ॥ १८२ ॥

साक्षिताऽपीति । यथा विभोरात्मन ईश्वरत्वं नित्यसिद्धबोधवन्निरु[illegible]पाधिकरूपेव स्वी क्रियते तथा साक्षिताऽपि भवेदिति संबन्धः ॥ १८२ ॥

अ० टी०—साक्षित्वेऽप्येतत्तुल्यमित्याह—साक्षिताऽपीति । ईश्वरत्व[illegible]सापेक्षा साक्षिताऽपि भवेदित्यर्थः । नित्यसिद्धमनपेक्षं यन्निजं स्वं बोधरूपं चैतन्यं तन्नि[illegible]रुपाधिकमेव विभो रूपं न सापेक्षं साक्षित्वेश्वरत्वादीत्यर्थः । यद्यपि चैतन्यं न स्वरूपा[illegible]द्भिन्नं तथाऽपि राहोः शिर इतिवद्भेदोपचाराद्वतिप्रयोगः । यद्वा [illegible] पादपूरणार्थो वच्छब्दः । तथाच निरुपाधिकं यन्नित्यसिद्धनिजबोधरूपं तदेव विभोः परमात्मनो रूपमित्यर्थः ॥ १८२ ॥

सु० टी०—ननु साक्षित्वमश्रुतत्वादेव न स्वरूपमुच्यते न [illegible]कत्वादित्याशङ्क्य तद्बोधिकां श्रुतिमाह—

एको देवः सर्वभूतेषु गूढः
सर्वव्यापी सर्वभूतान्तरात्मा ।
कर्माध्यक्षः सर्वभूताधिवासः
साक्षी चेता केवलो निर्गुणश्च ॥ १८३ ॥

---

१ क. ख. 'विभोः' ।

एके इति । अनेन 'हरिर्ब्रह्मा पिनाकी' इति पौराणिकभेदस्यावास्तवत्वमाह भेदस्य दुर्निरूपत्वेन कल्पितत्वादेक इत्यर्थः । साधकप्रमाणसद्भावाभ्यामेकत्वानुपपत्तिं निरस्यति—देव इति । स्वप्रकाश इत्यर्थः । आत्मा स्वभिन्नभास्यो वस्तुत्वाद्‌घटवदिति चेत्तत्राऽऽह—साक्षीति । जडत्वमन्योपाधिरित्यर्थः । तर्हीक्षणकर्तृत्वात्परिच्छिन्नः स्यात्तत्राऽऽह—चेता । चिद्रूपः । व्यापाराभावे कथं चेतयितृत्वं तत्राऽऽह—केवलः । तर्हि प्रकाशगुणं विना कथं प्रकाशकस्तत्राऽऽह—निर्गुणः । केवलस्यासंसृष्टस्यैव कल्पिताचिदाभासाविवेकात्प्रकाशकत्वमित्यर्थः । तर्हि जीवादत्यन्तभिन्न इति तत्राऽऽह—सर्वभूतेष्विति । सर्वात्मक इत्यर्थः । कथं तर्हि जीवेषु भासमानेषु न भासते तत्राऽऽह—गूढः । अज्ञानावृतः । भेद एव तर्हि किं नेत्याह—सर्वव्यापी । जीवभेदे वस्तुपरिच्छेदाद्व्यापित्वभङ्ग इत्यर्थः । नियन्तृनियम्यत्वेन भेदं निरस्यति—सर्वेति । सर्वभूतान्तरात्मत्वेन प्रवेशान्नियन्तृत्वमौपाधिकमित्यर्थः । सर्वभूतान्तरात्मा चेत्कर्ता भोक्ता च स्यान्नेत्याह—कर्माध्यक्षः । कर्मणां कारयितृत्वेन द्रष्टैव न कर्तेत्यर्थः । तर्हि कथं सर्वकर्ता तत्राऽऽह—सर्वभूतेष्वधि उपरि च सत्त्वैश्वर्यादिति न तत्परतन्त्रस्तत्फलासंसृष्ट इत्यर्थः ॥ १८३ ॥

अ० टी०—ऐश्वर्यवत्साक्षित्वादिकं ब्रह्मधर्मतया न श्रुतमित्यपि न वाच्यं मन्त्रोपनिषदि तत्प्रतीतेरित्यभिप्रेत्य श्वेताश्वतरोपनिषन्मन्त्रान्पठति—**एको देव इत्यादिना** । एकः सर्वभूतान्तरात्मेति संबन्धः । भूतानि चराचरसंस्थानलक्षणानि । तर्हि किमाकाशो नेत्याह—देवः प्रकाशस्वभावः । किं सूर्यादिः । न सर्वभूतेषु गूढः प्रकाशमानचित्स्वभावोऽपि शब्दाद्याकाराभी रागादिगर्भाभिर्बुद्धिवृत्तिभिः संकरात्सर्वभूतेषु वर्तमानोऽपि यथावन्न भासत इति गूढ इत्यर्थः । तर्हि किमङ्कुरादिवत्परिच्छिन्नो मूर्तो वा नेत्याह—सर्वव्यापी देहाद्बहिरपि व्यापनशीलः, ब्रह्माण्डकोटिभिरप्यपरिच्छिन्न इत्यर्थः । तस्य नैयायिकेश्वरवत्ताटस्थ्यं वारयति—**सर्वभूतान्तरात्मेति** । तर्हि किं कर्तृत्वादिस्वभावकः संसार्यात्मक एव न कर्माध्यक्षः कर्मसु बुद्ध्यादिव्यापारेष्वध्यक्षो राजादिवदधिष्ठातृतया न स्वयं क्रियावत्तयेत्यर्थः । ननु कथमसङ्गस्याऽऽध्यक्ष्यसंबन्धाभावेऽध्यक्षतेति तत्राऽऽह—**सर्वभूताधिवास इति** । सर्वाणि भूतान्यधिवसन्त्यस्मिन्निति सर्वभूताधिवासः सर्वाश्रयः । यद्वा सर्वेषु भूतेष्वध्युपरि नियन्तृतया वसतीति सर्वभूताधिवासः । तर्हि किं राजादिवत्स्वस्वाम्यभिमानोऽस्य विद्यते न साक्ष्युदासीनः । ननु साक्षादीक्षणात्साक्षी स्यात्स कथमुदासीन इत्यत आह—**चेतेति** । चेता चैतन्यरूपो न तत्कर्ता स्वरूपचैतन्येन संघातस्य चिदाभासतापादनं चेतयितृत्वम् । तर्ह्यालोक इव प्रकाशगुणव्याप्त्या नेत्याह—**निर्गुण इति** ।

तर्हि स्वरूपमेव चेत्यमस्याऽऽरोहेन्नेत्याह—**केवल इति**। कैवल्यं वस्तुतोऽद्वितीयत्वमसङ्गत्वं च। तथा चाविद्याध्यस्तचेत्याव्याप्त्या साक्षित्वादि न परमार्थ इत्यर्थः॥ १८३॥

सु० टी०—श्रुत्यन्तरमुदाहरति—

**न तस्य कार्यं करणं च विद्यते**
**न तत्समश्चाप्यधिकश्च दृश्यते।**
**पराऽस्य शक्तिर्विविधैव श्रूयते**
**स्वाभाविकी ज्ञानबलक्रिया च॥ १८४॥**

न तस्येति। **कार्यं स्थूलशरीरं करणं लिङ्गशरीरम्। कथं जगन्निर्माता तत्राऽऽह**—नेति। **तत्सम एव नास्ति कुतोऽधिक इति। तत्र हेतुमाह**—परा। **विशिष्टा विविधकार्यजनिका शक्तिः श्रुतिप्रसिद्धा। कथं जडशक्तिमात्रात्प्रवृत्तिस्तत्राऽऽह**—स्वाभाविकीति। **ज्ञानमेव बलं क्रिया च तदनुग्रहादेवेत्यर्थः॥ १८४॥**

अ० टी०—साक्षित्वे मन्त्रमुदाहृत्य कारणत्वेश्वरत्वयोरपि मन्त्रद्वयमुदाहरति—**न तस्य कार्यमिति**। स्थूलं सूक्ष्मं च शरीरमस्य न विद्यत इत्यर्थः। 'तमीश्वराणां परमं महेश्वरम्' [ श्वे० ६। ७ ] इति यन्निरतिशयमीश्वरत्वं पूर्वमन्त्रे प्रतिज्ञातं तस्यास्मिन्मन्त्रे कार्यकरणवत्त्वनिराकरणेन तदधीनज्ञानादिमद्भ्यो जीवेभ्यो व्यावर्तनात्सापेक्षाज्जीवैश्वर्याद्विलक्षणं स्वातन्त्र्यमैश्वर्यमस्येति दर्शितं तथाऽपि न निरतिशयमैश्वर्यमस्य सिध्यति खण्डमण्डलपतीनामिव स्वसमानैश्वर्यवतामधिकैश्वर्यवतां वाऽन्येषामीश्वराणां संभवादिति चेन्नेत्याह—'**न तत्समश्चाभ्यधिकश्च दृश्यते**' [ श्वे० ६। ८ ] इति। लोके वेदे वा नावगम्यत इत्यर्थः। ज्ञाने कर्मणि वा समर्थस्तत्सम एव नास्ति कुतस्ततोऽभ्यधिकसंभावनैतदन्यस्य सर्वस्य चेतनस्य संघातपरतन्त्रज्ञानादिमत्त्वादस्मान्न्यूनत्वादन्यस्य वाऽचेतनत्वात्सिद्धमस्य निरतिशयं निरङ्कुशं चैश्वर्यमिति भावः। ननु कार्यकरणाभावे कथमस्य सर्वज्ञत्वसर्वकर्तृत्वसामर्थ्यात्सर्वजगत्कारणत्वेन सर्वेश्वरत्वसिद्धिरिति तत्राऽऽह—**पराऽस्येति**। अस्येश्वरस्योक्तेश्वरत्वनिर्वाहिका परोत्कृष्टा सर्वस्मात्कार्यजाताद्वा पराऽनादिभूता शक्तिर्मायाख्या विविधा विचित्राऽनेकविधकार्याकारपरिणामसामर्थ्यभेदोपेता च श्रूयते श्रुतिवाक्येभ्योऽवगम्यते 'इन्द्रो मायाभिः पुरुरूप ईयते' [ बृ० २। ५। १९ ] इत्यादि। विविधैवेत्यवधारणेन विकारसमर्थैव सा नासमर्थेति दर्शयति। किं मल्लादीनामिव बलं श्रमादिसाधनसंपादितेयमीशस्य नेत्याह—**स्वाभाविकीति**। सिंहादीनां शौर्यवत्स्वभावसिद्धा। तथाऽप्यस्या जडत्वात्कथं प्रवृत्त्यादिमत्त्वं तदभावे च तद्योगमात्रात्कथमीश्वरस्य

[illegible] —आत्मक्रिया चेति । [illegible] [illegible] सा । तथा [illegible] [illegible] सर्वकारणत्वा[illegible] ॥ १८४ ॥

[illegible] —[illegible] कारणत्व[illegible] श्रुतिमुदाहरति—

न तस्य कश्चित्पतिरस्ति लोके
न चेशिता नैव च तस्य लिङ्गम् ।
स कारणं करणाधिपाधिपो
न चास्य कश्चिज्जनिता न चाधिपः ॥ १८५ ॥

[illegible] । पतिः स्वामी । ईशिता नियन्ता । लिङ्ग्यतेऽनेन [illegible] मिति लिङ्गं शरीरं तच्च नास्तीत्यतः स्वातन्त्र्यात्सर्वकारणम् । करणाधिपानां जीवात्मप्रभृत्यादिदेवानां चाधिपः स्वामी । न चास्य जनितोत्पादकस्तथाऽधिपोऽनुग्राहकः कश्चिदस्तीत्यतएव सर्वकारणमीश्वर इत्यर्थः ॥ १८५ ॥

उ० टी०—उक्तस्यैश्वर्यस्य स्फुटीकरणार्थं उत्तरो मन्त्रस्तमुदाहरति—न तस्य कश्चिदिति । पतिः स्वामी । ईशिता नियन्ता चास्य लोके त्रैलोक्येऽपि कश्चिनोऽपि नास्तीत्यनेनास्य परमं स्वातन्त्र्यमुक्तं तस्य लिङ्गं च लोके नैवेति संबन्धः । लिङ्ग्यतेऽनेनेति लिङ्गं कार्यकरणसंघातस्तदस्य नास्ति । अतो न जीववदनीश्वरोऽयं सापेक्षश्चापि न किं तु सर्वेश्वर इत्युक्तं भवति । अस्योपरि न कोऽपीत्युक्तमर्थं सर्वोपरीति वदन्ती श्रुतिरस्य सर्वेश्वरत्वं निरङ्कुशमाविष्करोति—स कारणमिति । स पूर्वोक्त ईश्वरः सर्वस्य कारणमुत्पत्तिस्थितिलयाधिष्ठानं करणाधिपानां सर्वजीवानामप्यधिपोऽधिप्राप्य पालयिता नियन्तेति यावत् । पुत्रस्य पितुरपि यथाऽन्यः पिताऽस्ति नैवमस्यान्यः कारणभूतोऽस्तीत्याह—न चास्य कश्चिज्जनितेति । जनयितेत्येतत् । अयमेव सर्वस्य मूलकारणं नान्यदस्तीत्यर्थः । राजामात्यस्य स्वविधेयान्प्रत्यधिपत्वेऽपि यथाऽन्यो राजा स्वाधिपोऽस्ति न तथाऽस्य कोऽप्यस्तीत्याह—न चाधिप इति । अयमेव सर्वेश्वरो नान्य इत्यर्थः ॥ १८५ ॥

सु० टी०—श्रुतितात्पर्यमाह—

इति श्रुतिः कारणसाक्षिभाव-
मैश्वर्यवद्वक्ति परस्य पुंसः ।

अतत्परत्वान्न तदिष्यते चे-
द्द्वयं तृतीयं न तथेषितव्यम् ॥ १८६ ॥

तृतीति । अत्र शङ्कते—अतत्परत्वादिति । द्वयं कारणत्वं साक्षित्वं च नेष्यते चेदित्यन्वयः । तदैश्वर्येऽपि तुल्यमिति परिहरति—तृतीयमिति १८६ ॥

अ० टी०—यदर्थमेते मन्त्रा उदाहृतास्तमर्थमाविष्करोति—इति श्रुतिरिति । श्रुतिः पूर्वोदाहृतेतीत्थं परस्य पुंस ऐश्वर्यवत्कारणसाक्षिभावं कारणत्वं साक्षित्वं च वक्ति कथयतीत्यर्थः । कारणत्वसाक्षित्वयोरपि ब्रह्मस्वरूपताऽङ्गीकार्या, ऐश्वर्यवत्कौतत्वाविशेषादिति ध्वनितोऽर्थः । कारणत्वादिवाक्यस्यातत्परत्वान्न स्वरूपबोधकतेति शङ्कते—अतत्परत्वादिति । तद्द्वयं नेष्यते चेदित्यन्वयः । दूषयति—तृतीयं न तथेषितव्यमिति । साक्षित्वकारणत्वापेक्षया तृतीयमैश्वर्यमपि तथा स्वरूपमिति नेषितव्यं नाङ्गीकार्यं विशेषहेतोस्तत्राभावादित्यर्थः ॥ २८६ ॥

सु० टी०—एतदेव प्रकटयति—

अतत्परत्वं श्रवणस्य तुल्यं
त्रिषु त्रयं तेन विवर्जनीयम् ।
अथेष्टमेकं त्रयमेषितव्यं
विशेषहेतोरनिरूपणेन ॥ १८७ ॥

अतत्परत्वमिति । फलितमाह—त्रयं तेनेति । विपक्षे बाधकमाह—अथेति ॥ १८७ ॥

अ० टी०—तत्परश्रुत्यभावस्य त्रिष्वपि तुल्यत्वादित्युक्तमेव विशेषहेत्वभावं साधयति—अतत्परत्वमिति । त्रिषु कारणत्वसाक्षित्वेश्वरत्वेषु श्रवणस्य श्रुतेरतत्परत्वं तुल्यं समानं यतस्तेन हेतुना त्रयं विवर्जनीयं स्वरूपमिति नाभ्युपेयमित्यर्थः । एवमपीश्वरत्वं स्वरूपमिति चेदाग्रहस्तदा साक्षित्वकारणत्वयोरपि स्वरूपत्वमिष्यतामित्याह—अथेष्टमेकं त्रयमेषितव्यमिति । तत्र हेतुमाह—विशेषहेतोरनिरूपणेनेति । न ह्यत्रैकस्याङ्गीकार्यत्वे द्वयापेक्षया विशेषहेतुर्निरूपणपथमवतरतीत्यर्थः ॥ १७७ ॥

सु० टी०—सापेक्षत्वादप्यैश्वर्यादिकं रूपेत्याह—

ईशितव्यमनपेक्ष्य नेश्वरो
नेशितव्यमपि सद्वदीश्वरम् ।

अन्तरेण घटते ततो मृषा
मोहमात्रपरिकल्पितं द्वयम् ॥ १८८ ॥

ईशितव्यमिति । **यस्मादनयोरेकैकानपेक्षमेकैकं न निर्वहत्यतो द्वयमपि मोहकल्पितत्वान्मृषेति योज्यम् ॥ १८८ ॥**

अ० टी०—ननु तर्हि त्रयमपि स्वरूपमिष्यते श्रुतिनिर्देशस्य तुल्यत्वादिति चेन्मैवं सापेक्षत्वेन तदसंभवादित्यभिप्रेत्येश्वरत्वस्य तावत्सापेक्षतामाह—**ईशितव्यमिति** । नेश्वरो घटत इति संबन्धः । तद्वदीश्वरत्ववदीशितव्यमपीश्वरमन्तरेण न घटत इति योजना । किं तत इत्यत आह—**ततो मृषा मोहमात्रेति** । द्वयमीश्वरत्वमीशितव्यं च परस्परसापेक्षयोरेकस्यापि स्वरूपानिष्पत्तेर्मोहमात्रकल्पितं मृषैव द्वयमित्यर्थः ॥ १८८ ॥

**सु० टी०—कारणत्वमपीदृशमेवेत्याह—**

कार्यवस्तु विरहय्य कारणं
न क्वचिद्घटयितुं क्षमामहि ।
नापि कारणमपोह्य केवलं
कार्यवस्तु परिकल्पयेमहि ॥ १८९ ॥

कार्येति ॥ १८९ ॥

अ० टी०—कारणत्वस्याप्याह—**कार्यवस्त्विति** । समाना योजना ॥ १८९ ॥

**सु० टी०—एवमेव साक्षित्वमपीत्याह—**

साक्ष्यवस्तु परिहृत्य साक्षिता
साक्षिणं च परिहृत्य साक्ष्यता ।
नेष्यते न घटते च तेन त-
त्सव्यपेक्षमुभयं परस्परम् ॥ १९० ॥

साक्ष्यवस्त्विति ॥ १९० ॥

अ० टी०—साक्षिताऽपि तथैवेत्याह—**साक्ष्यवस्त्विति** । साक्षिता नेष्यते साक्ष्यता च न घटत इति यथाक्रमं क्रियाद्वयस्य योजना । तेनोक्तेन हेतुद्वयेन तदुभयं साक्षित्वं साक्ष्यत्वं च परस्परं सव्यपेक्षमतो मोहमात्रपरिकल्पितं मृषेत्यर्थः ॥ १९० ॥

**सु० टी०—एतच्च तुल्यं प्रमातृत्वादावपीत्याह—**

न प्रमेयमपहाय मातृता
नापि मातृविरहे प्रमेयता ।

१ घ. मविहा° ।

मातृमेयरहिता न च प्रमा
न प्रमाणरहितं प्रमाफलम् ॥ १९१ ॥

न प्रमेयमिति ॥ १९१ ॥

अ० टी०—समानन्यायतया प्रमातृत्वादिकमपि नाऽऽत्मस्वभाव इति सिद्धमित्याह—**न प्रमेयमिति**। पुंगतं प्रमातृत्वं विषयाकाङ्क्षं विषयगतप्रमेयत्वं च प्रमाकाङ्क्षमुभयाकाङ्क्षा च प्रमा प्रमाणं तद्धि प्रमातारमाश्रित्य प्रमेयं व्याप्नोति। अत उभयाकाङ्क्षं प्रमाणं प्रमाणाकाङ्क्षं चोभयमित्यर्थोऽसिध्यति। न हि प्रमाणप्रमेयाभ्यां विना प्रमाता भवति तदभावे सुषुप्तौ तदभावात्। तथा प्रमातृप्रमाणाभ्यामृते प्रमेयं न भवति प्रमितत्वव्यवहारस्य वस्तुनि प्रमात्राश्रितप्रमाणव्याप्त्यधीनत्वात्। तथा प्रमाफलं प्रमितिरपि न प्रमाणरहितं सिद्धान्ते चैतन्यगतप्रमितित्वस्य प्रमाणाधीनत्वादित्यर्थः। ईश्वरत्वादिकमेकैकसापेक्षं प्रमातृत्वादिकं तु मेयादित्रितयसापेक्षमिति भेदः। प्रमातृप्रमाणप्रमेयप्रमितीनामेकैकस्य स्वेतरापेक्षसिद्धित्वादित्युक्तं भवति ॥ १९१ ॥

सु० टी०—**ईशत्वादिकमेकैकापेक्षं मातृत्वं तु मेयादित्रयसापेक्षमित्युक्त्वा कर्तृत्वमपि तथेत्याह—**

कर्तृ कर्म परिहृत्य नेष्यते
कर्म कर्तृरहितं न च क्वचित् ।
कर्तृकर्मरहिता न च क्रिया
न क्रियाविरहितं क्रियाफलम् ॥ १९२ ॥

कर्तृ कर्मेति ॥ १९२ ॥

अ० टी०—कर्तृत्वमपि प्रमातृत्ववत्सापेक्षमित्याह—**कर्तृ कर्मेति**। योजना तु पूर्ववत् ॥ १९२ ॥

सु० टी०—**सामान्यविशेषात्मा प्रपञ्चः सर्वोऽपि तथेत्याह—**

सामान्यं न विशेषवस्तुविरहे तस्माद्विना तन्न च
स्वातन्त्र्येण घटामुपाञ्चति ततः सापेक्षमेतद्द्वयम् ।
यत्सापेक्षमिहेक्षितं[1] भवति तन्मायामयं स्वप्नव-
त्तस्मादीश्वरतादि कल्पितवपुः स्वी कुर्महे न्यायतः ॥ १९३ ॥

---

१ घ. °क्षमपेक्षि° ।

सु० टी०—ननु निर्भेदेऽपि नभसि भवति घटाद्युपाधिको भेद इति नेत्याह—

स्वभावतो यन्मिथुनं विरुद्धं
न तन्निमित्तान्तरतः कदाचित् ।
उपैति सख्यं परमार्थवृत्त्या
भ्रमादलभ्यं न च किंचिदस्ति ॥ १९५ ॥

स्वभावत इति । **स्वतो विरुद्धयोरुपाधितोऽपि सख्याभावाद्भ्रान्तस्तत्र भेद इत्यर्थः ॥ १९५ ॥**

अ० टी०—नन्वौपाधिके भेदे नास्ति विरोध आकाशादावुपाधिभिन्ने विरोधादर्शनादित्याशङ्क्योपाधिभेदेऽप्युपन्यस्तं विरोधमुपपादयति—**स्वभावत इति** । स्वभावतो निर्भेदस्योपाधिनिमित्तको भेदो न परमार्थः संभवत्याकाशादौ तूपाधिकृतो भेदो भ्रान्त एव न परमार्थो निरवयवस्याऽऽकाशस्योपाधिभिर्भेत्तुमशक्यत्वाद्भ्रमस्तु भवति तस्य वस्तुसत्तानपेक्षित्वादित्यर्थः । अक्षरयोजना सुगमा ॥ १९५ ॥

सु० टी०—उक्तेऽर्थे दृष्टान्तमाह—

न रविशार्वरसख्यकृदीक्ष्यते
जगति कश्चिदुपाधिरमोहतः ।
यदि भवेत्स भवेद्भवतो मतः
स न भवेद्यदि सोऽपि न संभवेत् ॥ १९६ ॥

न रवीति । **अमोहतः परमार्थत उपाधिः कश्चिद्रविशार्वरयोः सख्यकृन्नेष्यत इति संबन्धः । किं तत इत्याह**—यदीति । **यदि रवितमसोः सख्यकृदुपाधिर्भवेत्तर्हि भवदभिमतो भिन्नाभिन्नयोरपि सख्यकृद्भवेत्तदभावे नायमपि भवेद्विशेषाभावादित्यर्थः ॥ १९६ ॥**

अ० टी०—स्वभावतो विरुद्धयोरुपाधिद्वाराऽपि विरोध एवेत्यत्र दृष्टान्तमाह—**न रविशार्वरेति** । शार्वरं तमः । रविशार्वरयोः सख्यकृदविरोधकृत्कश्चिदुपाधिरमोहतो मोहाद्भ्रमादन्यो जगति नेक्ष्यते । यदि रविशार्वरयोर्विरुद्धस्वभावयोरुपाधितोऽप्यभेदो भवेत्तदा भवतो मत इष्टः स भेदाभेदयोरप्यविरोधो भवेत् । स यदि रविशार्वरयोरविरोधो न भवेत्तर्हि सोऽपि भेदाभेदयोरविरोधोऽपि न संभवेद्विशेषानिरूपणादिति योजना॥१९६॥

सु० टी०—ननु भ्रमादप्येतदलभ्यं पूर्वदृष्टातिरिक्तस्य भ्रमेऽज्ञानादिति चेत्तत्राऽऽह—

खमपि खादति खण्डितमीक्षते
निजशिरो नयनेन करार्पितम् ।
किमपि दुर्घटमस्य न विद्यते
यदि विमूढमतिर्भवति स्वयम् ॥ १९७ ॥

खमपीति । **स्वप्नादौ सर्वाकृष्टस्याप्येवमादेर्दर्शनान्नैतदलभ्यमित्यर्थः । उपसंहरति**—किमपीति । **अज्ञानस्यैव दुर्घटघटकत्वादित्यर्थः ॥ १९७ ॥**

अ० टी०—भ्रमादलभ्यं न च किंचिदस्तीत्युक्तं प्रपञ्चयति—**खमपीति ।** स्वप्ने हि नानाविधा भ्रान्तीरनुभवन्पुरुषः कदाचिन्नभोभक्षणमप्यनुभवति । तथा निजशिरः खण्डितं स्कन्धात्पृथक्कृतं करार्पितं स्वकरे धृतं स्वनयनेनेक्षते । अत एव स्वप्नाध्यायविदः स्वशिरश्छेदनादिदर्शनमनिष्टसूचकमामनन्ति । ऐतरेयिणश्चाऽऽमनन्ति—अथाप्यशिरसं जिह्वाशिरसं वा पश्यति तदप्येवमेव विद्यादिति । न चाघटमानमेतदित्यपि वाच्यमित्याह—**किमपीति** ॥ १९७ ॥

सु० टी०—किं चोपाधेर्मिथ्यात्वात्तदुपाधिकस्यापि मिथ्यात्वमित्याह—

इतश्च निर्भेदकमात्मतत्त्वं
निरूपणे कारणकार्यतादेः ।
अनादिमायैकनिबन्धनत्वा-
दसंभवादस्य तु वस्तुवृत्त्या ॥ १९८ ॥

इतश्चेति । **निरूपणे क्रियमाणे कार्यकारणत्वादेर्वस्तुवृत्त्याऽसंभवेन मायैकनिबन्धनत्वादिति संबन्धः ॥ १९८ ॥**

अ० टी०—आरम्भणाधिकरणोक्तविवर्तवादन्यायादपि ब्रह्मणो निर्विशेषैकरूपत्वसिद्धिरित्याह—**इतश्चेति ।** कुत इति चेत्परिशेषादित्यभिप्रेत्याऽऽह—**निरूपण इति ।** कारणत्वादिना हि ब्रह्मणः सविशेषताप्राप्तिस्तस्य च निरूपणेऽनादिमायैकनिबन्धनत्वादनाद्यनिर्वचनीयाज्ञानमात्रकल्पितत्वनिश्चयात् । अस्य तु कार्यकारणादेर्वस्तुवृत्त्या परमार्थतोऽसंभवात्परिशेषान्निर्भेदकमेवाऽऽत्मतत्त्वमित्यर्थः ॥ १९८ ॥

**सु० टी०—कथमसंभव इति चेत्तत्र वक्तव्यं किमसतः कार्यत्वाद्दिकं सतो वा सदसतो वा तत्र नाऽऽद्य इत्याह—**

**असन्न कार्यं गगनप्रसून-**
**वन्ध्यासुतादेः करणाप्रसिद्धेः ।**
**न प्रागसत्कार्यमिति प्रवादः**
**प्रशस्यते तस्य विरोधहेतोः ॥ १९९ ॥**

असदिति । **करणमुत्पादनं तदप्रसिद्धेरित्यर्थः। नन्वत्यन्तासन्नोत्पद्यते किं तु प्रागसत्पटादीति वैशेषिकास्तत्राऽऽह**—न प्रागिति ॥ १९९ ॥

अ० टी०—कार्यकारणभावस्य वस्तुतोऽसंभवं कार्यस्यानुपपत्त्या तावदाह—**असन्नेति** । कार्यं किं प्रागसदुत्पद्यते सद्वा नाऽऽद्यो गगनप्रसूनवन्ध्यासुतादेः करणाप्रसिद्धेः करणं निष्पादनं तस्याप्रसिद्धेरित्यर्थः । ननु वन्ध्यासुतादेरत्यन्तासत्त्वाज्जन्मोत्पादिकार्यं प्रागसदुत्पद्यतामिति चेन्नेत्याह—**न प्रागिति** । कुतो न प्रशस्यते तत्राऽऽह—**तस्य विरोधहेतोरिति** । असतः प्राक्त्वविशेषणयोगस्य युक्तिविरोधादित्यर्थः ॥१९९॥

**सु० टी०—कथं विरोध इति चेत्तत्राऽऽह—**

**विशेषणानामसति प्रवृत्ति-**
**र्न दृश्यते क्वापि न युज्यते च ।**
**युधिष्ठिरात्प्रागभवन्नरेन्द्रो**
**वन्ध्यासुतः शूर इतीह यद्वत् ॥ २०० ॥**

विशेषणानामिति । **असतो निःस्वरूपस्य प्राक्त्वेन व्यावर्तनायोगादित्यर्थः । अदर्शनमयोगं च दृष्टान्तेन साधयति**—युधिष्ठिरादिति । **यथा वन्ध्यासुते नैतानि विशेषणानि युज्यन्त इत्यर्थः ॥ २०० ॥**

अ० टी०—कुतो विरोध इति चेत्तत्राऽऽह—**विशेषणानामिति** । असतो निःस्वभावत्वेन प्रसिद्धत्वादेव तस्मिन्विशेषणप्रवृत्तेरदर्शनसंभवश्चेत्यर्थः । तत्रादर्शनमुपपादयति—**युधिष्ठिरादिति** । असतो विशेषणसंबन्धश्चेत्स्याद्वन्ध्यासुतः शूर इति युधिष्ठिरात्प्रागिति च शूरत्वप्राक्त्वाभ्यां वन्ध्यासुतोऽपि विशेष्येतेत्यर्थः ॥ २०० ॥

**सु० टी०—एवमुत्पत्तिसंबन्धं निराकृत्योत्पत्तिमपि निरस्यति—**

**उत्पत्तिरप्यस्य निरूप्यमाणा**
**न काचिदागच्छति युक्तिमार्गम् ।**

**स्वसत्तया स्वैः समवायिकारणै-**
**रपीह या स्यात्समवायिताऽस्य॥ २०१ ॥**
**असज्जनिः सेत्युपवर्ण्यमानं**
**सुदुर्घटं न ह्यसतो युजैभिः ।**
**सदेव सद्भिः सह सर्ववस्तु**
**संगच्छते न त्वसदेव सद्भिः ॥ २०२ ॥**

उत्पत्तिरपीति द्वाभ्याम् । **ननु स्वसत्तया स्वीयसमवायिकारणैश्च येयमसतः समवायिता सैवास्य जनिरित्युपवर्ण्यत इति चेन्नेत्याह**—स्वसत्तयेति । **कथं दुर्घटमित्यत्राऽऽह**—न हीति । **कुत इति चेत्तत्राऽऽह**—सदेवेति । २०१ ॥ २०२ ॥

अ० टी०—'असन्न कार्यं गगनप्रसूनवन्ध्यासुतादेः करणाप्रसिद्धेः' इत्यत्रासदुत्पत्त्यदर्शनात्कार्यस्यासत्त्वमयुक्तमित्युक्तमुत्पत्तिस्वरूपनिरूपणायां च कार्यस्य प्रागसत्त्वमयुक्तमित्याह—**उत्पत्तिरपीति** । कथं न युक्तिमार्गमागच्छतीति चेत्तत्र वक्तव्यं कार्यस्य कारणसमवाय उत्पत्तिः कार्ये वा सत्तासमवाय इत्युभयथाऽप्यसंभव इत्याह—**स्वसत्तयेति** । अस्य कार्यस्य या स्वसत्तया वा स्वसमवायिकारणैर्वा समवायितोत्पत्तिशब्दार्थभूता स्यात्साऽसज्जनिरित्युपवर्ण्यमानं सुदुर्घटमित्युत्तरपद्यगतेन संबन्धः ॥ २०१ ॥

अ० टी०—दुर्घटत्वं प्रकटयति—**न ह्यसतो युजैभिरिति** । असतः कार्यस्यैभिः स्वसत्ता स्वसमवायिकारणैर्युजा योगो न हि संभवति । कुतः संबन्धस्य सद्वस्तुधर्मत्वादित्याह—**सदेव सद्भिरिति** । सत एव सद्भिः संबन्ध इति व्याप्तिविरोधान्नासतः सत्संबन्धः संभवतीत्यर्थः ॥ २०२ ॥

**सु० टी०—अस्तु सतः सद्भिः संबन्धः प्रकृते तु किमायातमिति तत्राऽऽह—**

**सती हि सत्ताऽस्य पटस्य दृष्टा**
**तथैव सन्तः पटतन्तवोऽपि ।**
**[1]तथा च तैश्चास्य कथं पटस्य**
**संबन्धिता स्यादसतो वदैतत् ॥ २०३ ॥**

सती हीति । **संबन्धिनोः सत्त्वस्य प्रत्यक्षत्वात्कथं ताभ्यामसतः संबन्ध इत्यर्थः ॥ २०३ ॥**

---

१ ग. तया च ।

अ० टी०—सतोरेव संबन्धः सर्वत्र दृष्टो न सदसतोरसतोर्वेतिनियममेव प्रकटयति—**सती हीति ।** अस्य पटस्य प्रत्यक्षगोचरस्य सतो या सत्ता सा सती हि दृष्टा नासती सत्ता पटे समवायसंबन्धिनी दृष्टेत्यर्थः । तथैव पटतन्तवः पटस्याऽऽश्रयभूतास्तन्तवोऽपि सन्त एव दृष्टा नासन्तः । तथा चैवंदृष्टनियमविरोधे सत्यसतस्त्वदभिमतस्य पटस्यास्य तैः स्वसत्ता स्वसमवायिभिः संबन्धिता कथं स्यादेतद्वद् निरूपयेति योजना ॥ २०३ ॥

**सु० टी०—मा भूत्सत्तया तन्तुभिश्चास्य संबन्धः किं तत इति चेत्तत्राऽऽह—**

**स्वकारणैस्तन्तुभिरेवमस्य**
**स्वसत्तया चान्वय एव जन्म ।**
**तवेष्टमेवं सति जन्म तस्य**
**न शक्यते वर्णयितुं पटस्य ॥ २०४ ॥**

स्वकारणैरिति । **तत्संबन्ध एवास्य जन्मेति त्वदभिप्रेतजनिलक्षणासिद्धिरेव दोष इत्यर्थः ॥ २०४ ॥**

अ० टी०—तर्ह्यसतो जन्मनिरुक्तिरेवान्या भविष्यतीति चेन्न त्वयेतोऽन्यस्यानङ्गीकारादित्याह—**स्वकारणैरिति ।** निगदव्याख्यातं पद्यम् ॥ २०४ ॥

**सु० टी०—ननु पटस्यासत्त्वेऽपि तन्तुसत्तयोः सत्त्वात्संबन्धाविरोध इति नेत्याह—**

**तदन्वयात्प्रागसतः कथं स्या-**
**त्तदन्वयो न ह्यसदन्वयाय ।**
**सता समर्थं न हि वन्ध्यया त-**
**त्पुत्रः समन्वेति कदाचिदत्र ॥ २०५ ॥**

तदन्वयादिति । **न ह्यसत्सता सहान्वयाय समर्थमित्यन्वयः । संबन्धस्य ह्याश्रयत्वादसतश्चाऽऽश्रयत्वायोगान्न संबन्धः सिध्यतीत्यर्थः ॥ २०५ ॥**

अ० टी०—ननु नात्यन्तमसत्कार्यं किं तु प्रागसत्तादशस्य कारणादिना संबन्धः स्यादिति चेन्नेत्याह—**तदन्वयादिति ।** तेन सत्तादिनाऽन्वयाज्जन्माख्यात्प्रागसतः कार्यस्यासत्त्वावस्थायां तदन्वयः कथं स्यात्प्रागस्य कार्यस्य वन्ध्यासुतादेरविशेषादित्यर्थः । आक्षिप्तमेवार्थमुपपादयति—**नहीत्यादिना ।** सता सहान्वयायासन्न समर्थमित्यन्वयः । अत्र स्वजन्मनः प्रागित्यर्थः ॥ २०५ ॥

सु० टी० अस्तु तर्हि कारणसंबन्धयोग्यतैव जनिरिति चेत्तत्राऽऽह—

न च किंचिदन्यदसतो वदितुं
पटवस्तुनोऽत्र शकनीयमितः ।
जनिशब्दवाच्यमनवद्यतया
तदयुक्तमेवमसदुद्भवनम् ॥ २०६ ॥

न च किंचिदिति । सदसतोः क्वचित्कदाचित्संबन्धदर्शने सत्यसतस्तद्योग्यता कल्प्या न चासौ क्वापि दृष्ट इत्यर्थः । फलितमाह—तदयुक्तमिति ॥ २०६ ॥

अ० टी०—कारणसत्तासमवायात्प्रकारान्तरं जन्मलक्षणं स्यादित्याशङ्क्य त्वया तस्यानभ्युपगमादिति दोषः प्रागुक्त इदानीं न संभवति च प्रकारान्तरमित्याह—न च किंचिदिति । असतः पटवस्तुनो जनिशब्दवाच्यमित उक्तादन्यत्किंचित्प्रकारान्तरमत्र वैशेषिकमतेऽनवद्यतया वदितुं न च शकनीयं शक्यमित्यक्षरयोजना । उत्तरक्षणसंबन्धादेरपि तुल्यन्यायत्वादित्यभिप्रायः । उपसंहरति—तदयुक्तमिति । तत्तस्मादेवं विचार्यमाणे सत्यसदुद्भवनमयुक्तमभ्युपगन्तुमित्यर्थः ॥ २०६ ॥

सु० टी०—किं चैवं संबन्धयोग्यतादेर्जनित्वे तवापसिद्धान्तोऽपीत्याह—

न च वर्णितादपरमत्र भवा-
ननुमन्यते जनिवचोर्थमितः ।
यदि वर्ण्यते किमपि तत्र भवे-
त्स्वमतप्रहाणमलिनीकरणम् ॥ २०७ ॥

न चेति । इतो वर्णितादन्यं जनिपदार्थं न भवाननुमन्यत इत्यन्वयः । वर्णने च स्वमतप्रहाणमेव मलिनीकरणं दूषणमित्यर्थः ॥ २०७ ॥

अ० टी०—ननु कथं प्रकारान्तरासंभवनिश्चयो विचित्रप्रज्ञत्वात्प्राणिनां कस्यचित्प्रकारान्तरस्यापि स्फुरणोपपत्तेरिति चेत्सत्यं तथाऽप्युक्तप्रकारात्प्रकारान्तरस्य त्वयाऽनभ्युपगमादभ्युपगमे वाऽपसिद्धान्तप्रसङ्गात्तवेत्याह—न च वर्णितादिति । अनुपपत्त्या प्रकारान्तरं मंस्य इति चेत्तत्राऽऽह—इतो यदि वर्ण्यत इति ॥ २०७ ॥

सु० टी०—कथं स्वमतप्रहाणमित्यत्राऽऽह—

समवायिकारणगणेन तथा
सह सत्तया च पटवस्त्विह यत् ।

समवैति तत्कणभुगिच्छति त-
ज्जनिशब्दवाच्यमिति नान्यदितः ॥ २०८ ॥

समवायीति । **कणभुजा तथैव सूत्रितत्वादित्यर्थः** ॥ २०८ ॥

अ० टी०—कुतः स्वमतप्रहाणमलिनीकरणं ममेति चेत्कणादसूत्रविरोधादेवेत्यभि॰ प्रेत्य तत्सूत्रमर्थतः पठति—**समवायिकारणेति** । उक्तपदार्थद्वयेन परवस्तु समवैतीति यत्तत्कणभुगिच्छतीत्यत आह तज्जनिशब्दवाच्यमितो नान्यज्जनिशब्दवाच्यमिच्छतीति योजना ॥ २०८ ॥

सु० टी०—तर्ह्येतदेव भवत्वित्याशङ्क्याऽऽह—

न तदत्र संभवति युक्तिवशा-
दुपवर्णितं तदतिविस्तरतः ।
न च किंचिदन्यदुचितं भवतो
वदितुं स्वपक्षमपरित्यजतः ॥ २०९ ॥

न तदिति । **दूषितत्वादित्यर्थः । अस्तु ततोऽन्यदेव किंचिदिति चेत्त त्राऽऽह**—न चेति । **आद्यक्षणसंबन्ध उत्पत्तिरिति चेन्नासतः कार्यस्याऽऽद्यक्षणेन संयोगाद्यसंभवात् । अस्तु स्वरूपसंबन्ध इति चेन्नासतो निस्वरूपत्वात् । क्षणस्वरूपमात्रस्य च संबन्धत्वे कार्यस्यापि चतुर्थक्षणाद्यवच्छिन्नस्याऽऽद्यक्षणेनासता संबन्धत्वापत्तावतिव्याप्तेः । न च जातः संबन्धश्चेत्येकः कालोऽसंभवात् । तत्संबन्धस्य जन्मत्वादसतश्च तदनुपपत्तेः । कश्चाऽऽद्यक्षणः प्रागभावनाशक्षण इति चेन्न प्रतियोगिक्षणमात्रस्य तथात्वात् । न च स्वसमानकालपदार्थप्रतियोगिकध्वंसानाधारः क्षणः षष्ठक्षणाद्यवच्छिन्नकार्यकालीनवस्तुध्वंसानाधारद्वितीयादिक्षणसंबन्धेऽतिव्याप्तेः । आद्यक्षणावच्छिन्नस्य स्वपदार्थत्वे चाऽऽत्माश्रयात् । तव चरमध्वंसोत्पत्तावव्याप्तेश्च । तत्समानकालपदार्थध्वंसाप्रसिद्धेरिति दिक्** ॥ २०९ ॥

अ० टी०—तर्हीदमेव सूत्रोक्तं कथंचिन्मया निर्वाह्यमिति चेन्नोक्तदोषस्य परिहर्तुमशक्यत्वादित्याह—**न तदत्रेति** । अत्रोत्पत्तौ यथा न संभवति तथा निरूपि॰ तमित्युक्तं स्मारयति—**युक्तिवशादिति** । प्रकारान्तराभ्युपगमे चोक्तमपसिद्धान्तप्रसङ्गं स्फुटयति—**न च किंचिदिति** । स्वपक्षमारम्भवादमपरित्यजतो भवतोऽन्यत्किंचित्प्रकारान्तरं वदितुं न चोचितमित्यन्वयः । त्वन्मते प्रकारान्तरस्यासंभवात् । आरम्भवादे

हि कारणे कार्यस्योत्पत्तेः प्रागसत्त्वमिष्टमसतश्च न केनचित्कोऽपि संबन्धः संभवति । संयोगसमवायौ हि संबन्धौ । तौ तु भावद्वयधर्मौ न भावाभावयोरभावयोर्वा क्वापि संभवतः । तथा च प्राक्कार्यस्य कारणे कोऽप्यवस्थाविशेषो वा कारणगतशक्तिविशेषो वोत्पत्स्यमानस्य कार्यस्य धर्मविशेषो वा कार्यप्रागभावस्तस्य सत्तादिसमवायितयाऽभिव्यक्तिश्चोत्पत्तिरितिपक्षान्तरं भवद्भवेत्तस्य सर्वस्य सत्कार्यवाद एव समञ्जसत्वात्तत्परिग्रहे स्यादारम्भवादस्यासत्कार्यगोचरस्य परित्याग इति भावः ॥ २०९ ॥

सु० टी०—उपसंहरति—

**निरूपणायां न यतोऽस्ति कश्चि-**
**दुत्पत्तिशब्दार्थ इह त्वदीये ।**
**पक्षे ततो दुर्घटनाप्रसिद्धि-**[1]
**रसज्जनेरुक्तनयेन तावत् ॥ २१० ॥**

निरूपणायामिति । **असज्जनेर्या दुर्घटताप्रसिद्धिः सोक्तक्रमेणेत्यर्थः ॥२१०॥**

अ० टी०—तस्माद्दुत्पत्तिस्वरूपस्य दुर्घटत्वाच्चासत्कार्यवादो न युक्त इत्युपसंहरति—**निरूपणायामिति** । तत उक्तनयेनासज्जनेः प्रसिद्धिस्तावद्दुर्घटितेति संबन्धः ॥ २१० ॥

सु० टी०—द्वितीयं पक्षं दूषयति—

**सतोऽपि कार्यत्वमयुक्तमेव**
**निरूपणे कारणकृत्यहानेः ।**
**न कारणव्यापृतिरत्र शक्या**
**सतः स्वरूपे वदितुं फलाय ॥ २११ ॥**

सतोऽपीति । **निरूपणे क्रियमाणे सतोऽपि कार्यत्वमयुक्तं युक्तिरहितमित्यर्थः ॥ कारणकृत्यहानिमेव विवृणोति**—नेति । **कार्यस्य लब्धात्मकत्वादित्यर्थः ॥ २११ ॥**

अ० टी०—एवमसत्कार्यवादवत्सत्कार्यवादोऽपि न युक्तिसह इत्याह—**सतोऽपीति ।** सत्कार्यपक्षे कथं कारणकृत्यहानिरिति चेत्तत्र वक्तव्यं कार्यस्वरूपत्वसंपादनार्था वा सत्यपि कार्यगुणविशेषाधानार्था वा मलनिरासार्था वाऽभिव्यक्त्यर्था वा कारणव्यापृतिरिति तत्र नाऽऽद्य इत्याह—**न कारणव्यापृतिरिति** । अत्र सतः स्वरूपे कारणव्यापृतिः फलाय वदितुं न शक्येत्यन्वयः । सतः पुनः सत्त्वसंपादनासंभवात्तत्र निष्फला कारणव्यापृतिरित्यर्थः ॥ २११ ॥

---

१ घ. °र्घटिनाप्र° । क. °घटनाप्र° ।

**सु० टी०—अभिव्यक्तिरूपगुणाधानार्थं भवतु कारणव्यापार इति शङ्कते—**

**गुणं क्षिपत्कारणमर्थवत्त्वं**
**लभेत चेन्नात्र गुणस्य भावात् ।**
**न चेद्गुणोऽसत्करणं प्रसक्तं**
**निरर्थकं कारणकर्म तस्मात् ॥ २१२ ॥**

गुणमिति । **दूषयति**—नेति । **अभिव्यक्तेः सत्त्वादित्यर्थः । असत्त्वे बाधकमाह**—न चेदिति । **गुणश्चेदसन्नित्यर्थः ॥ २१२ ॥**

अ० टी०—द्वितीयं पक्षमनुवदति—**गुणं क्षिपदिति** । गुणोऽपि तत्र सन्वाऽसन्वेति विकल्प्याऽऽद्यं दूषयति—**नात्रेति** । सिद्धस्य साध्यत्वायोगादित्यर्थः । द्वितीयमनुवदति—**नचेद्गुण इति** । अस्मिन्पक्षेऽसत्कार्यमतप्रवेश इति दूषणमाह—**असत्कारणं प्रसक्तमिति** । फलितमाह—**निरर्थकमिति** । कारणकर्म कारणव्यापारः ॥ २१२ ॥

**सु० टी०—अनभिव्यक्तिनिरासार्थस्तर्हि कारणव्यापार इति शङ्कते—**

**मलं निरस्यार्थवदिष्यते चे-**
**न्मलोऽपि सन्नेव निरस्य इष्टः ।**
**सतोऽविनाशादसतोऽजनेश्च**
**वृथा ततः कारणमत्र पक्षे ॥ २१३ ॥**

मलमिति । **दूषयति**—मलोऽपीति । **ततः किमिति चेत्तत्राऽऽह**—सत इति । **यथाऽसतो जनिर्नास्ति तथा सतो नाशोऽपि नास्तीति वृथैव कारणव्यापार इत्यर्थः ॥ २१३ ॥**

अ० टी०—तृतीयमुत्थापयति—**मलं निरस्येति** । गुणाधानपक्षोक्तविकल्पदूषणानतिवृत्तेर्नायमपि पक्षः साधुरित्याह—**मलोऽपीति** । असन्नपि मलो न निष्पाद्य इति शेषः । उभयत्र क्रमेण हेतुमाह—**सतोऽविनाशादिति** । अविनाशादिति च्छेदः । अजनेरिति च पदं छेद्यं 'नासतो विद्यते भावो नाभावो विद्यते सतः' [भ०गी० २।१६] इति भगवन्निर्णयवचनादित्यर्थः । अत्रापि कारणव्यापारवैयर्थ्यं फलितमित्याह—**वृथेति** ॥ २१३ ॥

सु० टी०—उक्तदोषद्वयमुपसंहरति—

तस्मादभिव्यक्तिकरी न हेतु-
प्रवृत्तिरत्रार्थवती घटेत ।
न चानभिव्यक्तिनिराससृत्या
तस्मान्न सत्कार्यवचः प्रशस्तम् ॥ २१४ ॥

तस्मादिति । निराससृत्या निरासमार्गेण ॥ २१४ ॥

अ० टी०—गुणाधानार्थत्वनिरासेनैव कारकव्यापारस्याभिव्यक्त्यर्थताऽपि निरस्तेत्याह—तस्मादभिव्यक्तिकरीति । मलनिरासार्थत्वनिरासेनानभिव्यक्तिनिवृत्त्यर्थताऽपि कारकव्यापारस्य दूषितेत्याह—नचानभिव्यक्तीति । सत्कार्यमतनिराकरणमुपसंहरति—तस्मादिति ॥ २१४ ॥

सु० टी०—किं च सद्वादिनः कारणव्यापारः कार्यं च सदेवेति नित्येन नित्यस्य नित्यमभिव्यञ्जनात्स्वापप्रलयाद्यसिद्धिरित्याह—

नित्या च कारकगणस्य सती प्रवृत्ति-
र्नित्यं व्यनक्ति सकलं फलमित्यवश्यम् ।
वक्तव्यमत्र न लयो न सुषुप्तिमूर्छे
नो चेन्न सृष्टिरिति कष्टमुपस्थितं वः ॥ २१५ ॥

नित्या चेति । विपक्षे बाधकमाह—नो चेदिति । सदा विद्यमानादपि कारणान्न कार्यं चेत्कुतः सृष्टिरित्यर्थः ॥ २१५ ॥

अ० टी०—किं बहुना सत्कार्यवादिनः कार्यकारणभाव एव न सिध्यति स्वापाद्यसिद्धिश्च स्यादित्याह—नित्या चेति । व्यापारस्यापि कार्यत्वान्नित्यसिद्धता वाच्या । अतः कारकगणस्य प्रवृत्तिश्च नित्या सती सकलं फलं स्वकार्यं नित्यं व्यनक्तीत्यवश्यं वक्तव्यम् । अत्रैवमुत्पाद्योत्पादकव्यापारयोरुत्पत्त्युत्पादनयोर्नित्यत्वे सति न लयः प्रलयः सुषुप्तिमूर्छे वा संभवन्ति । अतः कारकप्रवृत्तेः सत्त्वाभ्युपगमोऽनुपपन्न इत्यर्थः । तर्ह्यस्तु कारकव्यापारस्यासत्त्वमिति चेत्तत्राऽऽह—नो चेदिति । नो चेत्सत्त्वं कारकव्यापारस्य तर्हि न सृष्टिः सिध्यतीत्युभयथा वो युष्माकं सत्कार्यवादिनां कष्टमुपस्थितमित्यर्थः॥ २१५ ॥

सु० टी०—ननु भवतामप्येतच्चोद्यं समानमित्याशङ्क्य निराकरोति—

वेदान्तवादिसमयेऽपि समानमेत-
च्चोद्यं परैर्न खलु वाच्यमिहाप्रसक्तेः ।

अस्मिन्मते न खलु संव्यवहारमात्रे
मायामये किमपि दूषणमस्ति यस्मात् ॥ २१६ ॥

वेदान्तेति । कुतो न वाच्यमिति चेत्तत्राऽऽह—अस्मन्मत इति ॥ २१६ ॥

अ० टी०—ननु तवापि सत्त्वमसत्त्वं वा कार्यादेरेष्टव्यं तथा च तत्रोक्तो दोषस्तवापि प्रसज्येतेति चेन्नेत्याह—वेदान्तवादीति । अवाच्यत्वे हेतुमाह—इत्प्रसक्तेरिति । वेदान्तवादेऽस्य चोद्यस्याप्रसक्तिं साधयति—अस्मिन्मत इति । संव्यवहारमात्रे देहात्मव्यवहारवद्व्यवहाराभासे तत्त्वावेदकप्रमाणासिद्ध इति यावत् । अत एव मायामये सत्त्वासत्त्वाभ्यामनिर्वचनीयेऽस्मिन्वेदान्तिमते यस्मात्किमपि दूषणं न खल्वस्ति तस्मात्सत्त्वासत्त्वप्रयुक्तदूषणस्येहाप्रक्तेर्न तदस्मान्प्रति वाच्यमिति योजना ॥ २१६ ॥

सु० टी०—मायामात्रं सर्वमित्येतन्न सांप्रदायिकमिति चेन्न ब्रह्मदत्तादिभिरुक्तत्वादित्याह—

आत्रेयवाक्यमपि संव्यहारमात्रं
कार्यं समस्तमिति नः कथयांबभूव ।
सत्कार्यवादविषयो न हि दोषराशि-
र्मायामये भवितुमुत्सहते विरोधात् ॥ २१७ ॥

आत्रेयवाक्यमिति । तेन ह्युक्तमसतोऽनिष्पाद्यत्वात्सत्त्वे प्रवृत्त्यानर्थक्यादभिव्यक्त्यर्थत्वेऽप्यविशेषात्प्रवृत्तिनित्यत्वात्सदाऽभिव्यक्तिप्रसङ्गात्संव्यवहारमात्रं कार्यमिति तद्दर्शयति—सत्कार्येति ॥ १७ ॥

अ० टी०—कार्यकारणभावादेः संव्यवहारमात्रत्वं ब्रह्मनन्दिनाऽप्याचार्येण च्छान्दोग्यभाष्ये परैरुक्तदोषाप्राप्त्यर्थमुक्तमित्याह—आत्रेयवाक्यमपीति । अत्र हि न संव्यवहारमात्रत्वादिति वदता सदसत्कार्यपक्षदूषणेन संव्यवहारमात्रत्वं कार्यकारणादेरुक्तमिति । तत्र हि संव्यवहारत्वमस्माभिरुपलब्धमित्यर्थः । तत्र सत्कार्यपक्षोक्तदोषाप्राप्तिं तावदाह—सत्कार्येति । मायामये सद्विलक्षणकार्यपक्ष इत्यर्थः ॥ २१७ ॥

सु० टी०—असत्कार्यवादोक्तोऽपि दोषो नास्तीत्याह—

काणाददर्शनसमाश्रयदोषराशि-
र्दूरान्निरस्त इह संव्यवहारमात्रे ।

---

१ ग. अस्मन्न° । २ क. वादिवि° ।

वेदान्तभूमिकुशलो मुनिरत्रिवंश्य-
स्तेनाऽऽह कार्यमिह संव्यवहारमात्रम् ॥ २१८ ॥

काणादेति । कुतो निरस्त इत्याह—संव्यवहारेति । सदसद्विलक्षण इत्यर्थः । फलितमाह—वेदान्तेति ॥ २१८ ॥

अ० टी०—सत्कार्यवादस्य परिणामपक्षत्वात्तस्य विवर्तवादं प्रति संनिकृष्टत्वेऽपि यदा तदाश्रयो दोषो न प्राप्नोति तदा नितरामसत्कार्यपक्षाश्रयदोषप्राप्तिरित्याह—काणादेति । संव्यवहारमात्रेऽसतोऽपि विलक्षणं कार्यादीति मायामयव्यवहार इत्यर्थः । येनैवं पक्षद्वयोक्तदोषाप्राप्तिरनिर्वचनीयमते तेन कारणेन वेदान्तभूमिकुशलोऽत्रिवंश्यो मुनिर्ब्रह्मनन्द्याख्य इहास्मिन्मते कार्यं संव्यवहारमात्रं सदसद्विलक्षणं मायामयमित्याहेति योजना ॥ २१८ ॥

सु० टी०—ननु तद्वाक्यानामप्यनेकाकारत्वात्कथं ततः सिद्धान्ताध्यवसाय इति चेद्विवक्षितविवेकादित्याह—

षष्ठप्रपाठकनिबद्धमुदीरितं यत्
तत्सत्यमेव खलु सत्यसमाश्रयत्वात् ।
अत्रैव यत्पुनरुवाच समुद्रफेन-
दृष्टान्तपूर्वकमदो व्यवहारदृष्ट्या ॥ २१९ ॥

षष्ठेति । ननु षष्ठे परिणामोऽप्युक्त इति तत्राऽऽह—अत्रैवेति ॥ १९ ॥

अ० टी०—ब्रह्मनन्दिवाक्येष्वनेकपक्षप्रतिभानात्तत्र कः सिद्धान्त इति न निश्चीयत इति चेन्नैष दोषः परमार्थनिरूपणावसरेऽभिहितत्वाद्विवर्तवादस्य सिद्धान्तत्वनिश्चयादित्याह—षष्ठप्रपाठकेति । छान्दोग्यषष्ठप्रपाठकव्याख्याननिबद्धं यत्तेनोदीरितं तत्सर्वं सत्यमेव खलु निश्चितम् । कुतः सत्यसमाश्रयत्वात्सद्वस्तुविषयत्वादित्यर्थः । न तत्र परिणामवादोऽप्युक्त इति सोऽपि कथं न सिद्धान्त इति चेन्न सत्त्वाविशेषादित्यादिना स्वयमेव दूषितत्वाल्लोकव्यवहारदृष्टिमात्राश्रयणेन तदुक्तिरिति निश्चीयत इत्याह—अत्रैवेति ॥ २१९ ॥

सु० टी०—कथमेवं निर्णय इति चेत्तत्राऽऽह—

पूर्वं विकारमुपवर्ण्य शनैःशनैस्त-
द्दृष्टिं विसृज्य निकटं परिगृह्य तस्मात् ।

**सर्वं विकारमथ संव्यवहारमात्र-**
**मद्वैतमेव परिरक्षति वाक्यकारः ॥ २२० ॥**

पूर्वमिति । **यस्मात्तद्दृष्टिं विसृज्य तन्निकटं विवर्तं परिगृह्य सर्वं विकारं संव्यवहारमात्रं कृत्वाऽद्वैतमेव परिरक्षति तस्मादेवं निश्चय इत्यर्थः ॥ २२० ॥**

अ० टी०—तर्हि परिणामवादस्य तत्र विस्तरेण कथनं किमर्थमिति चेदद्वैतावगमं प्रति परम्परयोपयोगित्वादित्याह—**पूर्वं विकारमिति** । विकारं परिणामं पूर्वमुपवर्ण्य प्रतिपाद्य शनैःशनैरनुपपत्त्युद्भावनक्रमेण तद्दृष्टिं परिणामदृष्टिं विसृज्य तस्माद्विकारात्परिणामलक्षणान्निकटं विवर्तदर्शनं परिगृह्याथानन्तरं सर्वं विकारं संव्यवहारमात्रं न परमार्थं मायामयमेवेति च परिशेषतः परिगृह्य वाक्यकारो ग्रन्थकारोऽद्वैतमेव परिरक्षति पालयति तत्रैव तात्पर्यदृष्टिं करोतीति योजना ॥ २२० ॥

**सु० टी०—तद्भाष्यकारवचनादप्येवं निर्णीयत इत्याह—**

**अन्तर्गुणा भगवती परदेवतेति**
**प्रत्यग्गुणेति भगवानपि भाष्यकारः ।**
**आह स्म यत्तदिह निर्गुणवस्तुवादे**
**संगच्छते न तु पुनः सगुणप्रवादे ॥ २२१**

अन्तर्गुणेति । **अस्य व्याख्यानं** प्रत्यग्गुणेति । **अत्यन्ताद्वैतवादे हि सदात्मिका परदेवता प्रत्यगभिन्ना भवति नान्यथेत्यर्थः ॥ २२१ ॥**

अद्वैतमेव ब्रह्मनन्दिग्रन्थे विवक्षितं न परिणामादीत्येतत्तद्भाष्यकृद्द्रविडाचार्यवचनादवसीयत इत्याह—**अन्तर्गुणेति ।** परदेवता सदाख्या 'सदेव सोम्येदमग्र आसीत्' [छा०६।२।१] इत्यत्रोक्ता सा परदेवताऽन्तर्गुणाऽन्तःस्वरूपगुणेति स्वरूपमेवात्र विवक्ष्यते धर्मः । अन्तर्गुणेत्यस्य व्याख्या प्रत्यग्गुणेति प्रत्यगात्मरूपेत्यर्थः । भगवतीति तद्विशेषणं तस्या ईक्षणादौ स्वव्यवहारे स्वातन्त्र्यद्योतनार्थम् । भगवान्सर्वज्ञो भाष्यकारो नन्दिकृतग्रन्थभाष्यकारो द्रविडाचार्योऽन्तर्गुणा भगवती परदेवतेति यदाह स्म तदिह निर्गुणवस्तुवादे संगच्छते संगतं भवति न तु पुनः सगुणप्रवाद इति योजना । परदेवतायाः प्रत्यक्त्वाभिधानमत्यन्ताद्वैतमत एव संगतं भवति नान्यत्रेत्यर्थः ॥ २२१ ॥

सु० टी०—इतश्च संव्यवहारमात्रं कार्यं तथा हि किं भिन्नयोः कार्यकारणभाव उताभिन्नयोस्तत्र नाऽऽद्य इत्याह—

न खलु कारणकार्यसमन्वयो
भवति जातुचिदत्र विभिन्नयोः ।
किमिह सागरसह्यसमाश्रयो
भवति कारणकार्यसमन्वयः ॥ २२२ ॥

न खल्विति । तथा सति सिन्धुसह्ययोरपि कार्यकारणभावः स्यादित्यर्थः ॥ २२२ ॥

अ० टी०—किं च भिन्नयोः कार्यकारणभावोऽभिन्नयोर्वेति विकल्पासहत्वादपि मायामयत्वं कार्यत्वादित्याह—न खल्विति द्वाभ्याम् । सागरसह्यसमाश्रयः कारणकार्यसमन्वयः किं भवतीति योजना ॥ २२२ ॥

सु० टी०—नापि द्वितीय इत्याह—

न च तथाऽयमभिन्नसमाश्रयो
भवितुमुत्सहतेऽनभिवीक्षणात् ।
न हि घटो विदधाति घटं क्वचि-
न्न च पटः पटमित्थमनीक्षणात् ॥ २२३ ॥

न चेति । अभेदे कार्यकारणत्वादर्शनादित्यर्थः । तदेवाऽऽह—न हीति ॥ २२३ ॥

अ० टी०—न च तथेति । अनभिवीक्षणमेव स्फुटयति—न हि घट इति॥२२३॥

सु० टी०—किं च किं कुर्वत्कारणमुताकुर्वदिति विकल्प्याऽऽद्यं दूषयति—

कुर्वत्कारणपक्षमाश्रितवतः कुर्वच्च कुर्वत्कृतं
तत्कुर्वच्च तथाविधान्यकृतमित्येषाऽनवस्था भवेत् ।
कुर्वद्रूपमकार्यमिष्टमिति चेन्नित्यं जगज्जायतां
नित्यं मा जनि वा विशेषविरहादेतत्समस्तं जगत् ॥२२४॥

कुर्वदिति । अनवस्थानात्कुर्वत्कारणपक्षोऽनाश्रयणीय एवेत्यर्थः । कुर्वद्रूपमकार्यमतो नानवस्थेति चेदेवं सति कार्यस्य नित्यमुत्पत्तिरनुत्पत्तिर्वा स्यादविशेषादित्याह—कुर्वद्रूपमिति ॥ २२४ ॥

अ० टी०--किं च कारणमपि कुर्वदकुर्वद्वा कुर्वच्चेत्तदाऽनवस्था दुष्परिहरेत्याह—**कुर्वत्कारणमिति** । पक्षमाश्रितवत इत्येषाऽनवस्था भवेदिति संबन्धः । अनवस्थामुपपादयति—**कुर्वच्चेति** । कुर्वत्त्वस्यापि कार्यत्वात्तदपि कुर्वता कृतमिति वक्तव्यं तदप्यन्येन कुर्वतेत्येवमनवस्था दुरवस्थेत्यर्थः । कुर्वद्रूपस्याकार्यत्वान्नानवस्थेति शङ्कते—**कुर्वद्रूपमकार्यमिति** । अस्मिन्पक्षे न कार्यकारणभावव्यवस्थेति दूषयति—**नित्यमिति** । जगत्कार्यं सदैव जायेत कारणस्य सदैव कुर्वद्रूपत्वादित्यर्थः । यदि कुर्वत्यपि कारणे विद्यमाने कदाचित्कार्यं न जायते तदैतत्समस्तं जगत्सर्वमेव कार्यं नित्यं मा जनि वा नैव कदाऽपि जायेत विशेषविरहाद्विशेषहेत्वभावादित्यर्थः ॥ २२४ ॥

सु० टी०—द्वितीये त्वाह—

सर्वं सर्वसमुद्भवाय घटते कुर्वन्न चेत्कारणं
न ह्यस्मिन्क्वचिदस्ति कस्यचिदपि व्यापारवत्ता यतः ।
तस्मात्कारणकार्यतादि सकलं मायामयं तत्त्वतो
नाऽऽसीदस्ति भविष्यतीति सकलं चैतन्यशेषं[1] जगत् ॥

सर्वमिति । तथा सत्यनियमेन सर्वतः सर्वं जायेत क्वचिदपि कार्यं कस्यचिदपि कारणस्य व्यापाराभावादित्यर्थः । तेनायं कारणकार्यत्वादिर्मायिक एवेत्याह—तस्मादिति । विचारासहत्वात्तप्तलोहपीतोदकन्यायेन चैतन्यमात्रशेषं जगदित्यर्थः ॥ २२५ ॥

अ० टी०--कुर्वत्कारणमित्याद्यं कल्पं निरस्याकुर्वत्कारणमिति द्वितीयं निराकरोति—**सर्वमिति** । कारणं कुर्वद्रूपं चेन्न भवेत्तदा प्रसुप्तवदवस्थानस्य सर्ववस्तुष्वविशेषात्सर्वं सर्वस्मात्समुद्भवेन्न वा किमपीत्यत्राप्यव्यवस्था दुष्परिहरेत्यर्थः । अतिप्रसङ्गापादने हेतुमाह—**न ह्यस्मिन्निति** । अस्मिन्नकुर्वत्कारणमितिपक्षे । यस्मादेवं विचार्यमाणे कार्यकारणभावव्यवस्था प्रमाणयुक्तिसहा न लभ्यते तस्मादज्ञानकल्पितमेव सर्वमिति परिशेषतः सिद्धमित्युपसंहरति—**तस्मादिति** । मायामयत्वमेव विशदयति—**तत्त्वत इति** । प्रतीयमानस्य परमार्थतः कालत्रयेऽपि स्वतःसत्ताहीनत्वमेव मायामयत्वमित्यर्थः ।

---

१ ग. °षं महत् ।

तर्हि किं शून्यावसानमेवेदं सकलं जगन्नेत्याह—**इति सकलमिति** । शिष्यत इति शेषश्चैतन्यं प्रत्यग्ब्रह्मात्मकं शेषः कालत्रयसत्त्वबाधेऽवधिर्यस्य तत्सकलं जगच्चैतन्यात्पृथक्कालत्रयेऽपि जगन्नाम न क्वापि सदित्यर्थः ॥ २२५ ॥

**सु० टी०—नन्वकुर्वतोऽपि शक्तस्य कारणत्वान्नाव्यवस्थेति चेत्तन्नाऽऽह—**

**सकलशक्तिविकल्पनयाऽन्वये**
**सकलशक्यविकल्पनयाऽन्वयः ।**
**सकलशक्यविकल्पनयाऽन्वये**
**सकलशक्तिविकल्पनयाऽन्वयः ॥ २२६ ॥**
**इति परस्परसंश्रयता यदा**
**वद कथं जगतः परमार्थता ।**
**यदि पुनर्जगतोऽपरमार्थता**
**परममस्ति पदं परमात्मनः ॥ २२७ ॥**

सकलेति द्वाभ्याम् । **कार्यनियमसिद्धौ कारणस्य शक्तिनियमसिद्धिस्तत्सिद्धौ च कार्यनियमसिद्धिरिति परस्पराश्रयत्वान्न तात्त्विकं कार्यमित्यर्थः । ततः किं तत्राऽऽह**—यदि पुनरिति । **जगतो मृषात्वेऽद्वैतं सिद्धमित्यर्थः ॥ २२६–२२७ ॥**

अ० टी०—कुर्वत्कारणमिति पक्षे सर्वं सर्वस्माज्जायेतेत्यतिप्रसङ्गदोष उक्तः स नोपपद्यते शक्तिवशादकुर्वतोऽपि कार्यवैचित्र्योपपत्तेरतः कुतो मायामयत्वनिर्धार इति चेत्कश्चिद्ब्रूयात्तं प्रत्याह—**सकलशक्तीति** । अयमर्थः—शक्तिर्हि शक्यनिरूप्याऽतः शक्यनियमे सिद्धे सति शक्तिनियमसिद्धिः । अकुर्वत्पक्षे चास्य कारणस्यास्मिन्नेव शक्तिरिति नियमासिद्धेः शक्तिनियमाधीनः शक्यनियमो वक्तव्यस्तथा च स्यात्परस्पराश्रयतेति । एषाऽक्षरयोजना—सकलस्य कारणजातस्य शक्तिविकल्पनयाऽस्य कारणस्यास्मिन्कार्ये शक्तिरिति कल्पनयाऽन्वये सति सकलस्य कार्यजातस्यास्येदं कार्यमिति विकल्पनयाऽन्वयः सिध्यति । सकलशक्यविकल्पनयेति सुगमम् । शक्तिविकल्पनाऽपि शक्यविकल्पनाधीनेत्यर्थः ॥ २२६ ॥

अ० टी०—अतः प्रागुक्तं मायामयत्वमेव जगतः परिशिष्यत इत्याह—**इति परस्परेति** । सर्वस्य जगतो परमार्थत्वे तत्संसर्गस्याभावात्परमात्मनो विशुद्धिः सिद्धेत्याह—**यदि पुनरिति** । परमं विशुद्धं परमात्मनः पदं स्वरूपमस्ति परमार्थमिति शेषः ॥२२७॥

सु० टी०—एवमाविद्यकत्वं जगतः प्रसाध्य परपक्षं दर्शयति—

चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते
सत्यैवास्य जडा परा भगवतः शक्तिस्त्वविद्योच्यते ।
संसर्गाच्च मिथस्तयोर्भगवतः शक्त्योर्जगज्जायतेऽ-
सच्छक्त्या सविकारया भगवतश्चिच्छक्तिरुद्रिच्यते ॥ २२८॥

चिच्छक्तिरिति । सत्या चिच्छक्तिरसत्या वा विद्याशक्तिस्तदुभयसंसर्गाज्जगदुत्पत्तिरित्यर्थः । नन्वविकारायाश्चिच्छक्तेः कथं कारणत्वं तत्राऽऽह—असच्छक्त्येति । उद्रिच्यते सविकारा क्रियते । तत्र हेतुः—सविकारयेति । यथा स्वरूपेणोष्णो वह्निरनुष्णे लोहादावौष्ण्यं संपादयति तथेत्यर्थः ॥ ॥ २२८ ॥

अ० टी०—शक्तेरपि कल्पितत्वोपपादनेन सशक्तिकं ब्रह्मणः स्वरूपमिति स्वमतमर्थादुक्तमन्ये तु शक्तिमदेव ब्रह्म वस्तुत इति वदन्तीत्याह—चिच्छक्तिरिति । परमेश्वरस्यैका चिद्रूपा शक्तिरपरा च जडात्मिका शक्तिरिति शक्तिद्वयमस्ति तत्र चैतन्यमेव चिच्छक्तिरुच्यते । सा च विमलोत्पत्त्यादिमलरहिता स्वरूपभूता सत्यैवाव्यभिचारात् । तथाऽस्य परमेश्वरस्यापरा जडा शक्तिर्या सा त्वविद्योच्यते सा चानृतरूपेत्यर्थात्सिद्धा । तयोरुक्तयोर्भगवतः शक्त्योर्मिथः संसर्गात्तादात्म्याध्यासाज्जगज्जायते । कथं जायत इति तदाह—असच्छक्त्येति । अनित्यया जडात्मिकयाऽविद्याशक्त्या सविकारं प्राप्तया योगाच्चिच्छक्तिरुद्रिच्यते शक्तिमत्परमात्मस्वरूपादुद्रेकं कार्याकारत्वमापन्ना भवति सविकारजशक्तियोगाच्चिच्छक्तिर्जगदात्मना विवर्तत एतदेव जगज्जन्मेत्यर्थः ॥ २२८ ॥

सु० टी०—अनुवदति—

इत्येवं कथयन्ति केचिदपरे श्रद्धालवस्तत्पुनः
कस्यां चिद्भुवि संमतं च विदुषां नेष्टं तु भूम्यन्तरे ।
कर्मोपास्तिविधानभूमिषु तथा तत्संमतं निर्गुणे
तत्त्वे तत्परवेदवाक्यविषये त्वालोचिते[1] नेष्यते ॥ २२९ ॥

इत्येवमिति । तत्र दोषं संभावयति—श्रद्धालव इति । तत्किं सर्वथा त्याज्यमेव नेत्याह—तत्पुनरिति । कथं तर्हि श्रद्धामात्रमित्युक्तं तत्राऽऽह—नेष्टमिति ।

१ क. °लोच्यते ।

**कुत्र तत्संमतं तत्राऽऽह**—कर्मेति । **अविचारदशायामिष्टमित्यर्थः । कुत्र** [illegible]ऽऽह—निर्गुण इति । अ[illegible]तुमाह—तत्परेति ॥ **२२९** ॥

अ० टी० —अस्योत्तरपद्येन संबन्धं घटयति—**इत्येवमिति । श्रद्धालव इति ।** यथाश्रुते सृष्ट्यादौ निरूढश्रद्धा इत्यर्थः । अयमपि पक्षः क्वचिदुपयुज्यते न सर्वत्रेति प्रकृतोऽस्यासंगतिमाह—**तत्पुनरिति** । क्व संमतं क्व वा न संमतमित्यपेक्षायां तद्विभज्य कथयति—**कर्मेति** । तथा यथोक्तं तत्पूर्वोक्तविदुषां संमतं कर्मादौ परिणामदृष्टेराश्रयणादित्यर्थः । वेदवाक्यविषये वेदान्तवाक्यगम्ये तु निर्गुणे तत्त्वे विवर्तवाददृष्ट्याश्रयणेनाऽऽलोचिते विचारिते तन्नेष्यते तत्परेतिवेदवाक्यविशेषणेन वेदान्तवाक्यानामन्यपरत्वशङ्का पराक्रियते वेदान्तवाक्यैरनन्यथा सिद्धैर्निर्गुणे तत्त्व आलोच्यमाने न शक्तिशक्तिमद्भावस्य ब्रह्मणि कल्पनावकाश इत्यर्थः ॥ २२९ ॥

**सु० टी०—आलोचनमेव दर्शयति—**

**मूर्तामूर्ततदुत्थलिङ्गपुरुषव्यामिश्रभूता चिति-**
**र्वीप्सापूर्वकनेतिनेतिवचनप्रध्वस्तसर्वद्वया ।**
**संपूर्णे परमे सुखे परिहृताशेषाशिवे शाश्वते**
**सत्ये शुद्धमहिम्नि तायिनि परे भूम्न्यक्षरे तिष्ठति ॥२३०॥**

मूर्तामूर्तेति । **चितिर्हि स्वरूपमप्यविद्यावशाद्ब्रह्मणो भिन्नेव शक्तिरिव विकल्प्यमाना मूर्तामूर्तलिङ्गाध्यासास्पदं नेतिनेतीत्यादिभिस्तु निरस्ताखिलद्वैता सती निर्दुःखपूर्णानन्दशुद्धब्रह्मात्मनैवावशिष्यत इति क्व तदा शक्तिशक्तिमद्भाव इत्यर्थः ॥ २३० ॥**

अ० टी० —ननु चैतन्यलक्षणा शक्तिः परिणामदृष्टावप्यङ्गीकृता चेत्कथं तर्हि तस्या विवर्तदृष्टावप्यभावस्तस्या मिथ्यात्वानुपपत्तेरित्यत आह—**मूर्तामूर्तेति** । मूर्तं पृथिव्यप्तेजोलक्षणं भूतत्रयममूर्तं वाय्वाकाशात्मकं भूतद्वयं ताभ्यां मूर्तामूर्तभूतराशिभ्यामुत्थलिङ्गात्मा पुरुषो वासनामयलिङ्गशरीरात्मा तेषु व्यामिश्रभूता तादात्म्याध्यासमापन्ना तदनुप्रवेशेन जीवभावमापन्नेतियावत् । एवंविधा या चितिः सा वस्तुतो ब्रह्मैव सत्युपाधिवशाद्ब्रह्मणो भिन्नेव शक्तिरिव विभाव्यमाना यदा वीप्सापूर्वकनेतिनेतिवेदान्तवाक्येन प्रध्वस्तसर्वद्वया निरस्तसर्वोपाधिर्भवति तदा संपूर्णेत्यादिविशेषितेऽक्षरे तिष्ठतीति योजना । संपूर्णे परम इति च सुखविशेषणे अपरिच्छिन्ननित्यसुखरूप इत्यर्थः । परिहृतं नित्यनिवृत्तमशेषमशिवमविद्यातत्कार्यरूपं यस्मिंस्तस्मिञ्शाश्वते निर्विकारेऽत एव सत्ये नित्यसद्रूपे शुद्ध-

१ ग. °शेषे शि°।

महिम्नि निरपेक्षमहत्त्ववति तायिनि व्यापनशीले वस्तुपरिच्छेदराहित्येन निरङ्कुशव्याप्तिमतीति यावत् । परे व्याप्यधर्मसंसर्गरहिते नामादिभ्यः परत्र स्थिते भूम्नि ब्रह्मण्यक्षरे क्षरणरहित इत्यर्थः । तथाचाविद्यावस्थायामेव शक्तिशक्तिमद्भावादिव्यवहारो विद्ययाऽविद्यायां निवृत्तायां न कोऽपि व्यवहारोऽतश्चिच्छक्तेरात्मस्वरूपत्वाद्विद्यावस्थायामप्यात्मतन्मात्रतयाऽवस्थानात्परिणामधर्मकत्वे तदयोगात्सत्या नित्या कूटस्थैवाऽऽत्माचितिस्तस्याः परिणामप्रतीतिर्भ्रम एवेति भावः ॥ २३० ॥

सु० टी०—जगत्प्रकाशकानिरूपणादपि तस्य मायामयत्वमित्याह—

**जगन्महिम्ना न जगत्प्रसिद्धि-**
**र्न चिन्महिम्नाऽपि जगत्प्रसिद्धिः ।**
**न च प्रमाणाज्जगतः प्रसिद्धि-**
**स्ततोऽस्य मायामयताप्रसिद्धिः ॥ २३१ ॥**

जगदिति । **स्वतश्चितः प्रमाणान्तराद्वा वस्तुसिद्धिस्त्रितयमपीह नास्तीत्यर्थः ॥ २३१ ॥**

अ० टी०—पुनरपि द्वैतमिथ्यात्वं युक्त्यन्तरेणाऽऽह—**जगन्महिम्नेति** । जगत्प्रसिद्धिर्जगतो निष्पत्तिः प्रतीतिश्च विवक्षिता ॥ २३१ ॥

सु० टी०—त्रितयाभावेऽपि हेतूनाह—

**[1]जडत्वहेतोर्न जगन्महिम्ना**
**न चिन्महिम्ना तदसङ्गभावात् ।**
**न च प्रमाणात्तदकारकत्वा-**
**त्कृतस्य जाड्यादजडा [2]जनेश्च ॥ २३२ ॥**

जडत्वेति । न चेति । **प्रमाणस्याकारकत्वेन जडविषयसंविदुत्पादकत्वासंभवात् । न च संविदुत्पद्यते कृतस्य जडत्वेनासंविस्त्वात्संविस्वे चाजन्यत्वादित्यर्थः ॥ २३२ ॥**

अ० टी०—उक्तेषु पक्षेषु त्रिष्वपि जगतः सिद्ध्यसंभवे क्रमेण हेतूनाह—**जडत्वहेतोरिति** । स्वमहिम्ना जगतः प्रसिद्धौ जडत्वव्याहतिः स्यात्तथा चेतनाचेतनभेदव्यव-

---

१ क. जगत्त्व° । २ क. जडस्त ।

हारः प्रमाणप्रमेयादिव्यवहारश्च लुप्येतेति भावः । तदसङ्गभावादिति । तस्याश्रितोऽसङ्गत्वाज्जडाजडयोः संबन्धासंभवादित्यर्थः । तदकारकत्वादिति । तस्य प्रमाणस्य जडविषयसंवित्कारकत्वासंभवादित्यर्थः । यदि प्रमाणेन संविक्रियेत तदा सा संविदेव न भवतीत्याह—तत्तस्य जाड्यादिति । यत्कार्यं तज्जडमिति नियमस्य पटादाववधृतस्याभङ्गादित्यर्थः । अजडा चेत्संवित्तदा सा नोत्पद्यत एवाऽऽत्मवदित्याह—**अजडा जनेश्चेति**॥२३२॥

**सु० टी०—नन्वात्मस्वभावेनैव जगत्सेत्स्यतीत्याशङ्क्य किमात्मानात्मनोस्तादात्म्यं संबन्धः किं वा संयोगोऽथ वा समवाय इति विकल्प्य नाऽऽद्य इत्याह—**

**न संकरो नापि च संयुतिस्तयो-**
**र्न चास्ति तद्वत्समवायसंभवः ।**
**ततो न चिच्चेत्यसमन्वयं प्रति**
**प्रतीयते का च न मूलसंगतिः ॥ २३३ ॥**

**सु० टी०**—न संकर इति। **जडाजडयोर्विरुद्धयोर्जलदहनयोरिव तादात्म्यानुपपत्तेरित्यर्थः । न द्वितीय इत्याह—**नापीति । **संयोगस्य गुणस्य निर्गुणे चैतन्येऽसंभवादित्यर्थः। तृतीये त्वाह—**न चापीति। **आन्तर्याश्रितो बाह्येषु जडेषु समवायानुपपत्तेरित्यर्थः। अस्तु निरूप्यनिरूपकभावादेवान्तःकरणसंक्रान्तेर्वा भास्यभासकत्वमिति चेन्नेत्याह—**अत इति । **निरूप्यनिरूपकत्वस्य मूलसंबन्धं विनाऽयोगान्निर्विकारचितोऽन्तःकरणसंक्रमानुपपत्तेश्चेत्यर्थः ॥ २३३ ॥**

अ० टी०—इदानीं प्रमाणात्संविदुत्पत्तिं नित्यसिद्धां वा संविदमङ्गीकृत्यापि तस्या जडेन सह संबन्धानिरूपणात्तदधीना जगत्प्रसिद्धिरित्याह—**न संकर इति ।** संकरस्तादात्म्यं तयोर्जडाजडयोः स्वभावविरोधात्तमःप्रकाशवत्तादात्म्यं न संभवतीत्यर्थः । संयुतिः संयोगः सोऽप्यनयोर्न युक्तः संविदोऽद्रव्यत्वात् । द्रव्ययोरेव संयोग इति नियमात् । द्रव्यत्वे वाऽस्या रूपादेरसंयोगाद्रूपाद्यसिद्धिप्रसङ्ग इत्यर्थः । तद्वत्संयोगासंभववत्समवायसंभवोऽपि न चास्तीत्यर्थः । चित आत्मसमवेतत्वाद्विषयेषु तदसंभवादित्यर्थः । विषयविषयिभावादेः संबन्धान्तरस्य सत्त्वान्न जडासिद्धिरिति चेन्न मूलसंबन्धाभावे तदयोगादित्यभिप्रेत्याऽऽह—**ततो नेति** ॥ २३३ ॥

**सु० टी०—अस्तु योग्यतैव मूलसंबन्ध इति चेत्तत्राऽऽह—**

**न योग्यतामात्रनिबन्धनो भवे-**
**ज्जडात्मनोरत्र विवक्षितोऽन्वयः ।**

तदा हि तस्या अनपायरूपतः[1]
सदाऽऽत्मनः स्यादनपायसंसृतिः[2] ॥ २३४ ॥

न योग्यतेति । कुतो न भवेदिति चेत्तत्राऽऽह—तदा हीति । अनपायरूपतो नित्यत्वादित्यर्थः । ततश्च मुक्त्यभावः स्यादिति भावः ॥ २३४ ॥

अ० टी०—दृश्यदर्शनयोर्विषयविषयित्वयोग्यतारूपो मूलसंबन्धोऽस्तीति चेन्नैव सनिर्मोक्षप्रसङ्गाद्योग्यताया यावद्वस्तुभावित्वेनाविच्छेदादित्याह—न योग्यतेति । विवक्षितोऽन्वयो विषयविषयिभावः । तस्या योग्यतायाः । स्पष्टमन्यत् ॥ २३४ ॥

सु० टी०—तथापि संबन्धस्य दुर्निरूपत्वाविशेषात्प्रपञ्चासिद्धिस्तुल्येति चेत्तत्राऽऽह—

अतो[3] वियन्मुख्यमदो जगज्जडं
चिदात्मनोऽस्यैव विवर्त इष्यताम् ।
अनाद्यविद्यापटसंवृतात्मन-
स्तदोपलभ्यत्वममुष्य कल्पते[4] ॥ २३५ ॥

अत इति । पूर्वोक्तानुपपत्तेरित्यर्थः । जडस्याज्ञातचिद्विवर्तत्वेन मिथ्या तादात्म्यादुपलब्धिरिति हठादिष्यतामित्यर्थः ॥ २३५ ॥

अ० टी०—दृग्दृश्ययोः संबन्धस्यानुभवसिद्धत्वात्तदपह्नवायोगात्कोऽपि संबन्धो वक्तव्य इति चेत्तत्राऽऽध्यासिकसंबन्धात्तत्प्रतीतिरविद्यामय्येवेत्याह—ततो वियदिति । ततः परिशेषाददः परोक्षापरोक्षात्मकं वियन्मुखमाकाशादिजगज्जडं सर्वमस्यैव चिदात्मनो विवर्तः स्वाविद्यावशान्मिथ्यातादात्म्यलक्षणोऽध्यासो दृग्दृश्ययोः संबन्ध इष्यताम् । अविद्यावस्थायामेवोपलभ्यमानत्वादुक्तसंबन्धस्याध्यासात्मत्वमित्यभिप्रेत्य चिदात्मानं विशिनष्टि—अनाद्यविद्येति । यद्येवमाध्यासिकः संबन्धो दृशा दृश्यस्याभ्युपगम्यते तदाऽमुष्य दृश्यस्योपलभ्यत्वं कल्पते घटत इति योजना ॥ २३५ ॥

सु० टी०—कथं पुनः प्रमाणफलभूता परिच्छिन्ना नश्वरी संविदविद्याश्रयो जगदधिष्ठानं वा स्यादिति चेन्न कूटस्थत्वात्संविद इत्याह—

संवित्तिभेदतदभावतदीयजन्म-
नाशादयो न खलु मानबलेन लभ्याः ।

१ ग. °पायिरू° । २ ग. °पायिसं° । ३ क. ततो° । ४ ख. घ. कल्प्यते ।

न ह्यस्ति मानमिह किंचन तद्यदस्या
धर्मस्वरूपविषयीकरणे समर्थम् ॥ २३६ ॥

संवित्तिभेदेति । न हि संविदो जन्मनाशादि प्रमाणात्सिध्यति तस्याः स्वप्रकाशत्वादित्यनित्यबुद्धिवृत्त्यविवेकादेव तस्या जन्मधीरित्यर्थः । एतदुपपादयति—न हीति ॥ २६६ ॥

अ० टी०—ननु प्रमाणफलभूतायाः संविदः प्रतिविषयव्यक्तिभिद्यमानायाः क्षणध्वंसिन्या उत्पत्त्यादिधर्मवत्याः कथमविद्यावत्त्वं जडभ्रमास्पदत्वं वेति चेन्नायं दोषः कूटस्थत्वात्संविद इत्याह—संवित्तीति । पूर्वार्धं स्पष्टार्थम् । न ह्यस्ति मानमिहेति । अयमर्थः—न तावत्संविद्भेदादयः संविदा ग्राह्याः स्ववृत्तेः स्वविषयत्वानुपपत्तेः संवेदनस्य फलरूपत्वात्फलाश्रयत्वानुपपत्तेश्च । नापि प्रमाणान्तरात्संवेदनस्योत्पत्त्यादिसिद्धिः । मानान्तरमपि जडं चेन्न तेनाजडसंविद्धर्मग्रहः । अजडं चेत्समत्वात्प्रदीपयोरिव परस्परानपेक्षत्वाद्विषयविषयित्वासंभवः । तस्माद्यदस्य संवेदनस्य धर्मस्वरूपविषयीकरणे समर्थं तदिह किंचिदपि मानं न ह्यस्तीति सिद्धं तत्रोत्पत्त्यादिप्रतिभासस्तूत्पत्तिविनाशभेदधर्मकबुद्ध्यविवेककृत एवेति । ॥ २३६ ॥

सु० टी०—कथं तर्हि प्रमाणजन्यत्वप्रतीतिः संविद इति तत्राऽऽह—

तस्मान्न मानफलता निरुपाधिकस्य[1]
संवेदनस्य घटतेऽविषयत्वहेतोः ।
एवं च मानफलसिद्धिसमन्वयेन
सिद्धिर्जडस्य जगतो न कदाचिदस्ति ॥ २३७ ॥

तस्मादिति । बुद्धिवृत्तेर्जन्यत्वात्तदुपाधिकी चैतन्ये जन्यत्वधीरित्यर्थः । निरुपाधिकस्य मानफलत्वे को दोष इति तत्राऽऽह—अविषये त्विति । केवलस्य मानफलत्वग्राहकप्रमाणाभावादित्यर्थः । अस्तु तर्हि सोपाधिकस्य मानफलस्य प्रपञ्चावभासकत्वमिति चेत्तत्राऽऽह—एवं चेति । परेष्टमानफलभूतज्ञानविषयत्वेन या जडस्य सिद्धिरबुद्धबोधनं सा नास्ति संबन्धानिरूपणादित्यर्थः ॥ २३९ ॥

अ० टी०—ननु कूटस्था चेत्संवित्तर्हि कथं तस्या मानफलत्वमिति चेत्सत्यं नास्ति स्वतः किं तूपाधिवशादुपचर्यते मानफलत्वं संविद इत्यभिप्रेत्याऽऽह—तस्मान्नेति ।

---

१ क. °धिरस्य ।

अविषयहेतोः स्वतो विषयरहितत्वादित्यर्थः । अथवा विषयत्वाभावेन जन्माद्यसिद्धेरित्यर्थः । जन्मादौ प्रमाणाभावस्योक्तत्वात्संविदो न प्रमाणविधेयत्वं संभवति तथाऽपि प्रमाणाधीनधीवृत्तिव्याप्तविषयावच्छेदेनाभिव्यक्त्यपेक्षया फलत्वमुपचर्यत इति भावः । तस्मात्संविदः कूटस्थत्वान्न मानफलतया संवित्प्रकाश्यं जडमिति सिद्धमर्थमाह—**एवमिति** । एवं च संविदः कूटस्थत्वेन न मानफलत्वं वस्तुत इति स्थिते सति मानफलरूपा या सिद्धिस्तया समन्वयेन संबन्धेन जडस्य जगतः सिद्धिः कदाचिदपि नास्तीति । योजना ॥ २३७ ॥

**सु० टी०—कथं तर्हि जगत्सिद्धिरिति चेत्तत्राऽऽह—**

**इतरेतराध्यसनमस्त्वनयो-**
**रुभयोरतो दृगदृशोरनिशम् ।**
**अपरस्परव्यतिकरानुभवा-**
**दिह शुक्तिकारजतविभ्रमवत् ॥ २३८ ॥**

इतरेति । **आध्यासिकसंबन्धादेव संविदो जडसाधकत्वं दृश्यस्य दृगविद्याकार्यत्वादित्यर्थः । अपरस्परव्यतिकरोऽन्योन्याध्यासः सोऽनुभूयते घटः स्फुरतीति यथेदं रजतमितीत्यर्थः ॥ २३८ ॥**

अ० टी०—तथा चाध्याससंबन्धादेव संविदो जडसाधकत्वमिति सिद्धमित्याह—**इतरेतरेति** । दृग्दृश्ययोः परस्पराध्यासे च घटः स्फुरतीत्यनुभव एव मानमित्याह—**अपरस्परेति** । तस्माद्दृगविद्याकल्पितत्वेन दृश्यस्य दृश्यध्यस्ताद्दृशोऽपि तत्राध्यासाद्दृश्यस्फुरणमुपपन्नमिति तात्पर्यार्थः ॥ २३८ ॥

**सु० टी०—तर्ह्यात्मनोऽप्यध्यासाच्छून्यवादाशङ्कायां पूर्वोक्तमेव परिहारं स्मारयति—**

**संसिद्धा सविलासमोहविषये वस्तुन्यधिष्ठानगी-**
**र्नाऽऽधारेऽध्यसनस्य वस्तुनि ततोऽस्थाने महान्संभ्रमः ।**
**केषांचिन्महतामनूनतमसां पाण्डित्यगर्वादय-**
**मन्योन्याध्यसने निरास्पदमिदं शून्यं जगत्स्यादिति ॥ २३९ ॥**

संसिद्धेति । **व्याख्यातम् ॥ २३९ ॥**

---

१ ख. घ. °सां निर्बन्धनात्राश्रयाद्न्यो° ।

अ० टी०—इतरेतराध्याससमुपश्रुत्य शून्यवादप्राप्तिं कश्चिद्यदि चोदयेत्तदा तं प्रति प्रथमाध्यायोक्तमेव स्मारयेत्समाधानमित्यभिप्रेत्य तत्रोक्तमेवेह पठति—**संसिद्धेति** । निर्बन्धमात्राश्रयादित्यस्य स्थानेऽत्र पाण्डित्यगर्वादमिति पाठः ॥ २३९ ॥

**सु० टी०—ननु मृदादिदृष्टान्तैः परिणामस्योक्तत्वात्कथं विवर्ताभिधानमिति चेत्तत्राऽऽह—**

**कृपणमध्यमपक्वधियां नृणां**
**मतिविलासविधात्रितयं क्रमात् ।**
**परिणतिर्बहुजीवतमस्विता**
**परमपुंसि तमःपरिकल्पना ॥ २४० ॥**

कृपणेति। **बुद्धिविलासप्रकारत्रयमिदं क्रमादधिकारिणामित्युक्तं द्वितीये तत्र कृपणादीनां मध्ये कृपणस्य ब्रह्मपरिणामो जगदिति, मध्यमस्य तु ब्रह्मविवर्तो जगदिति, अज्ञानिनस्तु बहवो जीवाः सन्तीति, परिपक्वधियस्त्वहमेव मुमुक्षुरन्ये मदज्ञानकल्पिताः, परमात्माश्रयविषयं च तम इति ॥ २४० ॥**

अ० टी०—इतश्च नास्मन्मते शून्यताप्रसङ्गापादनावसर इति वक्तुमाह—**कृपणेति** । य इतरेतराध्यासे शून्यताप्राप्तिं मन्यते स कृपणधीर्मन्दबुद्धिरिति यावत् । यस्तु समस्तकारणतया परस्य सत्त्वं निश्चित्य तत्स्वरूपं जिज्ञासते स मध्यमधीः । विवर्तपक्षेऽपि यो व्यवहारसंकरं शङ्कमानोऽद्वैत एवाभिनिविष्टमतिर्भवति स पक्वधीः । एतेषां त्रिविधानां मतिविलासविधात्रितयं क्रमाद्बुद्धिविलासतारतम्यक्रमेण परिणत्यादिकल्पनाशास्त्रे क्रियत इति योजना । तत्र कृपणधियं प्रति नाध्यास उपन्यसनीयः किं तु परिणामकल्पनया द्वैतं बोधनीयम् । यस्तु मध्यमधीस्तं प्रत्यध्यास एवोपन्यसनीयः । तदिदमुच्यते—**जीवतमस्वितेति** । जीवा बहवस्तमस्विनश्चेति व्यवहारव्यवस्थोपपादनीया । परमपुंसि तमःपरिकल्पनेति पक्वधियं प्रति ब्रह्मण्येवाविद्याकल्पितः सर्वोऽपि जीवेश्वरभेदस्तदाश्रयश्च व्यवहारतद्व्यवस्था च । ब्रह्मविद्योत्पत्तौ त्वविद्याबाधान्न द्वैतलेशस्याप्यवस्थानमिति न काऽपि व्यवस्थेति प्रतिपाद्यतेऽतः प्रतिपादनक्रमापरिज्ञानादेव शून्यतादिवादोद्घाटनमिति भावः ॥ २४० ॥

**सु० टी०—किमत्र क्रमे प्रमाणमिति तत्राऽऽह—**

**श्रुतिवचांसि मुनिस्मरणानि च**
**द्वयविशारदगीरपि सर्वशः ।**

त्रयमपेक्ष्य विधात्रितयं विना
न हि घटामुपयान्ति कदाचन ॥ २४१ ॥

श्रुतिवचांसीति । **श्रुतिस्मृत्याचार्यवचसां सामञ्जस्यान्यथानुपपत्तिमूलोऽयं क्रम इत्यर्थः ॥ २४१ ॥**

अ० टी०—तर्ह्ययं प्रतिपादनक्रमः किंमूल इतिचेच्छ्रुतिस्मृतिवचसां सामञ्जस्यान्यथानुपपत्तिमूल इत्याह—**श्रुतिवचांसीति** । द्वितीयाध्याय एवायं श्लोको व्याख्यातो दृष्टित्रयनिबन्धना च व्यवस्था तत्रोपपादितेति नेह पुनर्यत्यते ॥ २४१ ॥

**सु० टी०—एवमधिकारिभेदे नानाजीववादापत्तिरिति चेत्तत्राऽऽह—**

पुरुषमेकमपेक्ष्य च भूमिका-
त्रितयमस्ति पुरोदितमेव तत् ।
तदनुसारवशादखिलश्रुति-
स्मृतिवचांसि वयं घटयामहे ॥ २४२ ॥

पुरुषमिति । **आसां दृष्टीनामेकपुरुषसंबन्धित्वेनैव तत्त्वप्रतिपत्तौ संगतिर्न भिन्नपुरुषगामिनीभिर्दृष्टिभिरित्युक्तत्वात्तथैव श्रुतिस्मृतिवचसां सामञ्जस्यं नान्यथेत्यर्थः ॥ २४२ ॥**

अ० टी०—नचाऽऽसां दृष्टीनां विरुद्धार्थत्वेन भिन्नपुरुषनिष्ठत्वादेकस्यां वस्तुप्रतिपत्तौ न मिथः संगतिरिति शङ्कनीयमासामेकपुरुषसंबन्धित्वस्य पूर्वमुपपादितत्वादित्याह—**पुरुषमेकमिति** । तदनुसारवशादिति । एकपुरुषवर्तिदृष्टिभेदक्रमानुरोधादखिलश्रुतिस्मृतिवचांसि सामञ्जस्येन वयं घटयामहे प्रतिपादयामो न तु भिन्नपुरुषगताभिर्दृष्टिभिरतो नकोऽपि विरोध इत्यर्थः ॥ २४२ ॥

**सु० टी०—ननु श्रुत्यादीनि दशात्रितयानुसारेण प्रवृत्तानीति कुतो गम्यत इति तत्राऽऽह—**

परिणतिं च विवर्तदशाद्वयं
स्थितमनुक्रमतः श्रुतिशासने ।
अनुशशास मुनिप्रवरः सुधीः
पुरुषबुद्धिमपेक्ष्य[1] यथाक्रमम् ॥ २४३ ॥

परिणतिं चेति । **श्रुतिसिद्धपरिणतिविवर्तदशाद्वयानुसारेण सूत्रकारप्रवृत्तेरवगम्यत इत्यर्थः ॥ १४३ ॥**

---

१ क. °मवेक्ष्य ।

अ० टी०—सूत्रगतिदर्शनाच्चायं प्रतिपादनक्रमो विवक्षित इति गम्यत इत्याह—**परिणतिं चेति**। विवर्तदशाद्वयं च द्वितीयव्याख्यातं श्रुतिशासने स्थितं परिणतिं च विवर्तदशाद्वयं सुधीर्मुनिप्रवरोऽनुक्रमतोऽनुशशासेति संबन्धः। किं कृत्वा यथाक्रमं पुरुषबुद्धिमपेक्ष्य कृपणधीः परिणाममुदीक्षत इत्याद्युक्तपुंबुद्धिक्रमानुरोधेनेत्यर्थः॥ २४३॥

**सु० टी०—सर्वस्य ब्रह्मकार्यत्वे वेदस्यापौरुषेयत्वेन स्थापितं स्वतः प्रामाण्यं भज्येतेति शङ्कते—**

**यदि परिणतिरेषा चिद्विवर्तोऽथ वा स्या-**
**द्भवति ननु तदानीं वेदशास्त्रे विरोधः।**
**न हि खलु कृतकत्वे पौरुषेयत्वहेतो-**
**र्भवितुमलमियं नो मानता स्वप्रयुक्ता॥ २४४॥**

यदीति। **कथं विरोध इति** तत्राऽऽह—न हीति। **पुरुषकृतवाक्यानां लोके स्वतः प्रामाण्यादर्शनादित्यर्थः। नोऽस्माकमपौरुषेयत्वहेतुका येयं स्वप्रयुक्ता मानता सा भावयितुं नालमित्यन्वयः॥ २४४॥**

अ० टी०—तदेवं दृश्यस्य ब्रह्मण्यविद्याविलसितत्वान्मिथ्यात्वे परिशुद्धमेव नित्यं ब्रह्मेति प्रतिपादितं तत्र परिणामदृष्ट्या विवर्तदृष्ट्या वा सर्वस्य ब्रह्मकार्यत्वे वेदस्यापि तदन्तर्वर्तित्वाद्ब्रह्मकार्यता स्यात्। तत्र च पौरुषेयत्वेन पूर्वतन्त्रे प्रथमपादे स्थानं वेदस्य स्वतःप्रामाण्यं भज्येतेति शङ्कते—**यदि परिणतिरिति**। एषा श्रुतिः। वेदशास्त्रे वेदस्यापौरुषेयत्वशासनपरे पूर्वतन्त्र इत्यर्थः। विरोधमेव स्फोरयति—**न हीति**। अपौरुषेयत्वेतिच्छेदः। अवश्यं चापौरुषेयत्वमङ्गीकार्यमित्याह—**इयं न हीति**। इयं मानता नोऽस्माकं वैदिकानां स्वप्रयुक्ता स्वतःसिद्धा नाऽऽप्तवाक्यत्वेनेत्यर्थः॥ २४४॥

**सु० टी०—मा भूच्छास्त्रान्तरस्था स्वप्रयुक्ता मानता को दोष इति चेत्तत्राऽऽह—**

**कणभुगभिमतिर्वा कल्पनीया तदानीं**
**सुरगुरुमतमेवोपास्यमाहोस्विदुच्चैः।**
**इति निपतति चोद्यं ब्रह्मणो विश्वसृष्टि-**
**र्यदि भवति न चेद्वो नित्यमायाति विश्वम्॥ २४५॥**

कणभुगिति। **न हि परसिद्धान्ताभ्युपगमाद्विवक्षितार्थसिद्धिः परतः प्रामाण्ये हि वेदस्य मूलभूतमानान्तरसापेक्षत्वान्नाद्वैतप्रत्यग्ब्रह्मसिद्धि-**

**बौद्धवद्वा विसंवादित्वादुन्मत्तवाक्यवदप्रामाण्यं स्यादित्यर्थः । उपसंहरति**—इतीति। **तर्हि वेदस्यापौरुषेयत्वमस्त्विति चेत्तत्राऽऽह**—न चेदिति। **न चेद्वेदस्य सृष्टिस्तद्वदेव विश्वसृष्टौ मानाभावाद्द्वैतं नित्यं सत्यमायातीत्यर्थः ॥ २२९ ॥**

अ० टी०—यद्यपि शास्त्रयोनित्वसूत्रार्थनिरूपणेऽस्य विचारस्यावसरस्तथाऽपि तत्र न कृत इह साधनाध्याये वेदस्यापि साधनत्वात्तत्प्रामाण्यं तत्स्वरूपं च व्युत्पाद्यत इति द्रष्टव्यमस्तु नाम जैमिनीयतन्त्रविरोधेऽपि किं नो हीयत इति चेत्तत्राऽऽह—**कणभुगभिमतिर्वेति** । परतः प्रामाण्यमिति कणभुगभिमतिः । सुरगुरुर्बृहस्पतिस्तन्मतं चार्वाकशास्त्रम् । तद्धि केनचिन्निमित्तेन बृहस्पतिना प्रणीतमिति मैत्रोपनिषद्याम्नातं दृश्यते पुराणेषु च । अतः सुरगुरुमतं चार्वाकदर्शनम् । तत्र वेदानामप्रमाणत्वं प्रतिपादितं तदेवाप्रमाणत्वमुच्चैर्निःशङ्कतयोपास्यं त्वया वैदिकेनापीत्येवं चोद्यं निपतति । यदि ब्रह्मणो विश्वसृष्टिरभ्युपगम्यत इति योजना । अत्र विश्वशब्दो वेदविषयः । अत्र कणादमतस्वीकारे वेदस्य मूलत्वेन मानान्तरापेक्षणान्न स्वारस्येनाद्वैतप्रत्यग्ब्रह्मसिद्धिः । सुरगुरुमतस्वीकारे तु ब्रह्मात्मसिद्धिर्दूरापास्तेति भावः तर्ह्येतद्दोषपरिजिहीर्षया वेदस्य नित्यत्वमाश्रीयत इति चेत्तदा द्वैतस्य सत्यताप्रसङ्ग इत्याह—**न चेद्व इति** । न चेद्ब्रह्मणो विश्वसृष्टिरित्यनुषङ्गः। नित्यमकार्यं स्वतन्त्रं विश्वमायाति तेन सद्द्वयं ब्रह्म स्यादिति 'एकमेवाद्वितीयम्' [ छा० ६ । २ । १ ] इत्याद्यवधारणासिद्धिरित्यर्थः ॥ २४५ ॥

**सु० टी०—एतच्चोद्यं परसंमत्या परिहर्तुमाह—**

**ननु सदृशमिदं वश्चोद्यमस्मासु कस्मा-**
**द्विनिहितमुभयेषां पूर्वमीमांसकानाम् ।**
**अवगतिकृतमेतद्वाचकत्वं पदाना-**
**मवगतिरियमिष्टा नश्वरी तत्क्षणेन ॥ २४६ ॥**

नन्विति । **कथं साम्यमिति चेत्तत्राऽऽह**—अवगतिरिति। **ज्ञातानां वर्णानां वाचकत्वाज्ज्ञानस्य च क्षणिकत्वाद्वाचकाकारः क्षणिक एव भवतामपीत्यर्थः ॥ २४६ ॥**

अ० टी०—अस्य चोद्यस्य परिहारं परस्यासंमतमापाद्य वक्तुं प्रतिबन्दीमाह—**ननु सदृशमिति** । उभयेषां प्राभाकराणां भाट्टानां च पूर्वमीमांसकानां वो युष्माकमिदं चोद्यं सदृशमतोऽस्मासु कस्माद्विनिहितं प्रक्षिप्तमिति योजना । कथं चोद्यसाम्यं तदाह—**अवगतिकृतमिति** । पदानामेतत्प्रसिद्धं वाचकत्वमवगतिकृतमत्रगम्यमानानां

हि वर्णानां वाचकत्वं न स्वरूपसतामित्यवगतिकृतं वाचकत्वमित्यर्थः । ततः किमित्यत आह—**अवगतिरियमिति**। क्षणध्वंसिन्यवगतिरियं भवद्भिरिष्टा, अतः क्षणिकावगत्यवच्छिन्नस्य वाचकाकारस्यापि क्षणिकत्वमेव भवतामित्यर्थः ॥ २४६ ॥

**सु० टी०—तथाऽपि वर्णानां नित्यत्वान्नोक्तदोष इति चेत्तत्राऽऽह—**

**अवगतिगतमेवापेक्ष्य पूर्वापरत्व-**
**प्रतिनियममियं[1] वो वेदता वेदराशेः ।**
**क्षणिकमभवदित्थं वेदशास्त्रं समस्तं**
**कथमिव तदिदानीं वेदशास्त्रं प्रमाणम् ॥२४७॥**

अवगतीति । **क्रमावच्छिन्नानां हि वर्णानां वाचकत्वम् । न च नित्यविभूनां वर्णानां स्वतः क्रमोऽस्तीत्यवगतिपौर्वापर्यमपेक्ष्याऽऽवेदकत्वं वेदराशेरुपेयम् । एवं चावगतिक्षणिकत्वेन वाचकस्य क्षणिकत्वात्कथं प्रामाण्यमित्यर्थः ॥ २४७ ॥**

अ० टी०—इतश्च वाचकाकारस्य क्षणिकत्वमित्याह—**अवगतिगतमिति** । क्रमावच्छिन्नानां हि वर्णानां वाचकत्वं प्रसिद्धं क्रमश्च वर्णानां स्वतो नास्ति नित्यविभुत्वस्य स्वीकारात्तस्मादवगतिगतमेव पूर्वापरत्वप्रतिनियममपेक्ष्य वर्णप्रत्ययक्रमानुरक्तं वर्णक्रममपेक्ष्येति यावत् । वो युष्माकमियं हि वेदराशेर्वेदग्रन्थस्य वेदता वेदयितृता प्रमाणताभिमतेतियोज्यम् । तथा चोपलब्धिक्रमावच्छेद्यस्य वाचकाकारस्य क्षणिकत्वाद्वेदस्य क्षणिकत्वं प्राप्तं न कार्यत्वमात्रमितिकथं भवतां पूर्वमीमांसकानां तद्वेदशास्त्रमिदानीं प्रमाणं स्यादिति शङ्कासाम्यमुक्तमुपसंहरति—**क्षणिकमभवदिति** ॥ २४७ ॥

**सु० टी०—तथाऽपि वाक्यार्थे पुरुषबुद्धिप्रवेशाभावात्स्वतः प्रामाण्यसंभव इति शङ्कते—**

**पुरुषमतिनिवेशो नास्ति वेदप्रमेये**
**विषय इति यदीष्टा मानता स्वप्रयुक्ता ।**
**सदृशमिदमिदानीं कारणं मानतायां**
**परमपुरुषसृष्टे वेदशास्त्रेऽप्यभीष्टे[2] ॥ २४८ ॥**

---

१ क. ख. ग. °यं नो वे° । २ ङ. °भीष्टम् ।

पुरुषेति । **स्वमतसाम्येन परिहरति** सदृशमिति । **अभीष्टेऽस्माभिरिति शेषः ॥ २४८ ॥**

अ० टी०—तत्र प्रामाण्यसमर्थनप्रकारं पूर्वमीमांसकः शङ्कते—**पुरुषमतीति ।** वेदप्रमेये विषये प्रमाणान्तरागोचरे वेदैकगम्येऽर्थे पुरुषमतिनिवेशो नास्तीति कृत्वा यदि वेदस्य मानता स्वप्रयुक्ता निरपेक्षेष्टा । पुरुषविवक्षाधीनं न वेदप्रामाण्यं किं तु स्वतः सिद्धमेवेति यदीष्यते भवद्भिरित्यर्थः । अयं परिहारोऽस्माकमपि समान इति परिहारसाम्यं सिद्धान्त्याह—**सदृशमिदमिदानीमिति** । वेदशास्त्रे परमपुरुषसृष्टेऽभीष्टेऽपि मानतायामिदं कारणं सदृशम् । बुद्धिपूर्वसृष्टित्वे हि मानान्तरापेक्षत्वलक्षणमप्रामाण्यं शङ्कास्पदं न कार्यत्वमात्रे । अत ईश्वरस्य वेदसृष्टेरबुद्धिपूर्वकत्वाङ्गीकारात्तुल्यं समाधानमस्माकमपीत्यर्थः ॥ २४८ ॥

**सु० टी०—कथं सदृशत्वमिति तदाह—**

**न हि खलु मतिपूर्वा ब्रह्मणः सृष्टिरिष्टा**
**निगदितुरिव सृष्टिर्वेदविद्यासु नित्यम् ।**
**भवति तु पुनरेषा तस्य निःश्वासकल्पा**
**श्रुतिवचनमपीदं वस्तु वक्ति स्फुटं नः ॥ २४९ ॥**

न हीति । **नन्वीक्षणपूर्वकत्वश्रुतेः कथं न बुद्धिपूर्वकत्वमिति तत्राऽऽह—** निगदितुरिवेति । **यथाऽध्यापकस्यार्थज्ञानपूर्वकरचना नास्ति तथा ब्रह्मण ईक्षणपूर्वकत्वं त्वर्थसृष्टेर्न तु वेदसृष्टेरित्याह—**निःश्वासकल्पेति । **तत्र मानमाह—**श्रुतिवचनमिति । **' अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः ' [ बृह० २ । ४ । १० ] इत्यादीत्यर्थः ॥ २४९ ॥**

अ० टी०—ब्रह्मणः सृष्टावीक्षणपूर्वकत्वश्रवणात्कथं बुद्धिपूर्वकत्वाभाव इति चेत्तत्राऽऽह—**न हि खल्विति ।** अर्थसृष्टेरीक्षणपूर्वकत्वेऽपि ब्रह्मणो वेदसृष्टिर्न खलु मतिपूर्वेष्टा भूतसृष्टिप्रकरणेष्वेवेक्षणश्रवणात्तत्रैव तदभ्युपगम इत्यर्थः । कथं तर्हि वेदसृष्टिरिति तदाह—**निगदितुरिति ।** वेदविद्यासु निगदितुरध्यापकस्येवाबुद्धिपूर्विका नित्यं सृष्टिर्भवति ब्रह्मणश्चिदात्मनो वेदाकारेणाभिव्यक्तिः प्रथमजहिरण्यगर्भबुद्धौ स्वभावतो जायत इत्यर्थः । तुशब्दो बुद्धिपूर्वकत्वशङ्काव्यावृत्त्यर्थः । वेदसृष्टेरबुद्धिपूर्वकत्वे न विवदितव्यं वेदेनैव तथाशासनादित्याह—**पुनरेषेति ।** तस्य ब्रह्मण एषा सृष्टिर्निःश्वासकल्पा श्वासोच्छ्वासवदबुद्धिपूर्वा ' अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः ' [ बृ० १ । ४ । १० ] इत्यादिश्रुतिवचनमपीदं वेदसृष्टेरबुद्धिपूर्वत्वलक्षणं वस्तु नोऽस्मान्प्रति स्फुटमसं-

दिग्धं वक्ति । अतो नास्मन्मतेऽपि पौरुषेयत्वदोषप्राप्तिर्वेदस्येत्यर्थः । यद्वा वेदविद्यासु ब्रह्मणः सृष्टिर्निगदितुः सृष्टिरिव नित्यं मतिपूर्वा न हि खल्विष्टेति संबन्धः । तर्हि कथमिष्टेति तदाह—**भवत्विति** । तुशब्दो निराकृतपक्षविशेषकः । पुनःशब्दो वाक्यालंकारार्थः पादपूरणार्थो वा उक्तेऽर्थे श्रुतिं प्रमाणयति—**श्रुतिवचनमिति** ॥ २४९ ॥

**सु० टी०—पुरुषकृतत्वे वेदस्यार्थसंवादाभावादप्रामाण्यमिति यदुक्तं तत्राऽऽह—**

**अपि च पुरुषकर्मोद्भूतिकानीन्द्रियाणि**
**स्फुटमिव गमयन्ति स्वं स्वमन्यानपेक्षम् ।**
**विषयमिति हि दृष्टं तद्वदिष्टं च तस्मा-**
**दिह किमपि न चोद्यं वाच्यमेतद्भवद्भिः ॥ २५० ॥**

अपि चेति । **यथा रूपादौ मानान्तरसंवादं विनाऽपि प्रत्यक्षत्वादेः प्रामाण्यं दृष्टं तथा वेदस्यापि स्यादित्यर्थः ॥ २५० ॥**

अ० टी०—अथ पुरुषबुद्धिपूर्वकत्वं नाप्रामाण्यकारणं किं तु पुरुषसृष्टत्वमात्रमिति यद्युच्येत तन्न व्यभिचारादित्याह—**अपिचेति** । पुरुषकर्म धर्माधर्माख्यं तत उद्भूतिर्येषां तानि पुरुषकर्मोद्भूतिकानि । अवशिष्टाक्षरार्थः सुगमः । कर्मद्वारा पुरुषसृष्टत्वेऽपीन्द्रियाणां यथा प्रामाण्याविरोधस्तथा वेदस्याप्यविरोधोऽतः पुरुषकृतत्वमात्रं नाप्रामाण्यप्रापकमिन्द्रियेषु व्यभिचारादिति भावः ॥ २५० ॥

**सु० टी०—प्रत्यक्षादिभ्यो वैषम्यं शङ्कते—**

**श्रुतिवचनमनेकं वक्ति तस्येक्षितृत्वं**
**मतिमदिति ततस्तन्नेष्यते कस्य हेतोः ।**
**इति यदि मनुषे तन्मैव मंस्थाः कुतश्चे-**
**त्सकलकरणहीनं ब्रह्म नः शास्ति शास्त्रम् ॥ २५१ ॥**

श्रुतीति । **अनेकश्रुतिभ्यस्तस्येक्षितृत्वं श्रूयमाणं शब्दार्थसंबन्धविषयमपि कथं नेष्यते । ततश्च वेदेऽपि मतिपूर्वकत्वमित्यर्थः । ब्रह्मणः कार्यसृष्टावीक्षणं नास्ति करणहीनत्वादिति । परिहरति—**तन्मैवेति । शास्त्रमिति

**'अप्राणो ह्यमनाः शुभ्रः' [ मुण्ड० २ । १ । २ ] 'अपाणिपादो जवनो ग्रहीता' [ श्वेता० ३ । १९ ] इत्यादीत्यर्थः ॥ २५१ ॥**

अ० टी०—ननु सामान्येनेक्षणपूर्वकत्वश्रवणाद्वेदसृष्टेरपीक्षणपूर्वकत्वमवशिष्टमेवेति शङ्कते—**श्रुतिवचनमिति** । 'सोऽकामयत' [ तै० २ । ६ । १ ] इतीक्षणमभिधाय 'इदं सर्वमसृजत यदिदं किंच [ बृ० १ । २ । ५ ] इत्यविशेषेण सर्वसृष्टेरीक्षणपूर्वकत्वस्य श्रवणात्तादृशमेवानेकं श्रुतिवचनं तस्य सामान्येनेक्षितृत्वं वक्ति यतस्ततस्तद्वेदसर्जमपि मतिमन्मन्तिपूर्वकमिति नेष्यते कस्य हेतोः कस्मान्नेष्यत इत्यर्थः । नेयं शङ्का तव प्रमाणमूला किं तूत्प्रेक्षामात्रमूलेति सिद्धान्ती तामनूद्य प्रतिषेधति—**इति यदीति** । कथं न मन्तव्यमिति पूर्वपक्षी पृच्छति—**कुतश्चेदिति** । सृष्टौ क्वापि ब्रह्मणो नास्तीक्षणं प्रामाणिकं करणहीनत्वात्तस्येत्युत्तरमाह—**सकलकरणहीनमिति** । 'अपाणिपादः' [ श्वे० १ । ३ । १९ ] 'अचक्षुष्कमश्रोत्रमवागमनः' [ बृ० ३ । ८ । ८ ] इत्यादि शास्त्रं सकलकरणहीनं ब्रह्म नोऽस्मान्प्रति । अतस्तस्य न क्वापि सृष्टावीक्षणमस्तीत्यर्थः ॥ २५१ ॥

**सु० टी०—तर्हि किमिदं श्रूयमाणमीक्षणमिति तत्राऽऽह—**

**चितिगतजडशक्तेराद्य इष्टो विवर्त-**
**श्चितिनिकटनिवेशाल्लब्धदीप्तिर्जडोऽपि ।**
**श्रुतिशिरसि निषण्णैरीक्षणं कथ्यते त-**
**न्नतु परमपदस्यापीक्षणं बुद्धिवृत्तिः ॥ २५२ ॥**

चितिगतेति । **आद्यो हि मायाविकारो ब्रह्मणश्चिदाभासव्याप्त उत्तरकार्याणामपि तदन्तर्गतत्वेन तदाकारश्चिदाभासः सर्वस्रष्टव्यविषय इव भवतीति मायाविन उपचारादीक्षणमुच्यते न तु करणजन्यः । स च जडोऽपि चित्संनिकर्षेण तच्छायापन्नत्वाल्लब्धदीप्तिरपि न प्रमाणमिति न मानान्तरेणार्थमुपलभ्य प्रणीतत्वं वेदस्येत्यर्थः । ततश्चास्य सहजमपि सार्वज्ञ्यं न सृष्ट्युपयोगीति भावः ॥ २५२ ॥**

अ० टी०—ननु तर्हि 'तदैक्षत' [ छा० ६ । २ । ३ ] इत्यादि श्रूयमाणमीक्षणं किमात्मकं तद्वक्तव्यं निर्विषया युक्ता कल्पयितुमिति चेत्तत्राऽऽह—**चितिगतेति** । चिदात्मनिष्ठाया जडात्मिकाया मायाशक्तेराद्यो विवर्तो यो विकारः परिणामविशेष इष्टस्तच्छ्रुतिशिरसि वेदान्तशास्त्रे निषण्णैर्निष्णातैरीक्षणं कथ्यत ईश्वरस्य स्रष्टव्यविषयमालोचनमुच्यत इति संबन्धः । जडविवर्तस्यापि जडत्वात्कथमीक्षणपदाभिधेयता तस्येत्या-

शङ्क्याऽऽह—**चितिनिकटेति** । जडोऽपि स्वरूपतश्चितिनिकटनिवेशाच्चित्यध्यस्तमायाकार्यतया चिदाभासव्याप्त्या चितिनैकट्यं चितिनिकठनिवेशस्तस्माच्चिच्छायापत्तिवशाल्लब्धदीप्तिः प्राप्तप्रकाश इत्यर्थः । प्रविलीनसर्वप्रपञ्चवासनामयाज्ञानस्य प्रथमकार्येऽङ्कुर इव महतो वृक्षस्य सर्वस्योत्तरस्य कार्यस्यान्तर्भावात्तदेवेश्वरस्य सर्वसृज्येक्षणमभिधीयते न तु परमपदस्येश्वरस्यापि जीवस्येव बुद्धिवृत्तिरीक्षणमुपपद्यत इत्यर्थः ॥ २५२ ॥

**सु० टी०—अत्र वैशेषिकः शङ्कते—**

**ननु च डित्थडवित्थपदादिव-**
**त्सकलमेव तु सामयिकं पदम् ।**
**अनुमिमीमहि पूर्वनिदर्शना-**
**दनुमितिर्भवतीति किमद्भुतम् ॥ २५३ ॥**

नन्विति । **विमतः शब्दार्थसंबन्धः सांकेतिकः शब्दार्थसंबन्धत्वाड्डित्थादिशब्दार्थसंबन्धवदित्यनुमीमहीत्यर्थः । संभावयति—**पूर्वेति ॥ **२५३ ॥**

अ० टी०—तदेवं ब्रह्मकार्यत्वेऽपि वेदस्य मानान्तराधीनार्थज्ञानपूर्वकविरचनाभावादपौरुषेयत्वमनपेक्षालक्षणप्रामाण्यं च पूर्वतन्त्रोक्तं न बाधितमपि स्थितं तत्र शब्दार्थसंबन्धस्य प्राचीनस्येदानींतनडित्थादिशब्दार्थसंबन्धदृष्टान्तेन सांकेतिकत्वानुमानात्तादृक्संबन्धोपेतपदसंहतिरूपवेदवाक्यानां पौरुषेयत्वं बुद्धिपूर्वकत्वलक्षणमपरिहार्यमिति तार्किकश्चोदयति—**ननु च डित्थेति** । सामयिकं सांकेतिकम् । व्याप्त्यभावे कथमनुमानप्रवृत्तिरिति न चाऽऽशङ्कनीयमित्याह—**पूर्वनिदर्शनादिति** । अनुमानप्रयोगात्पूर्वदृष्टदृष्टान्तादित्यर्थः । विमतानि वेदपदानि पुरुषसंकेतितार्थानि पदत्वाड्डित्थादिपदवदित्यर्थः ॥२५३॥

**सु० टी०—दूषयति—**

**अनादिवृद्धव्यवहारलक्षणे**
**कथं प्रमाणे परिपन्थिनि स्थिते ।**
**गवादिशब्दे समयोऽनुमास्यते**
**डवित्थशब्दादिवदेतदुच्यताम् ॥ २५४ ॥**

अनादीति । **गवादिशब्दानामनादिवृद्धव्यवहारे बोधकत्वमन्यथात्वबोधकत्वमित्येवमन्वयव्यतिरेकबाधितं सांकेतिकत्वानुमानमित्यर्थः । कथं समयोऽनुमास्यत इत्यन्वयः ॥ २५४ ॥**

अ० टी०—व्युत्पत्तिप्रमाणबाधितमेतदनुमानमिति दूषयति—**अनादिवृद्धेति** । अयमर्थः—वृद्धव्यवहाराधीना हि लोके प्रथमशब्दार्थसंगत्यधिगतिः । स च वृद्धव्यवहा-

रोऽपि पूर्वतनवृद्धव्यवहारदर्शनकृतव्युत्पत्त्यधीनः । सोऽपि तद्वदेवेत्येवं वृद्धव्यवहारोऽनादिरिति सोऽनादिवृद्धव्यवहारो लक्षणं चिह्नं यस्य प्रमाणस्य शब्दान्वयव्यतिरेकरूपस्य तदनादिवृद्धव्यवहारलक्षणं तस्मिन्नन्वयव्यतिरेकाख्ये प्रमाणे पारिपन्थिनि बाधके स्थिते सति गवादिशब्दे कथं समयो डवित्थशब्दादिवदनुमास्यते समयकरणात्प्रागेव वृद्धव्यवहारनिबन्धनायाः शब्दसामर्थ्यानुसारिण्या व्युत्पत्तेः सिद्धत्वादित्यर्थः । वृद्धव्यवहारे हि शब्दानामर्थबोधविषयं सामर्थ्यमन्वयव्यतिरेकाभ्यामवसीयते न संकेततः प्रथमव्युत्पत्तौ सांकेतिकशब्ददर्शनाद्दृष्टान्ताभावात् । सामर्थ्यं तु कारणस्य कार्यविषये व्यवहारत एव सिद्धमिति युक्तं शब्दार्थसंबन्धग्रहस्य व्यवहारपूर्वकत्वानुमानम् । विमतः शब्दार्थसंबन्धाधिगमो वृद्धव्यवहारनिबन्धनस्तदन्वयव्यतिरेकानुविधायित्वात् । यो यदन्वयव्यतिरेकानुविधायी स तन्निबन्धनो यथेदानींतनशब्दार्थसंगत्यधिगतो यथा वा तन्त्वाद्यन्वयव्यतिरेकानुविधायी पटादिस्तथा चायं तस्मात्तथेत्यनुमानविरोधेऽनुमास्यत इत्येतदुच्यतां निरूप्यतामित्यर्थः । सर्गप्रलयाङ्गीकारेऽपि सुषुप्तप्रतिबुद्धवत्पूर्वकल्पव्यवहारानुसंधाने सर्गादौ प्रादुर्भवन्तो ज्ञानकर्मसिद्धा हिरण्यगर्भादयः पूर्ववदेव व्यवहारं प्रवर्तयिष्यन्तीति श्रुतिस्मृतीतिहासपुराणादिप्रसिद्धत्वात्तदपि न सांकेतिकत्वसिद्धिरिति भावः ॥ २५४ ॥

**सु० टी०—ननु संकेतविषयावन्वयव्यतिरेकावित्याशङ्क्य नैवं संकेतकर्तरि प्रमाणाभावादित्याह—**

> **सतः प्रमाणाभिमतेषु पञ्चसु**
> **प्रमाणमक्षादिषु किंचिदीक्ष्यते ।**
> **न हीह संबन्धरि तेन तस्य वः**
> **खपुष्पकल्पत्वमभावमानतः ॥ २५५ ॥**

सत इति । **भावप्रमाणाभिमतेष्वक्षादिषु पञ्चसु मध्ये संबन्धं विनैकमपि प्रमाणमीक्ष्यत इत्यभावगोचरः स इत्यर्थः ॥ २५५ ॥**

अ०टी०—ननु सर्वजगत्कर्तृतयेश्वरस्य सिद्धत्वाच्छब्दार्थसंबन्धस्य च जगदन्तःपातित्वात्तस्यापि तत्कृतनिश्चयाद्वृद्धानां च व्यवहारप्रवर्तकत्वं तत्कृतसंकेतानुरोधेन कल्प्यत इति चेन्न तादृशीश्वरे प्रमाणाभावादित्याह—**सतः प्रमाणेति** । सतः सदर्थस्य सिद्धौ प्रमाणाभिमतेष्वक्षादिषु प्रत्यक्षानुमानोपमानशब्दार्थापत्तिषु पञ्चसु मध्ये किंचिदपि प्रमाणमिह संबन्धरि शब्दार्थसंकेतयितरि न हीक्ष्यते । एतदुक्तं भवति—प्रत्यक्षं तावत्तद्विषयमस्माकं नास्त्येव । अनुमानं पूर्वश्लोके तद्विषयं निराकृतमुपमानमपि दृष्टान्ताभावादेव नास्तीति निश्चीयते । शब्दः पुनस्तद्विषयो लौकिकस्तावन्नास्ति जगच्छब्दार्थसंबन्धयितुर्लोकव्यवहारगोचरत्वेन

तद्विषयशब्दप्रमाणरचनायोगात् । अर्थोत्पत्तिरपि वृद्धव्यवहारत एवोपक्षीणेति न त्वदभिमतसंबन्धसाधिका । आगमस्तत्रानुपलब्धिपराहत इति न सर्गाद्यकालशब्दार्थसंकेतयितरि सद्भावसाधकं प्रमाणमस्तीति न केवलं भावग्राहिप्रमाणाभावमात्रं प्रत्युत तदभावनिश्चायकमस्ति प्रमाणमित्याह—**तेन तस्य व इति** । वो युष्माकं तस्य संकेतयितुरीश्वरस्य तेन परिशेषः सिद्धेनाभावमानतोऽभावाख्यप्रमाणेन खपुष्पकल्पत्वमसत्त्वं सिद्धमित्यर्थः ॥ २५५ ॥

**सु० टी०—ननु यथा क्वचिद्देशे काले वा केन चिदनुपलभ्यमानमपि घटादिकं नासद्भवति तथा संकेतयिताऽपि स्यादिति नेत्याह—**

**पुरोपलब्धो विषयो न दृश्यते**
**यदा प्रमाणैरिह भावगोचरैः ।**
**तदा तु तत्रानुपलब्धिकारणं**
**किमप्यभावादपरं हि मृग्यते ॥ २५६ ॥**

पुरेति । **पूर्वं प्रमाणान्तरेणोपलब्धो यः पदार्थस्तत्राभावादन्यदनुपलब्धिकारणं कल्प्यते न त्वयं तथेत्यर्थः ॥ २५६ ॥**

अ० टी०—नन्वस्माकं प्रमाणपञ्चकानुत्पत्तिमात्रे नेश्वराभावो निश्चीयतेऽनुपलब्धिप्रमाणस्य सर्वैरनङ्गीकारात्तस्मादनुपलब्धिमात्रेण नासत्त्वनिश्चय इति चेत्तत्राऽऽह—**पुरोपलब्ध इति** । इह व्यवहारभूमौ यदा भावगोचरैः प्रमाणैः पुरोपलब्धो विषयो न दृश्यते तदा तु तत्र तस्मिन्विषयेऽनुपलब्धिकारणमभावादपरं किमपि मृग्यते पूर्वोपलब्धविषये प्रमाणपञ्चकानुदयान्न तदसत्त्वनिश्चयः किं तु तदानीं तस्याभावादेवैतद्युक्तं कदाचिदपि प्रमाणेनोपलब्धस्यात्यन्तासत्त्वनिश्चयायोगादित्यर्थः ॥ २५६ ॥

**सु० टी०—अस्तु प्रकृतेऽपि तथेति चेत्तत्राऽऽह—**

**अत्यन्तानुपलब्धवस्तुनि पुनर्यः पञ्चकानुद्भव-**
**स्तस्याभावनिमित्तकः स न पुनस्तत्रापरं कारणम् ।**
**अन्विच्छन्ति मनीषिणो न हि शशेऽदृष्टे विषाणेऽस्तितां**
**तत्रादर्शनकारणान्तरपरा हेत्वन्तरान्वेषिणः ॥ २५७ ॥**

अत्यन्तेति । **तादृशस्य संकेतयितुर्ज्ञानान्तरानधिगतस्यादर्शनमभावादेव न तत्र कारणान्तरमन्विच्छन्तीत्यर्थः ।** दृष्टान्तमाह—न हीति । **अदृष्टेति च्छेदः ॥ २५७ ॥**

१ क. दृष्ट्वा विषाणास्ति° ।

अ० टी०—अत्यन्तानुपलब्धेऽर्थे तु प्रमाणपञ्चकानुदयमात्रेणैव विषयस्यात्यन्तासत्त्वनिश्चयस्तस्य तत्र परिपन्थ्यभावादित्याह—अत्यन्तानुपलब्धेति । तस्याभावनिमित्तक इति । तस्यात्यन्तानुपलब्धवस्तुनोऽत्यन्ताभावनिमित्तकः स इत्यर्थः । ननु तत्रास्यानुपलब्धौ कारणान्तरं कल्पयिष्यत इति चेन्न लोके तादृश्याः कल्पनाया अनुदयादित्याह—न हि शशेऽदृष्ट इति । शशे शशमस्तके विषाणेऽदृष्टेऽनुपलब्धे सति तत्र विषाणेऽस्तितां प्रत्यदर्शनकारणपराः सन्तो हेत्वतराकाङ्क्षिणो न हि लौकिका भवन्तीति योजना । शशमस्तके विषाणादर्शनमात्रेणैव तत्र तदत्यन्ताभावनिश्चयो लोकस्येत्यर्थः । एवमिहापि द्रष्टव्यम् ।। २५७ ।।

सु० टी०—संबन्धकरणस्याशक्यत्वादपि न सांकेतिकत्वमित्याह—

विषमदुर्गमदेशसहस्रगः
कथमिवैष नरः समयक्रियाम् ।
सकलशब्दतदर्थनिवेशिनीं
वद विधातुमलं स्वयमेकलः ।। २५८ ।।

विषमेति । स्वयमेकलो विषमदुर्गमदेशसहस्रगो भूत्वा सकलशब्दतदर्थनिवेशिनीं समयक्रियां विधातुं कथमलमिति संबन्धः ।। २५८ ।।

अ० टी०—यद्यपीश्वरोऽनुमानादिना सिध्यति तथाऽपि न तस्य शब्दार्थसंबन्धसंकेतकर्तृत्वं संभावनास्पदमित्याह—विषमदुर्गमेति । स संकेतयितेश्वरोऽशरीरोऽभ्युपगम्यते सशरीरो वा नाऽऽद्ये पक्षे तस्य संकेतयितृत्वसिद्धिः संकेतस्य वागादिकरणसाध्यत्वात् । द्वितीये लोकदृष्टसाधर्म्येण तदसंभवनिश्चयः । कथमेष नरः कार्यकरणसंघातपरिच्छिन्नः पुरुष एकल एकाकी सन्स्वयं विषमदुर्गमदेशसहस्रगो भूत्वा सकलशब्दतदर्थनिवेशिनीं समयक्रियां विधातुमलं समर्थः स्याद्वद त्वमिति योजना । यथेदानींतनस्य नरस्य परिच्छिन्नत्वादेकत्वाच्च न सर्वशब्दार्थसंकेतयितृत्वमवसीयते तथेश्वरस्यापि परिच्छिन्नशरीरवत्त्व एकत्वे च न संकेतयितृत्वसंभव इति निश्चीयत इति भावः । यदि नर इत्यस्य स्थाने हर इति पाठः स्यात्तदाऽपि शरीरवत्त्वपक्षे समाना योजना ।। २५८ ।।

सु० टी०—यदि कायव्यूहेन वा शक्तिविशेषाद्वा कुर्यात्तदपि न संभवतीत्याह—

अपि च किंचिदपि प्रतिपादकं
न हि यदा पदमस्ति जगन्मुखे ।

अनभिधाय पदेन तदा कथं
समयमेष करिष्यति शंकरः ॥ २५९ ॥

अपि चेति। **अस्येतिपदेनार्थमुक्त्वाऽयं वाचक इति संकेतः कार्यः। तत्रास्येतिपदेऽपि संकेतग्रहणे पदान्तरापेक्षणादनवस्थानान्न संकेतसिद्धिरित्यर्थः ॥ २५९ ॥**

अ० टी०—अथोच्येत जगत्कर्ताऽनेकशरीरोपादानेन वैकशरीरत्वेऽपि बहुशक्तिमत्त्वेन वा सर्वपदार्थेषु सर्वेषां व्यवहारप्रवर्तक इति कल्प्यत इति तदप्यनुपपन्नमित्याह—**अपि चेति**। जगन्मुखे जगदुत्पत्तिसमये यदा कस्याप्यर्थस्य प्रतिपादकं किंचिदपि पदं न ह्यस्ति तदा पदेनार्थमनभिधाय कथमेष शंकरः समयं करिष्यति न कथमपीत्यर्थः। एतदुक्तं भवति—परस्परमतेऽपि दृष्टार्थवाचकतयाऽपि सिद्धेनैकेन पदेन तमर्थमुक्त्वा ह्यस्येदं वाचकमिति पदान्तरस्य संकेतः कर्तव्यो यथेदानीमयमसावित्यादिना पदेनार्थमुल्लिख्य देवदत्तो डित्थ इत्यादिपदान्तरस्य संकेतः क्रियते तद्वत्। एतच्च जगन्मुख एकस्यापि पदस्य वाचकत्वादसंभाव्यमेवेति ॥ २५९ ॥

**सु० टी०—नन्वङ्गुल्याद्यभिनयेनार्थं प्रदर्श्य संकेतः क्रियतामिति चेत्तदपि दुर्घटमित्याह—**

अभिनयेन करिष्यति चेदयं
समयमेतदतीव हि दुर्घटम्।
न हि पदार्थसहस्रविमिश्रिते
गवि तदाऽभिनयात्समयो भवेत् ॥ २६० ॥

अभिनयेनेति। **तत्र हेतुमाह**—न हीति। **द्रव्यगुणाद्यनेकार्थविमिश्रितस्यार्थस्य विशेषतोऽभिनयासंभवादित्यर्थः ॥ २६० ॥**

अ० टी०—अथाप्यङ्गुल्यादिनाऽभिनयेनार्थं प्रदर्श्य संकेतः क्रियतामिति चेत्तदपि दुर्घटमित्याह—**अभिनयेनेति**। अयं शंकरः। दुर्घटत्वमाह—**न हि पदार्थेति**। पदार्थसहस्रविमिश्रिते द्रव्यगुणाद्यनेकार्थसंकीर्णे गवि गोपिण्डे तदा जगन्मुखेऽभिनयात्समयो न हि भवेदिति योजना। अङ्गुल्यादिनाऽर्थं प्रदर्श्य शब्दप्रयोगमात्रेण बाच्यवाचकत्वसंबन्धविवक्षा तावन्न सिध्यत्युच्चार्यमाणशब्दस्य दर्शनादानादिक्रियाविषयत्वशङ्काया अपि तदा समुन्मेषादनेकपदार्थसंकराच्चैकविषयत्वनियमासिद्धेरिति भावः ॥ २६० ॥

---

१ ङ. पदं न°।

सु० टी०—दूषणान्तरमाह—

अपि च लौकिकमानबलाश्रया-
दधिगते विषये समयो भवेत् ।
अनुपलब्धसतत्त्वकदेवता-
प्रभृतिकार्यगतः समयः कुतः ॥ २६१ ॥

अपि चेति । **सोऽपि संभवल्लौकिके स्यान्न वैदिकेऽनुपलब्धस्वरूपे देवताद्यर्थेऽभिनयस्याप्यसंभवादित्यर्थः ॥ २६१ ॥**

अ० टी०—इतोऽप्यभिनयेन समयो न शक्यत इत्याह—**अपि चेति । अनुपलब्धेति ।** अनवगतस्वरूपदेवताप्रभृतिषु कार्येषु गतः समयोऽभिनये कुतः स्यान्नैव स्यादित्यर्थः । इतोऽपि शब्दार्थसंबन्धसमयकर्त्रभावो निश्चीयत इत्याह—**अपि चेति ।** यदि कश्चित्समयक्रियां चकार तदा तत्कर्तुः स्मरणेन भवितव्यं तदभावात्तदसत्त्वं निश्चीयत इत्यर्थः—इदं पद्यं षट्पदं ज्ञेयम् * ॥ २६१ ॥

**सु० टी०—अस्मर्यमाणकर्तृकत्वादपि न सांकेतिकः शब्दार्थसंबन्ध इत्याह—**

अपि च कर्तुरनुस्मरणं भवे-
द्यदि चकार पुमान्समयं गिराम् ।
न खलु कर्तृगबुद्धिबलं विना
व्यवहृतिर्भवति व्यवहर्तरि ॥ २६२ ॥

अपि चेति । **अन्यत्र तथा दर्शनादित्यर्थः । कर्तृस्मरणप्रयोजकमिति चेत्तत्राऽऽह**—न खल्विति **॥ २६२ ॥**

अ० टी०—अस्मर्यमाणोऽपि कर्ताऽभूदिति कल्प्यतां को विरोध इति चेत्तत्राऽऽह—**न खल्विति ।** संकेतितेष्वर्थेषु यो व्यवहर्ता तस्मिन्या व्यवहृतिः संकेतनिबन्धनो व्यवहारः कर्तृगतबुद्धिबलं विना संकेतकर्तृविषयस्मृत्यवलम्बं विना न खलु भवति । यो यत्र संकेतमात्रनिबन्धनो व्यवहारः स तत्र संकेतयितृस्मृतिमन्तरेण नोपपद्यते । प्रकृते च न संकेतयितृस्मरणमस्ति लोकस्येति न जगति शब्दार्थसंबन्धव्यवहारः संकेतनिबन्धन इत्यर्थः । सांकेतिके व्यवहारे संकेतयितृस्मृतिपूर्वकत्वनियमः क्वोपलब्ध इति चेत्तदाह—

* अत्र श्लोकव्यवस्था सुबोधिनीटीकानुसारेण स्थापिता ।

१ क. °र्तृकबु° ।

**न खलु पाणिनीति ।** पाणिनिकृता संज्ञा 'वृद्धिरादैच्' इत्यादिसूत्रैः कृता वृद्ध्यादिसंज्ञा, पिङ्गलकृता संज्ञा 'धीः श्रीः स्त्रीम्' इत्याद्या मयरसतेत्याद्या च, अनयोः पाणिनिपिङ्गलयोः स्मरणं विना वृद्ध्यादिष्वाकारादौ संकेतितेषु पाणिनिपिङ्गलसंज्ञया न खलु व्यवहरन्ति व्यवहर्तारः किं तु तत्स्मृतिपूर्वकमेवेत्यर्थः । यथेदं पाणिनिशासनमिदं पिङ्गलशासनमिति तत्कृतेषु ग्रन्थेषु तत्स्मरणपूर्वकः सर्वेषां व्यवहर्तॄणामविप्रतिपन्नो व्यवहारो दृष्टो न तथेह शब्दार्थसंबन्धव्यवहार इति ज्यातिविरुद्धं जगच्छब्दसंबन्धसंकेतयितृकल्पनमिति भावः ॥ २६२ ॥

**सु० टी०—एतदेव दृष्टान्तेन प्रदर्शयति—**

**न खलु पाणिनिपिङ्गलसंज्ञया**
**व्यवहरन्ति तयोः स्मरणं विना ।**
**पदपदार्थपरस्परसंगतिं**
**निरमिमीत ततो न जगद्गुरुः ॥ २६३ ॥**

न खल्विति । **पाणिपिङ्गलसंज्ञा 'वृद्धिरादैच्' 'त्रिगुरुं विद्धि मकारम्' इत्यादिका च तयेत्यर्थः । निगमयति—**पदपदार्थेति **॥ २६३ ॥**

अ० टी०—तस्मात्पदपदार्थसंबन्धो नेश्वरकृत इत्युपसंपहरति—**पदपदार्थेति** । ततस्तस्मादिति प्रथमं योज्यम् । न निरमिमीतेति संबन्धः । जगद्गुरुः सर्वपूज्यः परमेश्वरो यतो मतिमतां प्रवरः सर्वदा सर्वज्ञः स वृषभध्वजो महादेवात्मा सन्कणभुगादिमुनिप्रवराणां प्रभुरुपास्यः । पुनस्तमेव विशिनष्टि—**ननु धरादीति** । ननुशब्दः किलेत्यर्थे । पृथिव्यादिजगतो रचनाबलात्कार्यत्वलिङ्गसामर्थ्यादिति यावत् । अनुमितः कल्पितोऽनवखण्डितशक्तिकोऽप्रतिहतज्ञानेच्छाप्रयत्नसामर्थ्य एवंविध ईश्वरः कणादादिभिरुत्प्रेक्षितः पदपदार्थपरस्परसंगतिं न निरमिमीतेति योजना । इदं च पद्यं षट्पदं ज्ञेयम् * ॥ २६३ ॥ २६४ ॥

**सु० टी०—यदुक्तं संबन्धकर्तरि प्रमाणाभाव इति तदयुक्तमनुमानासंभवादिति शङ्कते—**

**मतिमतां प्रवरो वृषभध्वजः**
**कणभुगादिमुनिप्रवरः प्रभुः ।**

---

* अत्रापि श्लोकव्यवस्थासुबोधिन्यनुसारेण ।

नतु धरादिजगद्रचनाबला-
दनुमितोऽनवखण्डितशक्तिकः ॥ २६४ ॥

मतिमतामिति । विमतं कार्यं सर्वज्ञकर्तृपूर्वकं कादाचित्कत्वाद्व्यतिरेक आत्मवदित्यनुमित इत्यर्थः ॥ २६४ ॥

सु० टी०—एतदनुमानं सिद्धसाध्यत्वेन दूषयति—

अपि तु वैदिकवाङ्मनसातिगा-
नुदितलुप्तचिदेकरसात्प्रभोः ।
अभवदानकदुन्दुभिनन्दना-
दमतिपूर्वमिदं सकलं जगत् ॥ २६५ ॥

अपि त्विति । वैदिकाल्लक्षणाद्द्वारा वेदैकगम्यादञ्जसा वाङ्मनसयोरप्यविषयादत्र हेतुर्निर्धर्मकान्नित्याचिन्मात्रादिदं जगदभवदित्यर्थः । कथमीदृशात्सृष्टिस्तत्राऽऽह—प्रभोर्मायेश्वरत्वमापन्नादानकदुन्दुभिर्वसुदेवस्तस्य नन्दनः श्रीकृष्णस्तस्मादित्यर्थः । एवमपि बुद्धिपूर्वकरचनत्वं न वेदस्येत्याह—अमतिपूर्वमिति । ‘स ऐक्षत’ [ बृ० १ । २ । ५ ] इत्यादेराद्यमायाविकारत्वेन व्याख्यातत्वादिति भावः ॥ २६५ ॥

अ० टी०—यदि कार्यलिङ्गसिद्धादीश्वराज्जगद्रचनातद्व्यवहारप्रवृत्ती नाभ्युपगम्येते तर्ह्यकर्तृकमप्रवर्तकव्यवहारं च किमेतज्जगदङ्गीकृतं नेत्याह—**अपि तु वैदिकेति ।** वैदिको वेदैकगम्यः स चाऽऽदौ वाङ्मनसातिगः सर्वप्रमाणाविषयश्च स चा सावनुदितलुप्तचिदेकरसश्च नोदिता लुप्ता चोत्पत्तिनाशरहिता या चित्तदेकरसो नित्यचित्सदानन्दस्वरूपतश्चिच्छब्दस्योपलक्षणत्वादेवंविधादानकदुन्दुभिनन्दनाद्वासुदेवादस्मत्प्रभोरिदं जगदमतिपूर्वं निःश्वासवदिच्छाप्रयत्नज्ञानानादरेणाभवत्संपन्नमतो न निरध्यक्षत्वं जगतः शङ्कनीयमित्यर्थः । अत्र वैदिकग्रहणेन तार्किकाणां तटस्थेश्वरानुमानं कार्यलिङ्गकं ‘यतो वा इमानि’ [ तै० ३ । १ । १ ] इत्याद्यभिन्ननिमित्तब्रह्मोपादानपरवेदवाक्यबाधितविषयमिति सूचितम् । वाङ्मनसातिगत्वविशेषणेन च विवक्षितेश्वरव्याप्तलिङ्गासिद्धिः सूचिताऽनुदितेत्यादिना । नित्यज्ञानस्वरूपत्वोक्त्या ज्ञानादिगुणाश्रयतया द्रव्यत्वमीश्वरस्य परेष्टं पराकृतम् । आनकदुन्दुभिनन्दनादित्यनेन वासुदेवत्वोक्त्या तस्यैव सर्वात्मत्वं द्योतितम् । ‘वासुदेवः सर्वमिति स महात्मा सुदुर्लभः’ [ गी० ७ । १९ ] इति भगवद्गीतास्मरणात् । तस्मान्न तटस्थेश्वरे मानमस्तीति सिद्धमिति ॥ २६५ ॥

---

१ क. °तो नच ख. । २ क. °पि च वै° ।

**सु० टी०—ननु लौकिकवाक्यानां मतिपूर्वकरचनत्वदर्शनात्तद्दृष्टान्तेन वैदिकानामपि वाक्यत्वादिलिङ्गेन तदनुमास्याम इति शङ्कते—**

**ननु लौकिकवचसां नरमतिपूर्वकरचना**
**परिदृश्यत इति वैदिकवचसामनुमिनुमः ।**
**वचनं श्रुतिशिरसामपि नरधीकृतरचनं**
**वचनत्वत इव लौकिकजननिर्मितिवचनम् ॥२६६॥**

नन्विति । **श्रुतिशिरसामपि रचनमिति संबन्धः ॥ २६६ ॥**

अ० टी०—युक्त्या निरस्तेऽपि वेदस्य पौरुषेयत्वे पुनर्वाक्यत्वलिङ्गकेनानुमानेन पौरुषेयत्वं शङ्कते—**ननु लौकिकेति** । परिदृश्य इत्यन्तं व्याप्तिसद्भावप्रदर्शनपरम् । पूर्वार्धशेषो व्याप्तस्य वचनत्वलिङ्गस्य पक्षधर्मताप्रदर्शनार्थः । 'वेदोऽपि वचनात्मकः' इति वैदिकवचसामित्यनेन द्योत्यते । सिद्धे व्याप्तिपक्षधर्मत्वे सिद्धमनुमानं प्रयुङ्क्ते—**वचनं श्रुतिशिरसामिति** । श्रुतिशिरसां वचनमिति पक्षस्वरूपनिर्देशः । अत्र श्रुतिशिरसां ग्रहणं प्रकृतशास्त्रानुरोधात् । श्रुतीनां वचनमित्येतावद्विवक्षितम् । नरधीकृतरचनमिति साध्यनिर्देशः । नरशब्दः पुरुषवचनः पुरुषबुद्धिपूर्वकरचनं भवितुमर्हतीत्यर्थः । इवेत्यादि दृष्टान्तपरमिति विवेकः । वचनमिवेति योज्यम् ॥ २६६ ॥

**सु० टी०—तथाऽपि वैदिकवाक्यानां कश्चिद्वक्ता सिध्यति न तु सर्वज्ञ ईश्वर इति चेत्सोऽपि पक्षधर्मतया सिध्यतीत्याह—**

**न च मादृशजनधीकृतरचनं श्रुतिवचनं**
**भवितुं क्षममिति वैदिकरचनाबलमिषतः ।**
**अनुमीयत इह शूलभृदिति चेदिदमशुभं**
**न हि वैदिकवचसामभिभवनास्पदमनुमा ॥२६७॥**

न चेति । **वैदिकरचनेति । अतीन्द्रियधर्माधर्मेश्वरादिबोधकवेदवाक्यानामस्मादृशैरशक्यरचनत्वात्तद्बलेनेत्यर्थः । दूषयति**—इदमशुभमिति । **तत्र हेतुमाह**—न हीति । **अनुमया श्रुतेरबाध्यत्वादित्यर्थः ॥ २६७ ॥**

अ०टी०—न चानीश्वरपुरुषमादायार्थान्तरताऽत्र शङ्क्या पक्षधर्मताबलाद्वेदवाक्यरचयितुः सर्वज्ञत्वसर्वेश्वरत्वादिसिद्धेरित्याह—**न च मादृशेति** । सर्वार्थप्रकाशकवेदवाक्यरचनाबलमिषतो रचनासामर्थ्यद्वारेण मादृशजनधीकृतरचनं न च भवितुं क्षममिति शूलभृन्महेश्वरः श्रुतिवाक्यरचयिताऽनुमीयत इति चेदिति योजना । धर्माधर्मेश्वराणामतीन्द्रियत्वात्तद्विषय-

वेदवाक्यानामस्मदादिभिरनीश्वरात्मभिर्विरचयितुमशक्यत्वाज्जीवविलक्षणोऽतीन्द्रियार्थदर्शी परमाप्तः सर्वेश्वरो वेदप्रणेतेति सिध्यतीत्यभिप्रायः । आगमबाधितविषयमिदमनुमानमिति सिद्धान्ती दूषयति—**इदमशुभमिति** । दृष्टसाधर्म्येण प्रवर्तमानमनुमानं नात्यन्तातीन्द्रियार्थबोधकस्वतन्त्रागमस्य बाधकं तत्र तस्यासामर्थ्यात्प्रत्युताऽऽगम एव दृष्टान्तादिनिरपेक्षः स्वप्रतिकूलार्थबोधकानुमानस्य बाधक इत्यत इदमनुमानमागमबाधितमेवेत्यभिप्रायः ॥२६७॥

**सु० टी०—प्रत्युताऽऽगमैरेव बाधितं मतिपूर्वकरचनत्वानुमानमित्याह—**

**ब्रह्म स्वयंभु परमात्मपदस्य वेदो**
**निःश्वासकल्प इति चापरमामनन्ति ।**
**वाक्यं तदस्य मतिपूर्वकतानुमानं**
**सद्यो निरस्यति न चेदपबाधितं स्यात् ॥ २६८॥**

ब्रह्मेति । '**परमेष्ठी ब्रह्मणो ब्रह्म स्वयंभु**' [ बृह० २ । ६ । ३ ] **इत्येकं पूर्वोक्तं चापरमामनन्तीति संबन्धः । विपक्षे बाधकमाह—न** चेदिति । **मतिपूर्वकरचनत्वे वेदवाक्यं बाधितमेव स्यादित्यर्थः ॥ २६८ ॥**

अ० टी०—कोऽसावागमो योऽनुमानबाधक इति तमाह—**ब्रह्म स्वयंभ्विति ।** 'ब्रह्म स्वयंभु ब्रह्मणे नमः' [बृ० २।६।३] 'ब्रह्म स्वयंभ्वभ्यानर्षत्' इति ब्रह्मपदवाच्यवेदस्य स्वयंभुत्वं परानधीनात्मलाभत्वलक्षणमामनन्ति केचिच्छाखिन इति योजना । वेदः परमात्मपदस्य परमात्मस्वरूपस्य निःश्वासकल्पोऽबुद्धिपूर्वकतया निःश्वासतुल्य इति चापरं वाक्यम्—'अस्य महतो भूतस्य निःश्वासितम्' [ बृ० २ । ४ । १० ] इत्यादिकमामनन्तीति पुनर्योजना । तद्वाक्यमुक्तवाक्यजातमस्य वेदस्य मतिपूर्वकतानुमानं सद्योऽनुमानप्रयोगसमय एव निरस्यति बाधते नचेद्बाधेनानुमानमिदं श्रुतिवचनं तदा स्वयमपबाधितं स्यान्निर्विषयं स्यादर्थान्तरासंभवाच्चायुक्तमध्ययनविधिगृहीतस्याक्षरमात्रस्याप्यानर्थक्यायोगादित्यर्थः ॥ २६८ ॥

**सु० टी०—किं च सर्वस्मिन्नपि जगति कूटस्थस्य मायामात्रेणाबुद्धिपूर्वस्रष्टृत्वादिश्रुतौ सत्यां कुतस्तदेकदेशस्य वेदस्य बुद्धिपूर्वकतानुमानमित्याह—**

**सृजति रक्षति संहरति प्रभुः**
**सकलमेव निविश्य नियच्छति ।**

अमतिपूर्वमिति श्रुतिशासने
वद कथं मतिपूर्वकतानुमा ॥ २६९ ॥

सृजतीति । 'यतो वा इमानि' [ तैत्ति० ३ । १ । १ ] इति 'योऽन्तरो यमयति' [ बृह० ३ । ७ । १ ] इति 'महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' [ बृह० २ । ४ । १० ] इत्याद्युपक्रम्य 'अयं च लोकः परश्च लोकः सर्वाणि च भूतान्यस्यैवैतानि निःश्वसितानि' [ बृह० ३ । ७ । १ ] इति श्रुतिशासने सतीत्यर्थः ॥ २६९ ॥

अ० टी०—न केवलं वेदसृष्टिरेवेश्वरस्यामतिपूर्वा किं तु सर्वजगत्सृष्टिरपि तथैवेति श्रौतं मतमित्याह—**सृजतीति** । अक्षरार्थस्त्वतिरोहितः । कूटस्थचिद्धातोरीश्वरस्य स्वतो जगद्रचनादिव्यापारसंभवादद्वैतमते चाऽऽगन्तुकस्य हेत्वन्तरस्यायोगात् । 'मायां तु प्रकृतिम्' [ श्वे० ४ । १० ] 'देवात्मशक्तिं स्वगुणैर्निरूढाम्' [ श्वे० १ । ३ ] 'इन्द्रो मायाभिः पुरुरूप ईयते' [ बृ० २ । ५ । १९ ] इत्याद्यनेकश्रुतिभिः 'मयाऽध्यक्षेण प्रकृतिः सूयते स चराचरम्' [ भ० गी० ९।१० ] इत्यादिस्मृतिभिश्च माया-विद्याज्ञानादिशब्दवाच्यस्याऽऽत्माश्रयात्मविषयस्य जडस्य सदसद्भ्यामनिर्वचनीयस्य ब्रह्मणो जगत्सृष्ट्यादौ द्वारत्वाङ्गीकारादज्ञानमूलकमेव जगत्प्रवृत्तिरिति सिद्धान्तः स्थितो न बुद्धि-मत्पुरुषपूर्वकत्वं जगद्वेदरचनायाः शक्यतेऽङ्गीकर्तुमित्येतत्सर्वमभिप्रेत्योक्तममतिपूर्वमिति श्रुति-शासन इति । अमतिरज्ञानं तत्पूर्वमित्युदाहृतश्रुतिशासन इत्यर्थः ॥ २६९ ॥

सु० टी०—ननु वेदस्य प्रमाणत्वायाऽऽप्तेनार्थमुपलभ्य रचितत्वं वक्तव्यमित्याशङ्क्याऽऽह—

आप्तोक्तत्वप्रत्यये मानभावो
वेदस्यास्य ज्ञायते मानभावे ।
विज्ञाते सत्याप्तपूर्वत्वसिद्धि-
रित्यन्योन्यापाश्रयत्वप्रसङ्गः ॥ २७० ॥

आप्तोक्तत्वेति । आप्तोक्तत्वात्प्रामाण्यं ततश्चाऽऽप्तोक्तत्वमित्यन्योन्याश्रयत्वमित्यर्थः ॥ २७० ॥

अ० टी०—एवमपि वेदस्य प्रामाण्यायैवाऽऽप्तप्रणीतताऽङ्गीकार्या । आप्तप्रणीतस्या-नाप्तप्रणीतस्य वा वाक्यस्य प्रामाण्यायोगादिति चेन्न परस्पराश्रयत्वाद्वेदस्याऽऽप्तोक्तत्वप्रामा-ण्यान्वययोरित्याह—**आप्तोक्तत्वेति** ॥ २७० ॥

सु० टी०—कथं तर्हि वेदवाक्यस्य प्रामाण्यसिद्धिरिति चेत्स्वत एवेत्याह—

तस्मादेषा स्वप्रयुक्तप्रमाण-
भावज्ञाना वेदविद्याऽभ्युपेया ।
प्रामाण्यं स्यात्स्वप्रयुक्तं च तस्या
वस्तुस्थित्या ज्ञप्तिवन्नान्यतस्तत् ॥ २७१ ॥

तस्मादिति । स्वप्रयुक्तेति । ज्ञानज्ञापकसामग्रीमात्रज्ञाप्यप्रामाण्येत्यर्थः । ज्ञप्तिवदुत्पत्तिरपि प्रामाण्यस्य स्वत एवेत्याह—वस्तुस्थित्येति । उत्पत्त्येत्यर्थः । स्वप्रयुक्तं ज्ञानोत्पादकसामग्रीमात्रजन्यं न तु गुणाद्यपेक्षमित्यर्थः ॥ २७१ ॥

अ० टी०—तर्हि कथं वेदस्य प्रामाण्यमिति चेत्तस्य स्वत एव प्रामाण्यान्न कारणापेक्षेत्यभिप्रेत्याऽऽह—तस्मादेषेति । यस्मादाप्तप्रणीतत्वेन प्रामाण्यमन्योन्याश्रयग्रस्तमनाप्तप्रणीतत्वं च वेदस्य यस्मान्न निश्चीयते वेदप्रमेयस्य धर्मादेर्मानान्तराविषयत्वादनाप्तप्रणयनसंदेहोऽप्यत्र नावतरति तस्मादेषा वेदविद्या स्वप्रयुक्तप्रमाणभावज्ञानाभ्युपेया । स्वप्रयुक्तं प्रमाणभावज्ञानं यस्याः सा तथा ज्ञानस्वरूपग्राहकप्रमाणादेः प्रामाण्यग्रहणं प्रामाण्यज्ञानस्य स्वप्रयुक्तत्वम् । तथा च यदेव वेदविद्या स्फुरति तदा प्रमाणत्वेनैव स्फुरति न पुनस्तथा स्फुरणे कारणान्तरमपेक्षत इत्यर्थः । ज्ञप्तौ प्रामाण्यस्वतस्त्ववदुत्पत्तावपि स्वतस्त्वमाह—प्रामाण्यं स्यादिति । तस्या वेदविद्याया उत्पत्तौ च प्रामाण्यं वस्तुस्थित्या स्वप्रयुक्तं स्यादित्यन्वयः । प्रामाण्यस्योत्पत्तौ स्वप्रयुक्तत्वं नाम ज्ञानजनकादेव हेतोर्वस्तुस्थित्योत्पत्तौ स्वप्रयुक्तत्वं नाम ज्ञानजनकादेव हेतोर्वस्तुस्थित्योत्सर्गतः प्रामाण्यस्योत्पत्तिः । तथा च यदैव यतो हेतोर्वेदस्वरूपाभिव्यक्तिस्तदैव तत एव प्रमाणत्वेनैवाभिव्यक्तिर्न तस्य प्रमाणस्वरूपत्वसंपादनाय हेत्वन्तरापेक्षेत्यर्थः । ज्ञप्तिवदिति परानपेक्षत्वमुत्पत्तावपि तुल्यमिति दर्शयति ॥ २७१ ॥

सु० टी०—व्यवहृतावपि स्वतस्त्वमाह—

ज्ञप्त्युत्पत्त्योर्यद्वदेवं प्रवृत्ता-
वस्या युक्ता मानता स्वप्रयुक्ता ।

वेदोत्थाया बुद्धिवृत्तेर्न हीय-
मुत्पत्त्याऽन्यत्संविदे काङ्क्षतीति ॥ २७२ ॥

ज्ञप्त्युत्पत्त्योरिति । **ज्ञानव्यवहारसामग्रीमात्रव्यवहार्येत्यर्थः । तत्र हेतुमाह**–न हीति । **संविद् इत्युपलक्षणमितरार्थमपि नाऽऽकाङ्क्षतीत्यर्थः ॥ ॥ २७२ ॥**

अ० टी०—व्यवहारेऽपि प्रामाण्यस्य स्वतस्त्वमाह—**ज्ञप्त्युत्पत्त्योरिति** । प्रवृत्तिभिन्नमानस्य संविदुत्पादकत्वलक्षणो व्यापारः स एव प्रमाणव्यवहारः । अस्या वेदोत्थाया बुद्धिवृत्तेर्यद्वज्ज्ञप्त्युत्पत्त्योरेवं प्रवृत्तावपि मानता स्वप्रयुक्तेति संबन्धः । ज्ञप्त्युत्पत्तिप्रवृत्तिषु स्वप्रयुक्तत्वमेव स्फुटयति—**न हीयमिति** । संविदे संवादाय ॥ २७२ ॥

**सु० टी०—तस्मात्स्वत एव वेदप्रामाण्यसिद्धेरबुद्धिपूर्वैव वेदादिसृष्टिरित्युपसंहरति–**

विश्वं विष्णोरुत्थितं नामरूपं
निःश्वासादिप्रख्यमित्याह वेदः ।
यत्तत्तथ्यं वर्त्मना वर्णितेन
तस्मान्मिथ्या पौरुषेयानुमानम् ॥ २७३ ॥

विश्वमिति । **ततश्च नरशिरःशौचानुमानवदागमबाधितं वेदस्य बुद्धिपूर्वकत्वानुमानमित्याह**–तस्मादिति ॥ २७३ ॥

अ० टी०—तस्मात्स्वत एव वेदप्रामाण्यसिद्धेरन्यथा च तत्प्रामाण्यासंभवादबुद्धिपूर्वैव वेदादिसृष्टिरीश्वरस्येति श्रुतियुक्तिभ्यां युक्तमेवोक्तमित्युपसंहरति—**विश्वं विष्णोरिति** । नामरूपमिति विश्वरूपनिर्देशो वाच्यवाचकात्मकमित्यर्थः । नामरूपं विश्वं निःश्वासादिप्रख्यं निःश्वासादितुल्यं विष्णोरुत्थितमिति यद्वेद आह तद्वर्णितेन वर्त्मना तथ्यं यथार्थं नास्य बाधकमस्तीति योजना । यस्मादेवं तस्माद्वेदस्य बुद्धिपूर्वकमसृष्टत्वानुश्रुतिबाधितत्वादप्रमाणमिति सिद्धमित्याह—**तस्मान्मिथ्या पौरुषेयानुमानमिति** ॥ २७३ ॥

**सु० टी०–यदि परिणतिरेषेत्यादिना प्रसञ्जितं स्वतःप्रामाण्यविरोधपरिहारमुपसंहरति–**

परिणामविवर्तयोरतः
परिक्लृप्तावपि वेदगोचरः ।

---

१ ग. °त्पद्यान्य° । ङ. °त्पाद्यान्य° ।

न च चोद्यलवोऽपि विद्यते
कथितेनैव पथाऽनपेक्षितः[1] ॥ २७४ ॥

पारिणामेति ॥ २७४ ॥

अ० टी०——प्राच्यां मीमांसायां प्रथमपादोक्तस्वतःप्रामाण्योत्थविरोधपरिहारं परमप्रकृतमुपसंहरति——**परिणामविवर्तयोरिति** । निगदव्याख्यातं पद्यम् ॥ २७४ ॥

**सु० टी०——एवं प्रासङ्गिकचोद्यं परिहृत्य तत्त्वंपदार्थयोर्हेयोपादेयाभिधित्सया चतुर्धा विभागं दर्शयति——**

उपाधिमौपाधिकमान्तरं चि-
दाभासनं चित्प्रतिबिम्बकं च ।
चिद्बिम्बमेवं चतुरः पदार्था-
न्विविच्य जानीहि तदर्थभाजः ॥ २७५ ॥

उपाधिमिति । **चतुर उपाधिचिदाभासप्रतिबिम्बबिम्बान् । तदर्थभाजस्तत्पदार्थं गतान्** ॥ २७५ ॥

अ० टी०——तदेवं कार्यकारणादिव्यवहारस्य मायामात्रत्वात्प्रागुक्तेन न्यायेन करणत्वेश्वरत्वादिसमस्तविकल्परहितं निर्विशेषसच्चिदानन्दमात्रं ब्रह्मेति तत्पदार्थो वाक्यार्थान्वययोग्यतया संशोधित इदानीं तत्पदार्थे त्वंपदार्थे च कियद्धेयं कियच्चोपादेयमिति विवेक्तुं विभागमाहोक्तस्यैव वैशद्याय——**उपाधिमित्यादिना** । औपाधिकमित्यस्य व्याख्या——**आन्तरमिति** । उपाध्यन्तःप्रविष्टमुपाधिस्थत्वविशिष्टं चिदाभासनं चैतन्याभासमौपाधिकमित्यर्थः ॥ २७५ ॥

**सु० टी०——तत्पदार्थोक्तं विभागं त्वंपदार्थेऽप्यतिदिशति——**

तथा त्वमर्थेऽपि चतुष्टयं तत्
विवेचनीयं निपुणेन भूत्वा ।
मतिश्चिदाभासनमेवमस्यां
बिम्बं तदीयं प्रतिबिम्बकं च ॥ २७६ ॥

तथा त्वमर्थ इति । **बुद्धिचिदाभासप्रतिबिम्बबिम्बाश्चतुष्टयम्** ॥ २७६ ॥

अ० टी०——त्वंपदार्थेऽपि चातुर्विध्यमाह——**तथा त्वमर्थेऽपीति** । तदेव चतुष्टयं विभजते——**मतिरिति** । मतिरन्तःकरणमुपाधिः ॥ २७६ ॥

---

[1] ख. ग. घ. ङ. °पेक्षतः ।

सु० टी०—तत्पदार्थगतं चतुष्टयं विवेचयति—

उपाधिरज्ञानमनादिसिद्ध-
मस्मिंश्चिदाभासनमीश्वरत्वम् ।
तदन्विता चित्प्रतिबिम्बकं स्या-
दुदीर्यते शुद्धचिदेव बिम्बम् ॥ २७७ ॥

उपाधिरज्ञानमिति । चिद्वदाभासनं चिदाभासनं न साक्षाच्चिन्नापि जडम् । तच्च चित्संनिधेर्मायायामुत्पन्नमीश्वरत्वं भवति मायाप्रवृत्ति-हेतुतया तदीशनरूपत्वात् । आत्माभासाविविक्ता च चित्प्रतिबिम्बः स ईश्वरः शुद्धं चैतन्यमेव च बिम्बमित्यर्थः ॥ २७७ ॥

अ०टी०—तत्पदार्थगतचतुष्टयस्वरूपं विवृणोति—उपाधिरज्ञानमिति । तदर्थेऽनादिसिद्धमज्ञानमुपाधिः । अस्मिन्नुपाधौ चिदाभासनं चिद्वदाभासनं न साक्षाच्चिन्नापि जडं चित्संनिधिवशादुपाधिधर्मतया जातं तच्च कारणमायागतं सदीश्वरत्वं चिदात्मनीश्वर-शब्दप्रवृत्तिद्वारमित्यर्थः । तदन्विता यथोक्ताभासाविविक्ततयोक्तोपाध्यनुगता चित्प्रतिबिम्बकं प्रतिबिम्ब ईश्वरपदवाच्यः स्यादित्यर्थः । आभासहेतुभूता शुद्धचिदेव बिम्बमुक्तप्रतिबिम्बापे-क्षया बिम्बमित्युच्यत ईश्वरवाचकतत्पदलक्ष्यं तद्भवतीत्यर्थः ॥ २७७ ॥

सु० टी०—त्वंपदार्थे चतुष्टयं विविच्य दर्शयति—

उपाधिरन्तःकरणं त्वमर्थे
जीवत्वमाभासनमत्र तद्वत् ।
तदन्विता चित्प्रतिबिम्बमेव-
मनन्वितां तामिह बिम्बमाहुः ॥ २७८ ॥

उपाधिरिति । अन्तःकरणगतं चिदाभासनं तदविवेकादारोपिततत्पार-तन्त्र्यं जीवत्वं भवति । तदविविक्ता चित्प्रतिबिम्बो जीवः । शुद्धचि-द्बिम्बमित्याहुरित्यर्थः ॥ २७८ ॥

अ० टी०—इदानीं त्वमर्थगतचतुष्टयस्वरूपमाह—उपाधिरन्तःकरणमिति । मतिपदस्य प्रतिपदमन्तःकरणमिति । अत्र त्वमर्थे तद्वदीश्वरत्ववदाभासनं जीवत्वमन्तःकर-

णस्योपाधेः कार्यस्य कारणपरतन्त्रत्वात्तद्गताभासस्यापि पारतन्त्र्याच्चिदात्मन्यध्यविवेकेन पारतन्त्र्यापादनेन जीवपदप्रवृत्तिनिवृत्तत्वादन्तःकरणगतचिदाभासनं जीवत्वं भवत्याभासाविवेकेन भासमाना चित्प्रतिबिम्बं जीवो भवतीत्यर्थः। अनन्वितामुपाधितत्स्थाभासतदविविक्ताकारेभ्यो विविक्तां तां चिदमिह त्वमर्थे बिम्बमाहुरध्यामतत्त्वविद इति योज्यम् ॥२७८॥

**सु० टी०—एवं विभागाङ्गीकारे द्वैतापत्तिमाशङ्क्यात्र हेयोपादेयं विभजते—**

**उपाधिना सार्धमुपाधिजन्य-**
**मौपाधिकं सर्वमवेहि मिथ्या ।**
**भागं मृषा चित्प्रतिबिम्बकेऽपि**
**बिम्बं पुनः सत्यमशेषमेव ॥ २७९ ॥**

उपाधिनेति । भागमिति [1] **प्रतिबिम्बेऽपि भागस्य मृषात्वमाभासांशस्य मृषात्वादवशिष्टं तु चैतन्यमेवेति । शून्यताप्रसङ्गं वारयति—**बिम्बमिति ॥ २७९ ॥

अ० टी०—उक्तार्थचतुष्कद्वये हेयमुपादेयं चेदानीं विभजते—**उपाधिना सार्धमिति ।** उपाधिजन्यमौपाधिकमिति व्याख्येयभावेन योज्यम् । सर्वमौपाधिकमुपाधिना सार्धमुपाधिसहितं मिथ्या न परमार्थ इति पदार्थद्वयेऽप्यवेहि जानीहि उपाधितत्स्थाभासौ न केनापि रूपेण परमार्थावित्यतस्तत्राऽऽत्माद्यभिमानस्त्याज्य इत्यर्थः । प्रतिबिम्बके तु विशेषमाह—**भागं मृषेति ।** चित्प्रतिबिम्बकेऽपि भागमाभासांशं विविक्तत्वं मृषेत्यवेहीति योजना । बिम्बं पुनरशेषमेव सत्यमशेषं सत्यमेवेति वा योजना । उपाधितद्धर्मानास्कन्दितं चिन्मात्रमेव पदार्थद्वयेऽपि सत्यं तत्त्वंपदयोर्लक्ष्यं तदेवोपादेयमन्यत्सर्वमनात्मेति ज्ञात्वा तत्राभिमानत्यागेन हेयमितिभावः ॥ २७९ ॥

**ननु प्रतीयमानस्य मिथ्यात्वेऽतिरिक्तसद्भावे किं मानमिति लोके तथा दृष्टत्वादित्याह—**

**अप्पात्रमप्पात्रगतत्वमेव-**
**मप्पात्रगोऽप्पात्रगताद्बहिष्ठः**
**दिवाकरो दिव्यवतिष्ठमानो**
**न शक्यतेऽपोहितुमिद्धतेजाः ॥ २८० ॥**

---

१ ग. ङ. हित्व ।

अप्पात्रमिति । **अप्पात्रगतत्वमाभासपदार्थः**—न शक्यत इति । **अप्पात्रमपि विशिष्टात्मना मृषैव दिवाकरस्तु न सर्वथेत्यर्थः ॥ २८० ॥**

अ० टी०—एतच्चोक्तं चातुर्विध्यं लौकिकप्रतिबिम्बेष्वपि प्रसिद्धमेवेत्युदाहरणमाह—**अप्पात्रमिति ।** अप्पात्रमुदकघृकशरावाद्युपाध्यप्पात्रगतत्वमित्याभासनमुक्तम् । अप्पात्रगत इति प्रतिबिम्बोक्तिः । अप्पात्रगतात्परश्च दिवाकरो दिव्यवतिष्ठमान इति शुद्धबिम्बमुच्यते । न शक्यत इत्यादिना तस्य सत्यत्वं शुद्धत्वं च प्रतिपाद्यतेऽर्थादवस्थान्तरं सर्वं पूर्वोक्तं तस्योपाधिप्रयुक्तं मिथ्याऽशुद्धं चेत्युक्तं भवति ॥ २८० ॥

**सु० टी०—तद्वद्दार्ष्टान्तिकेऽपि प्रतिपत्तव्यमिति तत्साहृप्येण प्रागुक्तमेवाऽऽह—**

**पुरं पुरस्थत्वमथो पुरस्थं**
**पुराद्बहिः शुद्धमवस्थितं च ।**
**तथा परं ब्रह्म सुसूक्ष्मयाऽपि**
**धिया निराकर्तुमशक्यमेव ॥ २८१ ॥**

पुरमिति । **पुरस्थत्वमाभासः । शुद्धमवस्थितं परं ब्रह्मेत्यन्वयः ॥२८१॥**

अ० टी०—उक्तदृष्टान्तवद्दार्ष्टान्तिकेऽपि प्रतिपत्तव्यमित्याह—**पुरमिति ।** पुरमुपाधिः पुरस्थत्वं चिदाभासनम् । अथो इत्यव्ययं तथेत्यर्थे पादपूरणार्थम् । पुरस्थमिति प्रतिबिम्बोक्तिः पुराद्बहिः । शुद्धमिति बिम्बकथनम् । तस्यैव शुद्धत्वमुपादेयत्वायोपपादयति—**तथा परं ब्रह्मेति ।** यथा दिव्यवतिष्ठमानो दिवाकरस्तथा पुराद्बहिरवस्थितं शुद्धं परं ब्रह्म सुसूक्ष्मयाऽपि धिया निराकर्तुमशक्यमेव सर्वस्य निराकृतेस्तदवधित्वादित्यर्थः । तथा च श्रुतिः—' पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ' [ कठ० अ० ३ । ११ ] इति ॥ २८१ ॥

**सु० टी०—एवमुपाधीनामनृतत्वात्तत्कृतं ब्रह्मणि सविशेषत्वं मृषैवेति सिद्धमित्याह—**

**न स्थानतोऽप्यस्ति परस्य तस्मा-**
**द्विशेषयोगः परमार्थरूपः ।**
**स्वतः पुनर्दूरनिरस्तमेव**
**परस्य तत्त्वस्य विशेषवत्त्वम् ॥ २८२ ॥**

न स्थानत इति । **स्वत इति निर्विशेषत्वश्रुतिविरोधादित्यर्थः ॥ २८२ ॥**

अ० टी०—तस्मान्निर्विशेषमेव ब्रह्मतत्त्वमिति सिद्धमुपसंहरति—**न स्थानतोऽपीति** । स्पष्टार्थम् ॥ २८२ ॥

**सु० टी०—युक्त्यन्तरमाह—**

**श्रुतेश्च तात्पर्यमखण्डरूपे**
**परे पुरस्तादुपपादितं च ।**
**ततोऽपि तस्याद्वयरूपतोऽन्य-**
**द्रूपान्तरं कल्पयितुं न शक्यम् ॥ २८३ ॥**

श्रुतेश्चेति । **जन्मादिसूत्रे निर्विशेषं वस्तु लक्षितं तत्र तात्पर्यमखण्डरूपे परमात्मन्युत्तराधिकरणैर्वेदान्तानां निरूपितमित्यतो न रूपान्तरं संभाव्यमित्यर्थः ॥ २८३ ॥**

अ० टी०—स्वयमेवं युक्त्यन्तरैर्निर्विशेषं ब्रह्मेति प्रतिपाद्येदानीमस्मिन्नधिकरणे 'अरूपवदेव हि तत्प्रधानत्वात्' [ ब्र० ३ । २ । १४ ] इतिसूत्रे प्राधान्येनोक्तं निर्विशेषवाक्यानां तत्परत्वं विवृणोति—**श्रुतेश्चेति** । अखण्डरूपे निर्विशेषे परे ब्रह्मणि श्रुतेस्तात्पर्यं पुरस्तात्प्रथमाध्याय उपवर्णितं ततोऽपि समन्वयाध्यायसिद्धन्यायतोऽपि तस्य ब्रह्मण इति सुगमम् । यद्यपि निर्विशेष एव ब्रह्मणि सर्ववेदान्तसमन्वय इति तत्र प्राधान्येन प्रतिपादितं तथाऽपि तत्र 'अन्तस्तद्धर्मोपदेशात्' [ ब्र० १ । १ । २० ] इत्यादौ सविशेषेऽपि ब्रह्मणि वाक्यानां केषांचित्समन्वयस्योपपादनात्सविशेषं निर्विशेषं वा ब्रह्मणस्तत्त्वमिति पुनःशङ्कायां तत्रोक्तं निर्विशेषपरत्वमेव हेतुमादाय निर्विशेषत्वमिह व्युत्पाद्यत इति भावः ॥ २८३ ॥

**सु० टी०—ननु 'द्वा सुपर्णा' [श्वे० ४।६] इति 'बहु स्यां प्रजायेय' [ छा० ६ । २ । ३ ] इति श्रुतिविरोधेन कथमखण्डतात्पर्याभिधानमित्याशङ्क्याऽऽह—**

**भेदश्रुतिस्त्वन्यपरा समस्ता**
**समस्तवेदेषु न तत्पराऽसौ ।**
**अतत्परा तत्परवेदवाक्यै-**
**र्विरुध्यमाना गुणवाद एव ॥ २८४ ॥**

भेदश्रुतिरिति । **अन्यपरादपि देवताधिकरणन्यायेन तत्सिद्धिः कुतो**

**नेत्यत्राऽऽह**—अतत्परेति । **प्रमाणाविरोधे हि देवताधिकरणन्यायो न विरोधेऽपीत्यर्थः ॥ २८४ ॥**

अ० टी०—ननु सविशेषत्वबोधकश्रुतिवशात्सविशेषत्वमपि ब्रह्मणः कुतो न स्यादिति चेत्तस्यास्तत्परत्वाभावादुपासनाद्यर्थान्तरपरत्वान्मैवमित्याह—**भेदश्रुतिरिति** । अन्यपराया अपि देवताधिकरणन्यायेन स्वार्थपरत्वमपि किं न स्यादित्याशङ्क्य मानान्तरविरोधान्मैव मित्याह—**अतत्परेति** ॥ २८४ ॥

**सु० टी०—विपरीतं किं न स्यादिति चेत्तत्राऽऽह—**

**न ह्यर्थवादा विधिभिर्विरुद्धा**
**विध्यर्थसंकोचकरा भवन्ति ।**
**किं तु प्रधानानुगुणं यदेषा-**
**मालम्बनं तत्खलु कल्पनीयम् ॥ २८५ ॥**

न हीति । **निर्विशेषश्रुतीनामर्थवत्त्वेन शेषित्वात्तदनुगुणमेतेषामालम्बनं कल्प्यं न तु तद्बाधकत्वमित्यर्थः ॥ २८५ ॥**

अ० टी०—ननु सविशेषवाक्यैर्विरोध इतरेषामपि समान इति चेत्सत्यं तथाऽपि निरवकाशतया निर्गुणवाक्यानां स्वार्थैकपरत्वेन प्राबल्यान्न तदर्थमन्यथा नेतुं शक्नुयुः सविशेषवाक्यानीत्याह—**न ह्यर्थवादा इति** । विधित्वं शेषित्वम् । स्पष्टार्थमर्धम् । तर्हि किमर्थवादा निरालम्बना एवेति नेत्याह—**किं त्विति** । यदेषामर्थवादानां प्रधानानुगुणं विध्यनुगुणं भवति तत्खल्वालम्बनं कयाऽपि वृत्त्या कल्पनीयं न प्रधानविरुद्धार्थालम्बनत्वमुचितमित्यर्थः ॥ २८५ ॥

**सु० टी०—अस्मिन्नर्थे शास्त्रस्थं दृष्टान्तमाह—**

**यथा ह्यजक्षीरविधेः समीपे**
**यज्ञतिलादेः परिकीर्तनं तत् ।**
**प्रधानसंकोचभयादपास्य[1]**
**स्तुत्यर्थमासीद्गुणवाद एव ॥ २८६ ॥**

यथा हीति । **' न चेदन्यं प्रकल्पयेत्प्रक्लृप्तावर्थवादः स्यादानर्थक्यात्परसामर्थ्याच्च' [ जै० १० । ८ । ७ ] इत्यत्र सूत्रे दशमे विचिन्तितं जार्तिलयवाग्वा जुहुयाद्गवीधुकयवाग्वा वा न ग्राम्यान्पशून्हिनस्ति नाऽऽरण्या-**

---

१ ख. घ. ङ. °स्य स्वमर्थं° ।

नथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवेधुकाश्चेत्यजक्षीरेण जुहुयादिति । तत्र किं जर्तिलेत्यादिविधिरनाहुतिरिति निषेध उतोभावप्यजक्षीरस्तुत्यर्थाविति संशये जर्तिलहोमविधेः प्रत्यक्षत्वान्निन्दया च निषेधानुमानाद्विकल्पे प्राप्ते सिद्धान्तितम् । स्यादेवं न चेदन्यमजक्षीरविधिं प्रकल्पयेत्स यदि न स्यादित्यर्थस्तस्य त्वत्र दृष्टत्वात्तस्यायमर्थवादः स्यादन्यथा पयोविधानादेव विकल्पसिद्धेर्निन्दाख्यानिश्चितेश्च निषेधानर्थक्यात्परत्र च क्षीरस्तुतावस्य पूर्ववाक्यस्य सामर्थ्याद्वाक्यैक्ये च संभवति वाक्यभेदस्यान्याय्यत्वाज्जर्तिलैर्जुहुयादिति न विधिरनाहुतिरिति नञपि प्रशस्तादपि जर्तिलादेः प्रशस्तं क्षीरमिति पयःस्तुत्यर्थो न प्रतिषेधक इति क्षीरविध्यसंकोचाय यथा यथाश्रितमासीदित्यर्थः ॥ २८६ ॥

अ० टी०—अस्मिन्नर्थे पूर्वतन्त्रसंमतिमाह—**यथा हीति** । चयनगतेऽग्निहोत्रे श्रूयते—'जर्तिलयवाग्वा वा जुहुयाद्गवेधुकयवाग्वा वा' इति तथा 'अजक्षीरेण जुहोति' इति च । जर्तिला आरण्यतिला गवेधुका आरण्यगोधूमास्तेषां यवागूर्मण्डः । अजायाः क्षीरमजक्षीरम् । अजशब्दस्य जातिवचनत्वाददोषः । अत्र संशयः—किं जर्तिलगवेधुकहोमवादोऽप्यजक्षीरहोम इव विधिः किं वाऽर्थवाद इति । तत्र विधिप्रत्ययश्रवणादग्निहोत्रस्य च द्रव्याकाङ्क्षिणः श्रुतद्रव्यपरिग्रहोपपत्तेरजक्षीरेण विकल्पोपपत्तेश्च विधिवचनो जर्तिलादिवाद इति प्रापय्य राद्धान्तितम् । 'अनाहुतिर्वै जर्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोति' इति जर्तिलादिनिन्दापूर्वकमजक्षीरविधानादजक्षीरविधेः प्राधान्यमत्रावगतम् । तथा च जर्तिलादेरपि होमद्रव्यत्वाश्रयण उत्पत्तिविशिष्टस्याजक्षीरस्य विकल्पप्राप्तौ पाक्षिकस्ताद्विधिः स्यात्स चायुक्तो विकल्पाश्रयणस्यागातिकगतित्वाददृष्टदोषदुष्टत्वादिह च निन्दावाददर्शनात्तुल्यवद्विकल्पाश्रयणासंभवाच्च । तस्माज्जर्तिलादिरजक्षीराग्निहोत्रहोमस्तुत्यर्थोऽर्थवादो गुणवादेनाग्निहोत्रहोमस्याऽऽवश्यकत्वोक्त्या स्तुत्यर्थत्वोपपत्तेरित्येषाऽक्षरयोजना । अजक्षीरविधेः प्रकरणित्वेन प्रधानभूतस्य समीपे यज्जर्तिलादेः परिकीर्तनं तद्यथा प्रधानस्याजक्षीरविधेः संकोचभयादपास्य विधिपरत्वं निराकृत्य स्तुत्यर्थं गुणवाद एवाऽऽसीन्निश्चितो बभूवेति ॥ २८६ ॥

सु० टी०—तथेहाप्याश्रयणीयमिति दार्ष्टान्तिके योजयति—

एवं सतीहापि विरुध्यमानं
वचो यदद्वैतपरैर्वचोभिः ।

**तदस्तु गौणं यदि वा परस्य**
**माया प्रसूतद्वयवादिमुख्यम् ॥ २८७ ॥**

एवं सतीति । **अद्वैतश्रुतिविरुद्धानां सविशेषश्रुतीनां गौणत्वमित्यर्थः । नन्वेकत्र मुख्यस्यान्यत्र गौणत्वं न चात्र तथेति चेत्तत्राऽऽह**— यदि वेति । **सविशेषत्वमपि मायामयमस्तीति तद्वादित्वेन मुख्यं वा भवत्वित्यर्थः ॥ २८७ ॥**

अ० टी०—तथाऽत्रापि सविशेषवाक्यानां गुणवादेन तत्स्तुत्यर्थत्वमेव युक्तमिति दार्ष्टान्तिकमाह—**एवं सतीति** । प्रधानानुरोधिनोऽर्थवादा न प्रधान विरोधिन इति न्यायतः सिद्धे सतीत्यर्थः । इह वेदान्तेष्वपि यदनन्यथा सिद्धार्थतया प्रधानभूताद्वैतवचोभिर्विरुध्यमानं वचोऽस्ति तद्गौणमस्तु गुरुवादेन स्तुत्यर्थोर्थवादोऽस्त्विति योजना । नन्वेवं सविशेषवाक्यानां सर्वथा गुणवादत्व उपासनाविध्यपेक्षितविधेयार्थविशेषसमर्पकत्वमपि तेषां न स्यादित्याशङ्क्य पक्षान्तरमाह—**यदि वेति** । परस्य ब्रह्मणो मायाप्रसूतं यद्द्वयं तद्वादिसन्मुख्यं मुख्यार्थमस्तु यथाश्रुतं सविशेषत्वमपि मायामयमस्तीति तद्विषयत्वं तेषां मुख्यमस्तु । अस्मिन्पक्षे विषयभेदान्न निर्विशेषवाक्यविरोधितेति भावः ॥ २८७ ॥

**सु० टी०—एतदेव प्रपञ्चयति—**

**भेदश्रुतिः कल्पितमेव भेद-**
**मालम्ब्य मुख्यार्थवती भवित्री ।**
**अतत्परा तत्परवाक्यभङ्ग-**
**स्त्वितोऽन्यथा याति विना निमित्तम् ॥ २८८ ॥**

भेदश्रुतिरिति । **ननु मुख्यत्वे वास्तवभेदमेवाऽऽलम्बतामिति नेत्याह**— अतत्परेति । **तथा सति तात्पर्योपेताद्वैतश्रुतिभङ्गो निर्निमित्तः प्रसज्येतेत्यर्थः ॥ २८८ ॥**

अ० टी०—भेदश्रुतेरपि चेन्मुख्यमालम्बनमिष्यते तर्हि तस्याः कथंचिद्वस्तुसंस्पर्शित्वमेष्टव्यमिति चेत्तदशक्यं तत्परवाक्यविरोधादित्याह—**भेदश्रुतिः कल्पितमेवेति** । कल्पितभेदालम्बनेनैव मुख्यार्थवत्त्वे हेत्वर्थं विशेषणमतत्परेति । उपासनादिपरत्वान्न भेदपरेत्यर्थः । विपक्षे दोषमाह—**तत्परवाक्यभङ्गस्त्विति** । तत्परवाक्यस्य स्वार्थपरत्वापहार इति यावत् । जर्तिलादिवाक्यस्येव स्वार्थापहारोऽप्यस्त्विति चेन्नेत्याह—**विना निमित्तमिति** ॥ २८८ ॥

सु० टी०—ननु सगुणोपासनविधिबोधितस्य सविशेषत्वस्य कथं मिथ्यात्वं स्यादिति । तत्राऽऽह—

यदपि किंचिदुपासननिष्ठिता-
द्वचनतः प्रतिभाति परात्मनः ।
सकलगन्धरसादिमयं वपु-
स्तदपि कल्पितभेदसमाश्रयम् ॥ २८९ ॥

यदपीति । उपासनविधिपरात्प्रतीयमानस्यापि तस्य वस्तुपरानिर्विशेषश्रुतिबाधे कल्पितत्वमेव युक्तमित्यर्थः ॥ २८९ ॥

अ० टी०—ननूपासनावाक्यानामुपासनानिष्ठत्वेनार्थवादत्वाभावात्तत्र श्रुतं सविशेषत्वं वस्तुधर्म एवेति चेन्नेत्याह—**यदपीति** । सर्वगन्धः सर्वरस इत्यादिविशेषणविशिष्टं वपुरित्यर्थः ॥ २८९ ॥

सु० टी०—विपरीतमेव कुतो नेत्याशङ्क्याऽऽह—

न खलु निर्गुणवस्तुपरं वचः
सगुणवाक्यविरोधनिमित्ततः ।
स्वविषयादपसारयितुं बला-
दतिबलिष्ठपदान्वयमिष्यते ॥ २९० ॥

न खल्विति । कथं नापसारयितुमिष्यत इति चेत्तत्राऽऽह—अतिबलिष्ठेति । तत्परत्वादनन्योपजीवित्वाच्च निर्गुणवाक्यपदान्वयो बलीयान् सगुणवाक्यानि तु तच्छेषसृष्ट्यादिवाक्यसिद्धसर्वात्मकत्वाद्यनुवादेनोपासनविधायकानि दुर्बलानीत्यर्थः ॥ २९० ॥

अ० टी०—कुतः कल्पितभेदसमाश्रयत्वमिति तत्राऽऽह—**न खलु निर्गुणेति** । अयमर्थः—निर्गुणवाक्यं तावदत्यन्तं बलिष्ठमेवान्योपजीवित्वाभावात्सगुणवाक्यं तु तदपेक्षया दुर्बलं निर्गुणवाक्यशेषभूतसृष्ट्यादिवाक्यसिद्धसर्वात्मब्रह्मस्वरूपानुवादेन तद्विषयोपासनाविधिपरत्वादत उपजीवकेन दुर्बलेनोपजीव्यं सबलं न बाधमर्हतीत्येषाऽक्षरयोजना । अतिबलिष्ठपदान्वयं निर्गुणवस्तुपरं वचः सगुणवाक्यविरोधनिमित्ततो न खलु स्वविषयाद्बलादपसारयितुमिष्यत इति ॥ २९० ॥

सु० टी०—प्रकरणार्थमुपसंहरति—

तस्मात्तत्परवेदवाक्यगतिभिर्न्यायेन चाऽऽत्मप्रभं
सर्वद्वैतविवर्जितं विगलितध्वान्तं शिवं शाश्वतम् ।
प्रत्यग्रूपमरूपगन्धरसकं तच्छब्दवाच्ये स्थितं वाक्या-
र्थान्वयि लक्षितं भगवतो विष्णोः पदं गृह्यताम् ॥२९१॥

तस्मादिति । वाक्यगतिभिर्वाक्यान्वयप्रकारैः । न्यायेनोपाधीनामौपाधिकानां च मृषात्वसाधकन्यायगणेन । वाक्यार्थान्वयि गृह्यतामिति संबन्धः । शोधितं तत्पदलक्ष्यं वस्तु दर्शयत्यात्मप्रभमित्यादिना शिवमानन्दरूपम् । अरूपगन्धरसकं निर्धर्मकमित्यर्थः ॥ २९१ ॥

अ० टी०—तत्पदार्थशोधनप्रकरणमुपसंहरञ्छोधिततत्पदार्थलक्ष्यं दर्शयति—**तस्मात्तत्परेति** । वाक्यगतयो वाक्यानामर्थावबोधनप्रकाराः । न्यायस्त्वौपाधिकानामुपाधीनां च मिथ्यात्वप्रतिपादनयुक्तिः । प्रत्यग्रूपं प्रतीचः स्वरूपभूतं तटस्थमित्यर्थः । तच्छब्दवाच्ये शबले स्थितमधिष्ठानत्वेनानुगतमित्यर्थः । एवं भूतं विष्णोः पदं तत्पदलक्षितं वाक्यार्थान्वयि गृह्यतामिति योजना ॥ २९१ ॥

सु० टी०—तत्र प्रमाणत्वेन मन्त्रमुदाहरति—

अशब्दमस्पर्शमरूपमव्ययं
तथाऽरसं नित्यमगन्धवच्च यत् ।
अनाद्यनन्तं महतः परं ध्रुवं
निचायनीयं पदमीदृशं हरेः ॥ २९२ ॥

अशब्दमिति । नित्यमशब्दं नित्यमस्पर्शमित्येवं सर्वत्र योज्यम् । महतः परमित्यव्यक्तप्राप्तौ । ध्रुवमित्यविकारित्वमुच्यते । निचाय्येत्यन्त्यपादस्यार्थमाह—निचायनीयमिति ॥ २९२ ॥

अ० टी०—शोधिते तत्पदलक्ष्ये प्रमाणत्वेन काठकमन्त्रवाक्यमुदाहरति—**अशब्दमस्पर्शमिति** । अशब्दमित्यादौ प्रतिपदं नित्यपदं योज्यं नित्यमशब्दं नित्यमस्पर्शमित्यादि । अव्ययं गुणावयवापचयनिमित्तव्ययरहितं निर्गुणं निरवयवं चेत्यर्थः । पूर्वोक्तपञ्चभूततद्धर्मव्यावृत्तस्वरूपत्वे हेत्वर्थं विशेषणमनाद्यनन्तमिति पूर्वोत्तरावधिविधुरमित्यर्थः । आद्यन्तविकारनिषेधादेव मध्यवर्तिनोऽस्तित्वादयोऽपि विकाराः प्रतिषिद्धा वेदितव्याः । महतः परमिति जीवाद्वैलक्षण्यमाह । महानिति बुद्धिरुच्यते तदुपाधिको जीव इह महानिति

विवक्ष्यते तस्मात्परम् । एतावत्युक्तेऽपि महत्त्वात्परमव्यक्तमव्याकृताख्यं प्राप्तं तदर्थमाह— **ध्रुवमिति** । अविचलं न परिणामीत्यर्थः । किंबहुना सर्वाचेतनतद्गतचिद्भासलक्षणं तत्त्वं परमात्मानं निचाय्याहमस्मीत्यवगम्य मृत्युमुखात्संसारबन्धनात्प्रकर्षेण मुच्यत इति मन्त्रार्थः ॥ २९२ ॥

**सु० टी०—मन्त्रान्तरमप्याह—**

**भोक्ता भोज्यं प्रेरितारं च मत्वा**
**सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत् ।**
**जीवेशानौ सृज्यमानं जगच्च**
**शुद्धं ब्रह्मेत्याह वेदान्तवाक्यम् ॥ २९३ ॥**

भोक्ता भोज्यमिति । **भोक्तेति । द्वितीयार्थे । जीवं प्रपञ्चमीश्वरं च तत्त्रिविधं मत्वा युक्त्या विचार्य ब्रह्मैवेति मे मया मन्त्रद्दशा प्रोक्तमिति । पूर्वार्धस्यार्थमाह—जीवेशानावित्युत्तरार्धेन** ॥ २९३ ॥

अ० टी०—अत्रैव श्वेताश्वतरोपनिषन्मन्त्रं पठति—**भोक्ता भोज्यमिति** । भोक्तेति प्रथमा द्वितीयार्था । भोक्तारं जीवं भोज्यं प्रपञ्चं प्रेरितारं च मत्वा युक्तितो विचार्य सर्वं तत्त्रिविधं मे मह्यं ब्रह्म प्रोक्तं ब्रह्मव्यतिरेकेण नैतत्त्रिविधमस्ति ब्रह्मैवास्तीति प्रोक्तमिति मन्त्रदृशो वचनार्थः । एतन्मन्त्रार्थमाह—जीवेशानाविति ॥ २९३ ॥

**सु० टी०—शोधितपदार्थधीरेव मुक्तिसाधनमिति शिष्याभिप्रायमालक्ष्य निराकरोति—**

**पदार्थबोधेन कृतार्थता न ते**
**मतिः परोक्षा हि पदार्थगोचरा ।**
**अतो महावाक्यनिबन्धनैव धी-**
**रबोधविच्छेदकरी भविष्यति ॥ २९४ ॥**

पदार्थेति । **कुत इति चेत्तत्राऽऽह**—मतिरिति । **यद्यपि शोधितं ब्रह्मप्रत्यग्रूपावसानं तथाऽपि युक्तितस्तज्ज्ञानं लिङ्गादिव्यवधानात्परोक्षं नापरोक्षाज्ञाननिवर्तकमित्यर्थः । कुतः पुनरपरोक्षधीः स्यादिति तत्राऽऽह** अत इति ॥ २९४ ॥

अ० टी०—पदार्थतत्त्वबोधेनैव कृतार्थतां मन्वानं शिष्यं प्रति नैतावता ते कृतार्थता महावाक्यार्थबोधमन्तरेण पदार्थद्वयगतपारोक्ष्यसद्वयत्वांशानिवृत्तेस्तन्निवृत्तिं विनाऽखण्डान-

न्दानुभवाभावेनाकृतार्थत्वतादवस्थ्यादित्यभिप्रेत्याऽऽह—**पदार्थबोधेनेति** । पदार्थगोचरा हि मतिः परोक्षा युक्तिमात्रोपनिबद्धत्वादित्यर्थः । सुगममन्यत् ॥ २९४ ॥

**सु० टी०—ननु श्रुतिवाक्यादपि व्युत्पन्नानां परोक्षबुद्धिदर्शनात्कथं ततोऽप्यपरोक्षा सेत्याशङ्क्य तस्यापि वाक्यस्य बहुनियमापेक्षत्वमाह—**

**स्वाध्यायधर्मपठितं निजवेदशाखा-**
**वेदान्तभूमिगतमादरपालितं च ।**
**संन्यासिना परदृशा गुरुणोऽपदिष्टं**
**साक्षान्महावचनमेव विमुक्तिहेतुः ॥ २९५ ॥**

स्वाध्यायेति । **अध्ययनविधिबोधितधर्मानतिक्रमेण पठितमित्यर्थः । निजेत्यन्तरङ्गत्वादुक्तम् । आदरेति दीर्घकालनैरन्तर्यादेरप्युपलक्षणार्थम् ।** संन्यासिनेति । **‘ श्रोत्रियं ब्रह्मनिष्ठम् ’ [ मुण्ड० १ । २ । १२ ] इति श्रुतेः ॥ २९५ ॥**

अ० टी०—वाक्यमपि स्वार्थं बोधयत्पूर्ववृत्तबहुनियमापेक्षमेव बोधयति न यस्य कस्यचिद्यथाकथंचिच्छ्रवणमात्रादित्यभिप्रेत्याऽऽह—**स्वाध्यायधर्मेति** । महावचनं महावाक्यमेव साक्षाद्विमुक्तिहेतुरिति संबन्धः । आद्येन विशेषणेनाध्ययनविधेरत्र प्रामाण्यसूचनाल्लिखितपाठादिना नियमहीनाध्ययनेन वा गृहीतवाक्यव्यावृत्तिः क्रियते । द्वितीयेन परशाखागतवाक्यस्य प्राधान्येन ग्रहणव्युदासः स्ववेदशाखासिद्धैरेव कर्मविज्ञानैः स्वस्य श्रेयःप्राप्तिरिति स्मृत्याचारप्रसिद्धं शाखारण्डत्वेनान्यशाखानिष्ठस्य निन्दाप्रायश्चित्तयोरुपलम्भात् । स्वशाखावाक्येन सिद्धेऽर्थे मतिदार्ढ्याय संवादितया परशाखावाक्यग्रहणं न प्रतिषिध्यते । आदारपालितमित्यध्ययनात्प्रभृति संन्यासकालपर्यन्तमविस्मरणं विवक्ष्यते । तेन च ब्रह्मोज्झत्वादिदोषराहित्यं साधकस्याभिप्रेतम् । ‘ तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत्समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् ’ [ मुण्ड० २ । १२ ] इतिशास्त्रमाश्रित्याऽऽह—**संन्यासिनेति** । तस्य परदृशेति विशेषणेन भेदाभेदनिष्ठकुटीचकादिसंन्यासी गुरुत्वे व्यावर्त्यते ॥ २९५ ॥

**सु० टी०—महावाक्यादेव मुक्तिफलः साक्षात्कारो भवतीत्यत्र किं प्रमाणमिति तत्राऽऽह—**

**नावेदविन्मनुते पुरुषं बृहन्त-**
**मित्याह वेदवचनं कथमन्यथैतत् ।**

---

१ क.ङ. विद्धि म°। घ. विच्च म° ।

**वाक्यान्तरं च कथमाह पुमांसमेनं**
**साटोपमौपनिषदत्वविशेषणेन ॥ २९६ ॥**

नावेदविदिति । **अन्यथा कथमेवमाहेत्यन्वयः । वाक्यान्तरं 'तं त्वौप-निषदम्' [ बृह० ३ । ९ । २६ ] इत्यादि । साटोपं सगर्वम् ॥ २९६ ॥**

अ० टी०—वेदान्तवाक्यादेव प्रत्यक्तत्त्वावगतिर्मुक्तिहेतुर्नान्यतस्तदवगतिरित्यत्र प्रमाणमाह—**नावेदविदिति** । अत्र वेदशब्दो वेदान्तवचनः । अवेदविद्वेदान्तानाभिज्ञः वेदान्तवाक्यविचारहीन इति यावत् तं बृहन्तमिति । 'येन सूर्यस्तपति तेजसेद्धः' इति । पूर्ववाक्योक्तः सूर्यादीनामपि प्रकाशकश्चित्सदानन्दः परमात्मा परामृश्यते तं बृहन्तं ब्रह्मरूपमवदेविन्न मनुते न विजानातीत्याह वेदवचनमेतत्कथमन्यथा स्याद्ब्रह्मात्मतत्त्वस्य प्रमाणान्तरगम्यत्व एतद्वाक्यं निर्विषयप्रमाणं स्यादित्यर्थः । 'तं त्वौपनिषदं पुरुषं पृच्छामि' [ बृ० ३ । ९ । २६ ] इत्येतदपि वाक्यमत्र प्रमाणमित्याह—**वाक्यान्तरमिति** । यदि मानान्तरविषयः परमात्मा भवेत्तदा साटोपं ससंभ्रममौपनिषदत्वविशेषणेन पुमांसं कथमाहेति योजना । अन्यवेद्यत्व औपनिषदत्वविशेषणमनर्थकं स्यादित्यर्थः ॥ २९६ ॥

**ननु 'नावेदविन्मनुते तं बृहन्तम्' 'तं त्वौपनिषदम्' [ बृह० ३ । ९ । २६ ] इति च वेदोपनिषदोर्ब्रह्मज्ञानसाधनत्वमुच्यते न तु महावाक्यस्येति तत्राऽऽह—**

**उपनिषदिति वेद इत्यपीदं**
**समभिवदन्ति महावचो महान्तः ।**
**फलवदवगतिः स्यादन्तरेणैतदेकं**
**वचनमिति न शक्यं वक्तुमित्यादरोऽस्मिन् ॥२९७॥**

उपनिषदिति । **तत्र हेतुमाह**—फलवदिति । **एतदेकं वचनमन्तरेण फलवदवगतिः स्यादिति वक्तुं न शक्यमिति योज्यम् ॥ २९७ ॥**

अ० टी०—औपनिषद इतिविशेषणेनोपनिषत्सु सम्यगवतत्वं पुरुषस्योच्यते । तथा नावेदविदित्यत्र वेदैकवेद्यत्वं पुरुषस्योक्तं तत्रोपनिषदिति वेद इति च वेदैकदेशे सर्वस्यां वेदशाखायां च प्रसिद्धेः कथं महावाक्यैकगम्यत्वे ब्रह्मतत्त्वस्यैतत्प्रामाण्यं स्यादित्यत आह—**उपनिषदिति वेद इति** । महान्तोऽध्यात्मनिरूपणकुशला उपनिषदिति वेद इत्यपीदं पूर्वोक्तं महावचः समभिवदन्ति प्रसिद्धिपरित्यागेनावयवव्युत्पत्त्या महावाक्ये शब्दद्वयं प्रयुञ्जत इत्यर्थः । तत्र निमित्तमाह—**फलवदिति** । एतदेकं महावाक्यलक्षणं वचनमन्तरेण फलवद्ब्रह्मावगतिः स्यादिति न शक्यमन्यस्य सर्वस्य तत्र परोक्षज्ञानहेतुत्वादिहेतो-

रस्मिन्महावाक्ये महतामादर इत्यर्थः । अस्मिंश्च पद्ये पूर्वोत्तरार्धयोर्वृत्तभेदः प्रामादिको ज्ञेयः ॥ २९७ ॥

सु० टी०—उपसंहरति—

उपनिषदिति शब्दो वेदशब्दश्च तस्मा-
च्छ्रुतिशिरसि निविष्टो योज्यतामत्र वाक्ये ।
अपरमखिलमस्यैवाङ्गभूतत्वहेतो-
रिह समभिनिविष्टं तद्गिरो वाच्यमासीत् ॥ २९८ ॥

उपनिषदिति । वेद्यते ज्ञाप्यतेऽनेन परं ब्रह्मेति वेदो महावाक्यम् । तदेवोपनयत्यात्मानं ब्रह्मत्वेनेत्युपनिषदिति योज्यतामित्यर्थः । तर्हि महावाक्यातिरिक्ते कथं वेदोपनिषच्छब्दावित्यत्राऽऽह—अपरमिति । अन्यदपि महावाक्यशेषतया तदन्तर्भूतं सदुपनिषत्त्वंदस्य वाच्यमासीदित्यर्थः ॥ २९८ ॥

अ० टी०—यस्मादेवं महतामत्राऽऽदरस्तस्मान्महावाक्य एव शब्दद्वयं योज्यमित्याह—**उपनिषदिति शब्द इति** । उप समीपे प्रत्यगात्मानमव्यवधानेन ब्रह्म गमयतीत्युपनिषन्महावाक्योत्था ब्रह्मविद्या ब्रह्मप्रत्यगात्माऽभेदेन वेदयतीति वेदोऽपि सैव सा च महावाक्यैकनिबन्धनेति श्रुतिशिरासि वेदान्तभागे निविष्ट उपनिषदितिशब्दो वेदशब्दश्चात्र महावाक्ये योज्यतामिति योजना । तर्हि महावाक्यव्यतिरिक्तेषु शब्देषु कथमुपनिषदादिशब्दप्रवृत्तिः पाठकानां तत्र तच्छब्दव्यवहारदर्शनादिति चेत्तत्राऽऽह—**अपरमिति** । अपरं महावाक्यव्यतिरिक्तमखिलं वाक्यमस्य महावाक्यस्याङ्गभूतत्वहेतोरेवैतच्छेषत्वादेवेह महावाक्ये समभिनिविष्टमेतदेकवाक्यतयैतस्मिन्नन्तर्भूतं सत्तद्गिरो वेदोपनिषच्छब्दवाच्यमासीन्न प्राधान्येन मुख्यतयेत्यर्थः ॥ २९८ ॥

सु० टी०—किं पुनर्महावाक्यस्य ब्रह्मज्ञानहेतुत्वे वेदोपनिषच्छब्दवाच्यत्वे वा गमकमिति चेत्तत्राऽऽह—

पित्रा तत्त्वमसीतिबोधनमनु स्पष्टं विजज्ञाविति
च्छान्दोग्ये यदवोचदेतदिह नो लिङ्गं भवेज्ज्ञापकम् ।
सर्वत्रैव महागिरामुपनिषच्छब्दो भवेद्ग्राहको
वेदश्चायमतोऽन्यदस्य निकटं तेनात्र वेदादिगीः ॥ २९९ ॥

पित्रेति । छान्दोग्यषष्ठे हि पित्रा 'तत्त्वमसि' [ छा० ६ । ८ । ७ ] इति प्रतिपादनानन्तरं 'तद्धाऽस्य विजज्ञौ' [ छा० ६ । ७ । ६ ]

**इति साक्षात्तत्त्वबोधेन श्वेतकेतोः कृतार्थत्वदर्शनाल्लिङ्गात्तदेव ब्रह्मधी-जनकं वेदोपनिषच्छब्दवाच्यं चेति निश्चितमित्यर्थः ॥ २९९ ॥**

अ० टी०—तत्त्वमस्यादिमहावाक्यमेव साक्षात्तत्त्वबोधकमित्यत्र लिङ्गमाह—**पित्रेति** । बोधनमनूपदेशसमनन्तरमेव ‘ तद्धास्य विजज्ञौ ’ [ छा० ६ । ७ । ६ ] इति स्पष्टं छान्दोग्ये यदवोचदेतन्नोऽस्माकमिह महावाक्यस्यैव साक्षात्तत्त्वबोधकत्वमित्यत्र ज्ञापकं लिङ्गं भवेत् । तथा च सर्वत्रैव वेदान्तेषु महागिरां ग्राहक उपनिषच्छब्दो भवेद्वेदश्चायं महावाक्यलक्षण एवार्थात्सिद्ध इत्यर्थः । अतोऽन्यन्महावाक्यातिरिक्तमस्य महावाक्यस्य निकटं तदपेक्षितार्थसमर्पकत्वेन तदेकार्थनिष्ठं यतस्तेन हेतुनाऽत्र वाक्यान्तभागे वेदादि-गीरध्येतॄणामित्यर्थः ॥ २९९ ॥

**सु० टी०—ननु धात्वर्थस्य विशरणगत्यवसादनलक्षणस्य ब्रह्मवि-द्यायां संभवात्सैवोपनिषच्छब्दस्य मुख्योऽर्थो न महावाक्यमित्याश-ङ्क्याऽऽह—**

**उपनिषद्वचसा परमात्मधीः**
**सहजशक्तिवशेन निगद्यते ।**
**[1]उपचरय्य महागिरि वर्तते**
**निकटभावमपेक्ष्य तु मुख्यगीः ॥ ३०० ॥**

उपनिषदिति । सहजेति । **अविद्यातत्कार्यनिरासलक्षणधात्वर्थयोगेनेत्यर्थः । कथं तर्हि महावाक्ये प्रयोगस्तत्राऽऽह**—उपचरय्येति । **तर्हि कथं तत्र मुख्यगीस्तत्राऽऽह**—निकटेति ॥ **३०० ॥**

अ० टी०—महावाक्यस्य साक्षाद्बोधकत्वमात्रेणोपनिषच्छब्दवाच्यत्वं कथं गम्यत इत्यपेक्षायामुपनिषच्छब्दस्य तावत्साक्षान्मुख्यार्थमाह—**उपनिषद्वचसेति । सहजश-क्तिवशेनेति** । सदेरुपनिपूर्वस्य धातोः स्वभावसिद्धसामर्थ्येनेत्यर्थः । तर्हि कथं महा-वाक्य उपनिषच्छब्दो व्याख्यात इति तत्राऽऽह—**तदुपचर्येति** । वाक्यान्तरापेक्षया मुख्यार्थेऽप्युपनिषत्पदं महागिर्युपचाराद्वर्तत इत्यर्थः । तर्हि महावाक्ये मुख्यमिति कथं पूर्वमुपपादितमित्यत आह—**निकटभावमिति** । वाक्यान्तरापेक्षया मुख्यार्थेऽ-प्युपनिषद्ब्रह्मविद्यायां निकटभावमपेक्ष्य तु महावाक्येऽप्युपनिषद्गीर्मुख्येत्युक्तमिति न दोष.

---

१ ख. घ. ङ. तदुपचर्य म° ।

इत्यर्थः । विद्यापेक्षया महावाक्येषूपनिषद्वेदपदयोरमुख्यत्वेऽपीतरवाक्यापेक्षया विद्यां प्रति नैकट्यात्तत्र मुख्यत्ववचनं युक्तमिति भावः ॥ ३०० ॥

**सु० टी०—तदेव प्रपञ्चयति—**

**उपनिषद्वचसाऽभिहिताऽऽत्मधी-**
**र्निकटवर्तिमहागिरि मुख्यवत् ।**
**उपनिषद्वचनं तदवान्तरे**
**वचसि गौणवदत्र विवक्ष्यते ॥ ३०१ ॥**

उपनिषद्वचसेति । मुख्यवदिति । **बहुतरप्रयोगादुपचारोऽपि मुख्यतुल्य इत्यर्थः । अवान्तरवाक्येऽपि प्रयोगबाहुल्यमविशिष्टमिति चेत्तत्राऽऽह—** तदिति **॥ ३०१ ॥**

अ० टी०—उक्तमेवार्थं विशदयति—**उपनिषद्वचनाभिहितेति** । उपनिषदिति वचनेन मुख्यया वृत्त्याऽभिहिता सती विद्या निकटवर्तिमहागिरि मुख्यवद्विवक्ष्यत इति संबन्धः । तदवान्तरे वचस्युपनिषद्वचनं गौणवदत्र वेदान्तेषु विवक्ष्यत इति योजना॥३०१

**सु० टी०—पूर्वोक्तं लिङ्गमेव स्मारयित्वोपसंहरति—**

**यतो महावाक्यत एव पुत्रो**
**विजज्ञिवानस्य पितुः सकाशात् ।**
**इति श्रुतं तेन स एव वेद-**
**स्तथैव सैवोपनिषच्च सिद्धा ॥ ३०२ ॥**

यत इति । **पितुरुद्दालकस्य सकाशादित्यर्थः ॥ ३०२ ॥**

अ० टी०—साक्षादवगतिहेतुत्वं महावाक्यस्येत्यत्र पूर्वोक्तं लिङ्गं स्मारयति—**यतो महावाक्यत इति** । पुत्रः श्वेतकेतुः पितुरुद्दालकात्सकाशान्महावाक्यत एवास्य परमात्मनस्तत्त्वं विजज्ञिवानिति यतो यस्माच्छ्रुतं छान्दोग्ये तेन वेदहेतुत्वेन स एव वेदस्तन्महावाक्यमेव वेदः पुंलिङ्गत्वानिर्देशो विधेयाभिप्रायेण । तथैव वेदवाच्यत्ववत्सैवोपनिषच्च सिद्धा । अत्रापि लिङ्गनिर्देशः पूर्ववत् ॥ ३०२ ॥

**सु० टी०—अन्वयमुक्त्वा व्यतिरेकमप्याह—**

**विना महावाक्यमतो न कश्चि-**
**त्पुमांसमद्वैतमवैति जन्तुः ।**

---

१ क. °चनाभिहिता सती नि° ।

ततः पदार्थावगमान्न मुक्ति-
र्घटिष्यते तस्य परोक्षभावात् ॥ ३०३ ॥

विनेति । अद्वैतं पुमांसमिति संबन्धः । निगमयति—तत इति ॥ ३०३ ॥

अ० टी०—तस्मान्महावाक्यादेव तत्त्वावगतिर्मुक्तिफला नान्यतोऽवगतिरिति सिद्धमित्युपसंहरति—**विना महावाक्यमिति** । अत इति प्रथमं योज्यमुक्तान्यायादित्यर्थः । एवं च पदार्थशोधनमात्रेण कृतकृत्यतेति यदुक्तं तदपि सत्यमेवेति सिद्धमित्याह—**ततः पदार्थेति** । पदार्थावगमान्मुक्त्यभावे हेतुमाह—**तस्येति** । पदार्थावगमस्य परोक्षत्वादपरोक्षसंसारानिवर्तकत्वासंभवात्ततो न मुक्तिसिद्धिरित्यर्थः ॥ ३०३ ॥

सु० टी०—तर्हि किमर्थं पदार्थनिरूपणमिति चेत्तत्राऽऽह—

पदार्थबोधं परिहृत्य वाक्यं
न शक्तमात्मानुभवावसानाम्[1] ।
धियं समानेतुमपेक्षितत्वा-
दतः स यत्नेन निरूपितोऽभूत् ॥ ३०४ ॥

पदार्थेति । आत्मानुभवेति । अपरोक्षाकारामित्यर्थः ॥ ३०४ ॥

अ० टी०—तर्हि पदार्थशोधनं किमर्थं कृतमिति चेन्महावाक्यशेषतयेत्याह—**पदार्थबोधमिति** । वाक्यमत्राखण्डे ब्रह्मात्मवस्तुनि पदार्थबोधं परिहृत्यानुभवावसानां धियं समाने तु मुक्तं यतोऽतोऽपेक्षितत्वात्स पदार्थो यत्नेन निरूपितोऽभूदिति योजना ॥ ३०४ ॥

सु० टी०—कोऽसौ पदार्थो यस्य ज्ञानं वाक्यार्थज्ञाने हेतुरिति तत्राऽऽह—

तच्छब्दादवगतमद्वितीयमासी-
त्प्रत्यक्त्वं समधिगतं त्वमित्यनेन ।
प्रत्यक्त्वं न खलु विना द्वितीयमेवं
नाद्वैतं भवितुमलं विना प्रतीचा ॥ ३०५ ॥

तच्छब्दादिति । तथाऽपि भेदेन ज्ञातयोः कथमखण्डार्थधीरिति तत्राऽऽह—प्रत्यक्त्वं न खल्विति । परस्परतावन्मात्रत्वादित्यर्थः ॥ ३०५ ॥

---

१ क. °क्तमत्रानु° ।

अ० टी०—पदार्थशोधनेन वाक्यस्य क उपकारो जायत इति वीक्षायां वाक्यार्थे संभावनैवोपकार इत्याह—**तच्छब्दादिति** । पदार्थशोधने कृते मिथःपदार्थयोस्तादात्म्यरूपान्वयविरोध्यंशापोहेन तच्छब्दादद्वितीयमवगतमासीत्त्वमित्यनेन पदेन प्रत्यक्त्वमवगतमासीदद्वितीयतया प्रत्यङ्मात्रेण च पदद्वयलक्ष्यं समधिगतमित्यर्थः । एवंसति तयोश्चात्यन्तमेकत्वमेव संपन्नमित्याह—**प्रत्यक्त्वं न खल्विति** । अद्वितीयमद्वितीयब्रह्मात्मत्वं विना त्वमर्थस्य प्रत्यक्त्वं न खलु भवितुमलम् । प्रत्यक्त्वं नाम सर्वान्तरत्वं तद्ब्रह्मणो व्यावृत्तस्य न निरङ्कुशं भवेदिति पदार्थशोधनेन त्वमर्थस्य प्रत्यक्त्वं सिध्यद्ब्रह्मात्मनैव सिध्यतीत्यर्थः । एवं प्रतीचा प्रत्यक्त्वेन विना न खलु तदर्थस्याद्वितीयत्वं भवितुमलं न हि प्रतीचो व्यावृत्तस्याद्वितीयता स्यादित्यर्थः । पदार्थशोधने कृते सति तयोर्भिन्नलक्षणत्वव्युदासेनैकलक्षणतायां संभावितायां महावाक्यात्तदैक्यावगतिसमये तदर्थस्य पारोक्ष्यं त्वमर्थस्य सद्वयत्वं च निवर्त्यंत इति पूर्णाखण्डैकरसवाक्यार्थसिद्धिरिति पदार्थशोधनमर्थवदिति भावः ॥ ३०५ ॥

**सु० टी०—ननु तर्कवशादपि सर्वानात्मनिरासेन वस्तु प्रदर्शितमेव किं पुनर्वाक्यादधिकं भवतीति चेत्तत्राऽऽह—**

**तर्कप्रतीतिसमयेऽपि तदद्वितीयं**
**प्रत्यक्परिस्फुरति तत्प्रतिबिम्बितं सत् ।**
**वेदान्तवाक्यजनिताद्वयबुद्धिभूमि-**
**निष्ठं पुनः स्फुटतरं भवतीति भेदः ॥ ३०६ ॥**

तर्केति । **तदिति तर्कजन्यवृत्तिप्रतिफलितम् । अद्वयेत्यखण्डाकारवृत्तावभिव्यक्तं ततश्च तर्कजज्ञानस्य परोक्षत्वादपरोक्षज्ञानाय वाक्यमित्यर्थः ॥ ३०६ ॥**

अ० टी०—ननु तर्कवशादपि सर्वानात्मनिरासेन वस्तु प्रदर्शितं चेत्किं पुनस्ततो वाक्यादाधिक्यं भवेत् । नचेत्प्रदर्शितं वाक्यार्थसंभावनाऽपि ततः कुतः स्यादितिचेत्तत्राऽऽह—**तर्कप्रतीतिरिति** । तत्प्रतिबिम्बितं तर्कप्रतीतावाविर्भूतं सत्प्रत्यक्त्वेन परिस्फुरति सर्वानात्मनिरासेनाद्वितीयप्रत्यगाकारा धीस्तर्कवशादपि जायत इत्यर्थः । तर्हि वाक्यवैयर्थ्यमित्युक्तं नेत्याह—**वेदान्तवाक्येति** । वेदान्तवाक्यजनिता चासावद्वया च सा शुद्धभूमिश्चेति तथोक्ता तस्यां निष्ठं प्रतिबिम्बितं सन्महावाक्यजन्याद्वयाकारा याऽसंभावनादिराहित्येन शुद्धा भूमिर्बुद्धिस्तन्निष्ठं सत् स्फुटतरं भवतीति शेष इत्यर्थः ॥ ३०६ ॥

सु० टी०—एतदपि कुत इत्याशङ्क्य वाक्यतर्कजन्बुद्ध्योः शुद्धितारतम्यादिति दृष्टान्तेनाऽऽह—

अधममध्यमशुद्धिनिरूपणे
परमशुद्धिनि चाऽऽननमात्मनः ।
तरतमक्रमतः प्रतिभासते
तदिव तत्त्वमिह प्रतिपत्तिषु ॥ ३०७ ॥

अधमेति । प्रतिपत्तिषु बुद्धिवृत्तिषु ॥ ३०७ ॥

अ० टी०—कुत इत्थं व्यवस्थेति चेत्तर्कवाक्यजन्यबुद्धेः शुद्धितारतम्यादिति हेतुमभिप्रेत्य दृष्टान्तमाह—अधममध्यमेति । दृष्टान्तार्थः स्पष्टः । दार्ष्टान्तिकमाह—तदिवेति ॥ ३०७ ॥

सु० टी०—तारतम्यमपि किंनिबन्धनमिति चेज्जनकस्वभावभेदादित्याह—

एकदेशमुपलभ्य धर्मिण-
श्चैकदेशमपरं विजानते ।
धर्मिधीव्यवधिकारणादतो
नानुमाऽनुभवनाय वस्तुनः ॥ ३०८ ॥

एकदेशमिति । ज्ञातसंबन्धस्यैकदेशदर्शनादेकदेशान्तरे बुद्धिरनुमानमित्युक्तं वृद्धैः । तथा च लिङ्गेन सामान्यव्याप्त्या पक्षे साध्यसामान्यस्य पक्षधर्मतया च तद्विशेषस्य साधनेऽपि प्रमातुर्व्यवहितस्यैव साधनान्नापरोक्षता तज्जन्यबोधस्य । वाक्यं तूक्तलक्षणया केवलाकारापरोक्षधीजनकमिति भेद इत्यर्थः ॥ ३०८ ॥

अ० टी०—बुद्धौ किंनिमित्तं तारतम्यमिति चेज्जनकस्वभावभेदादित्याह—एकदेशमिति । एकदेशदर्शनादेकदेशान्तरे बुद्धिरनुमानमिति हि प्रसिद्धं तथा च धर्मिणः पक्षस्यैकदेशं व्याप्यावच्छिन्नं देशमुपलभ्यापरं व्यापकावच्छिन्नं प्रदेशं विजानतेऽतो धर्मिधीव्यवधिकारणात्साधनावच्छिन्नधर्मिज्ञानव्यवधानाद्वस्तुनोऽनुभवाय न ह्यनुमा कल्पत

---

१ ख. घ. °नि दर्पणे ।

इति योज्यम् । तर्को हि प्रमाणसिद्धेऽर्थे संभावनामात्रहेतुता[त्वा]त्स्वयं तावन्न प्रमाणमतोऽप्रमाणात्तस्मान्नानुभवोत्पत्तिर्दृष्टसाधर्म्येणादृष्टेऽप्यर्थे प्रतीतिमुत्पादयन्नपि व्याप्तिलिङ्गपक्षादिधीव्यवधानेन तां व्यापकाकारामुत्पादयति । तथा च तस्याः प्रतीतेः साक्षाद्वस्तुसंस्पर्शित्वाभावान्न ज्ञेयवस्तुयाथात्म्याकारता भवति । अतः सा धीरशुद्धेति तत्र प्रतिबिम्बितमपि ब्रह्मात्मवस्तुसत्तामात्रेण सुषुप्तिव्यावृत्तिमात्रमवभासत इति परोक्षमेव भवति वाक्यं तु लक्षणया स्वगतवृत्त्या केवलवृत्त्या केवलब्रह्मात्माकारामेव धियं जनयेन्नित्यापरोक्षस्य तर्कतो देहादिसंघाताद्विविक्तस्य चिद्रूपप्रत्यगात्मन एव संशोधिताद्वयब्रह्मत्वावबोधनादतो वाक्यजन्यः प्रत्ययः शुद्धतर इति तत्रैवापरोक्षसंसारनिवर्तकापरोक्षब्रह्माकारता भवतीति युक्तैव यथोक्तव्यवस्थेति भावः ॥ ३०८ ॥

**सु० टी०—उक्तानुवादपूर्वकं वादान्तरमवतारयति—**

**एवं तावत्तत्त्वमर्थौ विशुद्धौ**
**बोद्धव्यं चेदन्यदस्तीति पृच्छ ।**
**यद्यद्बुद्धं तत्तदादाय तिष्ठे-**
**र्यच्चाबुद्धं तत्र चाऽऽधत्स्व चेतः ॥ ३०९ ॥**

एवं तावदिति । **सहजबहिर्मुखत्वादुक्तविस्मरणं वक्ष्यमाणाग्रहणं च संभावयन्नाह**—यद्यदिति ॥ ३०९ ॥

अ० टी०—पदार्थशोधनप्रकरणमुपसंहृत्य शिष्यस्य चोद्यावसरं ददाति—**एवं तावदिति ।** विशुद्धौ परागर्थाद्विविच्य निर्णीतावतः परं बोद्धव्यं चेदन्यत्किमप्यस्तीति मन्यसे तर्हि पृच्छ चित्तस्य स्वाभाविकबाहिर्मुख्यात्संभवत्यवगतेऽपि विस्मृतिरिति श्रुतार्थाविस्मरणे यत्न आधेय इत्याह—**यद्यद्बुद्धमिति ।** श्रुतार्थानुसंधाने लग्नचित्ततयाऽबुद्धबोधे प्रमादो न कार्यः किं तु तत्रापि कार्यमवधानमित्याह—**यच्चाबुद्धमिति** ॥ ३०९ ॥

**सु० टी०—शिष्यस्य प्रश्नमवतारयति—**

**बुद्ध्वा तत्त्वं पदार्थावनुभवविषयं कर्तुकामस्तदैक्यं**
**वाक्याद्वाक्यार्थनिष्ठाच्छ्रुतिशिरसि गतादञ्जसा तत्त्वमादेः ।**
**तच्छेषापन्नमस्मिञ्श्रुतिशिरसि वचोजातमन्यद्यदस्ति**
**तस्येयत्ताबुभुत्साकुलितनिजमतिःपृच्छति स्मैष भूयः ॥ ३१० ॥**

---

१ क. °ष्ठेयच्चा° ।

बुद्ध्वेति । **तत्त्वमादेर्वाक्यात्तदैक्यम् । अञ्जसा साक्षादनुभवविषयं कर्तुकाम इत्यन्वयः** । तच्छेषेति । **तदङ्गभूतावान्तरवाक्यपरिमाणबुभुत्सुरित्यर्थः ॥ ३१० ॥**

अ० टी०—एवं गुरुणाऽनुज्ञातस्य शिष्यस्य प्रवृत्तिमाह—**बुद्ध्वा तत्त्वंपदार्थाविति** । एष शिष्यस्तत्त्वंपदार्थौ बुद्ध्वा वाक्यार्थज्ञाननिष्ठाच्छ्रुतिशिरसि गतात्तत्त्वमादेर्वाक्यात्तदैक्यं पदार्थैक्यमञ्जसाऽनुभवविषयं कर्तुकामो भूयः पृच्छति स्मेति संबन्धः । वाक्यार्थज्ञाननिष्ठादित्यनन्यशेषत्वं सूच्यते । श्रुतिशिरसि गतादित्यवैदिकव्यावृत्तिः । तत्त्वमादेरित्यस्योपरि वाक्यादित्यध्याहारः । शिष्यप्रश्नप्रवृत्तौ निमित्तं कथयति—**तच्छेषापन्नमिति** । अस्मिञ्छ्रुतिशिरसि वेदान्तेष्विति यावत् । शेषापन्नं महावाक्यशेषतां गतमन्यदप्यवान्तरसंज्ञितं वचोजातं वाक्यकदम्बोऽस्ति यत्तस्येयत्ताबुभुत्साकुलितनिजमतिः सन्नवान्तरवाक्यपदेयत्तां जिज्ञासुः सन्नित्यर्थः । यद्यपि तत्पदावगतमद्वितीयं ब्रह्मेति स्थितं तथाऽपि किमात्मकं तदद्वितीयमित्यपेक्षायां सत्यज्ञानानन्दादिवाक्यात्तन्निर्णयमिति तद्गतपदेयत्तानिर्धारणार्थः प्रश्न इत्यभिप्रायः ॥ ३१० ॥

**सु० टी०—प्रश्नमेव दर्शयति—**

**अद्याप्यवान्तरवचः परिणामबोध-**
**वैकल्यमस्ति मम तेन महावचोऽपि ।**
**वाक्यार्थबुद्धिमनुभूतिफलावसानां**
**नोत्पादयत्यहरहः श्रुतमप्यशक्तेः ॥ ३११ ॥**

अद्यापीति । **अस्तु वैकल्यं किं तत इत्याह—**तेनेति **॥ ३११ ॥**

अ० टी०—प्रश्नप्रकारमाह—**अद्याप्यवान्तरेति** । वैकल्यमभावस्तेनोक्तबोधवैकल्येन महावचोऽप्यहरहःश्रुतमपीति संबन्धः । अशक्तेरितिपदेयत्तानियमाभावे साकाङ्क्षत्वाद्यापत्तौ नियतस्वार्थबोधनासामर्थ्यादित्यर्थः ॥ ३११ ॥

**सु टी०—उक्तमेव विभज्याऽऽह—**

**विधिमुखेन परस्य निवेदकं**
**वचनजातमवान्तरसंज्ञितम् ।**
**यदपि भेदनिषेधमुखेन त-**
**त्परिमितिं प्रतिपादय मेऽद्य भोः[१] ॥ ३१२ ॥**

१ सं. ग. न. ई. मे प्रभो ।

विधिमुखेनेति । **ज्ञानानन्दादिभावमुखेनानिषेधमुखेन निवेदकमित्यनुषङ्गः । परिमितिमियत्तामित्यर्थः ॥ ३१२ ॥**

अ० टी०—अवान्तरवच इत्युक्तमेव विभज्य दर्शयति—**विधिमुखेनेति ।** स्पष्टार्थः ॥ ३१२ ॥

**सु० टी०—गुरुरवान्तरवचसां परिमाणं दर्शयति—**

**सकलवेदशिरःसु परात्मधी-**
**परवचःसुः परापरबोधतः ।**
**अपुनरुक्तपदान्युपसंहर-**
**न्परिमितिं स्वयमेव तु वेत्स्यसि ॥ ३१३ ॥**

सकलेति । **प्रा[प्रमा]णादिविपयं गुणोपसंहारं प्रकृते वारयति**—परात्मेति । परापरेति । **सगुणनिर्गुणविवेकं कृत्वेत्यर्थः ॥ ३१३ ॥**

अ० टी०—एवं शिष्येण पृष्टे गुरुर्न्यायेनावान्तरवाक्यपरिमाणमाह—**सकलवेदशिरःस्विति ।** प्रथमं सकलवेदशिरःसु परापरबोधतः परविद्याविषयमिदं वाक्यमिदमपरविद्याविषयमिति विवेके कृते सति परमात्मधीपरवचःसु परविद्याविषयवाक्येष्वपुनरुक्तपदानि भिन्नशाखागतान्यप्युपसंहरन्वाक्यपरिमितिं स्वयमेव वेत्स्यसि वाक्यपरिमाणं त्वमेव ज्ञास्यसीति । यद्वा सकलवेदशिरःसूत्सर्गतः परमात्मधीपरवचःसु परापरभेदतोऽवान्तरतात्पर्येणापरविद्याविपयतया भेदे सति परविद्यायामपरविद्यायां च यथायोगमपुनरुक्तपदान्युपसंहरन्नुभयत्र वाक्यपरिमितिं स्वयमेव ज्ञास्यसीति योजना ॥ ३१३ ॥

**सु० टी०—ननु श्रुतैरेव पदैर्ब्रह्मज्ञानसंभवे किमुपसंहारेणेत्याशङ्क्याऽऽह—**

**अपुनरुक्तपदानि विना यतो**
**न परिपुष्कलबुद्धिसमुद्भवः ।**
**अपुनरुक्तपदानि ततस्तत-**
**स्त्वमुपसंहर तत्त्वबुभुत्सया ॥ ३१४ ॥**

अपुनरुक्तेति । **तत्तत्पदानुपसंहारे परिपूर्णब्रह्मावगत्ययोगादवश्यं पदान्तरोपसंहार इत्यर्थः । फलितमाह**—अपुनरुक्तेति । **ततस्ततो विद्यान्तरादित्यर्थः ॥ ३१४ ॥**

अ० टी०—ननु तत्र तत्र श्रुतैरेव पदैरलं किमुपसंहारेणेति चेन्नैवं तथा सति परिपूर्णब्रह्मावगत्यनुपपत्तेरित्याह—**अपुनरुक्तपदानि विनेति** । निर्गुणवाक्येषु तत्त्वबुभुत्सयोपसंहरेत्यर्थः । अर्थात्सगुणवाक्येषु विद्यैक्येऽवगते सति तत्र तत्र श्रुतविशेषणानामव्यर्थत्वायापुनरुक्तविशेषणोपसंहार उपासनायोपसंहर्तव्य इति द्रष्टव्यम् । अस्य च ग्रन्थस्य निर्गुणवस्तुविचारैकप्रधानत्वान्न सगुणवाक्यगतिः पृथक्चिन्त्यत इति न तदिह स्पष्टीकृतम् ॥ ३१४ ॥

**सु० टी०—उपसंहारे प्रमादं वारयितुं प्रागुक्तविवेकं स्मारयति—**

**कुरु परापरवाक्यविवेचनं**
**तदनुशब्दसमाहरणं कुरु ।**
**प्रियशिरःप्रभृतीनि च यत्नवा-**
**नुपचितापचितानि परित्यज ॥ ३१५ ॥**

कुर्विति । **शब्दसमाहरणं पदोपसंहारम् । परप्रकरणे श्रूयमाणानामपि प्रियशिरस्त्वादीनामुपसंहारं वारयति**—प्रियशिर इति ॥ ३१५ ॥

अ० टी०—एवमपुनरुक्तपदोपसंहारे क्रियमाणे प्रमादादपरविद्यावाक्यवर्तिपदोपसंहारोऽपि कदाचित्परविद्यायां स्यात्तथा परविद्यावाक्यवर्तिनः पदस्यापरविद्यायां तथा मा भूदित्युक्तं विभागकरणं पुनः स्मारयति—**कुरु परेति** । पूर्वभागः स्पष्टार्थः । निर्गुणवाक्येऽपि यत्किंचिन्निर्गुणवस्तुप्रतिपादनद्वारतयोक्तं परापेक्षं रूपं ' तस्य प्रियमेव शिरः ' [ तै० २ । ५ । १ ] इत्यादि तन्निर्गुणप्रकरणस्थमपि नोपसंहर्तव्यमित्याह—**प्रियशिर इति** । उपचितापचितत्त्वं हि सविशेषत्वापेक्षमानन्दाभिव्यञ्जकोपाधीनामन्तःकरणवृत्तीनां प्रतिप्राण्युपचितापचितरूपत्वात्प्रियशिरस्त्वादयोऽव्यवस्थिता इति न ते ब्रह्मस्वरूपलक्षणत्वेनोपसंहार्या इत्यर्थः ॥ ३१५ ॥

**सु० टी०—परित्यागे हेतुमाह—**

**उपचितापचितानि न निर्गुणे**
**प्रियशिरःप्रभृतीनि कदाचन ।**
**निपुणधीरपि कश्चन योजये-**
**दपि तु कोशगुणाः कथिता ह्यमी ॥ ३१६ ॥**

उपचितेति । **भावीष्टज्ञानतल्लाभतद्भोगजसुखात्मकप्रियमोदादिवृत्तीनां न्यूनाधिकसुखव्यञ्जकत्वेनोपचितापचितानां विशेषापेक्षितत्वान्न निर्गुणे**

**तत्संभव इत्यर्थः । ब्रह्मधर्मत्वाभावे कथं ब्रह्मप्रकरणे पाठस्तत्राऽऽह—** अपि तु कोशेति । **तत्र कोशद्वारेण ब्रह्मणः प्रतिपाद्यत्वात्कोशधर्माः सन्तो ब्रह्मतत्त्वबोधन उपयुज्यन्ते । न ब्रह्मधर्मा इत्यर्थः ॥ ३१६ ॥**

अ० टी०—प्रियशिरस्त्वादीनामुपचितापचितत्वनिर्देशप्रयोजनमनुपसंहार्यत्वं विशदयति—**उपचितापचितानि नेति** । निर्गुणे निर्विशेषे ब्रह्मण्युपचितापचितरूपाणां प्रियशिरःप्रभृतीनां सविशेषत्वकरत्वेन विरोधादेव नोपसंहारो बुद्धिमता क्रियेतेत्यर्थः । ननु यत्र श्रुतानि प्रियशिरस्त्वादीनि तत्र चेत्संभवन्ति तर्हि ततोऽन्यत्रापि वेद्यैक्ये सति कथं न संभवेयुरिति चेन्मैवं श्रुतस्थलेऽपि तेषां ब्रह्मधर्मत्वाभावादित्याह—**अपि तु कोशगुणा इति** । यद्यप्येते श्रुतस्थलेऽपि न ब्रह्मधर्मा विवक्षिता अपि तु कोशधर्मा एव तथाऽपि तत्र कोशद्वारा ब्रह्मणः प्रतिपाद्यमानत्वात्कोशधर्माः सन्तो ब्रह्मण्यप्युपरज्यन्ते केवलमिति ब्रह्मधर्मत्वमेषां कृत्वा चिन्तयाऽयं प्रपञ्चः कृत इति भावः ॥ ३१६ ॥

**सु० टी०—उपसंहरति—**

**इति वचः परिमाणमुदीरितं**
**विधिवचःसु निषेधगिरः शृणु ।**
**बहु निषेध्यममूष्वपि तेन ता-**
**स्वपि समाहर पूर्ववदेव तत् ॥ ३१७ ॥**

इतीति । **तर्हि किं समाप्तैव गुणोपसंहारचर्चा नेत्याह—**निषेधेति । **निषेधस्य ब्रह्मस्वरूपत्वासंभवात्कथं तद्वाचकपदोपसंहार इति चेत्तत्राऽऽह—**बहु निषेध्यमिति । **स्वरूपाकारबुद्ध्यजनकत्वेऽपि तद्गततत्तदाकारारोपनिवर्तनादुपपन्नस्तदुपसंहार इत्यर्थः ॥ ३१७ ॥**

अ० टी०—एवं विधिवाक्यपरिमाणं व्युत्पाद्य निषेधवाक्यपरिमाणं वक्तुमाह—**इति वच इति** । निषेधगिरां परिमाणं शृण्विति संबन्धः । विधिवचःसु तत्तदनृतादिविरोध्यर्थव्यवच्छेदेन भावात्मस्वरूपावगतिपरेषु सत्यज्ञानानन्तानन्दपदेषु वचःपरिमाणं वाक्यपरिमाणमितीत्थमुदीरितमतः स्वरूपावगत्यर्थमेव विधिपदान्युपसंहरणीयानीत्यर्थः । निषेधगिरां परिमाणं शृण्वित्युक्तं तत्र विधिपदेभ्यो निषेधपदानामुपसंहारे विशेषमाह—**बहु निषेध्यमिति** । अमूषु निषेधगीर्ष्वपि बहु निषेध्यमस्ति । यतस्तेन तास्वपि पूर्ववदेव विधिपदवदेव तदपुनरुक्तपदान्तरं समाहरेति योजना । निषेधपदानां तु निषेध्यबहुत्वान्निषेधार्थमेवोपसंहारः कार्य इत्यर्थः ॥ ३१७ ॥

**सु० टी०—उपसंहारविशेषं पूर्ववद्दर्शयति—**

**अपुनरुक्तनिषेध्यनिषेधकृत्**
**बहुपदाहरणं कुरु तास्वपि ।**
**यदि पुनर्न समाहरणं भवे-**
**त्परिमितिप्रतिषेधनमापतेत् ॥ ३१८ ॥**

अपुनरुक्तेति । **नन्वेकेनैव पदेन निषेधसिद्धौ किं बहुपदोपसंहारेणेति चेत्तत्राऽऽह**—यदीति । **नानाकारारोपस्यैकेन निषेधासंभवादित्यर्थः ॥ ३१८ ॥**

अ० टी०—पूर्ववदेव तदित्युक्तं विवृणोति—**अपुनरुक्तनिषेध्येति** । तास्वपि निषेधगीर्ष्वप्यपुनरुक्तनिषेध्यनिषेधकृतां बहुपदानामाहरणमुपसंहारं कुरु बहुविशेषणानिषेध्यानां बाहुल्यात्तन्निषेधे पदानामियत्तानियमो नास्तीति द्योत्यते । निषेधवाक्येषु बहुपदानुपसंहारे दोषमाह—**यदि पुनरिति** । परिमितप्रतिषेधे च न सम्यग्ब्रह्मणः शुद्धिः सिध्यतीति भावः ॥ ३१८ ॥

**सु० टी०—ननु विधिनिषेधोपसंहारयोः किं वैलक्षण्यं येन पृथग्वाद इति तत्राऽऽह—**

**विधिवचस्युभयं तु पदे पदे**
**भवति संग्रहवर्जनरूपकम् ।**
**स्वकवपुःपरिकल्पितरूपयो-**
**र्न तु निषेधवचःसु तथा मतम् ॥ ३१९ ॥**

विधीति । **विधिवचसि स्वकवपुःपरिकल्पितरूपयोरजडजडरूपयोरुभयसंभिन्नमेव रूपं पदे पदे भवति । नतु निषेधेषु तथेत्यन्वयः । तर्हि विधिवचस्युभयस्यापि ब्रह्मरूपत्वापत्तिस्तत्राऽऽह**—संग्रहेति । **उभयत्र संगतिग्रहसत्त्वेऽपि वाक्यार्थानुपपत्त्याऽनात्मांशत्यागान्नोभयमपि रूपमित्यर्थः ॥ ३१९ ॥**

अ० टी०—ननु सत्यादिपदानामप्यनृतादिव्यवच्छेदार्थत्वात्स्वरूपावगत्यर्थस्य चोभयेषामविशेषात्कुतो विधिनिषेधविभाग इति चेत्तत्राऽऽह—**विधिवचसीति** । उभयमित्युक्तमेव स्फुटयति—**संग्रहेति** । स्वकवपुःपरिकल्पितरूपयोर्यथासंख्यं संग्रहवर्जनरूपकं स्ववपुषोऽसाधारणब्रह्मरूपस्य संग्रहः साक्षात्प्रतिपादनं परिकल्पितरूपस्यानृतादिप्रपञ्चशा-

बल्यस्यार्थान्निरासश्चेत्युभयं विधिवचसि पदे पदे भवति निषेधवचःसु न तु तथोभयार्थत्वं मतं कल्पितरूपप्रतिषेधमात्र एव निषेधवचनसामर्थ्यादिति योजना ॥ ३१९ ॥

**सु० टी०—तर्हि निषेधवाक्येष्वेवं स्वी क्रियतामिति नेत्याह—**

**यदिह किंचिदबोधसमुद्भवं**
**तदखिलं प्रतिषेधति केवलम् ।**
**न तु किमप्युपगृह्य परे पदे**
**भगवतो निविशेत निषेधगीः ॥ ३२० ॥**

यदिहेति । **तत्राभावमात्रे संगतिग्रहणादित्यर्थः ॥ ३२० ॥**

अ० टी०—न तु निषेधवचःस्वित्युक्तमेव स्पष्टयति—**यदिह किंचिदिति ।** स्पष्टार्थः ॥ ३२० ॥

**सु० टी०—विशेषकथनमुपसंहरति—**

**इति विशेष इह प्रतिपादितो**
**विधिनिषेधगिरोरुभयोरपि ।**
**अपुनरुक्तपदाहरणं पुन-**
**र्विधिनिषेधवचःस्वविशेषि[1]तम् ॥ ३२१ ॥**

इतीति । **अविशेषस्तर्हि कुत्रेत्याशङ्क्याऽऽह**—अपुनरुक्तेति । **अविशेषितं तुल्यमित्यर्थः ॥ ३२१ ॥**

अ० टी०—उपपादितं विधिनिषेधवचसोरर्थविभागमुपसंहरति—**इति विशेष इति ।** तयोरेवाविशेषांशमप्युक्तमुसंहरति—**अपुनरुक्तेति** ॥ ३२१ ॥

**सु० टी०—ननु परिमितैः पदैः कथमपरिमितप्रपञ्चप्रतिषेधः स्यादिति तत्राऽऽह—**

**श्रुत[2]पदैरुपसंहतिशालिभि-**
**र्यदवशिष्टनिषेध्यनिषेधनम् ।**
**तदपि पूर्वमिहाभिमतं श्रुतेः**
**श्रुतपदान्युपलक्षणमेव हि ॥ ३२२ ॥**

---

१ ग. °शेषतः । १ क. श्रुतिप° ।

श्रुतपदैरिति । उपसंहृतिशालिभिर्दर्शितोपसंहारैरित्यर्थः । ननु तैरेव कथमवशिष्टनिषेधसिद्धिस्तत्राऽऽह—श्रुतपदानीति तत्तत्प्रपञ्चनिषेधकान्यश्रुतान्यपि कल्प्यानि श्रुतान्येव वाऽऽवर्तनीयानीत्यर्थः । किमत्र मानमिति तत्राऽऽह—अभिमतमिति । सजातीयविजातीयस्वगतभेदशून्यमात्मतत्त्वं बोधयन्त्याः श्रुतेरेव तथा तात्पर्यं बुध्यत इत्यर्थः ॥ ३२२ ॥

अ० टी०–पुनर्निषेधवाक्ये विधिवाक्येभ्यो विशेषे हेत्वन्तरमाह–श्रुतपदैरिति । निषेधवचःसु बहुपदाहरणं कुर्वित्युक्तं वा विवृणोति—श्रुतपदैरिति । तत्तत्प्रकरणे साक्षाच्छ्रुतपदैरन्यत्र श्रुतैरिहोपसंहृतैश्चापुनरुक्तपदैः सह शोभमानैः साक्षाच्छ्रुतैरुपसंहृतैश्च पदैरवशिष्टमनिषिद्धतया बुद्धावारूढं यन्निषेध्यमनात्मरूपं तन्निषेधनं तदपि तादृगर्थनिषेधकपदमपीह निषेधवाक्येषु पूर्वमभिमतं प्रागेवाध्याहारेणाप्युपसंहर्तव्यम् । श्रुतौ श्रुतानि पदानि तूपलक्षणमेवानुक्तानामपि निषेध्यनिषेधकपदानां कतिपयनिर्देशस्य प्रदर्शनमात्रत्वादित्यर्थः । विधिवाक्येषु यावच्छ्रुतमेवोपसंह्रियते तावतैव सजातीयविजातीयव्यावृत्ताखण्डस्वरूपसिद्धेः । निषेधवाक्येषु तु यावन्निषेध्यस्य निषेधकपदादर्शनान्निषेध्यान्तरे च बुद्धिस्थे तन्निषेधार्थपदकल्पनं ब्रह्मणः सर्वानात्मविलक्षणतया सम्यग्विशुद्धये कार्यमिति तात्पर्यार्थः ॥ ३२२ ॥

सु० टी०—विधिवाक्येऽपि तुल्योऽयं न्याय इति चेत्तत्राऽऽह—

समुपसंहृतशब्दसमन्वितैः<br>
श्रुतिपदैर्विधिवाक्यशतैः पुनः ।<br>
समुपलक्षणया न परात्मनः<br>
किमपि रूपमिहाभ्यधिकं मतम् ॥ ३२३ ॥

समुपसंहृतेति । तत्राभ्यधिकरूपाभावान्नोक्तन्याय इत्यर्थः ॥ ३२३ ॥

अ० टी०—विधिपदेष्वेतन्न भवतीत्यत्र युक्तिमाह—समुपलक्ष्यतयेति । सुगमम् ॥ ३२३ ॥

सु० टी०—तत्र श्रुतपदानुपलक्ष्यं रूपं ब्रह्मणो नास्तीति कुतो ज्ञानमिति चेत्तत्राऽऽह—

न खलु संश्रुतसंहृतशब्दयो-<br>
रविषयः परमात्मन इष्यते ।<br>
किमपि रूपममुत्र हि नास्ति नः<br>
किमपि मानमतो न तदस्ति नः ॥ ३२४ ॥

---

१ ख. ग. घ. °लक्ष्यतया° ।

न खल्विति । **वेदैकगम्यस्य ब्रह्मणः श्रुतोपसंहृतपदानवगम्यरूपे मानाभावान्न श्रुतिः पूरणीयेत्यर्थः ॥ ३२४ ॥**

अ० टी०—कुतो न मतमित्यत आह—**न खल्विति ।** स्वशाखास्वप्रकरणश्रुतस्य शाखान्तरात्प्रकरणान्तराद्वोपसंहृतस्य च पदस्याविषयभूतः परमात्मनोंऽशो न खल्विष्यत इति योजना । वेदैकगम्यस्य ब्रह्मणः श्रुतोपसंहृतपदावगम्यरूपव्यतिरिक्तरूपसद्भावे प्रमाणाभावान्नाश्रुतपदकल्पनया पूरणीयत्वं विधिवाक्येष्वित्यर्थः । एतदेव प्रकटयति—**किमपीति ।** अमुत्र परमात्मनि श्रुतोपसंहृतपदानवगम्यं रूपान्तरं नास्ति हीति प्रसिद्धम् । कुतो नास्तीत्यत आह—**किमपि मानमिति ।** अतः श्रुतिवचनात्परमात्मतत्त्वप्रतिपादकं मानं किमप्यन्यन्नोऽस्माकं नास्तीति योजना । इदमर्धपद्यं पूर्वपद्येन सहैकीकार्यम् ॥३२४॥

**सु० टी०—अन्यत्र श्रुतानां पदानामन्यत्रोपसंहारे का युक्तिरिति चेत्तत्राऽऽह—**

**गुणतया हि पदानि परात्मनो**
**विधिनिषेधवचःस्ववतस्थिरे ।**
**गुणगणो गुणितन्त्रतया गुणी**
**भवति यत्र हि तत्र भवत्यसौ ॥ ३२५ ॥**

गुणतयेति । **पदानां ब्रह्मावगत्यर्थत्वाद्यत्र यत्र ब्रह्म श्रूयते तत्र तत्र तानि गच्छन्तीत्यर्थः ॥ ३२५ ॥**

अ० टी०—अन्यत्रोक्तपदानामन्यत्रोपसंहार्यत्वे को न्याय इति चेत्तत्राऽऽह—**गुणतयेति ।** गुणतया विशेषणार्थतया न प्राधान्येनेत्यर्थः । अतो यत्र गुणी प्रधानभूतोऽर्थो भवति तत्र ह्यसौ गुणगणो भवति कुतः, गुणितन्त्रतया गुणानां गुणिपरतन्त्रत्वादित्यर्थः ॥ ३२५ ॥

**सु० टी०—उक्तोपसंहारपूर्वकमुत्तरप्रबन्धकमवतारयति—**

**विधिनिषेधवचःपरिमाणत-**
**स्तव मया कथितं नयवर्त्मना ।**
**यदपरं तव वस्तु बुभुत्सितं**
**तदिह नः पुरतः प्रकटी कुरु ॥ ३२६ ॥**

विधिनिषेधेति । **प्रश्नमभ्यनुजानीते**—यदपरमिति ॥ ३२६ ॥

अ० टी०-पदोपसंहारप्रकरणमुपसंहरति-**विधिनिषेधवच इति** । पुनः शिष्यस्य प्रश्नावसरं ददाति—**यदपरमिति** ॥ ३२६ ॥

**सु० टी०—गुरुणाऽनुज्ञातः पृच्छति-**

**अन्तरङ्गबहिरङ्गसाधने**
**भेदतः कथय तद्बुभुत्सितम् ।**
**ज्ञानजन्मन इदं जिघृक्षितं**
**हेयमेतदिति चोपपत्तिभिः ॥ ३२७ ॥**

अन्तरङ्गेति । **विविच्योक्तेः किं फलमिति** तत्राऽऽह—ज्ञानेति । **ज्ञानजन्मने ज्ञानोत्पत्त्यर्थम् । इदं जिघृक्षितमुपादेयमिदं च वर्ज्यमित्युपपत्तिभिर्बुभुत्सितं तत्कथयेति योज्यम् ॥ ३२७ ॥**

अ० टी०-गुर्वनुज्ञातः शिष्यः पृच्छति-**अन्तरङ्गेति** । अन्तरङ्गबहिरङ्गयोर्भेदज्ञानं किमर्थमिति चेज्ज्ञानोत्पत्तावुपादेयहेयविवेकार्थमित्याह-**ज्ञानजन्मन इति** । उपपत्तिभिः कथयेत्यन्वयः ॥ ३२७ ॥

**सु० टी०—अन्तरङ्गबहिरङ्गसाधनज्ञानस्य कुत्रोपयोगस्तदाह-**

**अन्तरङ्गमपवर्गकाङ्क्षिभिः**
**कार्यमेव यतिभिः प्रयत्नतः ।**
**त्याज्यमेव बहिरङ्गसाधनं**
**यत्नतः पतनभीरुभिर्भवेत् ॥ ३२८ ॥**

अन्तरङ्गमिति ॥ **३२८** ॥

अ०टी०-तर्हि किं हेयं किं चोपादेयमिष्टं तवेति चेत्तत्राऽऽह-**अन्तरङ्गमपवर्गेति** । कुतस्त्याज्यं बहिरङ्गसाधनमित्यपेक्षायां यत्याश्रमविरोधादित्याह-**यत्नत इति** ॥ ३२८ ॥

**सु० टी०—उत्तरं प्रस्तौति—**

**उच्यते शृणु विविच्य साधनं**
**ज्ञानजन्मनि यदूचिवान्गुरुः ।**
**अन्तरङ्गबहिरङ्गभेदतः**
**शब्दशक्तिमनुसृत्य वैदिकीम् ॥ ३२९ ॥**

उच्यत इति । **स्वोक्तेः सांप्रदायिकत्वं प्रकटयति**—यदूचिवानिति॥**३२९॥**

अ० टी०—गुरुराह-**उच्यत इति** । गुरुराचार्यः । वैदिकीं शब्दशक्तिमनुसृत्येति श्रुत्युपदिष्टमार्गमाश्रित्येत्यर्थः॥ ३२९ ॥

**सु० टी०—द्वयोर्विभागमाह—**

**यच्छ्रुतं विविदिषोदयाय त-**
**त्सर्वमेव बहिरङ्गसाधनम् ।**
**अन्तरङ्गमवगच्छ तत्पुन-**
**र्यत्परावगतिसाधनं श्रुतम् ॥ ३३० ॥**

यच्छ्रुतमिति । **'विविदिषन्ति यज्ञेन' [ बृह० ४ । ४ । २२ ] इत्यादिश्रुतमिच्छाद्वारा श्रवणादौ प्रवर्तकत्वाद्बहिरङ्गम् । 'तस्मादेवंविच्छान्तो दान्तः' [ बृ० ४ । ४ । २३ ] इत्यादि । 'ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' [ बृ० ३ । ५ । १ ] इति च ज्ञानसमकालतया तत्परिपाकहेतुत्वेन श्रुतत्वादन्तरङ्गमित्यर्थः ॥ ३३० ॥**

अ० टी०—अन्तरङ्गबहिरङ्गयोर्लक्षणभेदोक्त्या विभागमाह—**यच्छ्रुतमिति** । 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन [बृ० ४ । ४ । २२] इत्यत्र यद्यज्ञदानादिकर्मजातं विविदिषोदयाय श्रुतं तत्सर्वं बहिरङ्गसाधनमेवेत्यवगच्छ । 'तस्मादेवंविच्छन्तो दान्त उपरतस्तितिक्षुः समाहितो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्यति' [ बृ० ४ । ४ । २३ ] श्रद्धावित्तो भूत्वाऽऽत्मन्येवाऽऽत्मानं पश्येदित्यादि यत्परावगतिसाधनं परमात्मज्ञानोत्पादकतया तत्परिपाचकतया च ज्ञानसहभावि यच्छान्तिदान्त्यादि श्रोतव्य इत्यादिना वेदान्तश्रवणादि च श्रुतं तत्पुनरन्तरङ्गमवगच्छेति योजना ॥ ३३० ॥

**सु० टी०—प्रकारान्तरेणाप्यन्तरङ्गादिलक्षणमाह—**

**यद्धि कारकतयाऽवगम्यते**
**दूरतस्तदिह साधनं धियः ।**
**अन्तरङ्गमखिलं तु तत्पुन-**
**र्व्यञ्जकं भवति यत्परात्मनः ॥ ३३१ ॥**

यद्धीति । **यज्ञादिकं बुद्धिशुद्ध्यादिफलजनकत्वेन कारकत्वाद्बहिरङ्गं श्रवणादिकं त्वात्मस्वरूपज्ञापकत्वेन व्यञ्जकत्वादन्तरङ्गमित्यर्थः ॥३३१॥**

अ० टी०—विविदिषोत्पादनसाधनतया श्रुतं बहिरङ्गं साक्षीद्वियासहभावितया श्रुतं साधनमन्तरङ्गमिति तयोर्लक्षणमुक्त्वा लक्षणान्तरमाह—**यद्धि कारकतयेति** । यद्धि कारकतया श्रुतिष्ववगम्यते तदिह शास्त्रे धियो ज्ञानस्य दूरतः साधनमारादुपकारकं बहिरङ्गमित्यर्थः । यत्पुनः परात्मनो व्यञ्जकं भवति साधनं तदखिलमन्तरङ्गसाधनमित्यर्थः । एतदुक्तं भवति ज्ञानोत्पत्तौ येषां कारकाणां दृष्टद्वारोपकारो न दृश्यते तानि कारकाणि यज्ञादीन्यारादुपकारकाणि बहिरङ्गसाधनानीति चोच्यन्ते येषां तु ज्ञानं प्रति दृष्टद्वारोपकारो दृश्यते तानि व्यञ्जकानि शमादीनि तानि संनिपत्योपकारकाण्यन्तरङ्गसाधनानि चोच्यन्त इति ॥ ३३१ ॥

**सु० टी०—एतयोरनुष्ठानाननुष्ठानयोर्दोषमाह—**

**कारकस्य करणेन तत्क्षणा-**
**द्भिक्षुरेष पतितो भवेद्यथा ।**
**व्यञ्जकस्य परिवर्जनात्तथा**
**सद्य एव पतितो भवेदसौ ॥ ३३२ ॥**

कारकस्येति । **तेन भिक्षोरिदं नित्यमित्यर्थः ॥ ३३२ ॥**

अ० टी०—तत्र संन्यासिना कारकाणि सर्वात्मनाऽवश्यं हेयानि व्यञ्जकान्यवश्यमुपादेयानि न कदाऽपि हेयानीति लक्षणतो विभागकरणफलमाह—**कारकस्येति**॥३३२॥

**सु० टी०—ननु ये विविदिषन्ति ते यज्ञादिभिर्विद्युरिति ज्ञानसाधनत्वश्रुतेर्यज्ञादीनामप्यन्तरङ्गत्वं तुल्यमिति नेत्याह—**

**प्रत्ययार्थविषयं हि कर्मणा-**
**मुच्यते विविदिषेयुरित्यतः ।**
**न प्रकृत्यभिहितार्थवेदने**
**वेदवा[1]चि विनियोगशासनम् ॥ ३३३ ॥**

प्रत्ययार्थेति । **विविदिषेयुरित्यस्यां वेदवाचिसन्प्रत्ययार्थत्वेनेच्छायाः प्राधान्यात्तत्साधनत्वेन यज्ञादिकर्मणां विनियोगविधानं न प्रकृत्यर्थज्ञानार्थतयेत्यतो नान्तरङ्गत्वमित्यर्थः ॥ ३३३ ॥**

---

१ क. वादवि° । ख. ग. वादिवि° ।

अ० टी०---यच्छुतं विविदिषोदयायेत्यत्र यज्ञादीनां वेदनेच्छासाधनत्वमुक्तं तदयुक्तं विविदिषन्तीत्यत्रेष्यमाणज्ञानस्य कर्मत्वेन प्राधान्याद्यज्ञादिकर्मणां ज्ञानसाधनत्वप्रतीतेरिति चेत्तत्राऽऽह---**प्रत्ययार्थेति**। विविदिषेयुरिति कर्मणां विनियोगशासनं हि प्रत्ययार्थ-विषयमुच्यते। सन्प्रत्ययार्थे कर्मणां विनियोगः श्रुत्या शास्यमानो दृश्यत इत्यर्थः। यत एवमतः प्रकृत्यभिहितार्थे वेदने ज्ञाने वेदनादिविनियोगशासनं नास्ति वेदनादिसंमतं विनियोगशासनं नास्ति। वेदनादेति पाठस्तु ऋज्वर्थः॥ ३३३॥

**सु० टी०---ननु वेदनमेव प्रधानं किं न स्यादिति नेत्याह---**

**न प्रधानमपहाय वेदने**
**नान्वयं व्रजति कर्म साधनम्।**
**संगतिर्भवति वेदनेच्छया**
**वेदनेन न तु कर्मणां क्वचित्॥ ३३४॥**
**न प्रधानमिह वेदनं भवे-**
**त्प्रत्ययार्थविषयां प्रधानताम्।**
**उत्ससर्ज[1] भगवान्निरङ्कुशं**
**येन पाणिनिरलङ्घ्यशासनः॥ ३३५॥**

न प्रधानमितिद्वाभ्याम्। '**प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्' इतिसूत्रे प्रकृत्यर्थप्राधान्यं परित्यज्य मुनिः प्रत्ययार्थप्रधानतामेव यत उत्सृष्टवानित्यर्थः॥ ३३४॥ ३३५॥**

अ० टी०---प्रत्ययार्थभूतेच्छया वेदानुवचनादीनामन्वयो न प्रकृत्यर्थेन वेदनेनेति कुतोऽवसीयत इति चेत्तत्राऽऽह---**न प्रधानमिति**। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्रत्ययार्थस्तु प्राधान्येनेति न्यायात्प्रत्ययार्थस्य प्रधानत्वावधृतेः प्रधानाकाङ्क्षानु-रोधेन चेतरेषामन्वयादिह प्रत्ययाभिहितां वेदनेच्छां प्रधानभूतामपहाय त्यक्त्वा कर्मरूपं प्रकृत्याभिहितेन वेदनेनान्वयं न व्रजति न्यायविरोधापातादित्यर्थः। उक्तमेव स्पष्टयति---**संगतिर्भवतीति**॥ ३३४॥

अ० टी०---तर्हि वेदनस्यैवास्तु प्राधान्यमिति चेन्मैवं संभवतीत्याह---**न प्रधान-मिहेति**। येन कारणेनालङ्घ्यशासनो भगवान्पाणिनिः प्रत्ययार्थविषयां प्रधानतां निरङ्कुशं

---

१ क. ख. नोत्ससर्ज।

निरपवादं यथा स्यात्तथोत्ससर्जोत्सर्गतः स्थापितवांस्ततो न वेदनमिह प्रधानं भवेदिति योजना । निरङ्कुशत्वविशेषणादस्योत्सर्गस्यापवादाभावं सूचयति ॥ ३३५ ॥

**सु० टी०—ननु सन्प्रत्ययादन्यत्रैव तत्प्राधान्यमुक्तमिति नेत्याह—**

**प्रत्यये सनि न चापवादकं**
**किंचिदप्युदितवानसौ मुनिः ।**
**येन तत्र गुणभावमुद्वहे-**
**त्प्रत्ययाभिहितमर्थवस्तु नः ॥ ३३६ ॥**

प्रत्यये सनीति । **अर्थवस्तुनो धात्वर्थस्य** ॥ ३३६ ॥

अ० टी०—उत्सर्गतः प्रत्ययार्थप्राधान्येऽपीह तदपवादोऽस्त्वित्याशङ्क्य निरङ्कुशविशेषणसूचितमर्थं विशदयन्नास्यापवाद इत्याह—**प्रत्यये सनीति** । नोऽस्माकं प्रत्ययाभिहितमर्थवस्त्वथ स्वरूपं येन तत्र प्रकृत्यर्थे गुणभावमुद्वहेत्तदपवादकं सनि प्रत्यये किंचिदपि मुनिः पाणिनिर्नोदितवानिति योजना ॥ ३३६ ॥

**सु० टी०—ननु 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति धात्वर्थस्य सनर्थं प्रति कर्मत्वाभिधानात्प्राधान्यमुक्तमित्यन्यत्रैव प्रत्ययार्थप्राधान्यमभिप्रैतीति गम्यते । तदुक्तं—'गुणभूतः प्रकृत्यर्थोऽन्यत्र स्यात्' इति । किं चैवं कमिसंबन्धोऽप्यश्रुतो न कल्प्येत विविदिषा कामा इति । इच्छायाश्चेष्यमाणत्वमदृष्टमतो वेदनमेव प्रधानमिति चेन्नेत्याह—**

**धातोः कर्मण इत्युवाच भगवान्यत्पाणिनिस्तत्पुन-**
**र्धात्वर्थस्य निवेदयत्यभिमतं प्राधान्यमायुष्मतः ।**
**किं त्वार्थं न तु शब्दगम्यमवदत्तेनापि तद्योक्ष्यते**
**नोत्सर्गस्य विना निमित्तमपरं संकोचनं युज्यते॥ ३३७ ॥**

धातोरिति । **आयुष्मतोऽभिमतं धात्वर्थस्य प्राधान्यमित्यन्वयः । ननु-प्राधान्यकथनादेव शाब्दत्वं स्यादिति नेत्याह**—तेनापीति । **आर्थप्राधान्येनापि योजनसंभवान्नोत्सर्गसंकोचो युक्त इत्यर्थः । किं च ब्रह्मावगतिकरणत्वे यज्ञादीनां प्रमाणत्वापत्तेरन्यत्रावगतकारकस्वभावभङ्गः स्यादित्यकामेनापीच्छैव तत्साध्याऽङ्गीकार्येति फलमुखः कामिपदाध्याहारः । दृष्टं च कदाचिदिच्छाया अपि काम्यत्वमातुरस्य बुभुक्षोत्पादा-**

**र्धर्मोपधे प्रवृत्तिदर्शनादेवमशुद्धसत्त्वस्यापि विविदिषार्थं यज्ञादौ प्रवृत्ति-र्नानुपपन्नेति ॥ ३३७ ॥**

अ० टी०—ननु ‘ धातोः कर्मणः समानकर्तृकादिच्छायां वा ’ इतिधात्वर्थस्य सनर्थकर्मत्वाभिधानात्सनर्थं प्रति प्राधान्यं पाणिनिनोक्तमिति चेन्नैवमित्याह—**धातोः कर्मण इतीति** । आयुष्मतस्तवाभिमतं प्राधान्यं श्रुत्युक्तकर्मान्वयोपयुक्तं न वेदयति न ज्ञापयतीत्यर्थः । कथं तर्हि तदभिधानमित्याशङ्कयाऽऽह—**किंत्वार्थमिति । तेनापीति ।** अर्थेनापि प्राधान्येन तत् ‘ धातोः कर्मण ’ इत्यत्रोक्तं प्राधान्यं योक्ष्यते यत इच्छाकर्मत्वप्रयुक्तं वेदनस्य प्राधान्यमार्थमेव न शाब्दमतस्तेनाप्यार्थेन तद्योजयिष्यत इत्यर्थः । शाब्दप्राधान्यानुरोधेन ह्यन्वयव्यवस्था नार्थप्राधान्यानुरोधेनेति भावः । अत इदमुत्सर्गस्य न संकोचकं संकोचकान्तरं तु न दृश्यत इति । अपवादाभावे पुनरुत्सर्गस्य स्थितिरिति न्यायमनुसरन्नाह—**नोत्सर्गस्येति** ॥ ३३७ ॥

**सु० टी०—एतदेव प्रपञ्चयति—**

**धातोः कर्मण इत्युदीरितमिदं साधारणं दृश्यते**
**शब्दार्थत्वविशेषसूचकतया न ह्यत्र सूत्रे पदम् ।**
**धात्वर्थस्य तु कर्मतावचनमत्रोच्चारितं केवलं**
**तत्त्वार्थेऽप्युपपद्यमानमधुना नोत्सर्गपीडाकरम् ॥ ३३८ ॥**

धातोः कर्मण इति । **सुबोधः ॥ ३३८ ॥**

अ० टी०—कर्मत्वप्रयुक्तप्राधान्यस्यार्थत्वमात्रेणाप्युपपत्तौ प्रत्ययार्थप्राधान्यबाधो न युक्त इत्युक्तं तदेव स्पष्टयति—**धातोः कर्मण इत्युदीरणमिति** ‘धातोः कर्मण’ इत्युक्तिरेव विशेषसूचकं पदमिति चेन्नास्यान्यथाऽप्युपपत्तेरित्याह—**धात्वर्थस्य त्विति** ॥ ३३८ ॥

**सु० टी०—ननु प्रत्ययार्थभूतेच्छायाः प्राधान्यमार्थं प्रकृत्यर्थस्य तु वेदनस्य शाब्दमिति विपरीतमेव कुतो नेत्यत्राऽऽह—**

**इच्छायामिति सूत्रकारवचनं प्राधान्यपक्षे भवे-**
**दिच्छार्थस्य समञ्जसं न खलु तत्सन्प्रत्ययार्थे गुणे ।**
**धात्वर्थे ननु सन्भवेदिति वदेदिच्छा गुणश्चेद्भवे-**
**दिच्छायामिति वक्ति तेन वदति प्राधान्यमिच्छागतम् ॥**

इच्छायामिति । **विपक्षे किं बाधकं तत्राऽऽह**—धात्वर्थे नन्विति **॥ ३३९ ॥**

---

१ क. नतु ।

अ० टी०—इच्छाया एव प्राधान्यं शाब्दमित्यस्य तु सूचकं पदमत्रास्तीत्याह—**इच्छायामितीति** । इच्छार्थस्य प्राधान्यपक्ष इच्छायामिति सूत्रकारवचनं समञ्जसं भवेत् । सन्प्रत्ययार्थे गुणेऽप्रधाने सति तत्सूत्रकारवचनं न खलु समञ्जसं भवेदिति योजना । एतदुक्तं भवति—प्रकृतिप्रत्ययौ हि गुणभूतार्थविशिष्टं प्रधानार्थं वदतो न तु गुणभूतार्थस्य पृथग्वाच्यत्वमत इच्छायां सन्निनितीच्छाया वाच्यत्वाभिधानात्तस्या एव शब्दतः प्राधान्यं सूत्रकारस्याभिमतमिति गम्यत इति । यदीच्छाया गुणभावः सूत्रकारस्याभिमतः स्यात्तदा ननु धात्वर्थे सन्भवेदिति ब्रूयान्न त्विच्छायां सन्निति । इच्छायां सन्निति वक्ति। अत इच्छाया एवात्र प्राधान्यं सूत्रकाराभिमतमित्यवगम्यत एवेत्युपसंहरति—**धात्वर्थे नन्विति** ॥३३९॥

**सु० टी०—किमतो यद्येवमिति तत्राऽऽह—**

**तस्मात्कर्म समस्तमेव तु भवेदिच्छाजनेः साधनं**
**शास्त्रेणोक्तमतः समस्तमपि तद्यत्नेन हेयं यतेः ।**
**द्रष्टव्यत्वमनूद्य साधनतया यद्यत्प्रतीचः श्रुतं**
**वेदान्तश्रवणादिकं भवति तत्कर्तव्यमावश्यकम् ॥ ३४० ॥**

तस्मादिति । **ततोऽपि किं तत्राऽऽह**—अतः समस्तमपीति । **यत्तु न कारकं किं तु ज्ञापकं यथा प्रतीचो दर्शनमनूद्य तत्साधनतया विहितं श्रवणादि तत्कर्तव्यमेवेत्याह**-द्रष्टव्यत्वमिति ॥ ३४० ॥

अ० टी०—तदेवं यज्ञादीनामिच्छायां विनियोगाद्बहिरङ्गत्वमेवेति यतेर्हेयत्वं सिद्धमित्युपसंहरति—**तस्मात्कर्मेति** । त्यक्तसमस्तकर्मा यतिः किंकुर्यादिति तदाह—**द्रष्टव्यत्वमिति** । 'आत्मा वा अरे द्रष्टव्यः' [बृह० २ । ४ । ५] इति प्रतीच आत्मनो द्रष्टव्यत्वमनूद्य साधनतया दर्शनसाधनत्वेन श्रोतव्य इत्यादिवाक्यैर्यद्वेदान्तश्रवणादिकं श्रुतं तत्कर्तव्यमावश्यकं भवति । शमदमादिरूपनिवृत्तिधर्मनिष्ठतया ज्ञाननिष्ठविरोधिव्यापारं परित्यज्य वेदान्तवाक्यार्थालोचनतत्परो भवेदित्यभिप्रायः ॥ ३४० ॥

**सु० टी०—तर्ह्यन्तरङ्गसाधनैरेवाऽऽत्मज्ञानसिद्धेः किं वेदान्तवाक्येनेति चेत्तत्राऽऽह—**

**वेदान्तवाक्यमिह कारणमात्मबोधे**
**हेत्वन्तराणि परिपन्थिनिबर्हणानि ।**
**यज्ञादिकानि दुरितं क्षपयन्ति बुद्धे-**
**स्तत्त्वंपदार्थविषयं तम उत्तराणि ॥ ३४१ ॥**

वेदान्तवाक्येति । **वाक्यमेवाज्ञाननिवर्तकं प्रमाणत्वान्नेतरदप्रमाणत्वादित्यर्थः । न वेदान्तवाक्यं प्रमाणं हेत्वन्तरसापेक्षत्वादिति चेत्तत्राऽऽह—** हेत्वन्तराणीति । **विरोधिनिबर्हणेनैषामुपयोगो नेति कर्तव्यतात्वेनेत्यर्थः । सर्वेषां प्रतिबन्धनिवर्तकत्वे कुतोऽन्तरङ्गत्वादिसिद्धिस्तत्राऽऽह—**यज्ञादिकानीति । **उत्तराणि श्रवणादीनि । ततश्च निरस्य तारतम्येन तत्सिद्धिरित्यर्थः ॥ ३४१ ॥**

अ० टी०—ननु महावाक्यस्य साक्षाज्ज्ञानहेतुत्वमुक्तं तत्र क एषामुभयेषामन्तरङ्गबहिरङ्गरूपाणां साधनानामुपकारः । न ह्यकर्तव्यस्य वाक्यस्येतिकर्तव्यतयैषामन्वयोऽपि युक्त इति चेत्तत्र परिपन्थिनिबर्हणतयैषामुपकारो महावाक्येषु नेतिकर्तव्यतयेत्याह—**वेदान्तवाक्यमिहेति** । हेत्वन्तराणि यज्ञादिकानि श्रवणादिकानि चेत्यर्थः । तत्र बहिरङ्गाणामन्तरङ्गाणां च निरस्यं प्रतिबन्धं विभज्य कथयति—**यज्ञादिकानीति** । उत्तराणि श्रवणान्यन्तरङ्गाणीत्यर्थः ॥ ३४१ ॥

**सु० टी०—ननु चिन्मात्राश्रयविषयमज्ञानमेकमेव वाक्यार्थज्ञाननिरस्यमित्युक्तत्वादन्तरङ्गसाधननिरस्यतत्त्वंपदार्थविषयतमोन्तरङ्गीकारे पूर्वोत्तरविरोध इत्याशङ्क्याऽऽह—**

**तत्त्वंपदार्थविषयं तम इत्यपीद-**
**मर्वागवस्थजनदृष्टिमपेक्ष्य गीतम् ।**
**अज्ञानमुत्तमदृशां पुनरेकमेव**
**संसारमूलमपवर्गफला च विद्या ॥ ३४२ ॥**

तत्त्वंपदार्थेति । **स्थूलदृष्ट्यपेक्षयैव तदुक्तमित्यर्थः ॥ ३४२ ॥**

अ० टी०—ननु चिन्मात्राश्रयविषयमेकमेवाज्ञानमिति पूर्वं प्रतिष्ठापितं तत्कथमिदानीं वाक्यार्थज्ञाननिरस्यप्रत्यगज्ञानव्यतिरेकेणान्तरङ्गसाधननिरस्यं तत्त्वंपदार्थविषयमज्ञानं पृथगुच्यत इति चेत्सत्यं यत्प्रागुक्तं तत्तथैवेदं तु स्थूलदृष्ट्योच्यत इत्याह—**तत्त्वंपदार्थेति** । अर्वागवस्थजनः सम्यगविदित पदार्थतत्त्वः उत्तमदृशां विदितपदार्थतत्त्वानां बुद्धिमपेक्ष्येत्यनुषङ्गः । अपवर्गफला च विद्याऽप्यैकेवेति योज्यम् ॥ ३४२ ॥

**सु० टी०—तर्हि निवर्त्याभावाच्छ्रवणादिवैयर्थ्यमिति चेत्तत्राऽऽह—**

**अज्ञानसंशयविपर्ययरूपकाणि**
**ब्रह्मात्मबुद्धिजनकप्रतिबन्धकानि ।**

तत्त्वं पदार्थविषयाणि निवर्तयन्ति
ह्यावृत्तिमन्ति मननश्रवणादिकानि ॥ ३४३ ॥

अज्ञानेति । **ब्रह्मात्मधीप्रतिबन्धकाज्ञानादीन्येव तथात्वेनोक्तानि तान्येव निवर्त्यानीत्यर्थः । तर्हि श्रवणानन्तरमेव ज्ञानं स्यात्तत्राऽऽह—** आवृत्तिमन्तीति । **अवघातादिवद्दृष्टफलत्वादाफलोदयमावर्तितान्येव ज्ञानजनकानि तानीत्यर्थः ॥ ३४३ ॥**

अ० टी०—तर्हि तत्त्वंपदार्थविषयं तम इति किमुक्तं तदाह—**अज्ञानसंशयेति** । तत्त्वंपदार्थविषयाण्यज्ञानसंशयविपर्ययरूपकाणीति संबन्धः । मननश्रवणादिकानीत्यत्रापि तत्त्वंपदार्थविषयाणीति संबध्यते । पदार्थविषयमज्ञानादीह तमो विवक्षितमित्यर्थः ॥३४३॥

**सु० टी०—कीदृशं पुनः श्रवणादीनां स्वरूपमिति तत्राऽऽह—**

शब्दशक्तिविषयं निरूपणं
युक्तितः श्रवणमुच्यते बुधैः ।
वस्तुवृत्तविषयं निरूपणं
युक्तितो मननमित्युदीर्यते ॥ ३४४ ॥

शब्दशक्तीति । **एतच्च तात्पर्यस्याप्युपलक्षणं युक्तितो ब्रह्मणि श्रुतेः शक्तितात्पर्यावधारणमित्यर्थः ।** वस्तुवृत्तेति । **श्रुतवस्तुनो युक्तिभिः स्थिरीकरणमित्यर्थः ॥ ३४४ ॥**

अ० टी०—कानि तानि श्रवणादीनीत्यपेक्षायां तत्स्वरूपं दर्शयति—**शब्दशक्तीति** । शक्तिग्रहणं तात्पर्यस्याप्युपलक्षणम् । युक्तितो निरूपणमित्युभयत्र निरूपणपदान्वयः ॥ ३४४ ॥

**सु० टी०—निदिध्यासनमाह—**

चेतसस्तु चितिमात्रशेषता
ध्यानमित्यभिवदन्ति वैदिकाः ।
अन्तरङ्गमिदमित्थमीरितं
तत्कुरुष्व परमात्मबुद्धये ॥ ३४५ ॥

चेतस इति । **वाक्योत्थबुद्धिवृत्तेर्ब्रह्मतावन्मात्रतापादनं ध्यानमित्यर्थः ।** **शमादीनामस्मिन्नेवान्तर्भावादिदमेव त्रिकमन्तरङ्गसाधनमित्युपसंहरति—** अन्तरङ्गमिति ॥ ३४५ ॥

अ० टी०—निदिध्यासनस्वरूपमाह—**चेतसस्त्विति** । चेतसो वाक्योत्थबुद्धिवृत्तेर्या चितिमात्रशेषता यत्नेन ब्रह्मतावन्मात्रतयाऽवस्थितिस्तद्ध्यानमित्यर्थः । शमदमादीनामस्मिन्नेव त्रिके विनाऽन्तर्भावादिदं त्रिकमेवान्तरङ्गसाधनं प्रधानमनुष्ठेयमित्याह—**अन्तरङ्गमिदमिति** ॥ ३४५ ॥

**सु० टी०—निदिध्यासने प्रकारान्तरमाह—**

**श्रवणमननबुद्ध्योर्जातयोर्यत्फलं त-**
**न्निपुणमतिभिरुच्चैरुच्यते दर्शनाय ।**
**अनुभवनविहीना यैवमेवेति बुद्धिः**
**श्रुतमननसमाप्तौ तन्निदिध्यासनं हि ॥ ३४६ ॥**

श्रवणेति । **किं तदित्याह—**अनुभवनेति । **वाक्यजब्रह्मानुभवव्यतिरिक्तेत्यर्थः । तेन यथा यागेऽनुष्ठिते स्वर्गोऽवश्यंभावीत्येवं श्रवणाद्यनन्तरं स्वयमेवमेवेति निश्चयरूपा बुद्धिर्या जायते तन्निदिध्यासनमित्यर्थः । दर्शनाय या बुद्धिरित्यन्वयः । तदुक्तं ' अपरायत्तबोधोऽत्र निदिध्यासनमुच्यते ' इति ॥ ३४६ ॥**

अ० टी०— निदिध्यासने पक्षान्तरमाह—**श्रवणमननेति** । आदरनैरन्तर्यपूर्वकमनुष्ठितश्रवणमननबुद्ध्योर्जातयोः सम्यङ्निष्पन्नयोर्यत्तत्किमपि फलं तन्निदिध्यासनमिति हि निपुणमतिभिर्दर्शनाय साक्षात्काराय दर्शनसाधनत्वेनेति यावदुच्चैरुच्यत इति संबन्धः । किं तत्फलमिति तत्स्वरूपमाह—**अनुभवनेति** । श्रुतमननसमाप्तावनुभवनविहीनैवमेवेति या बुद्धिः सा श्रवणमननबुद्ध्योः फलमिति योजना । अनुभवनविहीना साक्षादनुभवरहितेदमित्थमेवेति परोक्षनिश्चयरूपा बुद्धिरित्यर्थः । पूर्वोक्तं निदिध्यासनं समाधिरूपं पृथगनुष्ठेयमिदं तु श्रवणमननानुष्ठानव्यतिरेकेण नानुष्ठेयं तयोरेव सम्यगनुष्ठानादेवमेवेति बुद्धेरप्रयत्नेनोद्भवादित्येष विशेषः । इत्थं वा योजना श्रवणमननबुद्ध्योर्जातयोर्यत्फलं कार्यं तन्निपुणमतिभिरुच्चैर्दर्शनाय साक्षादनुभवनिमित्तमुच्यते न तदतिरिक्तं निदिध्यासनं नामास्तीति किं तच्छ्रवणादिबुद्धिफलं तदाह—**अनुभवनेति** । हि यस्माच्छ्रुतमननसमाप्तौ श्रवणमननयोः सम्यङ्निवृत्तौ या तद्विषयैवमेवेति बुद्धिः किंलक्षणा अनुभवनविहीना साक्षात्कारत्वरहिता परोक्षनिश्चयरूपा तन्निदिध्यासनं तस्मान्न पृथगनुष्ठेयं तदस्तीति ॥ ३४६ ॥

**सु० टी०—फलितमुपसंहरति—**

**पूर्वाण्यदृष्टपरिपन्थिनिबर्हणानि**
**दृष्टं हरन्ति च विरोधिनमुत्तराणि ।**
**वाक्यं निरस्तसकलप्रतिबन्धकं स-**
**दात्मानमद्वयमखण्डमबुद्धमाह ॥ ३४७ ॥**

पूर्वाणीति । **हरन्तु ततः किमित्यत्राऽऽह**—वाक्यमिति ॥ ३४७ ॥

अ० टी०—तदेवमन्तरङ्गबहिरङ्गसाधनानां ज्ञानोदयपरिपन्थिनिबर्हणत्वमेव वेदान्तमहावाक्यमेव केवलं मोक्षफलज्ञानसाधनमित्युपसंहरति—**पूर्वाण्यदृष्टेति** । अबुद्धमज्ञातमात्मानमखण्डमद्वयमाहेति संबन्धः । अज्ञातमद्वयमखण्डमात्मानमाहेति वा ॥ ३४७ ॥

**सु० टी०—एवमनुष्ठितान्तरङ्गसाधनस्य संन्यासिनः किमिहैव जन्मनि विद्या कारीरीफलवद्दृष्टत्वान्यत्र स्वर्गवद्दृष्टानियमश्चित्राफलवदिति तत्र नाऽऽद्यः कृतश्रवणानामप्यत्रादर्शनान्नापरः केषांचिदिहैव विद्यादर्शनान्नान्त्यो मानाभावादिति चेत्तत्राऽऽह—**

**यज्ञादिक्षपितसमस्तकल्मषाणां**
**पुत्रादित्रयगतसङ्गवर्जितानाम् ।**
**संशुद्धे पदयुगलार्थतत्त्वमार्गे**
**प्रायेणोद्भवति हि जन्मनीह विद्या ॥ ३४८ ॥**

यज्ञादीति । **साधनसाद्गुण्यादित्यर्थः ॥ ३४८ ॥**

अ० टी०—एवमुक्तान्तरङ्गसाधननिष्ठस्य संन्यासिनः किमस्मिन्नेव जन्मनि विद्योत्पत्तिः किं वा जन्मान्तरेऽपीति वीक्षायामाह—**यज्ञादिक्षपितेति** । इह जन्मनि पूर्वजन्मसु वा कृतयज्ञादीति योज्यम् ‘ अनेकजन्मसंसिद्धस्ततो याति परां गतिम् ’ [ गी० ६ । ४५ ] ‘ बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ’ [ गी० ७ । १९ ] इतिभगवद्वचनात् । पुत्रादित्रयेत्याद्यस्मिन्नेव जन्मनीति ज्ञेयं त्यागादेरन्तरङ्गत्वात् । एतानि त्रीणि साधनानि क्रमेण हेतुहेतुमद्भावेन यस्य सम्यग्जातानि तस्येह जन्मनि यस्मिञ्जन्मनि श्रवणादिपौष्कल्यं तस्मिन्नेव जन्मनि प्रायेण विद्योद्भवति । प्रायेणेतिबलवत्प्रतिबन्धकाभाव इत्यर्थः ॥ ३४८ ॥

सु० टी०—प्रायेणेत्युक्तमेव प्रपञ्चयति—

अत्रैव जन्मनि भवेदपवर्गदायि
वाक्यप्रसूतमनुभूतिफलावसानम् ।
ज्ञानं निवाकरनिमित्तवशादमुष्मि-
ञ्जन्मन्यपीति वचनादवगम्यते हि ॥ ३४९ ॥

अत्रैवेति । **वाक्यप्रसूतं ज्ञानमपवर्गदायि भवेदित्यन्वयः । तत्र हेतुमाह—** निवारकेति । **ज्ञानप्रतिबन्धकनिमित्तानुरोधेन । तच्चेन्नास्तीत्यर्थः । अमुष्मिन्नपीत्यत्र किं मानं तत्राऽऽह**—वचनादिति ॥ ३४९ ॥

अ० टी०—उक्तमेवार्थं स्पष्टयति—**अत्रैवेति** । अपवर्गदायीत्यादिविशेषितं ज्ञानमत्रैव जन्मनि भवेन्निवारकनिमित्तोदयाभावे सतीत्यर्थात् । निवारकनिमित्तवशात्त्वमुष्मिन्नपि जन्मनि भवेत्संपन्नसाधनपौष्कल्यस्य ज्ञानजन्मावश्यंभावि नात्र संशयः कार्य इत्यभिप्रायः । ननु कृतेऽपि चेत्साधने फलं न दृश्यते तर्हि जन्मान्तरे भविष्यतीति का प्रत्याशेतिचेन्न वेदवचनप्रामाण्यात्तत्संभावनोपपत्तेरित्याह—**वचनादिति** ॥ ३४९ ॥

सु० टी०—किं तद्वचनमिति तत्राऽऽह—

ज्ञानोत्पत्तिं वामदेवस्य गर्भे
श्रुत्वा विद्मः साधनं प्राच्यमस्य ।
योगभ्रष्टस्मृत्यवष्टम्भतोऽपि
विज्ञातव्यं साधनं प्राच्यमस्य ॥ ३५० ॥

ज्ञानोत्पत्तिमिति । **गर्भ एवैतच्छयानो वामदेव एवमुवाच ' [ ऐत० ५ । ४ ] इत्यादिश्रुतेस्तदानीं च साधनानुष्ठानासंभवादित्यर्थः** । योगेति । **' पार्थ नैवेह नामुत्र ' [ गी० ६ । ४० ] इत्यादिभगवद्वचनादपीत्यर्थः ॥ ३५० ॥**

अ० टी०—वचनमेवोदाहरति—**ज्ञानोत्पत्तिमिति** । ' गर्भ एवैतच्छयानो वामदेव एव मुवाच ' [ ऐ० २ । १ । ५ ] इति वामदेवस्य गर्भे ज्ञानोत्पत्तिं श्रुत्वाऽस्य वामदेवस्य प्राच्यं प्राग्जन्मकृतं साधनं विद्मः । अकारणकार्योत्पत्त्यसंभवाद्गर्भस्थस्य च साधनानुष्ठानासंभवादित्यर्थः । तत्रैव स्मृतिमुदाहरति—**योगभ्रष्टेति** । ' पार्थ नैवेह नामुत्र विनाशस्तस्य विद्यते । नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति ' [ गी० ६ । ४० ]

इति भगवद्गीतावचनावष्टम्भतोऽप्यस्य वामदेवादेः प्राच्यं तत्साधनं ज्ञातसाधनं संपन्नमिति ज्ञातव्यमित्यर्थः ॥ ३५० ॥

**सु० टी०—नन्वनियतफलत्वे श्रवणादीनामपि सकृदनुष्ठानं स्यादिति तत्राऽऽह—**

**चित्रादिवद्भवति साधनजातमस्य**
**ज्ञानप्रसूतिकरमित्यवगच्छ सर्वम् ।**
**अभ्यग्रशुष्यदखिलौषधिकस्य पुंसो**
**वृष्टिप्रदेष्टिरधिकारवशादिहैव ॥ ३५१ ॥**

चित्रादिवदिति । **अनियतफलत्वे दृष्टान्तो न सकृदनुष्ठाने । दृष्टार्थत्वाच्चात्राऽऽवृत्तिरित्यर्थः । तर्हि कारीर्यादेरप्यनियतफलत्वं कुतो नेति तत्राऽऽह**—अभ्यग्रेति । **कारीरीवाक्यशेषे यस्यौषधयो म्लायन्तीति श्रवणादित्यर्थः ॥ ३५१ ॥**

अ० टी०—ननु दृष्टफलानां श्रवणादीनां कालान्तरफलत्वमयुक्तं कृष्यादिवदिति चेन्नैष दोषः । औषधोपयोगादीनां दृष्टफलानामप्यवान्तरव्यापारद्वारेण कालान्तरीयफलत्वदर्शनात् । तथाऽपि जन्मान्तरफलत्वं न दृष्टमिति चेत्सत्यमन्वयव्यतिरेकाभ्यां न दृश्यते तथाऽपि शास्त्राद्यथोक्तादवगम्यत एव श्रवणादीनां विहितत्वात्कालान्तरेऽपि तेषां फलहेतुत्वं कल्पनीयमनन्तरफलमात्रत्वेऽन्वयव्यतिरेकाभ्यामेव तत्सिद्धेर्विधिवैफल्याभावात्तस्माद्यथा ‘ चित्रया यजेत पशुकामः ’ इत्यादीनां पश्वादिफलमुत्सर्गत इहैव प्रतिबन्धात्तु जन्मान्तरेऽपीत्यभ्युपगम्यते तद्वदेवमपि द्रष्टव्यमित्याह—**चित्रादिवदिति** । यदि विहितत्वादस्मिञ्जन्मनि फलदर्शनेऽपि जन्मान्तरे फलं भविष्यतीति कल्प्यते तर्हि कारीर्यां कृतायामपि कदाचिद्वृष्ट्यदर्शने जन्मान्तरे फलं कल्प्येतेति चेन्नेत्याह—**अभ्यग्रशुष्यदिति** । अभ्यग्रं सांप्रतं शुष्यन्त्यखिलौषधयो यस्य तथोक्तस्तस्य पुंसो विहिता वृष्टिप्रदेष्टिः कारीर्याख्याऽधिकारवशादिहैव फलवतीति युक्तमिति योजना । कारीरीवाक्यशेष ओषधीनां म्लायमानत्वश्रवणादभ्यग्रशुष्यत्सस्यसंजीवनकामस्य कारीरीविधानात्सामान्यतो वृष्टिमात्रस्य यदा कदाचिद्भवत उद्देशेन विधानाभावादैहिकाधिकारत्वादिहैव तत्फलेन भवितव्यं कदाचित्तत्र फलादर्शने साधनवैकल्यमेव कल्पनीयं ज्ञानसाधनं तु न तथा किं तु चित्रावत्कालान्तरीयफलमपि सिध्यतीति भावः ॥ ३५१ ॥

सु० टी०—नन्वन्तरङ्गबहिरङ्गसाधनयोरनुष्ठाने किमिति कर्तव्यता विशेषः कश्चिदस्ति किं वा नेति तत्राऽऽह—

बहिरङ्गसाधनमशेषगुरोः
परमेश्वरस्य चरणाम्बुजयोः ।
नियमात्समर्पितमशेषमघं
विनिहन्ति बुद्धिनिलयं सुमहत् ॥ ३५२ ॥

बहिरङ्गेति । नियमादिति । फलासङ्गहानेन । यज्ञादिषु भगवत्समर्पणमुत्कर्षकारणमित्यर्थः ॥ ३५२ ॥

अ० टी०—अन्तरङ्गबहिरङ्गसाधनयोरनुष्ठाने किमिति कर्तव्यविशेषः कश्चिदस्ति किं वा नास्तीति विवक्षायामाह—बहिरङ्गेति । बुद्धिनिलयमिति बुद्धिगताभासाविविक्तजीवनिलयमिति यावत् । नियमादिति कर्मणि कर्तृत्वाभिनिवेशं फलासक्तिं च हित्वा केवलं यज्ञात्मकस्य नारायणस्य तत्तद्देवतादिरूपेणावस्थितस्य समाराधनरूपमिदं कर्म करिष्य इति प्रारम्भे श्रीमन्नारायणे भगवति सकारकं सफलं चेदं कर्मास्तु । इदं यथोक्तं कर्म कृतं नारायणार्पणमस्त्विति वाऽन्ते च संकल्परूपो नियमस्तस्मान्नियमात्समर्पितमित्यर्थः । अत्राऽऽघशब्देनाऽऽत्मतत्त्वजिज्ञासोदयप्रतिबन्धकं स्वाभाविकं सकलमेव कर्म विवक्ष्यते ॥ ३५२ ॥

सु० टी०—किमन्तरङ्गेष्वप्येवं नेत्याह—

न तथाऽन्तरङ्गमुपलब्धिजने-
रुपकारकं शमदमप्रभृति ।
तदनुष्ठितं परमहंसजनैः
परमात्मतत्त्वमुपलम्भयति ॥ ३५३ ॥

न तथेति । परमहंसानुष्ठितत्वमेव तत्रोत्कर्षकरं न तु हरिसमर्पणमित्यर्थः ॥ ३५३ ॥

अ० टी०—बहिरङ्गसाधनानां भगवत्समर्पणमुत्कर्षकारणमस्तीत्युक्तमन्तरङ्गे तु तन्नास्तीत्याह—न तथेति । शमदमप्रभृति यदन्तरङ्गमुपलब्धिजनेरीश्वरत्वज्ञानोत्पत्तेस्तथा बहिरङ्गवद्दूरगतं सन्नोपकारकं किंतूत्पत्तित एव साक्षात्तत्त्वज्ञानसाधनमतो न तत्र परमेश्वरार्पणगुणयोगोऽपेक्ष्यत इत्यर्थः । तर्हि किं कोऽप्युत्कर्षहेतुरत्र नास्त्येव न किं त्वन्यदेवात्र परमहंसकृतत्वमुत्कर्षहेतुरस्तीत्याह—तदनुष्ठितमिति । अत्राधिकारिविशेषकृतत्वमुत्कर्ष इत्यर्थः ॥ ३५३ ॥

सु० टी०—एवंविधविभागे किं मानमिति तत्राऽऽह–

भगवाननादिनिधनः कृपया
हरिरेव तदाह जगदेकहितः ।
सकलं समर्प्य मयि युक्तमनाः
कुरु कर्म शुद्धिकरमित्यसकृत् ॥ ३५४ ॥
न तथाऽन्तरङ्गफलसंन्यसनं
क्वचिदूचिवानत इति विदितम् ।
अनपेक्ष्य तत्फलपरित्यजनं
परमात्मनिश्चयफलं तदिति ॥ ३५५ ॥

भगवानिति द्वाभ्याम् । '**मयि सर्वाणि कर्माणि संन्यस्य** [ गी० १८ । ५७ ] '**मच्चित्तः सततं भव । मदर्थमपि कर्माणि**' [ गी० १८ । ५७ ] **इत्यादिभिरित्यर्थः । नन्विदमन्तरङ्गेऽपि समानमिति नेत्याह**—न तथेति । **इदं विदितमित्युक्तमेव दर्शयति**—अनपेक्ष्येति ॥ ३५४–३५५ ॥

अ० टी०—बहिरङ्गेषु भगवत्समर्पणगुणविधाने प्रमाणमाह—**भगवानिति ।**

' मयि सर्वाणि कर्माणि संन्यस्याध्यात्मचेतसा ।
निराशीर्निर्ममो भूत्वा युध्यस्व विगतज्वरः ॥ ' [ गी० ३ । ३० ]
' यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ' ॥ [ गी० १८ । ४६ ]

मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि ' [ गी० १२ । १० ] इत्येवमसकृद्भगवानाहेत्यत एतादृशं भगवद्गीतावाक्यमिह प्रमाणमित्यर्थः ॥ ३५४ ॥

अ० टी०—एतदन्तरङ्गेऽपि समानं किं न स्यादिति चेन्नेत्याह—**न तथाऽन्तरङ्गेति ।** किं विदितं तदाह—**अनपेक्ष्येति ।** परमात्मनिश्चयफलं तदन्तरङ्गसाधनमिति यतोऽतस्तत्फलपरित्यजनमनपेक्ष्य तदनुष्ठेयं परमपदं सुजनैरिति विदितमिति योजना । अन्तरङ्गसाधनानां यज्ञादिवत्फलान्तराभावात्तत्त्वविज्ञानं प्रति व्यवधानाभावाच्च न तेषु फलत्यागेश्वरसमर्पणगुणयोगापेक्षाऽस्त्यतो न समर्पणवचनं साधारणविषयं किं तु बहिरङ्गविषयमेवेति भावः ॥ ३५५ ॥

सु० टी०—युक्त्याऽप्येवं विभाग इत्याह—

अपि च बन्धनहेतुतया श्रुतं
समसमीक्षणकौशलशालिनः[1] ।
भवति[2] शुद्धिकरं न च बन्धकृ-
द्भवति[3] कर्म तथा घटते हि तत् ॥ ३५६ ॥

अपि चेति । **बन्धहेतुतया देहेन्द्रियसंबन्धोपभोग्यफलहेतुतया श्रुतं यज्ञादि भवतु कर्म तथाऽपि समसमीक्षणकौशलशालिनः समदृष्टेरशुद्धिरूपफलकामनापरिहारेण भगवदर्पणबुद्ध्याऽनुतिष्ठतः शुद्धिकरं भवति न बन्धकृदित्यर्थः । कथं बन्धकस्वभावस्य तद्वैपरीत्यं तत्राऽऽह**—तथेति । **यथा केवलस्य दध्नो ज्वरहेतुत्वेऽपि मधुसंवलितस्य तस्य पुष्टिहेतुत्वं तथैतदपि बाध्येषु युक्तमित्यर्थः ॥ ३५६ ॥**

अ० टी०—न्यायतोऽप्येवमेव युक्तमित्याह—**अपि चेति** । बन्धनहेतुतया स्वभावतोऽनात्मरूपफलप्रदत्वेनाऽऽत्मनः संसारबन्धहेतुतया श्रुतं यत्कर्मजातं तत्समसमीक्षणकौशलशालिनः समस्य ब्रह्मणः समीक्षणं ज्ञानं तस्मिन्कौशलं तदुदयविरोध्यर्थपरित्यागेन तदुत्पत्त्यनुकूलसाधने निष्ठा तद्वतः पुंसस्तच्छुद्धिकरं भवतु । न च बन्धकृद्भवति कर्मेति तद्बहिरङ्गसाधनं तथा भगवत्समर्पणादियोगि घटत एवेत्यर्थः । स्वतोऽशुद्धानां कर्मणामशुद्धिकत्वांशपरिहारेण शुद्धत्वं भगवत्समर्पणवशादिति युक्तमिति भावः ॥ ३५६ ॥

सु० टी०—नन्वन्तराङ्गाणामपि तुल्यमशुद्धत्वं क्रियाकारकरूपाविशेषादिति नेत्याह—

यदिह साधनमात्मधियः श्रुतं
न च फलान्तरहेतुतया श्रुतम् ।
शमदमादिकमत्र तु कौशलं
किमपि काङ्क्षितमस्ति न सिद्धये ॥ ३५७ ॥

यदिहेति । **एषां ज्ञानहेतुत्वेन बन्धाहेतुत्वात्परमसात्त्विकत्वेन शुद्धत्वमित्यर्थः ॥ ३५७ ॥**

अ० टी०—नन्वन्तरङ्गसाधनानामपि तुल्यमशुद्धत्वं क्रियाकारकरूपत्वाविशेषादिति चेन्नेत्याह—**यदिह साधनमिति** । अक्षरार्थस्त्वतिरोहितः । अन्तरङ्गसाधनानां बन्ध-

---

१ ग. सकलमी° । २ क. वतु शु° । ३ क. वतुकृ° ।

हेतुत्वानवगमात्सम्यग्ज्ञानहेतुत्वावगमाच्च परमसात्त्विकतया स्वतः शुद्धत्वमवसीयत इति नात्राशुद्धिशङ्केति भावः ॥ ३५७ ॥

**सु० टी०—साधनोक्तिमुपसंहरति—**

**उक्तं साधनजातमत्र सकलं विद्यासमुत्पत्तये**
**यस्मिन्कर्मणि वैदिकेन विधिना नुन्नः परिव्राजकः ।**
**कर्तृत्वाद्युपमर्दनेन भवता विद्यानुकूलात्मना**
**कर्तव्यं तदशेषतस्तदनु ते विद्या विपाकं व्रजेत् ॥ ३५८ ॥**

उक्तमिति । **नुन्नः प्रेरितस्तेन परिव्राजकस्यात्राधिकार उक्तः । ततः किं तत्राऽऽह**—भवतेति । **कर्तृत्वादीति शेषिविरोधपरिहारायोक्तम् । युक्तिभिस्तदनुपमर्दने ह्यकर्त्रात्मानुभवरूपविद्याप्रतिबन्धान्न तद्विपाकः स्यादिति ॥ ३५८ ॥**

अ० टी०—अध्यायार्थमुपसंहरति—**उक्तं साधनजातमिति** । अत्र तृतीयाध्याये सकलमन्तरङ्गबहिरङ्गरूपं विद्यासमुत्पत्तयेऽपेक्षितमुक्तमित्युपसंहारवाक्यान्वयः । एतच्चोक्तं साधनजातं कर्तृत्वादिबुद्धिराहित्येन कर्तव्यमविक्रियब्रह्मात्मविद्योदयाय तत्परिपाकाय चान्यथा तदानुकूल्यायोगाच्छेषिविरोधापत्तेरित्याह—**यस्मिन्कर्मणीति** । अत्र परिव्राजकग्रहणं यज्ञादिकर्मचोदनाविषये भाविनीं वृत्तिमाश्रित्य शमादिचोदनायां तु साक्षादिति द्रष्टव्यम् । नुन्नः प्रेरितः । अशेषतः सर्वमेवेति यावत् । तदनुसम्यक्साधनसंपत्तिसमनन्तरं ते तव विद्या विपाकं व्रजेत्फलपर्यन्ता भविष्यतीत्यर्थः । विपाकग्रहणमुत्पत्तेरप्युपलक्षणम् । यद्वा परिव्राजकस्यान्तरङ्गानुष्ठाननिष्ठायां विशेषमाह—**यस्मिन्कर्मणीति** । शमादियुक्ते वेदान्तश्रवणादावित्यर्थः । अत्र परिव्राजकग्रहणं यथार्थमेव । समानमन्यत् ॥ ३५८ ॥

**सु० टी०—यदि परिव्राजकानुष्ठितस्यैव श्रवणादेर्विद्यापरिपाकहेतुत्वं तदा वानप्रस्थाद्यनुष्ठितस्य वैयर्थ्यं स्यादिति तत्राऽऽह—**

**वानप्रस्थगृहस्थनैष्ठिकजनैरन्यैश्च वर्णाश्रमैः**
**कर्मण्यध्वनिषेवितं भवति वै जन्मान्तरे पाचकम् ।**
**विद्यायाः श्रवणादिलक्षणमिदं न ह्येतदेषां क्वचि-**
**च्छास्त्रेण प्रतिषिद्धमीक्षितमिदं शूद्रस्य दृष्टं यथा ॥ ३५९ ॥**

---

१ क. र्मछिद्र° ।

वानप्रस्थेति । **यतस्तेषां श्रवणादिकर्म विमार्गासेवितं भवति संन्यासरूपाङ्गाभावात्ततो जन्मान्तरे पारमहंस्याश्रमे फलपर्यन्तं भवतीत्यर्थः । तर्हि तेषामधिकारे किं मानमिति चेत्तत्राऽऽह—**न हीति । **दृष्टफलत्वात्सामान्यतः प्राप्तोऽधिकारः प्रतिषेधाद्योग्यः स च नैषामस्ति यथा शूद्रस्येत्यर्थः ॥ ३५९ ॥**

अ० टी०—ननु परिव्राजक इति शमादियुक्तश्रवणादौ परिव्राजकस्याधिकार उक्तो न केवलमस्यैवाधिकारः किंत्वन्येषामपि त्रैवर्णिकानामस्त्यत्राधिकार इत्याह—**वानप्रस्थेति । कर्माध्वधेति ।** कर्मविरुद्धमार्गरूपम् । यद्वा कर्ममार्गमध्ये वानप्रस्थादिभिर्निषेवितं श्रवणमिदं यज्जन्मान्तरे विद्यायाः पाचकं भवतीति योजना । एतेषां ब्राह्मणरूपजन्मान्तरे पारमहंस्याश्रमप्राप्तौ फलपर्यन्ततां भवतीत्यर्थः । कुत एषामप्यत्राधिकारप्राप्तिरिति चेत्प्रतिषेधादर्शनादेवेत्याह—**न ह्येतदेषामिति ।** यथेदं शूद्रस्य प्रतिषिद्धं दृश्यते तथैतच्छ्रवणाद्येषां वानप्रस्थादीनां न क्वचिच्छास्त्रेण प्रतिषिद्धमीक्षितमस्ति । अतो दृष्टफलत्वादेव सर्वेषां सामान्यतोऽधिकारप्राप्तौ प्रतिषेधादेव तदपवादो युक्तो यथा शूद्रस्य वेदाध्ययनादिप्रतिषेधदर्शनादध्ययनाद्यपवादः । न चैषां तथा श्रवणादिनिषेधो दृष्ट इति प्रतिषेधाभावमात्रेण प्राप्ताधिकारस्थितिरित्यर्थः ॥ ३५९ ॥

**सु० टी०—ननु परिव्राजकस्यैवाभावात्कुतस्तस्याधिकार इति तत्राऽऽह—**

**सर्वश्रुतिस्मृतिवचोभिरयं परिव्रा-**
**ण्मुण्डः शुचिः परमहंस इति प्रसिद्धः ।**
**ज्ञानाय साधनधनेषु नियुज्यमानः**
**प्रायेण बुद्धिपरिपाकमवाप्स्यतीह ॥ ३६० ॥**

सर्वेति । **तर्हि कथं तस्य श्रवणादावधिकारस्तत्राऽऽह—**ज्ञानायेति । **'संन्यस्य श्रवणं कुर्यात्' इत्यादिभिरित्यर्थः । तर्हि तस्यापि किं वनस्थादिवज्जन्मान्तर एव विद्याविपाक इति नेत्याह**—प्रायेणेति । **पूर्वमेवैतदुक्तमित्यर्थः ॥ ३६० ॥**

अ० टी०—यदि वानप्रस्थादेरधिकारे सत्यपि तत्कृतश्रवणादि जन्मान्तरे पाचकं तदा परमहंसस्यास्मिन्नेव जन्मनि परिपक्वज्ञानोदय इति कथमध्यवसाय इति चेत्तत्राऽऽह—**सर्वश्रुतीति ।** मुण्ड इति ।

'सशिखं वपनं कृत्वा त्रिवृत्सूत्रं त्यजेद्बुधः ।
यदक्षरं परं ब्रह्म तत्सूत्रमिति धारयेत्' ॥

'मुण्डोऽपरिग्रहः शुचिरद्रोहः' [जाबा० ५] इत्यादिश्रुतिवचोभिरेतदनुसारिस्मृतिवचोभिश्च शिखायज्ञोपवीतादिकर्मसाधनानां साकल्येन त्यागवानित्यर्थः । शुचिरित्यैहिकामुष्मिकफलैषणात्यागाद्देहजात्याद्यभिमानत्यागाच्च शुद्ध इत्यर्थः । ज्ञानाय ज्ञानोत्पत्तय एव साक्षात्साधनधनेष्विति यावत् । प्रायेणेति बलवत्प्रतिबन्धकाभाव इत्यर्थः । साधनचतुष्टयसंपत्त्या प्राप्तपरमहंसाश्रमस्यैव ज्ञानसाधनश्रवणाद्यनुष्ठानस्य साक्षाद्विधानात्परमहंसानुष्ठितत्वकृतः कश्चिदुत्कर्षोऽस्ति साधनानामिति गम्यते । दृष्टश्च परमहंस एव साद्गुण्येनानुष्ठानलक्षण उत्कर्ष इति तस्यैवेह ज्ञानपरिपाकसिद्धिर्नेतरवर्णाश्रमाणामिति निश्चीयत इति भावः ॥ ३६० ॥

**सु० टी०—ननु जनकादीनां गृहस्थानामपि विद्योपलम्भश्रवणात्कः परिव्राजके विशेष इति तत्राऽऽह—**

**जन्मान्तरेषु यदि साधनजातमासी-**
**त्संन्यासपूर्वकमिदं श्रवणादिरूपम् ।**
**विद्यामवाप्स्यति जनः सकलोऽपि यत्र**
**तत्राऽऽश्रमादिषु वसन्न निवारयामः ॥ ३६१ ॥**

जन्मान्तरेष्विति । **संन्यासं विना ज्ञानपरिपाके तद्विधिवैयर्थ्यापत्तेस्तद्विधिबलादेव तेषां जन्मान्तरीयसंन्यासपूर्वकश्रवणाद्यनुमीयत इत्यर्थः । ॥ ३६१ ॥**

अ० टी०—नन्वाश्रमान्तरादिष्वपि परिपक्वज्ञानोदयः कश्चिद्दृश्यते तत्कथं तेषां जन्मान्तरे पाचकं साधनानुष्ठानमितिचेन्नैष दोषस्तेषां पूर्वजन्मनि संन्यासपूर्वकश्रवणाद्यनुष्ठानं वृत्तमिति कल्पनादन्यथा संन्यासविधिवैयर्थ्यप्रसङ्गादित्याह—**जन्मान्तरेष्विति** । स्पष्टाऽक्षरयोजना ॥ ३६१ ॥

**सु० टी०—संन्यासस्य नियमेन ज्ञानसाधनत्वे प्रमाणमाह—**

**वेदान्तविज्ञानसुनिश्चितार्थाः**
**संन्यासयोगाद्यतयः शुद्धसत्त्वाः ।**
**ते ब्रह्मलोकेषु परान्तकाले**
**परामृताः परिमुच्यन्ति सर्वे ॥ ३६२ ॥**

वेदान्तेति । **ये पूर्वं शुद्धसत्त्वास्ते संन्यासपूर्वककृतश्रवणादियोगाद्वेदान्तोत्थविशिष्टज्ञानेन निर्णीतात्मानः कदाचित्तदपरिपाकाद्ब्रह्मलोकं गताः सन्तो ब्रह्मणोऽन्तकाले तेन सह मुच्यन्त इत्यर्थः ॥ ३६२ ॥**

अ० टी०—ब्रह्मविद्यार्थिनः संन्यासकर्तव्यत्वे तद्वतः कृतकृत्यत्वे च प्रमाणत्वेन मन्त्रश्रुतिमुदाहरति—**वेदान्तविज्ञानेति** । प्रागनुष्ठितैर्भगवत्यर्पितैः कर्मपूगैः शुद्धसत्त्वाः संन्यासयोगाद्यतयः परमहंसा वेदान्तमहावाक्यजनितविज्ञानेन सुनिश्चितार्थाः समभिव्यक्तपरमानन्दाश्च ये ते सर्वे परान्तकाले महाप्रलयं ब्रह्मलोकेषु केनापि हेतुना हिरण्यगर्भलोकेषु स्थिता अपि परामृताः परमकैवल्यभाजः सन्तः परिमुच्यन्ति परिमुच्यन्त इत्यर्थः ॥ ३६२ ॥

**सु० टी०—इतिहासमप्याह—**

**नैतादृशं ब्राह्मणस्यास्ति वित्तं**
**यथैकता समता सत्यता च ।**
**शीलं स्थितिर्दण्डनिधानमार्जवं**
**ततस्ततश्चोपरमः[1] क्रियाभ्यः ॥ ३६३ ॥**

नैतादृशमिति । वित्तं **हितसाधनम्** । एकता **निःसहायता** । समता **सर्वत्र समदर्शिता** । सत्यता **सत्यभाषिता** । शीलं **शुभाचारः** । स्थितिर्**मर्यादानतिक्रमः** । दण्डनिधानं **हिंसानिवृत्तिः** । आर्जवम**कौटिल्यम् ॥ ३६३ ॥**

अ० टी०—अत्रैवेतिहासवचनान्यप्याह—**नैतादृशमिति** । एकतैकाकिता सदैकरूपव्यवहारवत्ता वा समता विषमेष्वपि जनेषु समबुद्धिता सत्यता यथार्थभाषिता च शीलं मङ्गलाचारः स्थितिरक्षोभ्यता शीलस्थितिरित्येकपदपाठे शीले निष्ठा दण्डनिधानं सर्वभूताभयदानं संन्यासः आर्जवमवक्रता क्वचिदर्थविशेषे व्यवहारविशेषे वाऽप्यनाग्रह इतियावत् । ततस्ततः क्रियाभ्य ऐहिकामुष्मिकप्रयोजनाभ्य उपरम औदासीन्यमित्यर्थः ॥ ३६३ ॥

**सु० टी०—सर्वक्रियोपरमफलमुदाहरणान्तरेणाऽऽह—**

**यतो यतो निवर्तते ततस्ततो विमुच्यते ।**
**निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ ३६४ ॥**

---

१ क. °रतिः क्रि° ।

यत इति । **निवृत्तिरेवाशेषदुःखतरणोपाय इत्यर्थः ॥ ३६४ ॥**

अ० टी०—क्रियाभ्य उपरमे यत्फलं तत्प्रत्यक्षमित्येतद्वचनान्तरेणाऽऽह—**यतो यत इति** ॥ ३६४ ॥

**किं ते धनेन किमु बन्धुभिरेव वा ते**
**किं ते दारैर्ब्राह्मण यो मरिष्यसि ।**
**आत्मानमन्विच्छ गुहां प्रविष्टं**
**पितामहास्ते क्व गताः पिता च ॥ ३६५ ॥**

**सु० टी०—तथा किं ते धनेनेत्यस्यार्थः । अनित्यधनपुत्रादिकं त्यक्त्वा नित्यात्मान्वेषणं हितमिति ३६५ ॥**

अ० टी०—सर्वतो निवर्तनाद्दुःखलेशानुभवोऽपि न भवतीति कथं धनादिसुखसाधनसंपत्त्या सुखोदयाभावे दुःखनिवृत्तेरसंभवादित्याशङ्क्य वाक्यान्तरोदाहरणेन परिहरति—**किं ते धनेति** । हे ब्राह्मण यस्त्वं मरिष्यसि किं धनादिभिः कृत्यं जीवतो हि तत्सुखाय स्यात्तस्मान्मरणात्पूर्वमेव धनादि सर्वं परित्यज्य गुहां प्रविष्टं बुद्ध्यन्तरनुप्रविष्टं यथावदनभिव्यक्तमात्मानमन्विच्छ तत्स्वरूपान्वेषणं कुरु तत एव तवाक्षयसुखप्राप्तिरित्यर्थः । मरणमवश्यमेवेत्यत्र मानमाह—**पितामह इति** ॥ ३६५ ॥

**अर्थस्य मूलं निकृतिः क्षमा च**
**कामस्य रूपं च वयो वपुश्च ।**
**धर्मस्य यागादि दया दमश्च**
**मोक्षस्य सर्वोपरमः क्रियाभ्यः ॥ ३६६ ॥**

**इति श्रीदेवेश्वरपूज्यपादशिष्यसर्वज्ञात्मभट्टारकमहामुनिविरचिते संक्षेपशारीरके साधनलक्षणं तृतीयोऽध्यायः ॥ ३ ॥**

---

**सु० टी०**—अर्थस्य मूलमिति । निकृतिः **शाठ्यम्** । क्षमा **सहिष्णुता** । **शेषं स्पष्टम् ॥ ३६६ ॥**

**श्रीमन्महेशचरणाब्जमधुव्रताग्नि-**
**चिन्मिश्रधीरपुरुषोत्तमनिर्मितायाम् ।**

शारीरकार्थसुखबोधनदीपिकाया-
मध्याय एष निरगाद्गहनस्तृतीयः ॥ ३ ॥

---

अ० टी०—चतुर्विधपुरुषार्थानामसाधारणकारणप्रदर्शकं वाक्यमुदाहरन्सर्वक्रियानिवृत्तिरेव मोक्षस्यासाधारणो हेतुरित्याह—**अर्थस्य मूलमिति** । निकृतिश्छलम् । अन्ये पुरुषार्था नानाहेतुसाध्या मोक्षस्य त्वेक एव हेतुरित्याह—**मोक्षस्येति** । सर्वक्रियोपरमस्य विना तत्त्वार्थावलम्बनमशक्यत्वात्तेन तत्पूर्वकं तत्त्वज्ञानमुपलक्ष्यते । तथा च श्रुतिः–' न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ' [ महाना० १० । ५ ] इति च ॥ ३६६ ॥

इति श्रीकृष्णतीर्थशिष्यरामतीर्थकृतायां संक्षेपशारीरकटीकायामन्वयार्थप्रकाशिकायां साधनाभिधस्तृतीयोऽध्यायः समाप्तः ॥

# अथ चतुर्थोऽध्यायः ।

सु० टी०—एवं साधनविचारं समाप्य फलविचारमारिप्सुः शिष्यस्य प्रश्नमुत्थापयति—

उक्तसाधनसमुद्भवा सती
किं प्रयच्छति फलं मुमुक्षवे ।
प्रत्यगात्ममतिरत्र मे मन-
स्यर्थिता समुपजायतेऽधुना ॥ १ ॥

उक्तेति । लोके शुक्तिकादिविद्याया अज्ञाननिवर्तकत्वदर्शनाद्वेदे चोद्गीथादिविद्यायाः कर्मसमृद्ध्यादिफलदर्शनात्प्रत्यगात्ममतिः कीदृशं फलं प्रयच्छति जन्यमजन्यं चेति संदिह्यत इत्यर्थः ॥ १ ॥

अ० टी०— + उक्तैः समस्तैः साधनैः संसिद्धैर्जायमानस्य महावाक्योत्थज्ञानस्य कीदृशी फलनिष्पत्तिरिति शिष्यः पृच्छति—उक्तसाधनेति । अत्र फलविषये । किं साधनान्तरफलवत्साध्यरूपमेव ब्रह्मज्ञानफलमपि किं वा कूटस्थरूपमिति मे मनस्यर्थिता जिज्ञासाऽधुना समुपजायत इत्यर्थः ॥ १ ॥

सु० टी०—प्रश्नान्तरमाह—

किं निरस्तसहकारिकारणा
केवलैव फलमर्पयेन्मतिः ।
बाह्यसाधनसहायसंपदा
वाऽन्विता फलविधायिनी भवेत् ॥ २ ॥

किं निरस्तेति । किमस्याः सहकारिकारणं कर्माद्यस्त्युत नेत्यर्थः । संपदाऽऽचितेतिपाठे तदुपबृंहितेत्यर्थः ॥ २ ॥

अ० टी०—तथोत्पन्नायाः प्रत्यगात्ममतेः स्वफले साध्ये सहकारिकारणमप्यस्त्युत नास्ति वेति च निर्णयमित्याह—किं निरस्तेति । ऋज्वर्थं पद्यम् ॥ २ ॥

---

+ श्लोकद्वयटीका ख. पुस्तकादभिलिखिता ।

सु० टी०–ननु मोक्षसाधनब्रह्मज्ञानाय विचारारम्भात्कुतो जिज्ञासाप्रकाश इत्याशङ्क्योपसंहारव्याजेन परिहरति—

एतदप्यहमवैतुमुत्सहे
निर्णयं कुरु कृपाविधेयधीः ।
एतदेव हि दयालुलक्षणं
यद्विनेयजनबुद्धिवर्धनम् ॥ ३ ॥

एतदपीति । सामान्यतो मोक्षफलत्वे सिद्धेऽपि तत्साधनविशेषप्रतिपत्त्या प्रश्नो घटत इत्यर्थः । प्रश्नबाहुल्यादायासः प्राप्त इति गुरुं क्षमापयति–एतदेवेति ॥ ३ ॥

अ० टी०—अत्रापि निर्णयो वक्तव्य इत्याह—**एतदपीति** । 'विधेयो निघ्न आयत्तः' इत्यभिधानात्कृपाविधेयधीः कृपायत्तधीः कृपापरवशधीरित्यर्थः । बहुशः प्रश्नकरणेनाऽऽयासः प्रापित इति गुरुं क्षमापयन्कृपाविधेयत्वं स्फुटयति—**एतदेवेति** । विनेयजनाः शिष्यजनाः ॥ ३ ॥

सु० टी०—उत्तरमाह—

उच्यते न तमसो निवृत्तितः
किंचिदस्ति परमात्मधीफलम् ।
अन्यदल्पमपि साधनान्तरं
न व्यपेक्ष्य फलदायिनी च धीः ॥ ४ ॥

उच्यत इति । अज्ञाननिवृत्तिमात्रं विद्यायाः फलं न वस्तुतः कस्यचिदुत्पत्तिर्निवृत्तिर्वा तत्र च सहकारिनिरपेक्षैव विद्येत्यर्थः ॥ ४ ॥

अ० टी०—आचार्य आह—**उच्यत इति** । उत्तरवचनं प्रतिज्ञायोत्तरमाह—**न तमसो निवृत्तित इति** । अविद्यानिवृत्तिमात्रं विद्याफलमिति हि प्रसिद्धमतः प्रत्यगज्ञानबाधनव्यतिरेकेण न किंचिद्वस्तुभूतमुत्पाद्यं वा निवर्तनीयं वाऽत्र फलमस्तीत्यर्थः । किं प्रयच्छति फलमिति प्रश्नस्योत्तरमुक्त्वा किं निरस्तसहकारिकारणमिति पृष्टस्योत्तरमाह—**अन्यदल्पमपीति** । साधनान्तरं व्यपेक्ष्य न फलदायिनीति संबन्धः ॥ ४ ॥

सु० टी०—उभयत्र दृष्टान्तमाह—

शुक्तिकाविषयबुद्धिजन्मनः
शुक्तिकागततमोनिवृत्तितः ।

नापरं किमपि दृश्यते फलं
नापरं च सहकारि कारणम् ॥ ५ ॥

शुक्तिकेति । ततश्च यद्विद्याफलं तदज्ञाननिवृत्तिरेव सहकारि निरपेक्षं चेति व्याप्तिरस्तीत्यर्थः ॥ ५ ॥

अ० टी०—अविद्यानिवृत्तिमात्रमेव विद्याफलं तत्र सहकार्यपेक्षा च नास्तीत्यत्र किं प्रमाणमित्यपेक्षायामनुमानं प्रमाणमिति वक्तुं व्याप्तिं तावदाह—शुक्तिकेति ॥ ५ ॥

सु० टी०—एवं च तद्दृष्टान्तेनाऽऽत्मविद्यायामपि तदनुमेयमित्याह—

एवमात्मनि तमोनिवृत्तितो
नान्यदस्ति परमात्मधीफलम् ।
नाप्यपेक्ष्य सहकारि कारणं
किंचिदात्ममतिरर्पयेत्फलम् ॥ ६ ॥

एवमात्मनीति ॥ ६ ॥

अ० टी०—एवं व्याप्तिमुक्त्वाऽनुमानमाह—एवमात्मनीति । विमता परमात्मधीः स्वविषयतमोनिवृत्तिमात्रफला तत्र सहकारिनिरपेक्षा च भवितुमर्हति यथार्थधीत्वात् । या यद्विषया यथार्थधीः सा तद्विषयाऽविद्यानिवृत्तिमात्रफला सहकारिनिरपेक्षा च दृष्टा यथा शुक्तिकाविषययथार्थधीस्तथा चेयं तस्मात्तथेति प्रयोगः ॥ ६ ॥

सु० टी०—ननु ब्रह्मज्ञानस्य विद्यान्तरवत्संपदादिरूपत्वेनाप्रमाणत्वात्कथमज्ञाननिवर्तकत्वं, प्रमाणत्वेऽपि वा सातिशयमोक्षसाधनस्य कथं साधनान्तरानपेक्षत्वमिति चेत्तत्राऽऽह—

ब्रह्मज्ञानं प्रमाणं भवति दृढमिदं नात्र कश्चिद्विवादो
ब्रह्मात्मा चैकरूपो न च बहुरसकस्तत्परत्वाच्छ्रुतीनाम् ।
एवं सत्यद्वयात्मप्रमितिफलमिह द्वैतमूलापनुत्ति-
र्न ह्यज्ञानापनुत्तेरधिकमपि फलं किंचिदस्ति प्रमाणात् ॥ ७ ॥

ब्रह्मज्ञानमिति । पूर्वमेवैतत्प्रयत्नेन साधितमिति नैतच्चोद्यावकाश इत्यर्थः भेदाभेदमलं निरस्यति—न चेति । फलितमाह—एवमिति ॥ ७ ॥

अ० टी०—ननु नाविद्यानिवृत्तिमात्रफला ब्रह्मविद्या वैदिकविद्यात्वात्प्राणादिविद्यावदिति चेन्नैवमप्रमाणत्वोपाधिहतत्वादनुमानस्येत्याह—ब्रह्मज्ञानमिति । इदं ब्रह्मज्ञानं दृढं प्रमाणं भवति प्रत्यक्षादिवत्प्रमाकरणजन्यत्वादत्र च न कश्चिद्विवादः । एतेनो-

पाधेः साधनव्यापकत्वं निरस्तम् । न च प्रमाणादिज्ञानमपि प्रमाणमित्युपाधेः साध्याव्यापकत्वमपीति वाच्यमित्याह---**ब्रह्मात्मा चेति** । एकरूपः कूटस्थो न प्राणादिवद्विकारवानित्यर्थः । अत एव न च बहुरसकोऽनेकावस्थावान् । प्राणादिर्हि बह्ववस्थाकोऽनेकैर्विशेषणैः प्रत्युपासनविधिभिर्भिद्यमानत्वादतः प्राणादिविद्यानां पुरुषस्वातन्त्र्यविध्यधीनमानसक्रियारूपत्वादारोपितानेकविशेषणवत्प्राणाद्यालम्बनत्वाच्च न प्रमाणत्वमस्ति । परमात्मविद्यायास्तु वस्तुपरतन्त्रत्वादेकरूपब्रह्मात्मालम्बनत्वाच्चास्ति प्रामाण्यमिति महान्विशेष इत्यर्थः । नन्वस्त्वेवं ब्रह्मविद्यायाः प्राणादिविद्यातः स्वरूपतः फलतो वैलक्षण्यं तथाऽप्यनयाऽविद्यानिवृत्तिमात्रमस्तु समस्तद्वैतावभासरूपबन्धनिवृत्तये किमप्यन्यदपेक्षणीयं भविष्यतीति चेन्नेत्याह---**एवं सतीति** । समस्तद्वैतस्य प्रत्यगज्ञानमूलत्वान्मूलनिवृत्त्यैव भौतिकस्याऽऽत्यन्तिकी निवृत्तिरिति द्वैतमूलाज्ञाननिवृत्तिरेवाद्वयात्मप्रमितिफलमिह विवक्षितं नाज्ञानस्य केवलस्य निवृत्तिरित्यर्थः । अतोऽज्ञानापनुत्तेः पृथगधिकफलं ज्ञानसाध्यं न ह्यस्ति प्रमाणसिद्धमित्यर्थः । द्वैतबन्धस्याज्ञानमयत्वादिति भावः ॥ ७ ॥

**सु० टी०—किं च ज्ञानं किं स्वोत्पत्त्यर्थमेव कर्मापेक्षत उतोत्पन्नं सहकारित्वेनेति तत्र नाऽऽद्य इत्याह—**

**निरभिसंधि समर्पितमच्युते**
**विहितमिष्टफलादपि निर्गतम् ।**
**यदपि कर्म तदप्यवधीरितं**
**यदि धिया न तया परमर्थ्यते ॥ ८ ॥**

निरभिसंधीति । **कर्मविशेषणं क्रियाविशेषणं वा । विहितमनुष्ठितम् । ईदृशं भगवत्यर्पितमतिविशुद्धमपि कर्म चेत्परित्यक्तमित्यर्थः ॥ ८ ॥**

अ०टी०—एवं सति सहकारिनैरपेक्ष्यमपि सिद्धमिति सहकार्यभावोऽप्यस्य सिद्ध इत्याह—**निरभिसंधीति** । यदपि विहितं कर्माच्युते परमात्मनि निरभिसंधि फलाभिसंधिरहितं समर्पितमत एवेष्टफलादपि निर्गतं स्वरसतोऽभिलाषितस्वर्गादिफलादपि प्रच्यावितमेवंविधमत्यन्तविशुद्धं तदपि कर्म धिया यद्यवधीरितं दूरत एव त्यक्तं दूरत एवोपकारकमङ्गीकृत्य स्वसमये तन्निरपेक्षतया परित्यक्तमिति यावत् । तया धिया स्वोत्पात्तित एव फलशिरस्कया न परं सहकारिभूतमर्थ्यते । विहितकर्मातिरिक्तस्य सहकारिणोऽत्रासंभवात्तस्य चानया धिया दूरत एव त्यक्तत्वात्पुनस्तस्याः सहायत्वेनान्यस्य विधानादर्शनान्निरपेक्षैव ब्रह्मात्मधीर्मुक्तिफलाय कल्पत इति तात्पर्यार्थः ॥ ८ ॥

१ क. °विधिं भिद्य° ।

सु० टी०—नापि द्वितीय इत्याह—

समविषमसमुच्चयो न युक्तो
न हि जगदस्ति धियः प्रसूतिकाले ।
क्व नु बत विहितक्रियासमूहः
कथमिव तत्र समुच्चयोपपत्तिः ॥ ९ ॥

समविषमेति । ज्ञानोत्पत्तिसमय एवाविद्यातत्कार्यनिवृत्तौ तदन्तर्भूतस्य क्रियासमूहस्यापि निवृत्तेर्न समप्राधान्येन ज्ञानकर्मणोः समुच्चयो गुणप्रधानत्वेन विषमसमुच्चयो वा घटत इत्यर्थः ॥ ९ ॥

अ० टी०—ननु कर्मपरित्याग एवायुक्तस्तस्य कर्मणो यावज्जीवश्रुतिविहितत्वात्तस्मात्कर्मसमुच्चितमेव ज्ञानं मोक्षसाधनमिति केचित्प्रतिपन्नास्तान्प्रत्याह—**समविषमेति** । ज्ञानकर्मणोरुभयोरपि प्राधान्यं समसमुच्चयः । ज्ञानं प्रधानं कर्माप्रधानमथ वा कर्म प्रधानं ज्ञानमप्रधानमिति विषमसमुच्चयः । एते समविषमसमुच्चया ज्ञानकर्मणोर्न युक्ताः । तेषामयुक्तत्वसिद्धये कैमुतिकन्यायेन ज्ञानकाले कर्मणामसंभवमाह—**न हि जगदिति** । धियः प्रसूतिकाले जगदेव समष्टिव्यष्टिसंघातरूपं न ह्यस्ति निरस्तसमस्तप्रपञ्चनिर्विशेषब्रह्मात्माकारोदयत्वाद्विद्याया इत्यर्थः । यदा कर्मणः कारकमेव जगन्नास्ति तदा विहितः क्रियासमूहः क्व नु बत न क्वापीत्यर्थः । तत्रैवं सति कथमिव समुच्चयोपपत्तिर्न कथमपीत्यर्थः ॥ ९ ॥

सु० टी०—ननु न ज्ञानसमय एव संसारनिवृत्तिर्नियतेति ज्ञानिनोऽपि कर्मानुष्ठानसंभव इति चेन्नेत्याह—

अपि च परमहंसस्त्यक्तसर्वैषणः स-
न्ननुभवफलविद्यां साधनैर्यद्यवाप ।
कथमिव पुनरत्र प्राप्तिरस्ति क्रियाया
भवतु तदपवर्गो विद्ययैवैकयाऽस्य ॥ १० ॥

अपि चेति । अनुभवो ब्रह्मात्मैक्यसाक्षात्कारः । साधनैरन्तरङ्गैः । एवं च कृतार्थस्य कुतः कर्मानुष्ठाने प्रवृत्तिरित्यर्थः ॥ १० ॥

अ० टी०—इतश्च कर्मणां न सहकारित्वशङ्कावकाश इत्याह—**अपि चेति** । ज्ञानोत्पत्तावपि विरोधीन्येव कर्माणीति विज्ञाय त्यक्तसर्वैषणः परित्यक्तसाध्यसाधनैषणः सन्परमहंस उत्तमाश्रमं प्राप्तः साधनैर्निवृत्तिलक्षणैरेवानुभवफलविद्यां ब्रह्मात्मानुभवपर्यन्तां तत्त्वधियं यद्यवाप तदाऽस्यां विद्यायां क्रियायाः पुनः प्राप्तिः कथमिवास्ति नैवास्तीत्यर्थः ।

तत्तस्मादस्य परमहंसस्य विद्ययैकयैवापवर्गो भवतु भवेदित्यर्थः । तथा च यावज्जीवाद्युपबद्धाः कर्मविधयः संन्यासविधिश्रुत्युपरुद्धाः सन्तोऽविरक्तविषया व्यवतिष्ठन्ते । तेषां सामान्यतः प्रवृत्तेः । संन्यासविधीनां विरक्तविषयत्वेन विशेषनिष्ठत्वात्सामान्यशास्त्राद्विशेषशास्त्रस्य बलीयस्त्वादिति भावः ॥ १० ॥

**सु० टी०—नन्वात्मज्ञानस्य कर्तृसंस्कारत्वेन लिङ्गादेव कर्मशेषत्वमिति । मुक्तिसाधत्वाशङ्कैव नास्ति कुतो नैरपेक्ष्यमिति चेत्तत्राऽऽह—**

**यस्य प्रयोगविधिरस्ति परिग्रहीता**
**द्वारैदमर्थ्यविनिवेदकमस्य सर्वम् ।**
**श्रुत्यादिमानमिह नास्ति तदात्मबुद्धौ**
**तस्मादियं भवतु नः पुरुषार्थभूता ॥ ११ ॥**

यस्येति । **न श्रुतिलिङ्गादिकमङ्गाङ्गिभावे प्रमाणं किं तु सहायमात्रम् । प्रयोगविधिरेव तु साङ्गे कर्मण्यर्थिनं प्रेरयन्नैदमर्थ्यं विना तदनुपपत्तेस्तत्र मानम् । तस्मिंश्च परिग्रहीतरि सति श्रुत्यादीनि द्वारैदमर्थ्यमात्रं बोधयन्ति तत्परिग्रहश्च प्रकरणाद्वाक्याद्वा । न च ब्रह्मज्ञानस्य कर्मप्रकरणपाठोऽस्ति नापि वाक्यं पर्णमयीत्वादिवत् । ज्ञेयस्याऽऽत्मनः क्रत्वव्यभिचाराभावादिति न तज्ज्ञानस्य कर्माङ्गत्वमित्यर्थः । तदुक्तं—**

**‘ सर्वत्रैव हि विज्ञानं संस्कारत्वेन गम्यते ।**
**पराङ्गं चाऽऽत्मविज्ञानादन्यत्रेत्यवधारणात् ’ इति ॥११॥**

अं० टी०—ननु कर्मणामेव पुरुषार्थहेतुत्वं ज्ञानस्य तु सर्वत्र तदङ्गत्वमेवेत्यात्मतत्त्वज्ञानस्यापि कर्माङ्गत्वमेवेति चेन्न ब्रह्मात्मज्ञानस्य कर्माङ्गत्वे प्रमाणाभावादित्याह—**यस्य प्रयोगविधिरिति** । प्रयोगविधिरिति प्रधानविधिरेव ग्राहकावस्थो विवक्ष्यते । तथा च यस्य स्वप्रकरणपठितस्यानारभ्याधीतस्य वा पदार्थस्य परिग्रहीता प्रयोगविधिरस्ति । अस्य सर्वं श्रुत्यादिमानं श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यालक्षणमङ्गविनियोजकं मानजातं द्वारैदमर्थ्यविनिवेदकं सामान्यतः प्रयोगविधिपरिगृहीतस्यार्थस्याङ्गभूतस्य क्रियास्वरूपादिनिर्वर्तनद्वारबलादैदमर्थ्यविनिवेदकमनेन द्वारेणेदमेतदर्थमनुष्ठेयमिति ज्ञापकं भवति न स्वातन्त्र्येण श्रुत्यादिकस्य किंचिद्विनियोजकं किं तु प्रयोगविधिरेव विनियोजकः । तद्विनियोजकप्रयोगविधिलक्षणं श्रुत्यादिलक्षणं चेहाऽऽत्मबुद्धौ नास्ति भिन्नप्रकरणत्वात् । तस्मादत्र विनियोजकप्रमाणाभावादियमात्मबुद्धिर्नोऽस्माकं पुरुषार्थभूता भवत्विति योजना । एतदुक्तं भवति—आत्मज्ञानस्य न कर्मप्रकरणसंबन्धो येन प्रयोगविधिना परिगृह्यते[1] ।

१ ख. °गृह्येत ।

नाप्यनारभ्याधीतन्यायावतारोऽत्रास्ति पर्णताया जुहूवदात्मज्ञानस्येह द्वाराभावात् । आत्मैव द्वारमिति चेन्न तस्य जुहूवत्क्रत्वव्यभिचाराभावादात्मनो विहिताविहितप्रतिषिद्धसर्वक्रियासाधारणत्वात्पर्णताया इवेह विनियोजकवाक्याभावाच्च । तथा हि[1] न तावदिह—ऐन्द्या गार्हपत्यमितिवदात्मज्ञानेनेदं कार्यमिति श्रुतिर्दृश्यते । नापि बर्हिर्देवसदनं[2] छिनद्मीतिवल्लिङ्गमुपलभ्यते । नन्वस्त्यत्र लिङ्गमन्यथानुपपत्तिकल्पितं यतो देहव्यतिरिक्तात्मज्ञानस्य पारलौकिकफलकर्मसूपयोगो दृश्यते । अतस्तैस्तदाक्षेप इत्यनेन लिङ्गेन विनियोगोपपत्तेरितिचेन्न देहव्यतिरेकादधिकरूपस्य कर्माधिकारविरोधिनो वेदान्तेष्वाम्नानात् । न हि स्वप्रतिकूलमङ्गं किमपि कस्यचिद्भवति । यदि पुनर्देहव्यतिरिक्तस्वरूपमात्रमेवात्रोच्यते नाधिकमिति मन्येत तथाऽपि न लिङ्गमात्रादङ्गत्वसिद्धिस्तस्य द्वारैदमर्थ्यमात्रे मानत्वादत्र च द्वाराभाव उक्त इत्यतो न लिङ्गमपीहास्ति । वाक्यप्रकरणादीनां त्वत्राऽऽशङ्कैव नास्तीति स्वतन्त्रैव ब्रह्मविद्याऽन्यानिरपेक्षा च पुरुषार्थहेतुरिति । पुरुषार्थश्चाविद्यानिवृत्तिः ॥ ११ ॥

**सु० टी०—ननु ज्ञानसाध्या तमोनिवृत्तिः, किमात्मनो भिन्नोताभिन्नोताभिन्नाभिन्ना । आद्येऽपि किं सत्यसती सदसती मिथ्या वा । नाऽऽद्यो द्वैतापत्तेर्न द्वितीयो ज्ञानवैयर्थ्यापत्तेर्न तृतीयोऽसंभवान्न चतुर्थस्तमसः सत्यतापत्तेरिति चेत्तत्राह—**

**सदसत्सदसद्विकल्पितप्रतिपक्षैकवपुर्निवर्तनम् ।**
**तमसोऽभ्युपगम्यतेऽन्यथानुपपत्त्यापतनैकहेतुतः ॥ १२ ॥**

सदसदिति । **एवमाद्यनुपपत्त्या पञ्चमी विधाऽभ्युपगम्यत इत्यर्थः ॥१२॥**

अ० टी०—ननु तर्ह्यविद्यानिवृत्तिरेव कीदृशी तस्या आत्मान्यत्वेन सत्त्वे द्वैततादवस्थ्यादात्माद्वैततासिद्धेरात्मत्वेन सत्त्वे त्वनादिभावरूपतया निवृत्त्ययोगाद्विद्यावैयर्थ्यम् । असत्त्वे च खरशृङ्गादिवन्नित्यनिवृत्तत्वाद्विद्यावैयर्थ्यमेव । सदसदात्मकता तु विरोधादेकत्रानुपपन्ना । न चोभयविलक्षणाऽनिर्वचनीया सेति वाच्यम् । तस्या अविद्यात्मत्वादनिवृत्तिरेवाविद्यायाः स्यादिति चेन्न पञ्चमप्रकाराविद्यानिवृत्तिरित्यभ्युपगमादित्याह—**सदसदिति** । तमसो निवर्तनं निवृत्तिः सदसत्सदसद्विकल्पितप्रतिपक्षैकवपुरभ्युपगम्यते न सन्नासन्न सदसद्रूपं न वा विकल्पितं सदसत्सदसद्विलक्षणमपि तमोनिवर्तनमभ्युपगम्यते । किं त्वेभ्यः प्रकारेभ्यो विलक्षणमेतत्प्रतिपक्षैकस्वभावं यत्किंचिदिति पञ्चमप्रकाराज्ञाननिवृत्तिरिति यं विद्वांसः कथयन्ति तं वयमभ्युपगच्छाम इत्यर्थः । अस्मिन्पक्षे किं प्रमाण-

---

१ क. °हि उपनिषदितिसम्यक्—ऐन्द्या° । २ ख. °नं दामीति° ।

मित्यपेक्षायां सदादिपक्षसहत्वानुपपत्तिरेव मानमित्याह—**अन्यथानुपपत्तीति** । सदादिपक्षविलक्षणत्वेन विना याऽनुपपत्तिस्तस्या आपतनं प्राप्तिस्तदेकहेतुतः सदाद्यनुपपत्तिप्रमाणत इत्यर्थः ॥ १२ ॥

**सु० टी०—एवमप्यनुपपत्तिस्तुल्येति चेन्नेत्याह—**

**सदसत्सदसद्विकल्पितप्रतिबद्धा न भवन्ति वर्णिते ।**
**परमात्मतमोनिवर्तनेऽनुपपत्तिप्रतिभासवृत्तयः ॥ १३ ॥**

सदसदिति । **प्रतिबद्धास्तदाश्रिताः । प्रतिभासवृत्तयो बुद्धिवृत्तयः । पञ्चमपक्षस्य दुष्टपक्षपरित्यागमात्रत्वात्तत्पक्षोक्तदोषा नात्र प्रतिभासन्त इत्यर्थः ॥ १३ ॥**

अ० टी०—नन्वयमपि प्रकारोऽनुपपन्नोऽस्यापि सदादिविकल्पप्रसरादिति चेन्नैवं संभवतीत्याह—**सदसदिति** । वर्णिते पूर्वपद्यनिरूपिते परमात्मतमोनिवर्तने सदादिविकल्पितप्रतिबद्धा दोषा न भवन्ति । के त इत्यत आह—**अनुपपत्तीति** । अनुपपत्तिप्रतिभासवृत्तयोऽनुपपत्तिप्रतीतिगोचरा इत्यक्षरयोजना । सदादिपक्षचतुष्टयप्रतिबद्धैव हि दोषप्राप्तिः पञ्चमप्रकारस्य तु दुष्टपक्षपरित्यागमात्रत्वात्तस्मिन्पक्षे दोषप्रतिभास एव नावतरतीति भावः ॥ १३ ॥

**सु० टी०—तमोनिवृत्तेः पञ्चमप्रकारत्वे वृद्धसंमतिमाह—**

**चितिभेदमभेदमेव वा द्वयरूपत्वमथो मृषात्मताम् ।**
**परिहृत्य तमोनिवर्तनं प्रथयन्ते खलु मुक्तिकोविदाः[2] ॥ १४ ॥**

चितिभेदमिति । **एवं तमोनिवृत्तेश्चैतन्याद्भेदाभेदादिविकल्पमपि परिहृत्येत्यर्थः । मुक्तिकोविदा इष्टसिद्धिकारादयः ॥ १४ ॥**

अ० टी०—चैतन्याद्भेदाभेदविकल्पेऽपि चोक्तप्रकारेण पञ्चमप्रकारत्वमेवाविद्यानिवृत्तेरिष्यत इत्याह—**चितिभेदमिति** । मुक्तिकोविदा इष्टसिद्धिकारादयः पण्डिता इत्यर्थः ॥ १४ ॥

**सु० टी०—एवमपि कल्पनागौरवमित्यस्वरसादात्माभिन्नैव तमोनिवृत्तिरित्याह—**

**अथ वा चितिरेव केवला**
**वचनोत्पादितबुद्धिवर्त्मना ।**

१ क. °त्वापातात्त° । २ क. °क्षिकादिनः ।

परमात्मतमोनिवृत्तिगी-
र्विषयत्वं समुपैत्युपाधिना ॥ १५ ॥

अथवेति । **वाक्योत्थबुद्धिवृत्तिलक्षणेनोपाधिनाऽऽत्मैवाविद्यानिवृत्तिशब्दार्थ इत्यर्थः ॥ १५ ॥**

अ० टी०—तमोनाशस्तमोनिवृत्तिरिति दृष्टिमाश्रित्य पञ्चमप्रकारत्वाङ्गीकरणेनानुपपत्तिदोषो निराकृतः । इदानीं बाध एव निवृत्तिशब्दार्थो न नाश इति परमसिद्धान्तदृष्टिमाश्रित्याऽऽत्मैव ज्ञातत्वोपलक्षितस्तमोनिवृत्तिरिति । पक्षान्तरमाह—**अथवेति** । केवला निर्विशेषा चितिरेव वाक्योत्पादितबुद्धिवर्त्मनोपाधिना वाक्योत्थबुद्धिवृत्तिप्रतिफलितत्वेन निमित्तेन परमात्मतमोनिवृत्तिगीर्विषयत्वं समुपैति ॥ १५ ॥

**सु० टी०—ननु लोके शुक्तिकादेरज्ञाननिवृत्तित्वाप्रसिद्धेः कथं चैतन्यस्य तथात्वमित्याशङ्क्याऽऽह—**

शुक्तिकाविषयबुद्धिजन्मना प्रत्यगात्मचितिरेव केवला ।
शुक्तिकागततमोनिवृत्तिरित्युच्यते दृतिहरिः पशुर्यथा ॥ १६ ॥

शुक्तिकेति । **यथा दृतिहरणकर्तैव पशुत्वरूपतटस्थोपाधिना दृतिहरिशब्देनोच्यते तथा व्यवहारदशायां स्वाविद्यया शुक्तिकात्वमापन्नं चैतन्यमेव शुक्तिविज्ञानेनावगतं सत्तेनोपाधिना शुक्त्यज्ञाननिवृत्तिपदेनाभिधीयत इत्यर्थः ॥ १६ ॥**

अ० टी०—ननु शुक्तितमोनिवृत्तिः शुक्तितत्त्वज्ञानात्प्रसिद्धा सा च शुक्तिगता न चैतन्यगता शुक्तेरचैतन्यत्वात् । तथा चाऽऽत्मन्यनात्मनि चानुगतं चिन्मात्रादन्यदेवाज्ञाननिवृत्तिशब्दवाच्यमेष्टव्यमिति चेन्नैवमित्याह—**शुक्तिकेति** । शुक्तिकादेः प्रत्यक्चैतन्यविवर्तत्वाच्छुक्तिकाद्यज्ञानमपि शुक्तिकाद्यवच्छिन्नाकारप्रत्यगज्ञानमेव न स्वातन्त्र्येण । जडस्याज्ञानं प्रति विषयत्वेनाऽऽश्रयत्वेन वा संबन्धोऽस्ति । अतः शुक्तिकाविषयबुद्धिजन्मना शुक्त्यवच्छिन्नचिदभिव्यञ्जकतयोत्पन्नबुद्धिवृत्त्युपाधिना केवला प्रत्यगात्मचितिरेव शुक्तिकागततमोनिवृत्तिरित्युच्यते । तस्मात्तमोनिवृत्तिः सर्वत्र चैतन्यमात्रतया चैतन्यगतैवेति नाननुगमशङ्केत्यर्थः ॥ १६ ॥

**सु० टी०—ननु 'हरतेर्दृतिनाथयोः पशौ' इत्यत्र पशुवाचकत्वेने-**

---

१ क. वा न सं॰ ।

न्प्रत्ययो विहितो न हरणमात्रकर्तरि तादृशेऽपि पुंसि प्रयोगाभावादिति चेत्तत्राऽऽह—

वाचको हरणकर्तुरिष्यते
शब्द एष हि दृतेर्मनीषिभिः ।
केवलं तु पशुता निमित्ततां
बाह्यतः स्थितवती व्रजेदियम् ॥ १७ ॥

वाचक इति । दृतेर्हरणकर्तुर्वाचक एव शब्दः कृदन्तत्वात्किं त्वन्वयविशेषे दृतिनाथयोरुपपदयोः सतोः पशुत्वं तटस्थं निमित्तं भवति न वाच्यान्तर्गतमित्यर्थः ॥ १७ ॥

अ० टी०—दृतिहरिः पशुर्यथेति स्वोक्तबुद्धिवृत्तेरुपाधित्वे दृष्टान्त उक्तः । तत्रोपाधिर्नाम विशेषणोपलक्षणाभ्यामन्यो यथा पशुत्वं तटस्थमेव सद्दृतिहरिशब्दप्रवृत्तिनिमित्तमित्युक्तं दृष्टान्तं स्पष्टयति—**वाचक इति** । मनीषिभिरेष दृतिहरिशब्दो दृतेर्हरणकर्तुर्हि वाचक इष्यते । चर्मकोशं दृतिपदवाच्यं यो मनुष्यो वाऽश्वो वाऽन्यो वा हरति स योगवृत्त्या हि हरिशब्दवाच्यो भवतीति प्रसिद्धमित्यर्थः । यद्यप्येवं तथाऽपि पशुत्वविवक्षयैव दृतिहरिशब्दं प्रयुञ्जते मनीषिणो न दृतिहरणकर्तृत्वविवक्षयेति पशुत्वेन नियम्यमानं दृतिहरिपदं पशावेव निविशत इति पशुत्वं दृतिहरिपदस्य विषयभावं भजते पशुत्वं च वाच्याद्बहिरेव तिष्ठति न तु स्वयं वाच्यकोटौ विशेषणत्वेनोपलक्षणत्वेन वा प्रविशतीति सती दृतिः "हरतेर्दृतिनाथयोः पशौ" इति व्याकरणसूत्राद्गम्यत इत्येतत्सर्वमभिप्रेत्याऽऽह—**केवलं त्विति** । इयं पशुता वाच्यबाह्यतः स्थितवती सती दृतिहरिशब्दप्रवृत्तौ केवलं निमित्ततां व्रजेदिति योजना ॥ १७ ॥

**सु० टी०—दार्ष्टान्तिकेऽप्येवमित्याह—**

**एवमेव तु तमोनिवृत्तिगीः शुक्तिकाविषयबुद्धिजन्मना ।**
**बाह्यतः स्थितवतैव हेतुना प्रत्यगात्मचिति वर्ततेऽञ्जसा ॥१८॥**

एवमेवेति । **तटस्थेनैकशुक्तिज्ञानेन निमित्तेन शुक्त्यवच्छिन्नप्रत्यगात्मचितिशुक्त्यज्ञाननिवृत्तिशब्दो वर्तत इत्यर्थः ॥ १८ ॥**

अ० टी०—प्रकृतेऽप्यन्तःकरणवृत्तेरुपाधित्वमेष्टव्यमिति दार्ष्टान्तिकमाह—**एवमेवेति** । शुक्तिकाद्यनुगतमेव चैतन्यं शुक्त्याद्याकारान्तःकरणवृत्त्योपाधिना वाच्याद्बाह्येनैव सता

---

१ क. ग. लं दि प° ।

नियम्यमानं शुक्त्याद्यज्ञाननिवृत्तिशब्दवाच्यं भवतीति तात्पर्यार्थः । अक्षरयोजना त्वतिरोहिता ॥ १८ ॥

**सु० टी०—एतद्दृष्टान्तेन च ब्रह्मात्माऽपि वाक्योत्थबुद्धिवृत्तिं तदस्थां निमित्तीकृत्याज्ञाननिवृत्तिशब्देन व्यवह्रियत इत्याह—**

**उत्पन्नशुक्तिमतिरात्मचितिर्यथैवं[1]**
**शुक्तेस्तमोहतिरिति प्रतिपन्नमेव ।**
**आत्माऽपि जातनिजबुद्धिरबोधहानि-**
**रित्युच्यतेऽमलचिदेकरसो न पूर्वम् ॥ १९ ॥**

उत्पन्नेति । न पूर्वमिति । **सत्यप्यज्ञाननिवृत्तिरूपत्व इति शेषः ॥ १९ ॥**

अ० टी०—एतदेव दृष्टान्तीकृत्य ब्रह्मात्माज्ञाननिवृत्तिशब्दवाच्यं वाक्योत्थब्रह्माकारबुद्धिवृत्त्योपाधिना ब्रह्मात्मचैतन्यमेवेत्याह—**उत्पन्नशुक्तिमतिरिति ।** उत्पन्ना शुक्त्याकारान्तःकरणवृत्तिरूपा मतिर्यस्या उपाधित्वेनेष्टा सा आत्मचितिरुत्पन्नशुक्तिमतिः सा यथा शुक्तेस्तमोहानिरिति प्रतिपन्नमेवमात्माऽपि चिदेकरसो जातनिजबुद्धिर्वाक्योत्थबुद्धिवृत्तिजन्मोपाधिः सन्नबोधहानिरित्युच्यते किलेति सत्यं न पूर्वो यथोक्तबुद्धिवृत्त्युपाधिजन्मनः प्रागवस्थितस्तमोहानिरिति नोच्यत इति योजना ॥ १९ ॥

**सु० टी०—यदि चिदेवाज्ञाननिवृत्तिः कथं तर्हि तादृशधीवृत्त्युत्पत्तेः पूर्वमपि न तथा व्यवह्रियत इति चेत्तदा तन्निमित्ताभावादितिवक्तुमुक्तदृष्टान्तमेव दर्शयति—**

**दृतिहरणकरत्वं पुंसि चान्यत्र चेदं**
**दृतिहरिरिति लोके नोच्यते वर्तमानम् ।**
**अनधिकविकलं सत्कथ्यते तत्पशुस्थं**
**दृतिहरिरिति शिष्टैर्बाह्यहेतोः पशुत्वात् ॥ २० ॥**

दृतिहरणेति । **दृतिहर्तृत्वमन्यूनातिरिक्तं पुरुषादौ वर्तमानमपि न शिष्टैर्दृतिहरिशब्देनोच्यते । पशुगतं तु तन्मात्रमेव तच्छब्देनोच्यत इति हेतोः पशुत्वमेव तच्छब्दप्रयोगनिमित्तं व्युत्पत्तिस्मृतिभ्यामवसीयत इत्यर्थः ॥ २० ॥**

---

१ ख. घ. °मेवम् । २ ग. °निरुच्येत केवलः° । ३ ख. घ. पूर्वः ४ ख. °ह्मात्मन्यज्ञ° ।

अ० टी०—यदि केवलब्रह्मात्मचैतन्यमेव तमोनिवृत्तिशब्दवाच्यं तर्हि तादृशबुद्ध्युत्पत्तेः प्रागपि कुतोऽज्ञाननिवृत्तिरिति नोच्यत इति चेत्तत्र शब्दस्वभाव एष इति वक्तुमुक्तमेव दृष्टान्तमाह—**दृतिहरणेति** । इदं प्रत्यक्षं दृतिहरणकरत्वं पुंसि मनुष्येऽन्यत्राश्वादौ वा वर्तमानं लोके दृतिहरिरिति नोच्यते किं तु तद्दृतिहरणकर्तृत्वं पशुस्थमनधिकविकलं यदन्यूनातिरिक्तमव्यभिचारि सद्दृतिहारीरिति शब्दैः कथ्यते । बहुवचनं प्रयोगबाहुल्याभिप्रायं कस्माद्वाह्यहेतोः पशुत्वात्पशुत्वरूपाद्वाच्यबहिर्भूतादित्यक्षरार्थः । दृतिहरणकर्तृत्वं पुरुषादौ वर्तमानं दृतिहरिशब्देन नोच्यते तत्र व्युत्पत्तिव्याकरणस्मरणयोरभावात्किं तु पशौ वर्तमानं तन्मात्रमेव दृतिहरणपदेनोच्यत इति व्युत्पत्तिस्मृतिभ्यां प्रसिद्धमतः शब्दस्वभावोऽयमिति कल्पनीयम् । निमित्तानुबन्धिनी हि शब्दस्य प्रवृत्तिरिति तात्पर्यार्थः ॥ २० ॥

**सु० टी०—ननु तत्र ' हरतेर्दृतिनाथयोः ' इत्यादिसूत्रानुशासनादस्तु तथा दार्ष्टान्तिके तु कथमित्याशङ्क्याऽऽह—**

**अयमपि परमात्मा प्रत्यगात्मस्वभावो**
**वचनजनितबुद्धेः प्राक्स्वरूपे स्थितोऽपि ।**
**न खलु विषयभावं ध्वान्तविच्छेदवाचो**
**व्रजति हि तदुपाधेर्बुद्धिवृत्तेरभावात् ॥ २१ ॥**

अयमपीति । **अनुशासनाभावेऽपि न्यायसाम्यादिहापि बुद्धिवृत्तिः प्रयोगोपाधिरभ्युपेयेत्यर्थः ॥ २१ ॥**

अ० टी०—अत्राप्ययमेव न्याय इत्याह—**अयमपीति** । निगदव्याख्यातानि पद्याक्षराणि एतदुक्तं भवति । प्रकृतेऽप्यज्ञाननिवृत्तिशब्दः प्रत्यक्चैतन्यमेव वदेद्बुद्धिवृत्त्युपाधौ सत्येव नासतीति स्वभावोऽस्य शब्दस्योपाधेरागन्तुकत्वात्तन्निमित्तशब्दप्रयोगोऽप्यागन्तुक इति ॥ २१ ॥

**सु० टी०—नन्वभावपर्यायो नाशादिशब्दः कथं चैतन्ये प्रवर्ततामिति चेत्सत्यं नाशादिशब्दस्तथा अयं त्वज्ञानशब्देन सह समस्तोऽन्य एव भाववाचीत्याह—**

**अज्ञानदाह इति नैकपदं समासा-**
**त्पूर्वोत्तरे खलु पदे पदतामुपेतः ।**
**ज्ञानोदयं तटगत समुपाददान-**
**स्तस्मात्तमोहतिरवोऽत्र चिति प्रवृत्तः ॥ २२ ॥**

अज्ञानदाह इति । **अज्ञानस्य दाहोऽज्ञानदाहः । स च न ज्ञानं विना संभवतीति यौगिकत्वाच्छब्दप्रवृत्तिरुपपन्नेत्यर्थः । उपेतः प्राप्नुत इत्यर्थः । तस्माज्ज्ञानोदयमिति संबन्धः । तद्गतं तटस्थोपाधिम् ॥ २२ ॥**

अ० टी०—नन्वयं नाशादिशब्दो नञ्पर्यायोऽभाववाचकः प्रसिद्धः स कथं चैतन्ये सद्रूपे वर्तेतेतिचेत्सत्यमभाववचनो नाशादिशब्दः स्वभावतोऽत्रायमज्ञानशब्देन समस्यमानो नाशादिशब्दोऽन्योन्याभाववचन इत्याह—**अज्ञानदाह इतीति** । अज्ञानं दाह इति च स्वभावत इमे द्वे पदे नैकपदं कदापीत्यर्थः । समासात्तु निमित्तात्पूर्वोत्तरे पदे अज्ञानमिति पूर्वपदं नाश इत्युत्तरपदमेते पदतामैकपद्यमुपेतः प्राप्नुतः । तथा च समासवशाच्छब्दानामन्यत्रापि वृत्तिर्दृष्टेतीहापि समासवशान्नाशशब्दस्य स्वसंबन्ध्यभावमात्रादन्यत्र वृत्तिरुपपन्नेति फलितमाह—**ज्ञानोदयमिति** । तस्मादिति प्रथमं योज्यम् । तमोहतिरत्रोऽत्र प्रकृते तद्गतं तटस्थं ज्ञानोदयमुपाधिं समुपाददानश्चिति प्रवृत्तः । तथाचाज्ञानविलक्षणमज्ञानादन्यज्ज्ञानोदयोपाधिनाऽज्ञानविरुद्धाकारं चैतन्यमज्ञाननाशशब्दार्थ इति न विरुध्यत इति भावः॥२२॥

**सु० टी०—तर्हि विषमो दृष्टान्त इत्याशङ्क्याऽऽह—**

**अत्राप्यसौ दृतिहरिः पशुरित्यखण्डः**
**शब्दो न खल्वभिमतोऽवयवार्थयोगात् ।**
**धातुश्च वाचकतया हरतिः प्रसिद्धो**
**हीन्प्रत्ययश्च हरतेः परतः प्रसिद्धः ॥ २३ ॥**

अत्रापीति । **असावपि शब्दो नाखण्डो रूढोऽभिमत इति संबन्धः । दृतिं हरतीत्यवयवार्थयोगादित्यर्थः । एतदेव दर्शयति**—धातुश्चेति । **वाचकतया हरणक्रियाया इत्यर्थः । इन्प्रत्ययश्च कर्तृवाचकतया प्रसिद्ध इत्यर्थः ॥ २३ ॥**

अ० टी०—तथा दृतिहरिशब्दस्याप्यैकपद्यादेव विशिष्टार्थनियता वृत्तिराश्रिता तदवयवास्तु साधारणार्थवाचिन एवेत्याह—**अत्राप्यसाविति** । अवयवार्थयोगमेव विभजते—**धातुश्चेति** । हरतिर्धातुर्हरणवाचकतया प्रसिद्धो हृञ् हरण इति धातुपाठस्मृतेः । चकारोऽवधारणार्थो भिन्नक्रमः प्रसिद्ध एवेत्यर्थः । इन्प्रत्ययश्च हरतेर्धातोः परतः कर्तृवाचकतया प्रसिद्ध एव हीति योजना ॥ २३ ॥

**सु० टी०—भवत्वेवं ज्ञानफलमज्ञाननिवृत्तिः किं तत इति चेत्तत्राऽऽह—**

**उद्यन्निरस्यति तमश्च तदुद्भवं च**
**वेदावसानवचनादथ वोदितः सन् ।**

ऐकात्म्यवस्तुविषयोऽनुभवोऽत एव
कंचित्सहायमनपेक्ष्य निवर्तकोऽसौ ॥ २४ ॥

उद्यन्निति। **वाक्योत्थ आत्मानुभवो ह्युद्यन्नेवोदयोत्तरक्षण एव वाऽविद्या तत्कार्यं च निरस्यतीति नास्य सहायान्तरापेक्षत्वमित्यर्थः ॥ २४ ॥**

अ० टी०—तदेवमविद्यानिवृत्तिरात्मैवेत्यपि पक्षे न कदाचिदनुपपत्तिरिति स्थितम्। पुनरन्यदत्राऽऽशङ्क्यते। अयमात्मसाक्षात्कारः स्वोदयकाल एवाऽऽत्माज्ञानं निवर्तयेत्तदुत्तरकाले वेति। तत्रोभयथाऽपि न विरोध इत्युत्तरमाह—**उद्यन्निति**। अथ वा वाक्योत्थविद्यायाः सहायानपेक्षत्वं यत्प्रागभिहितं तत्र युक्तिविशेषं संचारयति—**उद्यन्निति**। ऐकात्मवस्तुविषयोऽनुभवो वेदावसानवचनादुद्यन्नेव वाऽथवोदित एव संस्तमश्च कारणं तदुद्भवं च कार्यं सर्वं निरस्यति। उदितः सन्नित्यपि न विलम्बः प्रतीयते किं तूदयसमनन्तरमेवेति न सहकारिप्रतीक्षाकल्पनावकाश इति द्रष्टव्यम्। यत एवं स्वभावोऽयमनुभवोऽत एवासौ किंचित्सहायमनपेक्ष्य निवर्तक इति सिद्धमित्यर्थः॥२४॥

**सु० टी०—एतदेव दृष्टान्तपूर्वकमुपपादयति—**

दीपस्तमस्तिरयतीह भवन्कुतश्चि-
द्भूत्वा क्षणव्यवधिमात्रमपेक्ष्य नात्र।
कश्चिद्विवादपदवीमुपयाति वादी
तद्वत्प्रतीच्यवगतौ तमसोऽपहन्त्र्याम् ॥ २५ ॥

दीप इति। तद्वदिति। **प्रतीचि याऽवगतिर्बुद्धिवृत्त्युपरागादभिव्यक्तिस्तस्यामित्यर्थः ॥ २५ ॥**

अ० टी०—तथाऽपि किं तत्त्वमितिचेत्तत्र दीपेन तमोनिवृत्ताविवेदं द्रष्टव्यमित्याह—**दीपस्तम इति**। भवन्नुत्पद्यमान एव दीपस्तमस्तिरयत्यपसारयति दर्शनाविषयं करोतीत्यर्थः। कुतश्चिन्निमित्तात्प्रतिबन्धवशापुनर्भूत्वोत्पद्य क्षणव्यवधिमात्रं क्षणव्यवधानमात्रमपेक्ष्य तमस्तिरयतीत्यत्र न कश्चिद्वादी विवादपदवीमुपयाति। यथाऽयं दृष्टान्तस्तद्वत्प्रतीचि तमसोपहन्त्र्यामवगतौ विज्ञाने योज्यमित्यर्थः ॥ २५ ॥

**सु० टी०—व्यञ्जकत्वादप्यनपेक्षत्वमस्या इत्याह—**

उत्पत्तिरेव हि धिया स्वफलं प्रदातु-
माकाङ्क्षिता न च ततोऽपरमर्थनीयम्।

---

१ ख. °स्थिते पुनः।

यत्कारकं तदिह काङ्क्षति जन्ममात्रा-
दन्यन्नधीः किमपि काङ्क्षति जन्म लब्ध्वा ॥२६॥

उत्पत्तिरेवेति । **बुद्धेर्हि फलप्रदाने जन्मैवापेक्षितं नान्यदित्यर्थः । तदुक्तं—'तेन जन्मैव विषये बुद्धेर्व्यापार इष्यते' इति । व्यतिरेकमप्याह—**यत्कारकमिति । **कारकं ह्युपकारापेक्षित्वाज्जन्मतोऽन्यत्सहकार्यपेक्षते न च धीस्तथेत्यर्थः ॥ २६ ॥**

अ० टी०—यद्यप्येवमुभयथाऽपि संभावनाऽस्ति तथाऽपि ब्रह्मविद्योत्पद्यमानैवाविद्यां निवर्तयेन्न व्यवधानमीषदप्यपेक्ष्य क्षणमात्रं व्यवधीयत इत्याह—**उत्पत्तिरिति ।** धिया वाक्योत्थया स्वफलं प्रदातुमुत्पत्तिरेवाऽऽकाङ्क्षिता । एवकारव्यावर्त्यं स्वयमेवाऽऽह—**न चेति ।** ततोऽपरमुत्पत्तेरन्यत्सहकारिभूतमर्थनीयं धियो न च विद्यत इति योजना । कुत इत्यत आह—**यत्कारकमिति ।** कारकस्यायं धर्मो यदुत्पद्य स्वकार्ये जनयितव्ये सहकारिप्रतीक्षया विलम्बेते न तु धियः प्रमाणत्वेनाकारकरूपाया इत्येवं सति यत्कारकं तदिह व्यवहारभूमौ स्वकार्ये वा स्वजन्ममात्रादन्यत्काङ्क्षति धीर्जन्म लब्ध्वा न किमपि काङ्क्षतीति योजना ॥ २६ ॥

**सु० टी०—अत्र वृद्धसंमतिमाह—**

प्रत्यक्षसूत्र इदमेव निवेदयिष्यन्
न्यायेन जैमिनिरुवाच विदग्धबुद्धिः ।
सत्संप्रयोग इति तत्र च बुद्धिजन्म
शब्दस्य नान्यदिह किं च न कृत्यमस्ति ॥ २७ ॥

प्रत्यक्षसूत्र इति । **ननु तदन्यपरमेवेति तत्राऽऽह—**तत्र हीति । **पुरुषस्येन्द्रियाणां बुद्धिजन्मेत्यत्र बुद्धिः प्रत्यक्षमित्युक्तेऽपि जन्मनोऽर्थसिद्धत्वाज्जन्मशब्दस्येदमेव कृत्यमित्यर्थः ॥ २७ ॥**

अ० टी०—ज्ञानस्य सहकार्यपेक्षा नास्तीत्यत्र जैमिन्याचार्यसूत्रवाक्यं प्रमाणयति—**प्रत्यक्षेति ।** "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत्प्रत्यक्षम्" [ जैमिनिन्याय० १ । १ । ४ ] । इति सूत्रे बुद्धिः प्रत्यक्षमित्येतावत्युक्तेऽपि तस्या जन्मार्थात्सिद्धमेवान्यथेन्द्रियाणां सत्संप्रयोग इति निमित्तनिर्देशवैयर्थ्यापातात् । तथाऽप्यर्थसिद्धं जन्म जन्मशब्देन निर्दिशन्नबुद्धेर्जन्मातिरिक्तो व्यापारोऽस्तीत्येतदेव सूत्रकारः सूचयतीति निष्पिण्डितोऽर्थः ।

---

१ ख. °ना समाऽस्ति । २ ख. °म्बनं न° ।

एषाऽक्षरयोजना विदग्धबुद्धिर्जैमिनिः सत्संप्रयोग इति प्रत्यक्षसूत्रे प्रत्यक्षप्रमाणलक्षणसूत्र इदमेव न्यायेन निवेदयिष्यन्नुवाच जन्मातिरिक्तो न बुद्धेर्व्यापारोऽस्तीत्येतन्न्यायेन प्रतिपादयन्बुद्धिजन्मेति पदं प्रायुङ्क्त । यतस्तत्र मन्त्रे बुद्धिजन्मशब्दस्येह लक्षणेनान्यत्किंचन कृत्यमस्ति विनाऽपि तेनातिव्याप्त्यादिनिरासासिद्धेरिति ॥ २७ ॥

सु० टी०—नन्वेवमपि मतिवृत्तेर्निवर्तकाभावात्तयाऽपि द्वैतापत्तिरितिचेन्नेत्याह—

वेदान्तवाक्यजनिता मतिवृत्तिरेव-
मुत्पत्तितः सकलमेव भवार्णवाम्बु ।
पीत्वा स्वयं च खलु शाम्यति दग्धलोह-
पीतं यथाम्बु चितिमेव तु शेषयित्वा ॥ २८ ॥

वेदान्तेति । **सा हि जातमात्रैवाविद्यातत्कार्यं दग्ध्वा स्वयमपि नश्यन्ती चिन्मात्रं शेषयति यथा दग्धलोहपीताम्बु वह्निं स्वं च विनाश्य लोहमात्रं शिनष्टीत्यर्थः ॥ २८ ॥**

अ० टी०—अस्त्वेवं विद्योदयसमनन्तरमेवाविद्यायाः सकार्याया निवृत्तिर्विद्यायास्तु कथं निवृत्तिर्निवर्तकाभावात्तद्भावे वाऽनवस्थाप्रसङ्गादिति चेत्तत्राऽऽह—**वेदान्तवाक्येति ।** एवमित्युक्तन्यायेनेत्यर्थः । चितिमेवैकां शेषयित्वा स्वयं च खलु शाम्यति स्वनिवृत्तौ हेत्वन्तरं नापेक्षते । अतोऽनवस्थाप्रसङ्गो न भवतीत्येतद्दृष्टान्तेनोपपादयति—**दग्धलोहेति ।** यथा दग्धलोहपीतमम्बु दाहं शमयति स्वयं च लीयते लोहमात्रमवशेषयति तथा वेदान्तवाक्यजन्यात्ममतिवृत्तिरप्यविद्यातत्कार्यरूपप्रपञ्चं निवर्तयति स्वयमप्यविद्याकार्यान्तःपातित्वान्निवर्तते चिन्मात्रं चाऽऽत्मतत्त्वमवशेषयतीत्यर्थः ॥ २८ ॥

सु० टी०—नन्वविद्यानिवृत्तेस्तत्त्वज्ञानसाध्यस्वभावायाः कथं नित्यात्मस्वरूपत्वमिति तत्राऽऽह—

कूटस्थनित्यैव तु मुक्तिरेषा
विद्याफलत्वादिह यद्यदेवम् ।
तत्तत्तथा दृष्टमशेषमेव
यथा हि शुक्त्यादिपदार्थसंवित् ॥ २९ ॥

कूटस्थनित्येति । **यद्विद्याफलं तत्कूटस्थं यथा शुक्त्यज्ञाननिवृत्तिरूपशुक्त्यादिस्फुरणमित्यर्थः ॥ २९ ॥**

अ० टी०—तदेवमारोपितविद्यानिवृत्तिमात्रत्वान्मोक्षस्य कूटस्थत्वं प्रतिपादितं केचित्तु स्वर्गादिवन्मोक्षस्यापि साध्यत्वमाहुस्तान्प्रत्याह—**कूटस्थेति** । शुक्त्यादि पदार्थसंविदिति शुक्त्यादिविषयकप्रमाणफलभूता शुक्त्यादिस्फूर्तिरित्यर्थः ॥ २९ ॥

**सु० टी०—साध्यवैकल्यमाशङ्क्याऽऽह—**

**जन्मादिषड्भावविकारहीना**
**शुक्त्यादिवस्तुप्रणिविष्टसंवित् ।**
**न प्रागभावाद्यनुभूतिरस्याः**
**स्वतः प्रमाणादपि युज्यते हि ॥ ३० ॥**

जन्मादीति । **तत्र हेतुमाह—**न प्रागभावेति । **न हि संविदि जन्मादि संभवति प्रागभावस्य जन्मनो वा तस्यामनुभवासंभवात्तथा हि किं संवित्स्वरूपात्तदनुभवः प्रमाणान्तराद्वा नोभयमपि युक्तमित्यर्थः॥ ३० ॥**

अ० टी०—दृष्टान्ते साध्यवैकल्यमाशङ्क्याऽऽह—**जन्मादीति** । शुक्त्यादिवस्तुन्यविशिष्टसंवित् । शुक्त्यादिविशेषणांशहीना सती जन्मादिषड्भावविकारहीना कूटस्थैवेत्यर्थः । संवित्स्वरूपतो जन्मादिहीनाऽसंभावितजन्मादिधर्मत्वाद्यत्र न संभवति न तत्तेन धर्मेण धर्मवद्यथाग्निः शैत्येनेति प्रयोगः । हेत्वसिद्धिशङ्कां परिहरति—**न प्रागभावादीति** । अस्याः संविदो न स्वतः प्रागभावाद्यनुभूतिर्युज्यते । स्वप्रागभावः स्ववेद्यो न घटते नापि प्रमाणादन्यस्मात्तद्युज्यत इत्यक्षरार्थः । एतदुक्तं भवति । संविदो जन्मप्रागभावाद्यनुभवः संविदा तावन्न सिध्यति । स्वसंबन्धितया हि स्वप्रागभावाद्यनुभवो वक्तव्यः स स्वात्मनिवृत्तिविरोधान्न संभवति । नापि प्रमाणान्तरात्तत्सिद्धिर्मानवेद्यत्वे जडत्वोपपत्तेः संवित्त्वव्याघातात् । स्ववेद्यत्वे चायं दोषः समानो वेद्यत्वमात्रस्यैव जडत्वप्रयोजकत्वात्संविद्ग्रहणे च तत्संबन्धितया जन्मादिग्रहणासंभवादतोऽसंभावितजन्मादिधर्मत्वादिति हेतुर्नासिद्ध इति ॥ ३० ॥

**सु० टी०—कुत इत्यपेक्षायां किं संविदमबुद्ध्वैव तत्प्रागभावाद्यनुभूयते किं वा बुद्ध्वा तत्र नाऽऽद्य इत्याह—**

**अबुध्यमानो न हि संविदं तत्**
**संबन्धि किंचित्प्रतिपत्तुमीशः ।**

१ क. °पितावित्ति° । २ ख. घ. °स्तुन्याविशिष्ट° । ग. स्तूपानीवि° । ३ ख. °द्भाव-विकाररहिता अ° ।

न बुध्यमानोऽपि तथा तदा हि
न संविदेषा विषयत्वहेतोः ॥ ३१ ॥

अबुध्यमान इति । संविदं स्वरूपेण प्रमाणेन वाऽबुध्यमानोऽविषयीकुर्वन्न तत्संबन्धिप्रागभावजन्मादि विषयी कुर्यादित्यर्थः । नापि द्वितीय इत्याह—न बुध्यमानोऽपीति । स्वतः स्वजन्मादिबोधनासंभवाद्वेद्यत्वेऽसंविस्त्वप्रसङ्गादित्यर्थः ॥ ३१ ॥

अ० टी०—एतदेव स्पष्टयति—अबुध्यमान इति । संविदमबुध्यमानोऽविषयीकुर्वन् । कश्चित्तत्संबन्धि किंचित्प्रागभावादि प्रतिपत्तुं न हीशः समर्थः । धर्मिधीसापेक्षत्वाद्धर्मबुद्धेरित्यर्थः । तथा संविदं बुध्यमानोऽपि न समर्थः । यतस्तदा ह्येषा संविदेव न भवति विषयत्वाद्धेतोर्विषयत्वे जडत्वापत्तेरित्यर्थः ॥ ३१ ॥

सु० टी०—व्यतिरेकव्याप्त्याऽपि कौटस्थ्यं साधयति—

जन्या न मुक्तिर्घटते कुतश्चि-
द्विद्याफलत्वादिति पूर्वहेतोः ।
यद्यद्धि जन्यं जगति प्रसिद्धं
तत्तन्न विद्याफलमध्वरादि ॥ ३२ ॥

जन्येति । यज्जन्यं न तद्विद्याफलं यथा वियदादीति ॥ ३२ ॥

अ० टी०—मोक्षस्य कूटस्थत्वं व्यतिरेकव्याप्तिच्छलेनानुमिनोति—जन्या न मुक्तिरिति अध्वरादीति । यथा यागादीत्यर्थः ॥ ३२ ॥

सु० टी०—अत एव मोक्षस्वरूपे कर्मणोऽप्युपयोगो नास्तीत्याह—

मोक्षस्वरूपे विफलक्रियोऽसौ
विद्याफलत्वादिह यद्यदेवम् ।
तत्तत्तथा दृष्टमशेषमेव
यथैव रज्ज्वादितमोनिवृत्तिः ॥ ३३ ॥

मोक्षेति । असावधिकारी विफलक्रियो विफलकर्मा । मुक्तिर्न कर्मसाध्येति यावत् ॥ ३३ ॥

---

१ ग. °मम्बरा° । २ ग. °रूपो वि° ।

अ० टी०—तेनैव हेतुना मोक्षस्य कर्मसाध्यत्वप्रतिषेधमुखेनापि कौटस्थ्यमेवानुमिनोति—**मोक्षस्वरूप इति** । असौ पुरुषो मोक्षस्वरूपे विफलक्रियः । मोक्षस्वरूपं न क्रियासाध्यमिति प्रतिज्ञापरमेतद्वाक्यं शिष्टं स्पष्टार्थम् ॥ ३३ ॥

**सु० टी०—ननु सायुज्यादिमुक्तेः क्रियासाध्यत्वादंशतो बाध इत्याशङ्क्याऽऽह—**

**सायुज्यादि न मोक्षपक्षपतितं विद्याफलत्वाहते-**
**र्मानस्याक्रियया[1]पजन्यत इदं यस्मादुपास्त्याख्यया ।**
**सायुज्यादिविवादगोचरपदं निःश्रेयसं नो भवे-**
**त्कार्यत्वादिह यद्यदीदृशमदो निःश्रेयसं नेक्षितम् ।**
**यद्वत्कुड्यघटादि तादृशमिदं तस्मादिदं तादृशं**
**युक्तं कल्पयितुं न तद्विसदृशं तादृङ् न दृष्टं यतः ॥ ३४ ॥**

' सायुज्यादि न मोक्षपक्षपतितं विद्याफलत्वाहतेर्मानस्याक्रियर्योपैजन्यत इदं यस्मादुपास्त्याख्यया ' इति क्वचिदर्धपद्यं **पठन्ति । तस्यायमर्थः—यत्खल्वामरणमभ्यस्यमानया हिरण्यगर्भोऽस्मीति मानस्योपासनया प्रतिमया परिपक्वया देहान्तेऽर्चिरादिना ब्रह्मलोकगतस्य स्वीयलिङ्गोपहितस्यैव समष्टिलिङ्ग इदमहमस्मीत्यभिमानात्मकं तादात्म्यं जायते तत्सायुज्यं तच्च मिथ्यात्वान्न मोक्षकोटिनिक्षिप्तम् । ततश्च तस्य पक्षबहिर्भावादेव न तत्र बाध इत्यर्थः । सायुज्यफलोपासनायाः क्रियात्वेन विद्यात्वाभावाद्धेत्वभावेनाऽपि न तत्रैकान्तिकताऽपीति । अत्रार्थेऽनुमानमाह**—सायुज्यादीति ॥ ३४ ॥

अ० टी०—ननु सायुज्यादिरूपोऽपि मोक्षः कर्मसाध्यश्चेति तत्र बाध इति चेन्मैवं तस्य मोक्षत्वासंप्रतिपत्तेरपक्षयत्वादित्याह—**सायुज्यादीति** । एतदपि पद्यं षट्पदम् । मोक्षपक्षानन्तर्भावे हेतुः—**विद्याफलत्वाहतेरिति** । आहतिर्हानिर्विद्याफलत्वाभावादित्यर्थः । एतेन पूर्वपद्योक्तानुमानेनैकान्तिकेनाऽऽशङ्काऽपि परिहृता सायुज्यादौ विद्याफलत्वहेतोरवृत्तेः । कुतः सायुज्यादेर्विद्याफलत्वाभाव इति तत्राऽऽह—**मानस्येति** । उपास्त्याख्ययेति विशेषणेन पुंपरतन्त्रत्वं क्रियायाः सूच्यते । उपास्तिर्विधिविहितया पुंपरतन्त्रमानसक्रियया यस्मादिदं सायुज्यादि जन्यते तस्मान्न विद्याफलमिति योजना । सायुज्या-

---

१ ख. ग. °क्षकमिदं वि° । २ ख. ग. °स्यानुजन्यते विहितया य° । ३ ख. मतोनिः° । ४ ग. °पयुज्यत । ५ ख. °न्तिकताश° ।

देर्मोक्षपक्षपातित्वाभावमुक्तमनुमानप्रयोगेण स्पष्टी करोति—**सायुज्यादिविवादगोचर**[१]**पदमिति**। कार्यत्वहेतुः क्रियासाध्यत्वोक्त्या साधित इति नासिद्धिशङ्कावकाशः । इहेत्यादि घटादीत्यन्तमुदाहरणवचनम् । सव्याप्तिकं दृष्टान्तवचनमुदाहरणमिति हि तल्लक्षणम्। तादृशमिदमित्युपनयवचनकार्यं चेदमित्यर्थः। निगमनमाह—**तस्मादिति कल्पयितुमित्यन्तेन**। तस्मात्कार्यत्वादित्यर्थः । तादृशमिति निःश्रेयसं न भवतीत्यर्थः। हेतोरप्रयोजकताशङ्कां परिहरति—**न तद्विसदृशमिति** । दृष्टं कुड्यादि विसदृशं नित्यं निःश्रेयसरूपत्वं न कल्पयितुं युक्तम्। यतः क्रियासाध्यं तादृशं नित्यं निःश्रेयसरूपं न दृष्टं क्वापीत्यर्थः। कृतकस्यानित्यत्वव्याप्तेरभङ्गादनित्यस्य च निःश्रेयसत्वाभावादिति भावः। न च बन्धध्वंसो मोक्षः क्रियासाध्योऽपि नित्यो भविष्यतीति वाच्यम्। 'ब्रह्म वेद ब्रह्मैव भवति' [ मुण्डक ३।२ ९ ] 'पुरुष इत्येव प्रोच्यते' [ प्रश्न ६।५ ] इत्यादिश्रुतौ ब्रह्मभावस्यैव मोक्षत्वाभिधानात् । अज्ञानमयबन्धनिवृत्तेश्च ज्ञानसाध्यत्वात्क्रियासाध्यत्वाभावस्य प्रागेवोपपादितत्वादिति द्रष्टव्यम् ॥ ३४ ॥

सु० टी०—**इतोऽप्युत्पत्तिविनाशरहिता मुक्तिरित्याह**—

**सदसदुद्भवनं न विमुक्तता**
**सदसदुद्भवनानुपपत्तितः।**
**सदसतोर्नशनं न विमुक्तता**
**सदसतोर्नशनानुपपत्तितः ॥ ३५ ॥**

सदसदिति। **जन्मविनाशाभ्युपगमे हि सती वाऽसती वा मुक्तिर्वाच्या तयोश्च जन्मनाशौ दुर्निरूपावित्युक्तमित्यर्थः ॥ ३५ ॥**

अ० टी०—इतश्च मोक्षः कूटस्थनित्य इत्याह—**सदसदिति** । सदसतोरुत्पत्तिविनाशयोर्दुर्निरूपत्वस्य प्रागेव प्रपञ्चितत्वान्न सदसतोरुत्पत्तिर्वा विनाशो वा मुक्तिरित्यर्थः ॥ ३५ ॥

**सु० टी०—अस्तु तर्हि कल्पितस्य सालोक्यादेर्जनिर्मुक्तिरिति चेत्तन्नाऽऽह**—

**न च तमोमयजन्म विमुक्तता**
**न हि तदिष्टमनिष्टतरं हि तत्।**
**न खलु कल्पितजन्म विमुक्ततां**
**समुपगच्छति तद्वितथं यतः ॥ ३६ ॥**

१ क. °रगतमि°। २ ख. °यनव°।

न चेति । तमोमयस्य जन्यस्य हेयत्वेनानभीष्टत्वान्न मुक्तित्वमित्यर्थः । एतदेवोपपादयति—न खल्विति ॥ ३६ ॥

अ० टी०—सदसज्जन्मविनाशयोर्वस्तुवृत्तत्वाभावेन तत्प्रतीतेस्तमोमयत्वेऽपि तमोमयस्यैव मोक्षत्वमस्त्वितिचेन्नेत्याह—**न च तमोमयेति** । जन्मेति नाशस्याप्युपलक्षणम् । तत्रानिष्टत्वं हेतुमाह—**न हीति** । मोक्षस्याभीष्टलक्षणत्वात्तमोमयस्य च तद्विरुद्धत्वान्न तस्य मोक्षत्वमित्यर्थः । इतोऽपि न तमोमयजन्मविनाशयोर्मोक्षरूपतेत्याह—**न खल्विति** । जन्ममुक्ततां जन्मविनाशयोर्विमुक्ततां न समुपगच्छति कश्चिदपीति शेषः । यतस्तत्तमोमयं वितथं मिथ्यैवेत्यर्थः । केनाप्यनङ्गीकारायोगत्वाच्चायं पक्ष एवासङ्गत इति भावः ॥ ३६ ॥

सु० टी०—अस्तु तर्हि तमोमयस्य सकलस्य निवृत्तिरेव मुक्तिरिति शङ्कते—

अथ तमोमयविश्वविकल्पना
विलयनात्मकमभ्युपगम्यते ।
सकलदूषणजातविवर्जितं
तदिह मोक्षपदं न निवार्यते ॥ ३७ ॥

अथेति । एतदङ्गी करोति—सकलेति । त[1]स्या आत्मतावन्मात्रत्वस्योक्तत्वान्न कौटस्थ्यादिविरोध इत्यर्थः । मोक्षपदं मोक्षस्वरूपम् ॥ ३७ ॥

अ० टी०—तर्हि तमोमयजन्मनाशो वा मोक्षो मा भूत्तमोमयप्रपञ्चविलय एव मोक्षोऽभ्युपगम्यत इति शङ्कते—**अथेति** । इमं पक्षमङ्गी करोति—**सकलेति** । तमोमयविश्वनिवृत्तेश्चात्मतावन्मात्रताया उपपादनात्कूटस्थनित्यैव मुक्तिरित्यत्र न किमपि दूषणमस्तीति तन्मोक्षपदमिहास्मन्मते न निवार्यते ॥ ३७ ॥

सु० टी०—ननु ज्ञानादविद्या निवर्तमाना किं निरवशेषैव निवर्तत उत प्रारब्धवशात्किंचिदनुवर्तत इत्याशङ्क्य निःशेषैवेत्याह—

सम्यग्ज्ञानविभावसुः सकलमेवाज्ञानसंभवं
सद्यो वस्तुबलप्रवर्तनमरुद्व्यापारसंदीपितः ।
निर्लेपेन हि दंदहीति न मनागप्यस्य रूपान्तरं
संसारस्य शिनष्टि तेन विदुषः सद्यो विमुक्तिर्ध्रुवा ॥ ३८ ॥

---

१ क. तस्य आत्मा° ।

सम्यग्ज्ञानेति । **वस्तुबलप्रवर्तनमेव मरुद्व्यापारस्तेन संदीपितिः । निर्लेपेन निःशेषम् ॥ ३८ ॥**

अ० टी०—सिद्धे मोक्षस्यैवं कौटस्थ्य इदं विचार्यते यद्यपि ज्ञानोत्पत्त्यनन्तरमेवाविद्या निवर्तते तथाऽपि निवृत्ताविद्यस्य मुक्तस्य देहपाते किं कश्चित्कालक्षेपोऽस्त्युत नेति जिज्ञासायां नेति तावदाह—**सम्यग्ज्ञानेति** । वस्त्वेव बलं वस्तुबलं तस्य प्रवर्तनमाविर्भावः स एव मरुद्व्यापारस्तेन संदीपितः । देहद्वयस्याज्ञानविलसितत्वात्तत्त्वज्ञानेन च स्वोदयमात्रेणाज्ञानस्य नाशितत्वान्निराश्रयस्य कार्यस्यावस्थानासंभवात्सद्यो मुक्तिरेव ध्रुवेत्यर्थः ॥ ३८ ॥

**सु० टी०—ननु सद्यो मुक्तिध्रौव्ये 'तस्य तावदेव चिरम्' [ छा० ६ । १४ । २ ] इत्यादिर्जीवन्मुक्तिप्रतिपादकशास्त्रस्य का गतिरिति तत्राऽऽह—**

**जीवन्मुक्तिप्रत्ययं शास्त्रजातं**
**जीवन्मुक्ते कल्पिते योजनीयम् ।**
**तावन्मात्रेणार्थवत्त्वोपपत्तेः**
**सद्योमुक्तिः सम्यगेतस्य हेतोः ॥ ३९ ॥**

जीवन्मुक्तीति । **कल्पिते गुर्वादौ । कथं कल्पितविषयत्वे शास्त्रत्वमिति चेदर्थवादत्वादित्याह**—तावन्मात्रेणेति । **तस्य हेतोः शास्त्रस्यान्यपरत्वाद्धेतोः ॥ ३९ ॥**

अ० टी०—तर्हि 'तस्य तावदेव चिरं यावन्न विमोक्ष्ये' [ छान्दो० ६ । १४ । २ ] इत्यादिजीवन्मुक्तिशास्त्रस्य का गतिरितिचेत्तत्राऽऽह—**जीवन्मुक्तीति** । जीवन्मुक्तेः प्रत्ययः प्रतीतिर्यस्मात्तज्जीवन्मुक्तिप्रत्ययम् । शास्त्रजातविशेषणमेतत् । श्रुतेः कथं कल्पितविषयत्वमप्रमाणत्वप्रसङ्गादिति चेन्नैष दोषोऽस्याः श्रुतेरर्थवादत्वादित्याह—**तावन्मात्रेणेति** । स्वार्थे फलवत्त्वाभावाद्विद्यास्तुत्यर्थत्वेन कल्पितजीवन्मुक्तविषयत्वमेवैतादृशवाक्यानामभ्युपेयं तावताऽपि प्रमाणत्वव्याघातादिति भावः । तस्य हेतोर्जीवन्मुक्तिज्ञापकशास्त्रस्यान्यपरत्वाद्धेतोः सद्यो मुक्तिः सम्यङ्न्याय्यैवेत्यर्थः ॥ ३९ ॥

**सु० टी०—विदुषामनुभवसिद्धा जीवन्मुक्तिरिति चेदस्तु तर्हि तथेत्याह—**

**यद्वा विद्वद्गोचरं योजनीयं**
**तस्या विद्यालेशवत्त्वोपपत्तेः ।**

---

१ क. °पत्वाद्ध्या° ।

तस्याभीष्टा निर्निमित्ता निवृत्ति-
र्यद्वा विद्यासंततिर्हेतुलेशः ॥ ४० ॥

यद्वेति । जीवन्मुक्तिशास्त्रमित्यनुषज्यते । विद्योदये कथमविद्येति चेत्तत्राऽऽह-तस्येति । लेशस्य किं निवर्तकमिति चेत्तत्राऽऽह-तस्याभीष्टेति । स्वत एवेत्यर्थः । तर्हि मूलाविद्याऽपि स्वयमेव निवर्ततां किं ज्ञानेनेति चेत्तत्राऽऽह—यद्वेति । जीवन्मुक्तिहेतुभूतं लेशम् । विद्यासंततिः संतन्यमानं वृत्त्यभिव्यक्तं चैतन्यमेव वा निवर्तयत्वित्यर्थः । प्रथमान्तपाठे तन्निवृत्तौ विद्यासंततिरूपो वा हेतुलेश इष्यतामिति योज्यम् ॥ ४० ॥

अ० टी०—तथाऽपि विदुषामनुभवसिद्धा जीवन्मुक्तिरिति चेत्तर्हि तत्परा वा सा श्रुतिरस्त्वित्याह—यद्वेति । योजनीयं जीवन्मुक्तिप्रत्ययं शास्त्रमित्यस्यानुषङ्गः । कथं मुक्तस्य जीवनं विद्योदये सत्यविद्यानिवृत्तौ तत्कार्यप्राणादिनिवृत्तेरिति चेन्न विदुषोऽप्यविद्यालेशस्यावस्थानाङ्गीकारादित्याह—तस्येति । तर्ह्यविद्यालेशस्य किं निवर्तकमितिचेन्न किमपीत्याह—तस्याभीष्टेति । निर्निमित्ता पूर्वप्राप्ततत्त्वविद्यातिरिक्तनिमित्तानपेक्षेत्यर्थः । नन्वविद्यालेशनिवृत्तिर्निर्निमित्ता चेदविद्यानिवृत्तिरपि तथा स्यादिति ज्ञानवैयर्थ्यं स्यादिति चेत्तत्राऽऽह—यद्वा विद्येति । विद्यासंततिरेवाविद्यालेशनिवर्तको हेतुलेशो निवृत्त्या विद्यालेशानुरूपोऽल्पो हेतुरभ्युपगम्यतामतो न क्वापि विद्यावैयर्थ्यमित्यर्थः ॥ ४० ॥

सु० टी०—नन्वविद्याया लेश एव नास्ति निरंशायास्तस्याः सर्वात्मना वस्तुबोधादेव निवृत्तेर्न च लेशोऽप्यैकान्तिकः क्वचिदविद्याया गन्धादविद्यासंस्कारादविद्याछायातश्च जीवन्मुक्तिश्रवणादिति चेत्तत्राऽऽह—

जीवन्मुक्तिव्यापृतेः[2] प्रापको य-
स्तस्याविद्यालेशगन्धादिभाषा।
नाविद्याया नापि भागस्य तस्या-
स्तस्मिन्पक्षे दुर्घटत्वाद्विमुक्तेः ॥ ४१ ॥

जीवन्मुक्तिव्यापृतेरिति । भिक्षाटनादिरूपाया इत्यर्थः । तस्याः प्रापिको यो हेतुस्तस्येत्यर्थः । नन्वविद्यैव जीवन्मुक्तिव्यापृतिप्रापिका तद्भागो वेति नेत्याह—नाविद्याया इति । अविद्यातद्भागावस्थाने मोक्षानुपपत्तेरित्यर्थः ॥ ४१ ॥

---

१ ख. °लेशम् । २ क. °न्मुक्तव्या° ।

अ० टी०—नन्वविद्यालेशावस्थानमप्यनुपपन्नं वस्तुतत्त्वस्य सर्वात्मना विद्ययाऽवभासेऽविद्याया लेशतोऽप्यवस्थानानुपपत्तेः । तथा पूर्वाचार्यग्रन्थेष्वविद्यालेशाज्जीवन्मुक्तिरुच्यते क्वचिदविद्यागन्धात्तदुक्तिः क्वाप्यविद्याछायया क्वचिदविद्यासंस्कारादिति ततो व्याकुलं चैतदिति चेत्तत्राऽऽह—**जीवन्मुक्तव्यापृतेरिति ।** जीवन्मुक्तस्य व्यापृतिर्भिक्षाटनादिव्यवहारस्तस्य प्रापको यो हेतुस्तस्याविद्यालेशादिभाषा नाम विद्वद्भिः कृतेति योजना । यदत्र जीवन्मुक्तिप्रापकतया न्यायप्राप्तं तदविद्यालेशादि शब्दैरुच्यते सर्वैः सर्वत्रेत्यतो न व्याकुलतेति भावः । किं तन्न्यायप्राप्तं तदुच्यतामिति चेत्तत्स्वरूपं वक्तुं तत्रासंभावितं तावदाह—**नाविद्याया इति ।** अविद्यायास्तावन्न तद्धेतुता नापि तस्या भागस्य तद्धेतुत्वम् । कुत इत्यत आह—**तस्मिन्निति ।** अविद्यातदेकदेशयोरन्यतरस्यापि सत्त्वे मुक्तत्वविरोधादित्यर्थः ॥ ४१ ॥

**सु० टी०—तर्हि किं तदिति चेत्तत्राऽऽह—**

**गन्धच्छायालेशसंस्कारभाषा**
**विज्ञातव्या भाष्यकारीयतन्त्रे ।**
**स्वाविद्याया बाधितायाः प्रतीतेः**
**पौर्वापर्येणार्थमालोच्य बुध्या ॥ ४२ ॥**

गन्धच्छायेति । **भाष्यादिग्रन्थे बाधिताविद्याप्रतीतिरेव गन्धच्छायादिशब्दैरुच्यत इति पौर्वापर्यपरामर्शादवगम्यत इत्यर्थः ॥ ४२ ॥**

अ० टी०—इदानीं तत्स्वरूपमाह—**गन्धच्छायेति ।** विद्याबाधितायाः स्वाविद्याया या प्रतीतिः प्रतिभासस्तस्याः प्रतीतेर्गन्धच्छायादिभाषा भाष्यकारीयतन्त्रे ग्रन्थविशेषेऽन्येषामपि ग्रन्थेषु दृश्यमाना विज्ञातव्या । कथं विज्ञातव्येति तत्रोपायमाह—**पौर्वापर्येणेति ।** बाधिताया एवाविद्यायाः प्रतीतिर्गन्धादिशब्दैरभिलप्यत इति विदुषां ग्रन्थेषु पौर्वापर्यालोचनादवगम्यत इत्यर्थः ॥ ४२ ॥

**सु० टी०—ननु जीवन्मुक्तिपक्षे भाषाया अर्थवत्ता मृग्या सैव नास्ति बाधिताविद्यावस्थितेरुपपत्तिविरुद्धत्वादित्याशङ्क्याऽऽह—**

**जीवन्मुक्तिस्तावदस्ति प्रतीते-**
**र्द्वैतच्छाया[1] तत्र चास्ति प्रतीतेः ।**
**द्वैतच्छाया[2] चास्ति लेशप्रतीते-**
**स्तस्मिन्नर्थे स्वानुभूतिः प्रमाणम् ॥ ४३ ॥**

---

१ ख. घ. °या चास्ति लेशप्र° । २ ख. ग. घ. °या...रक्षणायास्ति लेशस्त° ।

जीवन्मुक्तिरिति । **जीवन्मुक्तिस्तावदनुभवादेवाङ्गीकार्या तत्र द्वैतावभासोऽप्यनुभवसिद्धस्तच्चैतद्बाधिताविद्यानुवृत्तिं विना न घटत इति साऽपि स्वीकार्येत्यर्थः । ४३ ॥**

अ० टी०—ननु बाधिताया अविद्याया अवस्थानं प्रतीतिर्वा न्यायविरुद्धमिति चेत्तत्राऽऽह—**जीवन्मुक्तिस्तावदिति ।** प्रतीतेरनुभवबलादित्यर्थः । तत्र जीवन्मुक्त्यवस्थायां द्वैतच्छाया द्वैताभासश्चास्ति प्रतीतेः । एतत्सर्वं बाधिताविद्यानुवृत्तिं विना नोपपद्यत इत्याह—**द्वैतच्छाया चास्ति लेशप्रतीतेरिति ।** लेशशब्दो बाधिताविद्यावचनो लेशप्रतीतेरेव द्वैतच्छायाऽप्यनुभवसिद्धाऽस्त्यकारणकार्यायोगात्तथा कल्पनीयत्वादित्यर्थः । यस्मादेवं तस्मिन्नुक्ते सर्वस्मिन्नर्थे स्वानुभूतिः प्रमाणं तस्मादत्र नानुपपत्तिश्चोदनीयेत्यर्थः ॥ ४३ ॥

**सु० टी०—ननु कथं ज्ञानिनोऽप्यविद्यालेशस्तथात्वे वा कः प्रागवस्थातो विशेष इति तत्राऽऽह—**

**ब्रह्मात्मत्वं सान्तरायं पुरस्ता-**
**द्बोधोत्पत्तौ ध्वस्तमोहान्तरायम् ।**
**यद्यप्येवं द्वैतलेशानुवृत्तेः**
**प्रत्यक्षत्वान्मोहलेशोऽभ्युपेयः ॥ ४४ ॥**

ब्रह्मात्मत्वमिति । **अन्तरायस्याविद्यादेर्ध्वंस एव विशेष इत्यर्थः । तर्हि कथं लेशानुवृत्तिस्तत्राऽऽह—**यद्यपीति । **मोहलेशो बाधितावस्थानम् । अयं भावः—यथा मन्मुखमेवेदं न मुखान्तरमित्यपरोक्षानुभवबाधितमपि मुखभेदाध्यासहेत्वज्ञानं दर्पणाद्युपाधिप्रतिबन्धान्न निवर्तत इति दर्शनबलादङ्गी क्रियते तथा ब्रह्मसाक्षात्कारबाधितोऽपि मोहः प्रारब्धप्रतिबन्धादेवानुवर्तत इति श्रुतिस्मृतिविद्वदनुभवबलादेवाभ्युपेयमिति ॥ ४४ ॥**

अ० टी०—यदि मुक्तावस्थायामप्युक्तविधयाऽविद्यालेशोऽप्यस्ति तर्हि पूर्वावस्थातः को विशेष इति चेन्महानेव विशेषोऽस्तीत्याह—**ब्रह्मात्मत्वमिति ।** पुरस्ताद्विद्योदयात्पूर्वं ब्रह्मात्मत्वं स्वभावतो भासमानमपि सान्तरायमविद्यातत्कार्यव्यवहितमासीत् । इदानीं बोधोत्पत्तौ सत्यां ध्वस्तो मोहरूपोऽन्तरायो यस्मिंस्तत्तथोक्तम् । इदानीं मोहध्वंसो विशेष इत्यर्थः । तर्ह्यविद्यालेशावस्थानं कथमुक्तमिति तत्राऽऽह—**यद्यप्येवमिति ।** द्वैताभास-

१ ख. °मुक्त्यव° ।

स्यानुभवाद्ध्वस्तस्यापि मोहस्यावस्थानं प्रतीतिबलादभ्युपेयमित्यर्थः । पूर्वमविद्यातत्कार्यप्रतिभासो व्यामोहहेतुरनर्थकरश्चाऽऽसीदिदानीं प्रतिबुद्धस्य स्वप्नावभासवद्बाधितोनुवृत्तिमात्रत्वादकिंचित्कर इत्यस्ति महान्विशेष इति भावः ॥ ४४ ॥

सु० टी०—तर्ह्येवमेव देहान्तरमपि स्यादिति नेत्याह—

तस्माज्जीवन्मुक्तरूपेण विद्वा-
नारब्धानां कर्मणां भोगसिद्ध्यै ।
स्थित्वा भोगं ध्वान्तगन्धप्रसूतं
भुक्त्वाऽत्यन्तं याति कैवल्यमन्ते ॥ ४५ ॥

तस्मादिति । प्रारब्धकर्मवेगानुरोधादेव बाधितानुवृत्तिः सिध्यति तत्क्षये तु हेत्वभावादनारम्भे विदेहकैवल्यं भवत्येवेत्यर्थः । अत्रायं निगर्वः—अनेकशक्तिमदज्ञानं तस्य चतुर्लक्षण्यभ्यासाज्जगति पारमार्थिकत्वबोधनानुकूला शक्तिर्निवर्तते श्रवणाद्यभ्यासे जाते व्यावहारिकत्वबोधनानुकूला कृतात्मसाक्षात्कारस्य प्रातिभासिकसत्तासंपादिनी । ततो भ्रष्टबीजवत्कार्याक्षमं बाधितप्रपञ्चप्रदर्शनशक्तिमात्रावशिष्टमज्ञानं तिष्ठति तल्लेशाख्यप्रारब्धभोगान्ते तन्निवृत्तिः कैवल्यमिति ॥ ४५ ॥

अ० टी०—तर्ह्यनेनैव न्यायेन देहान्तरमपि संभाव्येतेति चेन्नेत्याह—**तस्मादिति**। यद्वोपपादितं जीवन्मुक्तमनूद्य तस्य निरन्तरायां परमकैवल्यप्राप्तिमाह—**तस्मादिति**। विद्वानारब्धानां फलदानाय प्रवृत्तानां कर्मणां भोगसिद्ध्यै जीवन्मुक्तरूपेण स्थित्वा ध्वान्तगन्धप्रसूतं बाधिताविद्यानुवृत्तिमात्रप्रदर्शितं भोगं भुक्त्वाऽन्ते भोगावसानेऽत्यन्तं कैवल्यं याति विदेहपरमकैवल्यमश्नुते । कूटस्थात्मप्रकाशरूपेणावतिष्ठत इत्यर्थः । अनारब्धफलानां कर्मणां ज्ञानाग्निना दग्धत्वात्प्रारब्धानां च भोगेन विनाशात्सर्वप्रवृत्तिमूलाया अविद्यायाश्च बाधितत्वाद्विद्यासंततेरनुवृत्तेः पुनस्तस्याः प्ररोहासंभवात्प्रारब्धभोगावसाने परमकैवल्यप्राप्तौ न कोऽपि विघ्न इत्यभिप्रायः ॥ ४९ ॥

सु० टी०—उक्तेऽर्थे प्रमाणमाह—

क्षरं प्रधानममृताक्षरं हरः
क्षरात्मानावीशते देव एकः ।
तस्याभिध्यानाद्योजनात्तत्त्वभावा-
द्भूयश्चान्ते विश्वमायानिवृत्तिः ॥ ४६ ॥

---

१ क॰ °ताया वृ° ।

क्षरं प्रधानमिति । ज्ञानोदयात्पूर्वं प्रधीयतेऽस्मिञ्जगदिति प्रधानमज्ञानं तच्च सम्यग्ज्ञानान्निवर्तत इति क्षरम् । यच्चामृताक्षरं ब्रह्म तदविद्याकं सर्ववृत्त्यभिव्यक्तं सत् । हरतीति हरः । द्योतत इति देवः । स क्षरात्मानावीशत ईष्टे । तस्येदृशस्यामृताक्षरस्य हरस्याभिध्यानाभिद्धियासनाद्योजनाच्छ्रवणमननात्मकात्तत्त्वभावादपरोक्षज्ञानाद्विश्वमाया संसारलक्षणा निवर्तते । निवृत्ता च प्रवृत्तकर्मफलभोगार्थं बाधितत्वेन प्रतिभासमानाऽपि भूयश्च तद्भोगान्तेऽत्यन्तमेव निवर्तत इत्यर्थः ॥ ४६ ॥

अ० टी०—जीवन्मुक्तौ तद्वतः प्रारब्धक्षये परमकैवल्यप्राप्तौ च प्रमाणं मन्त्रोपनिषदमाह—**क्षरं प्रधानमिति ।** पूर्वमन्त्रे " अजा ह्येका भोक्तृभोग्यार्थयुक्ता० [ श्वेताश्वत० १ । ९ ] " इति निर्दिष्टा साभासा मायेह प्रधानशब्देनानूद्यते । तत्प्रधानं मायाख्यं क्षरं विनाशि हरस्तदधिष्ठातेश्वरोऽमृताक्षरममूलं ब्रह्म शुद्धं तेनाऽऽत्मनाऽक्षरमविनाशि । यद्वा यत्क्षरं विनाशि तत्सर्वं प्रधानं भोग्यं यदमृताक्षरमश्नुते व्याप्नोति सर्वं भोग्यमित्यक्षरममृतं च तदक्षरं चामृताक्षरं भोक्तृरूपमित्यर्थः । एको देवः शुद्धः परमात्माक्षरात्मानौ भोग्यभोक्तारावीशते नियमयति भोक्तृभोग्यकल्पनाधिष्ठानत्वेनानुगतोऽवतिष्ठत इत्यर्थः ।

" यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः " [ भ० गी० १५ । १८ ]

इति स्मृत्युक्तः पुरुषोत्तम एको देवो यः क्षरात्मानावीशते तस्याभिध्यानादभिमुखेन प्रत्यगभेदेन चिन्तनाद्योजनात्तस्मिंश्चित्तविलयनेन प्रत्यगात्मनः परमात्मतायन्मात्रतापादियोजनं तस्माद्योजनात्तत्त्वभावात्प्रत्यक्पराग्भावहेतुसर्वोपाधिविलयने सति प्रत्यगात्मन एव परमात्मभावेन साक्षात्कारस्तत्त्वभावस्तस्मात्तत्त्वभावाद्विश्वमायानिवृत्तिर्विश्वाकारप्रतिभासहेतुमायानिवृत्तिर्भवति व्यावहारिकप्रपञ्चसत्त्वावभासकाकारमाया निवर्तत इति यावत् । भूयश्च पुनरप्यन्ते प्रारब्धकर्मफलभोगावसाने विश्वमायानिवृत्तिरित्यावृत्त्या योज्यं बाधितप्रतिभासमानाकाराया अपि विश्वमायाया निवृत्तिर्भवतीत्यर्थः । तथा च भगवद्गीतास्मृतिः

" यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत " [ गीता० १५ । १९ ] ॥

इति ॥ ४६ ॥

सु० टी०—ननु निर्गुणविद्याप्रकरणेऽर्चिरादिकाया गतेः श्रूयमाणत्वात्तद्द्वारैव मुक्तिर्न त्वत्रैव ज्ञानसमकालमिति चेत्तत्राऽऽह—

ब्रह्मादीनामस्ति मुक्तिः श्रुतिभ्य-
स्तेषामेषां नार्चिराद्या गतिर्वः ।

---

१ ख. ग. °मेषां ना° ।

तस्मादस्या निर्गुणब्रह्मविद्या
संबन्धित्वं नेषितव्यं भवद्भिः ॥ ४७ ॥

ब्रह्मादीनामिति । **नार्चिराद्या गतिः संभवतीति शेषः ॥ ४७ ॥**

अ० टी०—नन्वर्चिरादिना मार्गेण ब्रह्मलोकं प्राप्य मुक्तिरिति श्रुतिप्रसिद्धिस्तत्कथं ज्ञानोदयसमन्तरमेव मुक्तिरिति चेत्तत्राऽऽह—**ब्रह्मादीनामिति ।** "तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्" [ बृ० १ । ४ । १० ] इत्यादिश्रुतिभ्यो 'ब्रह्मणा सह ते सर्वे' इत्यादिस्मृतिभ्यश्च श्रुतिग्रहणस्योपलक्षणत्वाद्ब्रह्मादीनां देवानां प्रागेव ब्रह्मलोके स्थितानामप्यस्ति मुक्तिः श्रुतिस्मृत्यवगतेत्यर्थः । तेषामेषां ब्रह्मादीनां नार्चिराद्या गतिर्मार्गोऽस्ति वो युष्माकमप्येतत्संमतमित्यर्थः । तेषामेवेति चेत्पाठस्तदैषा प्रसिद्धाऽर्चिराद्येति योज्यम् । यस्मादेवं तस्मादस्या गतेर्निर्गुणब्रह्मविद्यासंबन्धित्वं भवद्भिर्वैदिकैर्नैषितव्यं सगुणविद्यावतां ब्रह्मलोकगमनमार्गोऽयमर्चिरादिर्न साक्षान्मुक्तिमार्गः साक्षान्मुक्तिस्तु यत्रापि देवानां मनुष्याणां वा ज्ञानोदयसमनन्तरमेवेति युक्तमेवोक्तमित्यभिप्रायः ॥ ४७ ॥

**सु० टी०—तर्हि मनुष्याणामर्चिराद्यपेक्षा भवत्विति चेन्न 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते' [ बृ० ४ । ४ । ६ ] इत्यादिनिषेधादित्याह—**

प्राणोत्क्रान्तिर्नास्ति मूर्धन्ययैषां[1]
नाड्या तस्माद्यत्र यत्रैव विद्या ।
तत्रैव स्यान्मुक्तिरित्यभ्युपेयं
गत्युत्क्रान्ती तेन विद्यान्तरेषु ॥ ४८ ॥

प्राणोत्क्रान्तिरिति । **तर्ह्यर्चिरादिगतिश्रुतेः का गतिरित्याह—**गत्युत्क्रान्ती इति । **सगुणविद्यासंबन्धित्वेऽपि तयोर्निर्गुणविद्यास्तुत्यर्थस्तत्प्रकरणपाठ इत्यर्थः ॥ ४८ ॥**

अ० टी०—"न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते[2] [ नृसिंहोत्तरता० ५ ] "ब्रह्मैव सन्ब्रह्माप्येति" [ बृ० ४ । ४ । ६ ] श्रुतेर्निर्विशेषब्रह्मविद उत्क्रान्तिप्रतिषेधादपि न क्वापि गमनमस्तीत्याह—**प्राणोत्क्रान्तिरिति ।** तर्ह्युत्क्रान्तिगतिश्रुतीनां को विषय इति चेत्सगुणविद्यावद्विषयतेत्याह—**गत्युत्क्रान्ती इति ॥ ४८ ॥**

---

१ क. ग. °न्यथैषां । २ क. °वलीय° ।

**सु० टी०—किं चार्चिरादिगतेर्ज्ञानकर्मसाध्यत्वात्केवलविद्यासाध्यायां देवादिमुक्तावप्रसङ्ग इत्याह—**

**देवादीनां नास्ति कर्माधिकारो**
**विद्या तेषां केवला मुक्तिहेतुः ।**
**पारम्पर्यात्कर्मणामस्य हेतो-**
**र्विद्याङ्गत्वं सर्ववर्णाश्रमाणाम् ॥ ४९ ॥**

देवादीनामिति । **कुत्र तर्हि कर्मणामुपयोग इति चेत्तत्राऽऽह**—पारम्पर्यादिति ॥ ४९ ॥

अ० टी०—देवादीनां कर्मानधिकृतानामपि मुक्तिभाक्त्वावगमादेव विद्यायाः पूर्वोक्तकर्मादिसहकारिनैरपेक्ष्यं सिद्धमित्याह—**देवादीनामिति** । हेतुरित्यतो न कर्मसापेक्षा विद्येति शेषः । तर्हि " सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् " [ ब्रह्मसूत्र० ३ । ४ । २६ ] इति कर्मापेक्षित्वकथनं कथमितिचेत्तत्राऽऽह—**पारम्पर्यादिति** । अस्य हेतोरस्माद्धेतोः कर्मानधिकारिष्वपि विद्याया मुक्तिहेतुत्वाद्धेतोरित्यर्थः । सर्ववर्णाश्रमाणां कर्मणां पारम्पर्याद्विद्याङ्गत्वमित्यन्वयः । अतो न सर्वापेक्षाधिकरणविरोध इत्यर्थः ॥ ४९ ॥

**सु० टी०—केन द्वारेण पारम्पर्यं किं वा तत्र प्रमाणमिति तत्राऽऽह—**

**पारम्पर्यं शुद्धिहेतुत्वहेतो-**
**र्यज्ञादीनां श्रूयते स्मर्यते च ।**
**साक्षादेषां मोक्षहेतुत्वमेव-**
**मन्विच्छन्तोऽप्यागमान्न प्रतीमः ॥ ५० ॥**

पारम्पर्यमिति । **ननु 'ज्ञानं प्रधानं न तु कर्म हीनम्' इत्यादिषु साक्षादेषां मुक्तिहेतुत्वं श्रूयत इति चेन्न तेष्वपि पौर्वापर्यान्वेषणायां शुद्धिकरत्वमेव निश्चीयत इत्याह**—साक्षादेषामिति ॥ ५० ॥

अ० टी०—केन द्वारेण पारम्पर्यं किंचात्र प्रमाणमिति तदाह—**पारम्पर्यमिति** । शुद्धिहेतुत्वरूपाद्धेतोरित्यर्थः । " धर्मेण पापमपनुदति " [ महानारायण० २२ । १ ] " पुण्यो वै पुण्येन कर्मणा भवति " [ बृहदा० ४ । ४ । ५ ] " विविदिषन्ति यज्ञेन

---

१ ख. °णां पा° ।

दानेन " [ बृहदा० ४ । ४ । २२ ] इत्यादि श्रूयते " तपसा कल्मषं हन्ति " " कपायपक्तीः कर्माणि " इत्यादि स्मर्यते चेत्यर्थः । यदपि कर्मणां साक्षान्मोक्षहेतुत्वविषयमिव क्वचिच्छ्रुतिस्मृतिवचनजातं दृश्यते " कर्मणैव हि संसिद्धिमास्थिता जनकादयः " [ गीता० ३ । २० ] " एष वः पुण्यः सुकृतो ब्रह्मलोकः " [ मुण्ड० १ । २ । ६ ] इत्यादि । तदपि पौर्वापर्येणान्विष्यमाणं न साक्षात्कर्मणां मोक्षहेतुत्वपरमित्याह– **साक्षादेषामिति** ॥ ५० ॥

**सु० टी०—शास्त्रार्थं सकलमुक्तमुपसंहरति—**

**इति बहुश्रुतभाषितमुच्चकैः**
**श्रुतिशिरोवचनानुगतं महत् ।**
**समुपदिष्टमिदं कृपया मया**
**प्रियमतीव हितं च मुमुक्षवे ॥ ५१ ॥**

इति बहुश्रुतेति । **कृपया न तु लिप्सयेत्यर्थः ॥ ५१ ॥**

अ० टी०—आदित आरभ्य निरूपितं शास्त्रार्थमुपसंहरति—**इति बहुश्रुतभाषितमिति** । इदं शास्त्रं महदुत्कृष्टं ब्रह्मविद्याहेतुत्वान्महतो ब्रह्मणः प्रतिपादकत्वाद्वा महन्मया कृपया मुमुक्षवे समुपदिष्टमित्यन्वयः । किंलक्षणं प्रियं श्रवणकालेऽपि प्रीतिकरं परिणामेऽतीव हितं पथ्यं च । तस्य बहुश्रुतभाषितमितिविशेषणेन वेदविदाचार्यसंमतत्वेन शिष्टाऽपरिग्रहदोषशङ्का परास्ता । श्रुतिशिरोवचनानुगतमिति मूलप्रमाणदार्ढ्यमस्योक्तम् । उच्चकैः समुपदिष्टमिति संबध्यतेऽशेषत इत्यर्थः । उच्चकैर्बहुश्रुतभाषितमित्यन्वयेऽपि स एवार्थः ॥ ५१ ॥

**सु० टी०—अत्र निर्गुणविद्याफलैकदेशभूतजीवन्मुक्तिनिरूपणमाद्यपादस्य । सगुणनिर्गुणविदोरुत्क्रान्त्यनुत्क्रान्तिचिन्ता द्वितीयस्य । सगुणविद्याफलोपयोगिगतिगन्तव्यगन्तृचिन्ता तृतीयस्य । निर्गुणविद्याफलपूर्तिरूपस्वरूपाविर्भावसगुणविद्याफलैश्वर्याप्तिनिरूपणं चतुर्थस्येति पादार्थान्संक्षिप्तानपि स्पष्टत्वादनुपसंहृत्याध्यायचतुष्टयार्थमनुवादव्याजेनोपसंहरति—**

**एवं समन्वयविरोधनिरासविद्या-**
**निष्पत्तिसाधनफलानि गुरोः क्रमेण ।**

---

१ ख. वेदान्तविद्भ्यः°।

विज्ञाय वेदफलमात्मनि सर्वमेव
पश्यन्नुवाच कृतकृत्यमतिः स शिष्यः ॥ ५२ ॥

एवमिति । **सर्वमिदमाचार्यादुपश्रुत्य वेदनफलस्य सर्वस्य द्वैतबाधपरमानन्दाप्तिरूपस्याऽऽत्मनि दृष्टत्वात्कृतकृत्यमात्मानं पश्यञ्छिष्य उवाचेत्यर्थः ॥ ५२ ॥**

अ० टी०—एवमाचार्ये शेषशास्त्रार्थमुपन्यस्योपरते शिष्यः किं कृतवानित्यपेक्षायामुक्तशास्त्रार्थशारीरानुवादेन शिष्यः स्वानुभवनिवेदनाय प्रवृत्त इत्याह—**एवं समन्वयेति** । वेदफलं वेदनफलमात्मनि पश्यन्साक्षादनुभवन्कृतकृत्यमतिः सन्नुवाचेत्यर्थः ॥५२॥

**सु० टी०—किमुवाचेत्यत्राऽऽह—**

विद्याविग्रहमग्रहेण पिहितं प्रत्यञ्चमुच्चैस्तरा-
मुत्कृष्योत्तमपूरुषं मुनिधिया मुञ्जादिषीकामिव ।
कोशात्कारणकार्यरूपविकृतात्पश्यामि निःसंशयं
क्कासीदस्ति भविष्यति क नु गतः संसारदुःखोदधिः ॥५३॥

विद्येति । **कार्यकारणरूपेण विकृतादन्नमयादिकोशादनात्मराशेर्मुञ्जादिषीकामिव प्रत्यञ्चं परमात्मानमुच्चैस्तरामज्ञानेन पिहितं मुनिधिया मनननिशितया धियोत्कृष्य निःसंशयं पश्यामीति संबन्धः । क्कासीदित्यादिः संसारनिवृत्तेरभिनयः ॥ ५३ ॥**

अ० टी०—उक्तिप्रकारमेवाऽऽह—**विद्याविग्रहमिति** । कारणकार्यरूपविकृतात्कोशादन्नमयाद्यानन्दमयान्तात्सर्वस्मादनात्मरूपादिति यावत् । प्रत्यञ्चं मुञ्जादिषीकामिवोच्चैस्तरां मुनिधिया मनननिशितधियोत्कृष्य सम्यक्पृथक्कृत्योत्तमपूरुषं 'स उत्तम पुरुषः' [ छान्दो० ८ । १२ । ३ ] इति श्रुतिप्रदर्शितं पूर्णात्मानं निःसंशयं यथा स्यात्तथा पश्यामीत्यन्वयः किं लक्षणं प्रत्यञ्चं स्वभावतो विद्याविग्रहं ज्ञानस्वरूपमथ चाग्रहेणानिर्वचनीयाज्ञानेन पिहितमाच्छादितम् । एवं प्रत्यञ्चमात्मानमुत्तमपुरुषं परमात्मानमनुभवतो मम संसारोऽत्यन्तमेव निवृत्त इत्याह—**क्कासीदिति** । कालत्रयेऽप्यहं संसारसंबन्धरहित एव सन्नात्माग्रहणाज्ञानवशादेतावन्तं कालं मृषैव संसार्यस्मीति मन्यमान आसम् । इदानीं त्वत्प्रसादान्न कदाऽप्यहं संसारी किं तु ब्रह्मैव सदाऽस्मीति ममाद्य निश्चयः संजात इत्यर्थः ॥ ५३ ॥

---

१ ख. °रुष इ° ।

सु० टी०—जीवन्मुक्तिमप्यनुभवामीत्याह—

पश्यामि चित्रमिव सर्वमिदं द्वितीयं
तिष्ठामि पुष्कलचिदेकवपुष्यनन्ते ।
आत्मानमद्वयमनन्तसुखैकरूपं
पश्यामि दग्धरशनामिव च प्रपञ्चम् ॥ ५४ ॥

पश्यामीति । नैतावता मुक्तेः काचिदपि हानिरित्याह—तिष्ठामीति । तथाऽपि कथं ज्ञानिनः प्रपञ्चानुभव इत्याशङ्क्य स आत्मानुभवेन बाध्यमान एवोदेतीत्याह—दग्धरशनामिवेति ॥ ५४ ॥

अ० टी०—तथाऽपि मे जीवनाभासोऽप्यनुवर्तत इत्याह—पश्यामि चित्रमिवेति । चित्रमिवेत्यकिंचित्करत्वे दृष्टान्तो यथा चित्रहस्तिनं व्याघ्रं वा चित्रमयं पश्यतोऽपि न भयकम्पादिर्भवत्येवं द्वैतं पश्यतोऽपि मम न संसारित्वावभास इत्यर्थः। कथं द्वैतं पश्यतोऽपि तव पूर्ववद्व्यामोहाभाव इत्यत आह—तिष्ठामीति । विषयाकारवृत्त्युपरागाभावात्पुष्कलाऽनवच्छिन्ना या चित्तन्मात्रस्वरूपेऽत एवानन्ते त्रिविधपरिच्छेदरहिते पूर्णात्मनि तिष्ठामीत्यर्थः। किंतत्पूर्णात्मन्यवथानं कुण्डे बदरवद्भित्तौ चित्रवदवस्थानं नेत्याह—आत्मानमिति । आत्मनः परमात्मरूपेणानुभव एव तत्रावस्थानं नाम यथा देहादावात्मत्वानुभवो देहादाववस्थानं तद्वत् । न ह्यमूर्तस्यापरिच्छिन्नस्याऽऽत्मनोऽन्यादृशमवस्थानं संभवतीत्यर्थः। ननु द्वैतप्रतिभासे सति कथमद्वयात्मानुभव इति चेन्मैवमद्वयात्मानुभवोदयनान्तरीयकतया द्वैतस्य बाधितत्वादित्यभिप्रेत्याह—पश्यामि दग्धेति ॥ ५४ ॥

सु० टी०—तथाऽपि द्वैतानुभवेनाद्वैतमानस्यापि बाधः स्यादिति नेत्याह—

अद्वैतमप्यनुभवामि करस्थबिल्व-
तुल्यं शरीरमहिनिर्ल्वयनीवदीक्षे ।
एवं च जीवनमिव प्रतिभासनं च
निःश्रेयसो निगमनं च मम प्रसिद्धम् ॥ ५५ ॥

अद्वैतमपीति । तस्यानन्यथासिद्धापरोक्षत्वेनाबाध्यत्वमित्यर्थः । द्वैतं बाधितं चेत्कथं प्रतिभासत इति पूर्ववन्न भासत इत्याह—शरीरमिति । यथा सर्पो मुक्तामपि त्वचं संस्कारवशादात्मत्वेन तदभिमानरहित एव

१ ख. घ. °मि निष्क° । २ क. °नाभ्यासो° । ३ ख. °वान्निष्क° ।

**पश्यति तथेत्यर्थः । एवं जीवन्मुक्तौ ममानुभव एव प्रमाणमित्याह**—एवं चेति ॥ ५५ ॥

अ० टी०—अद्वैतात्मानुभवो मम न परोक्षरूपो येनापरोक्षप्रपञ्चदर्शनं सत्यं स्यात्किंत्वपरोक्ष एवाद्वैतात्मानुभव इत्याह—**अद्वैतमपीति** । एवमपि शरीरमहिनिर्ल्वयनीव वीक्षे । अहिनिर्ल्वयनी सर्पत्वक् । यथा सर्पः परित्यक्तं स्वकञ्चुकं पश्यन्नपि पूर्ववदात्मत्वेन नाभिमन्यते तथेदं शरीरं कदाचित्पश्यन्नपि नाऽऽत्मतया जानामीत्यर्थः । एवं च जीवन्मुक्तिरनुभवसिद्धा ममेत्याह—**एवं चेति** । जीवनमिवेतीवशब्दो देहादिसंबन्धितया जीवनप्रतिभासो बाधितानुवृत्तिमात्रो न परमार्थ इति द्योतनार्थः ॥ ५५ ॥

**सु० टी०—इदानीं मदपकारिणः प्रतीकारोऽपि वृत्त इत्याह—**

**अद्वैतबाधकमभून्मम यद्द्वितीय-**
**मद्वैतमस्य बत बाधकमद्य जातम् ।**
**मोहाद्द्वितीयमपबाधकमस्य विद्या-**
**सामर्थ्यतो द्वयनिबर्हणमद्वितीयम् ॥ ५६ ॥**

अद्वैतेति । **अतः परं न द्वैतस्य पुनर्मदपकारसामर्थ्यमित्याह**—मोहादिति । **दौर्बल्ये हेतुः**—विद्यासामर्थ्यत इति । **तस्या वस्त्वनुरोधित्वेन बलवत्त्वादित्यर्थः ॥ ५६ ॥**

अ० टी०—इदानीं मदपकारिप्रतीकारोऽपि लब्ध इत्याह—**अद्वैतबाधकमिति** । बतेति हर्षे । पुनरपि कदाचिदद्वैतबाधकं द्वैतं भविष्यति न हि न हीत्याह—**मोहादिति** । द्वैतकृतस्याद्वैतबाधस्य मोहमात्रनिबन्धनत्वान्न वास्तवोऽद्वैतबाधः । इदानीं मोहस्य समूलोन्मूलनान्न द्वैतस्य पुनरुद्भव इति कुतस्तेनाद्वैतबाधशङ्केत्यर्थः । अद्वितीयेन द्वैतबाधनं सत्यं तस्य प्रमाणनिबन्धनत्वादित्याह—**विद्यासामर्थ्यत इति** ॥ ५६ ॥

**सु० टी०—इदानीं तु प्राक्तनद्वैतानुभवोऽपि ममाश्चर्यमावहतीत्याह—**

**आश्चर्यमद्य मम भाति कथं द्वितीयं**
**नित्ये निरस्तनिखिलाशिवचित्प्रकाशे ।**
**आसीत्पुरेति किमिमाः श्रुतयो न पूर्वं**
**येन द्वितीयमभवत्तिमिरप्रसूतम् ॥ ५७ ॥**

आश्चर्यमिति। निरस्ता[स्तानिखिला]शिवश्चासौ चित्प्रकाशश्चेति समासः। पूर्वं श्रुत्यर्थाज्ञानान्नाश्चर्यमिति चेत्सत्यमनादिश्रुतेरेतावत्कालमर्थाननुभवोऽप्यद्भुत एवेत्याह—किमिमा इति ॥ ५७ ॥

अ० टी०—इतः पूर्वं द्वैतप्रतिभासो यन्ममाभूत्तत्राप्याश्चर्यमेवेदानीं मे वर्तत इत्याह—आश्चर्यमेवेति । विरुद्धस्वभावयोरात्मानात्मनोस्तादात्म्यानुभवः कथमासीदित्याश्चर्यमित्यर्थः । किमत्राऽऽश्चर्यं श्रुत्यर्थानवगमादेव तथा प्रतिभासोऽभूदिदानीं तदवगमान्निवृत्त इति चेत्सत्यमनादिनिधनायाः श्रुतेरर्थ इतः पूर्वं नावगत इत्येतदप्याश्चर्यमित्याह—किमिमा इति ॥ ५७ ॥

सु० टी०—ईदृशानुभवे च मम त्वदनुग्रह एव हेतुरिति तात्पर्यमपीत्याह—

त्वत्पादपङ्कजसमाश्रयणं विना मे
सन्नप्यसन्निव परः पुरुषः पुराऽऽसीत् ।
त्वत्पादपद्मयुगलाश्रयणादिदानीं
नासीन्न चास्ति न भविष्यति भेदबुद्धिः ॥ ५८ ॥

त्वत्पादेति ॥ ५८ ॥

अ० टी०—निवृत्तं च मम सर्वमेवाऽऽश्चर्यं यतस्त्वदनुग्रहाभावादेव मम संसारानुभवोऽभूदिदानीं च त्वदनुग्रहान्निवृत्त इत्याह—त्वत्पादपङ्कजेति । सन्नपीत्यात्मरूपेण सन्नपि तेनाऽऽत्मनाऽसन्निवाऽऽसीदित्यर्थः ॥ ५८ ॥

सु० टी०—नापीदृशस्य त्वदुपकारस्य प्रत्युपकारसमर्थोऽहमस्यातिदुर्लभत्वादाप्तकामस्य च तव क्वाप्यपेक्षाभावादिति कृपामात्रप्रवृत्तस्य ते सेवनमेव करिष्यामीत्याह—

यस्मात्कृपापरवशो मम दुश्चिकित्स्यं
संसाररोगमपनेतुमसि प्रवृत्तः ।
त्वत्पादपङ्कजरजः शिरसा दधान-
स्त्वामाशरीरपतनादहमभ्युपासे ॥ ५९ ॥

यस्मादिति ॥ ५९ ॥

अ० टी०—अस्य च त्वत्कृतोपकारस्य प्रत्युपकारो नास्त्येतत्तुल्यस्यान्यस्याभावात्त्वं च सर्वतो निरपेक्षत्वान्मयि कृपामात्रप्रयुक्तप्रवृत्तित्वाच्चातस्तत्र सेवामात्रं करोमीत्याह—यस्मात्कृपेति ॥ ५९ ॥

**सु० टी०—ग्रन्थनिर्माणप्रयोजनमुपसंहरति—**

**संक्षेपशारीरकमेवमेत-**
**त्कृतं परिव्राजकमुक्तिहेतुः ।**
**गुरुप्रसादात्परिलभ्य तत्त्वं**
**त्रयीशिरस्तत्त्वनिवेदनाय ॥ ६० ॥**

संक्षेपेति ॥ ६० ॥

अ० टी०—शिष्योक्तिः समाप्ता । इदानीं ग्रन्थकारः प्रारब्धां स्वकृतिमुपसंहरति—**संक्षेपशारीरकमिति** । त्रयीशिरस्तत्त्वनिवेदनायेति त्रयीशिरसो निकृष्टार्थप्रकटनायेत्यर्थः ॥ ६० ॥

**सु० टी०—श्रोतृप्रवर्तनाय स्वग्रन्थं गङ्गासाम्येन स्तुवन्भगवति समर्पयति—**

**अविरलपदपङ्क्तिः पद्मनाभस्य पुण्या**
**चरणकमलधूलिग्राहिणी भारतीयम् ।**
**घनतरमुपघातं श्रेयसः श्रोतृसंघा-**
**त्सुरसरिदिव सद्यो मार्ष्टु माङ्गल्यहेतुः ॥ ६१ ॥**

अविरलेति । **अविरलपदपङ्क्तिरियं भारती पद्मनाभस्य चरणधूलिग्राहिणी सती श्रोतृसंघाच्छ्रेयस उपघातं मार्ष्टित्यन्वयः ॥ ६१ ॥**

अ० टी०—एतां कृतिं भगवति नारायणे समर्पयन्स्वकृतेर्मङ्गलं प्रार्थयते—**अविरलेति** । इयं भारती श्रेयसो घनतरमुपघातं श्रोतृसंघात्सद्यो मार्ष्टित्यन्वयः । किंलक्षणा भारती माङ्गल्यहेतुर्मङ्गलप्रदेत्यर्थः । तां गङ्गासाम्येन रूपयति—**अविरलेति ।** विरलाऽसंश्लिष्टा पदानां पङ्क्तिर्यस्याः सा विरलपदपङ्क्तिर्नेयं तथेत्यविरलपदपङ्क्तिः । गङ्गाऽपि तथाविधस्वप्रवाहस्थानपङ्क्तिः प्रसिद्धा । पद्मनाभस्य श्रीमदनन्तपुरवासिनः शेषाङ्के शयानस्य नारायणस्य चरणकमले धूलिग्राहिणी तच्चरणयोः समर्पिता सती तथाविधा । गङ्गा तु भगवतः पद्मनाभस्य त्रिविक्रमरूपं धृतवतश्चरणकमलधूलिग्राहिणी

---

१ ख. निष्टङ्कितार्थ° । २ क. संघाः सु° ।

प्रसिद्धा । अत एव पुण्या पावयित्री भारती गङ्गा चेत्यर्थः । कृतेरस्या माङ्गल्यं नाम सज्जनसंग्रहपूर्वकं तद्द्वारा श्रोतॄणां पुरुषार्थसिद्धिरेव तादृशस्य मङ्गलस्य हेतुरस्त्विति तात्पर्यार्थः ॥ ६१ ॥

**सु० टी०—ग्रन्थस्य सांप्रदायिकत्वं दर्शयितुं गुरोरात्मनश्च नाम निर्दिशन्ग्रन्थोत्पत्तिसमयं कथयति—**

**श्रीदेवेश्वरपादपङ्कजरजःसंपर्कपूताशयः**
**सर्वज्ञात्मगिराऽङ्कितो मुनिवरः संक्षेपशारीरकम् ।**
**चक्रे सज्जनबुद्धिमण्डनमिदं राजन्यवंश्ये नृपे**
**श्रीमत्यक्षतशासने[1] मनुकुलादित्ये भुवं शासति ॥ ६२ ॥**

श्रीदेवेश्वरेति ॥ ६२ ॥

अ० टी०—ग्रन्थस्य साप्रदायिकत्वं दर्शयितुं गुरोर्नाम कर्तुश्च कालविशेषं नाम च निर्दिशति । **श्रीदेवेश्वरेति** । सर्वज्ञात्मगिराऽङ्कितः सर्वज्ञात्मनामा मुनिवरः संन्यासिश्रेष्ठ इदं संक्षेपशारीरकं नाम ग्रन्थं किंलक्षणं सज्जनबुद्धिमण्डनं विद्वद्बुद्ध्यलंकरणं विदुषां शोभाप्रदमित्यर्थः । कदा चक्र इत्यपेक्षयामाह—**राजन्यवंश्य इति** । क्षत्रिय इत्यर्थः । नृपे राजनीतियावत् । तस्य नाम निर्दिशति—**श्रीमतीति** । श्रीमन्नाम्नि किंलक्षणेऽक्षतशासनेऽप्रतिहताज्ञ इत्यर्थः । तस्य राज्ञो वंशतश्च श्रैष्ठ्यमाह—**मनुकुलादित्य इति** । मनुवंप्रकाशक इत्यर्थः । एवंभूते श्रीमन्नाम्नि नृपे भुवं शासति सति सर्वज्ञात्मगिराऽङ्कितो मुनिवरः संक्षेपशारीरकं चक्र इत्यन्वयः ॥ ६२ ॥

**सु० टी०—समाप्तौ भगवन्नमस्काररूपं मङ्गलमाचरति—**

**भुजङ्गमाङ्गशायिने विहङ्गमाङ्गगामिने ।**
**तुरङ्गमाङ्गभेदिने नमो रथाङ्गधारिणे ॥ ६३ ॥**

**इति श्रीदेवेश्वरपूज्यपादशिष्यसर्वज्ञात्ममहामुनिविरचिते संक्षेपशारीरके फललक्षणं चतुर्थोऽध्यायः ।**

---

भुजङ्गमाङ्गेति ॥ ६३ ॥

**शुभसंप्रदायभणितीरनुसृत्य मतं च रामतीर्थगुरोः ।**
**एतत्प्रबन्धरत्नं[2] व्याकारि मया प्रयत्नेन ॥ १ ॥**

---

१ क. °ने मुनितुला°। ख. °ने मनुतुला° । २ रचनं°.

इयं संक्षेपशारीरसुखबोधनदीपिका ।
अन्तस्तमःप्रशमनी सद्भिः स्नेहेन पूर्यताम् ॥ २ ॥

इतिश्रीमत्परमहंसावतंसश्रीरामतीर्थमुनिशिष्याग्निचित्पु-
रुषोत्तममिश्रकृतौ संक्षेपशारीरकसुबोधिन्यां
चतुर्थोऽध्यायः ॥ ४ ॥

---

अ० टी०—आद्यन्तयोः कृतमङ्गला ग्रन्थाः प्रचारिणो भवन्तीति शिष्टप्रसिद्धिमनुरुध्य ग्रन्थस्यान्तेऽपि भगवन्नमस्कारलक्षणं मङ्गलमाचरति—**भुजङ्गमाङ्गेति** । आद्येन विशेषणेन भक्तानामभीष्टदानाय प्रसन्नावस्थोक्ता परैस्त्रिभिर्विशेषणैस्तेषां परिपन्थिनिरसनेन संरक्षणाय भगवत्प्रवृत्तिरुक्तेतितात्पर्यं ज्ञेयम्—

सिद्धान्तदीपं पुरतो निधाय वेदान्तमन्तर्गृहसंनिविष्टम् ।
संक्षेपशारीरकरत्नपुञ्जं प्रकाशमादाय मया विविक्तम् ॥ १ ॥
सर्वज्ञात्ममुनिप्रणीतममलं संक्षेपशारीरकं
दृष्टान्तर्विभवं पुरस्कृतमहासिद्धान्तदीपार्चिषा ।
उन्नीयार्थविभागतः प्रतिपदं संबन्धविद्योतिनी
व्याख्या तस्य सतां मनःप्रियकरी व्याख्यातृचित्तौकसः ॥ २ ॥
नमोऽस्तु तस्मै रामाय ह्यन्तर्ज्योतिषे सते ।
वायुनेव तृणं येन विचेष्टन्ते प्रजाधियः ॥ ३ ॥
नमस्तेभ्यो गुरुभ्योऽस्तु येषां संनिधिमात्रतः ।
ममान्तस्तिमिरं ध्वस्तं बाह्यं ध्वान्तं रवेरिव ॥ ४ ॥

इति श्रीमत्परमहंसपरिव्राजकाचार्यकृष्णतीर्थशिष्यरामतीर्थविरचितायां
संक्षेपशारीरकटीकायामन्वयार्थकाशिकायां
चतुर्थोऽध्यायः समाप्तः ॥

---

समाप्तं चेदं टीकाद्वयसमेतं संक्षेपशारीरकम् ।

# परिशिष्टम् ।

अस्माभिरेतट्टीकाशोधनावसरे मुद्रणसमये च पुस्तकान्तरालाभात्तत्तत्स्थले त्रुटिर्दर्शिता, परं मुद्रितपुस्तकलाभे, अध्यायसमाप्तौ परिशिष्टरूपेण सा त्रुटिः पूर्णतामापादिता । यद्यप्यत्र केषां चिच्छ्लोकानां टीका नानुपूर्वीतः संगच्छते तथाऽपि टीकैक्यं निश्चित्य मुद्रितपुस्तकात्तत्तच्छ्लोकटीका पूर्णैवात्र गृहीता ।

पेज ८६ श्लो० ६०—६४ अन्वयार्थटीका—

न केवलं पुरुषतन्त्राभावादेव ब्रह्मज्ञानस्याविधेयताऽपि तु विषयासिद्धेरपीत्याह— **अपि च रूपितगोचरतेति** । विधेर्विधानस्य नियोगस्य वा रूपितगोचरताऽन्यतोऽवगतविषयनिष्ठता हि स्वभावो यथा यागादेः क्रियाया विषयस्य लोकतः सिद्धौ तस्मिन्विधिर्दृष्टो नात्यन्तानवगते धात्वर्थ इत्यर्थः । तर्हि प्रकृतेऽप्यवगतगोचरताविधेः किं न स्यादिति नेत्याह—**न परमात्मधिय इति** । अयमर्थः—न तावदहमिति सर्वजनीनमात्मज्ञानं विधेयं तदनुष्ठानस्य विनाऽपि विधिं नित्यप्राप्तत्वात्तद्विधानस्य मोक्षफलत्वाभावाच्च । अथालौकिकपरमात्मज्ञानं विधेयं तदनुष्ठानस्यान्यतोऽप्राप्तत्वान्मोक्षफलत्वोपपत्तेश्चेति मतं तदपि न तस्य वेदान्तवाक्येभ्योऽन्यतोऽसिद्धेर्विषयासिद्धौ विध्यसंभवात् । नहि परमात्मनोऽसिद्धौ तद्विशेषितं ज्ञानं सिध्यति । परमात्मा चौपनिषद एवेति स्थितेरुपनिषद्वाक्यस्य विधिपरत्वेन तेन परमात्मसिद्धिः । परमात्मपरत्वे च न विधिसिद्धिरुभयपरत्वे तु वाक्यभेदापत्तिरतो न परमात्मधियो निरूपणमस्तीति । अतो विषयासिद्धेर्न विधिरित्युपसंहरति—**अविदिते परमात्मनीति** । रूपितता सिद्धता घटनान्विता प्रामाणिकी विशेषणासिद्धौ विशिष्टविषयस्याप्यसिद्धेरित्यर्थः ॥ ६० ॥

अथ सत्यज्ञानादिवाक्यानां ब्रह्मप्रतिपादकत्वमत्रान्तरतात्पर्येणाभ्युपेयते ततः सिद्धे ब्रह्मावगमे विधिरिति चेत्तत्राऽऽह—**विदितता परमात्मन इष्यते यदीति** । यदि सत्यादिपदैः परमात्मनो विदितत्वमङ्गी क्रियते तदाऽस्य परमात्मनो धियो ज्ञानस्य विधिर्वृथा निरर्थको भवेत् । कुत इत्यत आह—**निखिलभेदेति** । निखिलभेदस्याशेषविकल्पस्य संसारलक्षणस्य यन्निदानमनाद्यनिर्वचनीयाज्ञानं तस्य निवृत्तितः परमात्मज्ञानोदयनान्तरीयकतयाऽपबाधनाद्विध्यनुष्ठानकार्यस्य प्रागेव सिद्धेस्तत्र विधिरनर्थक इत्यर्थः । न केवलमस्मिन्पक्षे विधिवैयर्थ्यमशक्यता चेत्याह—**भवतीति** । तद्विषयाद्यपि विध्यपेक्षितविषयनियोज्यकारकफलाद्यपि तदा दुर्लभं भवति । नहि वेदान्तवाक्यप्रमाणेनाद्वितीयं ब्रह्मैवाहमात्मेत्यवगमे तद्विरुद्धक्रियाकारकफलभेदस्फुर्तिरुन्मिषेद्येन विध्यन्तर

तस्मात्कर्मकाण्डविषय एव विचारः प्राच्या मीमांसया कृतो न ज्ञानकाण्डविचारोऽतः पृथगारम्भो युक्त एवेति भावः ॥ ६१ ॥

अगतार्थत्वसाधनमुपसंहरति—**इति न धर्मविशेषसमर्पणामिति ।** इति यतः श्रुतिशिरोवचनैर्धर्मविशेषस्य ज्ञानोपासनारूपस्य समर्पणं न क्रियते विनाऽपि विधिसंबन्धं फलवद्विज्ञानसमर्पकत्वात् । ततस्तस्मात्परमात्मविचारणे धर्मविचारगतार्थतानवसरो भवति पृथगेव ब्रह्मविचारः कार्य इत्यर्थः ॥ ६२ ॥

ननु वेदान्तेष्वपि 'आत्मा वा अरे द्रष्टव्यः' [ बृह० २ । ४ । ५ ] 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' [ छा० ८ । ७ । १ ] 'तद्विजिज्ञासस्व [ तैत्ति० ३ । १ । १ ] इत्येवमादिषु विधयः श्रूयन्ते । ते चानन्यार्था इति कथं वेदान्तेषु विध्यभावेनागतार्थतोच्यत इतिचेन्नैवं तेषामन्यार्थत्वादित्याह—**अर्हाद्यर्थे चेति ।** न केवलं विधावेव तव्यप्रत्ययो विहितो येन तच्छ्रवणबलाद्वेदान्तेषु विध्यभ्युपगमः किंतु 'अर्हे कृत्यतृचश्च' [ पा० सू० ३ । ३ । १६९ ] इतिसूत्रयतः पाणिनेराचार्यस्यार्हाद्यर्थे चापि कृत्यस्मरणमभिमतमिष्टमेव । तथा लिङ्लोडादेश्च प्रत्ययस्य प्रचुरं यथा स्यात्तथा प्रार्थनादौ वृत्तिः पाणिनेर्जैमिनेश्चाऽऽचार्यस्याभिमता । भवत्वेवं तथाऽपि प्रकृते किमायातं तदाह—**तस्मादिति ।** अन्यथेति विध्यर्थत्वव्युदासेनार्हार्थतयैव योजनीयमित्यर्थः । तत्र हेतुमाह—**विध्यर्थेति ।** स्फुटं यथा भवति तथोदितन्यात्पूर्वोक्तन्यायाद्विध्यर्थासंभवेन हेतुनेति योजना । तस्मादेतच्छास्त्रमन्यागतार्थमन्यतो न विचारितार्थमित्यर्थः ॥ ६३ ॥

नन्वेवमुक्तेन प्रबन्धेनासाधारणविषयप्रयोजनत्वेऽपि प्राच्या मीमांसया शास्त्रान्तरेण वा गतार्थत्वाभावेऽपि नेदमारम्भमर्हत्यधिकार्यभावात् । न हि निरधिकारिकं किमपि शास्त्रमस्ति । न चेहाधिकारी कश्चिदसाधारणः संभवति । न तावद्वेदाध्ययनवानिहाधिक्रियते तस्य धर्मब्रह्मजिज्ञासयोः साधारण्याद्धर्मविचारं परित्यज्य ब्रह्मविचार एव प्रवृत्त्यसंभवात् । तथाऽपि धर्मविचारानन्तरं स एवेह प्रवर्तिष्यत इतिचेन्न तस्य विचारितधर्मानुष्ठान एव प्रवृत्तिसंभवात् । अनुष्ठानाय हि तेन धर्मो विचारितो न केवलमदृष्टार्थमिति । तर्ह्यनुष्ठानानन्तरं स एव विचारमेनं करिष्यतीति चेन्नानाश्वासापत्तेः । न हि स्वयमधीत्यार्थमवबुध्य सर्वमवबुद्धं वेदार्थमनुष्ठाय पश्चाद्ब्रह्मजिज्ञासां करिष्यामीत्यध्यवसायः कस्यचिदुपपद्यते तावत्कालं जीवनं प्रत्यनाश्वासात्सर्वकर्मानुष्ठानाशक्तेश्च । संदेहेऽपि शास्त्रीयाधिकारिनियमासिद्धेर्निरधिकारिकमिदं शास्त्रमापद्येत । नन्वधीतस्वाध्यायः कर्मफलरागशून्यतया तद्धेतुधर्मजिज्ञासां परित्यज्यैव मोक्षसाधनं ब्रह्मज्ञानेच्छुर्मुमुक्षावशात्प्रवर्तिष्यत इति चेन्न यथोक्तस्य मुमुक्षोरेवासंभवात्तन्मु-

मुमुक्षोदयहेत्वभावादित्याशङ्क्य मनुष्याणां सहस्रेषु कस्यचिन्मुमुक्षोदयोऽपि संभाव्यत एवेति मन्वानस्तत्कारणं तावच्छ्रौतमनुक्रामति—**एकाहाहीनेति** । अत्रैकाहादिग्रहणमग्न्याधेयप्रभृत्यारभ्याग्निहोत्रादिहविर्यज्ञसंस्थानामप्युपलक्षणम् ।' स्मार्तेषु कर्मस्वधिकृतस्यैव श्रौतेष्वधिकारात्तान्यप्यत्रार्थादुक्तानि ज्ञातव्यानि । एकाहादिशब्दा अग्निष्टोमादिगतसुत्याहवाचकाः। सुत्याहेषु हि प्रधानकर्म निर्वर्त्यते । अतः प्रधानग्रहे तदङ्गानामपि ग्रहणमर्थसिद्धमितिमत्वोक्तमेकाहेत्यादीति द्रष्टव्यम् । यस्मिन्नहनि प्रातः सवनादिक्रमप्रभृतयो यागा एकाहशब्देनोक्ताः । अहीनशब्देन द्विरात्रप्रभृतीनि द्वादशाहान्तानि सुत्यादिनान्येवोच्यन्ते । एतान्येकाहाहीनाख्यानि कर्माण्येकयजमानकानि । सत्रं नामानेकयजमानकः कर्मविशेषो यत्र यजमाना एवर्त्विजो भवन्ति । तच्च द्विविधं द्वादशाहाद्यहर्गणैः साध्यं रात्रिसत्राख्यमनेकविधं, यत्रोपयन्तीति विधिः प्रवर्तते सैका विधा सत्राणाम् । यत्र पुनरासतेति विधिः प्रवर्तते तान्ययनाख्यानि संवत्सरसत्राणि गवामयनादीनि सहस्रसंवत्सरान्तानीत्यपरा विधेति विभागः । एषां विहितेति विशेषणं फलावश्यंभावनियमार्थम् । तथा चैकाहाहीनसत्रद्वयानि च तानि विधिविहितानि तानि च तान्यनेकानि च तानि कर्माणि चेति तथा तेषामनुभावः सामर्थ्यं तेन ध्वस्तः पराकृतः स्वान्तस्यान्तःकरणस्योपरोधो विद्योदयप्रतिबन्धलक्षणः पाप्मा येषां ते तथोक्ताः । स्वाधिकारप्राप्तश्रौतस्मार्तसकलकर्मानुष्ठानजनितपुण्यमाहात्म्येन क्षपिताशेषकल्मषा इत्यर्थः । एवंविधाः पुरुषाः कथमपि कथंचिदनेकजन्मानुष्ठितसुकृतपरिपाकवति जन्मनि सति चिद्दिदृक्षां प्रत्यक्चैतन्ययाथात्म्यदर्शनेच्छां ब्रह्मजिज्ञासामितियावत् , लभन्ते । कथमपि लभन्त इति वदता ब्रह्मजिज्ञासाया दौर्लभ्यं सूचितम् । तथाचोक्तं भगवता—'मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । ' [ भ० गी० ७ । ३ ] ' बहूनां जन्मनामन्ते ज्ञानवान्मां प्रपद्यते ' [ भ० गी० ७ । १९ ] इति च । क्षपितसमस्तस्वान्तदोषतया गलितपक्षपातधियः स्फुरितयुक्तिसहस्रतया पुरुषार्थसारं विचिन्वन्तः साधनचतुष्टयसंपन्नाः सन्त आत्मतत्त्वजिज्ञासवो जायन्त इत्यर्थः । नन्वनेन क्रमेण केऽपि ब्रह्मविविदिषवो भवन्तीत्यत्र किं प्रमाणमित्याकाङ्क्षायामाह—**यज्ञेनेत्यादीति** । ' तमेतं वेदानुवाचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेन ' [ बृह० ४ । ३, २२ ] इति वाक्यं शतपथशब्दवाच्यब्राह्मणवाक्ये-

**श्लो० १३०—१३१ पे० १३७—**

सिद्धे वस्तुनि शब्दसामर्थ्याभावाच्च न सिद्धे ब्रह्मणि वेदान्तप्रामाण्यमित्याह—**कार्यान्वयान्वयिनीति** । अयमर्थः—बालो हि गामानयेति प्रयोगश्रवणसमनन्तरं प्रवर्तमानं पुरुषमुपलभ्य तस्य प्रवृत्तिलिङ्गेन तत्कारणतया प्रवर्तकधियं गवानयनकर्तव्यताज्ञानं शब्दश्रवणानन्तर्याच्छब्दकार्यतया परिकल्प्यानुमाय्येयगवानयनकर्तव्यतालक्षणे प्रवर्तकगामानयेत्यस्य सामर्थ्यं प्रतिपद्य पुनरपि प्रयोगभेदेष्वावापोद्वापाभ्यां प्रविभज्य । वाक्यं

वाक्यार्थं च वाक्यभागं वाक्यार्थभागस्य वाचकमिति च तत्तद्वाक्यार्थभागप्रतीतेस्तत्तद्वाक्यभागान्वयव्यतिरेकाभ्यां परिकल्य कार्यान्वयान्वयीति वस्तुनि शब्दशक्तिं वेत्ति स्वयमेव अनुपादनानपेक्षया प्रत्यक्षादिबन्धनस्वव्यवहारदृष्टान्तेनान्वयव्यतिरेकाभ्यां कार्यकारणभावग्रहणकौशलेन वेत्ति । तत्र यौ वाक्यभागस्य पदस्यान्वयव्यतिरेकानुविधायिनौ वाक्यार्थभागस्यान्वयव्यतिरेकौ तौ कार्यान्वयविशिष्टस्य न गवाद्यर्थमात्रस्य । यतो गामानयेति वाक्ये गोपदस्योद्धारेऽश्वपदस्य वाऽन्वये कार्यान्वितस्यैव गोरुद्धारः। आवापश्चाश्वस्य । कार्यान्वितस्यैव गोरुद्धारे तद्गतकार्यान्वयस्याप्युद्धारादश्वावापे वाऽश्वगतकार्यान्वयस्याऽऽवापात् । तथाच कार्यान्वितार्थे सर्वस्य शक्तिरिति निश्चीयते । अत्र कार्यान्वितार्थत्वं शब्दसामर्थ्यप्रतियोगित्वप्रयोजकमिति स्वीकारे कार्यवाचिपदस्य लिङादेः कार्यान्वितार्थवाचकत्वं कार्यान्तराभावान्न संभवतीति तत्र स्वार्थेऽन्विते वा शक्तिरभ्युपेया स्यात्तथाच प्रयोजकद्वैरूप्यमेष्टव्यं स्यात्तन्मा भूदिति प्रयोजकैकरूप्यसिद्ध्यर्थमाह—**कार्यान्वयान्वयिनीति** । कार्यप्रतियोगिको योऽन्वयस्तस्यान्वयि कार्यमन्यद्वा तस्मिञ्शब्दशक्तिरिति प्रयोजकैकरूप्यसिद्धिरित्यर्थः ॥ १३० ॥

ननु कार्यनिरूपितान्वयावच्छिन्नेऽन्वयिनि शब्दशक्तिरिति वदता कार्यत्वावच्छिन्ने कार्ये शक्तेरभ्युपेयत्वात्स्वेनैव स्वस्य निरूपणं कार्यस्यायुक्तं कल्पनीयं स्यादिति चेत्तत्राऽऽह—**त्यक्त इति** । कार्यान्वितार्थे शब्दशक्तिरित्ययं पक्षः परित्यक्तस्तर्हि किं योग्येतरान्विते शब्दशक्तिमाश्रयामि नैवमित्याह—**नोक्त इति** । अयं हि पक्षः पूर्वमप्यनुक्तो मयाऽयोग्येन वेतरेण वाऽन्वयस्याप्रसक्तेः । व्यवच्छेद्याभावे योग्यताविशेषणस्य वैयर्थ्यात् । कार्यान्विते शब्दशक्तिरिति पूर्वमुक्तं सिद्धान्विते शब्दशक्तिरित्यस्य पक्षस्य व्यवच्छेदाय । सोऽपीदानीं त्यक्तस्त्वच्छ्रद्धानुरोधादित्यर्थः । तर्हि कथमभ्युपगम इति चेत्तदाह—**किं तु स्यादिति** । अस्य शब्दस्य शक्तिर्निजस्वभाववशादन्वितस्वार्थ इत्यर्थः । तर्हि सिद्धान्वितेऽपि शब्दशक्तिरभ्युपेता नेत्याह—**योग्यत्वादेस्त्विति** । न हि सिद्धस्य सिद्धेनान्वययोग्यता कार्यस्य वा कार्येणाऽऽकाङ्क्षा वा समस्वभावतया परस्परमुपयोगाभावात् । किं तु सिद्धकार्ययोरेव निर्वर्त्यनिर्वर्तकभूतयोरन्वययोग्यताकाङ्क्षा च तयोश्चान्वयः कार्यप्रधान इति कार्यैदमर्थ्यं विशिष्टकार्यपरत्वं वाक्यस्य सिद्धमित्यर्थः ॥ १३१ ॥

श्लो० १४१ पे० १४५—

उपसंहरति—**एवमिति** । एवं बहुन्यायापेक्षत्वेऽपि शीघ्रमेव व्युत्पत्तिर्भवतीत्याह—**कतिपयैर्वासरैरिति** । स्वतःप्रामाण्याद्बालानामवक्रबुद्धित्वाद्बुभुत्सुत्वाच्चैतादृशमन्वयव्यतिरेककौशलं क्षिप्रमेव भवतीति भावः । एवं कार्यान्विते शब्दशक्तिकथनेन किं प्रकृत इति तदाह—**तस्मादिति** ॥ १४१ ॥

श्लो० १५६ पे० १५५—

**सोऽयमितीति ।** उभयप्रकारा जहदजहद्रूपा । तदेवोपपादयति—**देशादीति ।** तदेतद्देशकालवैशिष्ट्यरूपभागवर्जनात् । केवलं यथा स्यात्तथा तदिदंपदाभ्यां पुंस उपात्ततया चेत्यर्थः । उपसंहरति—**एवं त्रिधेति ।** गङ्गायां घोष इत्यत्र हि वस्तुतो गङ्गासंबन्धि यत्तीरं घोषान्वययोग्यं तदेव लक्षणया प्रतीयते न तु गङ्गाविशिष्टतीरम् । तस्य तेन रूपेणान्वयायोग्यत्वात् । अतो गङ्गापदे जहल्लक्षणैव । एवं बहिः शोणस्तिष्ठतीत्यादौ निष्कृष्टद्रव्यगुणमात्रस्य बहिर्देशस्थित्यनुपपत्तेः शोणगुणविशिष्टस्यैवाश्वस्य नियमेन स्थित्यवगमात्साऽजहल्लक्षणा स्वार्थमुपादायैव तस्य द्रव्ये वृत्तेः । सोऽयमित्यादौ प्रागुक्तन्यायेनाभेदविरुद्धदेशादिपदार्थभागं परित्यज्य धर्मिस्वरूपं पदार्थभागमुपादायेदं वाक्यमभेदं प्रतिपादयतीति तत्र सा जहदजहद्रूपेति लाक्षणिकी वृत्तिस्त्रिधा भवतीत्यर्थः ॥ १५६ ॥

श्लो० १६१ पे० १६२—

**आदेयांश इति ।** आदेयांशे लक्ष्यांशे त्वयद्वयात्मप्रकाश आत्मस्वरूपे ब्रह्मणीतियावत् । यद्यप्येवमुक्तप्रकारेण पदार्थयोरणुमात्रोऽपीषन्मात्रमपि केनाप्यंशेनेति यावत् । भेदो नास्ति तथाऽपि यस्माच्छब्दौ तत्त्वंपदात्मकौ बाह्यं लक्ष्यार्थबहिर्भूतं भिन्नं मिथो व्यावृत्तं हेतुं शब्दप्रवृत्तिनिमित्तकं कार्यकारणत्वलक्षणमादाय वर्तेते तस्मात्पदयोर्जामिता पुनरुक्तता पर्यायत्वापत्तिर्नास्ति । अतो नोक्तदोषद्वयस्याप्यत्रावकाश इत्यर्थः । लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदात्पदभेदः, प्रवृत्तिनिमित्तभेदादव्यावर्त्यभेदाच्च न पौनरुक्त्यमिति भावः ॥ १६१ ॥

श्लो० १६४ पे० १६५—

**प्रथमचरमेति ।** प्रथमपदमसंजातविरोधितया मुख्यार्थमेव चरमं तु पदं मुख्यार्थांशे तद्विरोधाल्लक्षणामर्हतीत्यस्यार्थस्य न्यायसिद्धत्वात्प्रथमचरमभाव एवैकपदलक्षणानिर्णये कारणमिति चेदिति शङ्काभागयोजना । अतिप्रसङ्गित्वेन निराकरोति—**अयमपीति ।** अस्य पदप्रयोगे प्रथमचरमभावस्यान्यथादर्शनमेव वेदगतमुदाहृत्य विशदयति—**चरमपठितमिति ।** तत्पदमित्यसंसारिवस्तुविषयं पदमितियावत् । अध्वर्युवेदो यजुर्वेदः । तत्र हि 'अहं ब्रह्मास्मि' ( बृ० १ । ३ । १० ) इति संसारिविषयं पदं प्रथमं पठ्यत इत्यतोऽत्र पाठनियमाभावात्तदनुरोधे चाव्यवस्थितार्थमिदं वाक्यं स्यादित्यर्थः ॥ १६४ ॥

श्लो० १९६ पे० १८७—

प्राथम्यभाक्प्रथमप्रतीतिविषय इत्यर्थः । विशेषणेतरयाऽन्वय इत्यनुषङ्गः । विरोधोद्भवो विरोधस्फुरणम् । उत्पन्ने च विरोधे तत्परिहारेणैकरसक इति योज्यम् ॥ १९६ ॥

**श्लो० २०३ पे० १९२—**

कथं युक्तं न प्रतिभातीत्यपेक्षायामाद्यं पक्षमनूद्य दोषमाह—**संबन्धिरूपमिति** । संबन्ध्याकारवत्तया लक्ष्यत्वे लक्षणया विशिष्टविषयत्वादखण्डवाक्यार्थसिद्धिर्दूरापास्तेत्यर्थः । द्वितीयं प्रत्याह—**अनन्वितमिति** । लोके वाच्यार्थासंबद्धे लक्षणायाऽदर्शनाद्वेदेऽपि तत्र सा न युक्तेत्यर्थः ॥ २०३ ॥

# संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।

**समाप्तोऽयं संक्षेपशारीरकस्य श्लोकाद्यचरणप्रतीकवर्णानुक्रमः ।**